श्रीगणेशाय नमः

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥ १ ॥
येन धौता गिरः पुंसां विमलैः शब्दवारिभिः ।
तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥ २ ॥

अ इ उण् ॥१॥ ऋ ऌक् ॥२॥ ए ओङ् ॥३॥ ऐ औच् ॥४॥ ह य व रट् ॥५॥ लण् ॥६॥ ञ म ङ ण नम् ॥७॥ झ भञ् ॥८॥ घ ढ धष् ॥९॥ ज ब ग ड दश् ॥१०॥ ख फ छ ठ थ च ट तव् ॥११॥ क पय् ॥१२॥ श ष सर् ॥१३॥ हल् ॥१४॥

इति शिवसूत्राणि । आदिरन्त्येनेत्यनेनैकवाक्यत्वात् संज्ञासूत्राण्येतानि । संज्ञाणादिः ॥

वृद्धिरादैच् ॥१॥

आ ऐ औ एते वृद्धिसंज्ञाः स्युः ॥ आङ्गः ॥ ऐच्छिकः ॥ औपगवः ॥

## अदेङ् गुणः ॥२॥

अ ए ओ एते गुणसंज्ञाः स्युः ॥ अर्ति ॥ एति ॥ ओखति ॥

## इको गुणवृद्धी ॥३॥

स्वशब्देन यत्र गुणवृद्धी विधीयेते तत्रेक इति षष्ठ्यन्तं पदमुपतिष्ठते ॥ तरति ॥ मार्ष्टि ॥

## न धातुलोप आर्धधातुके ॥४॥

धात्वंशलोपनिमित्ते आर्धधातुके परे इको ये गुणवृद्धी प्राप्तस्ते न भवतः ॥ लोलुवः ॥ पोपुवः ॥ मरीमृजः ॥

## क्ङिति च ॥५॥

गित्किन्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः ॥ गित् । जिष्णुः ॥ कित् । भिन्नः ॥ ङित् । चिनुतः । मृष्टः । मृष्टात् ॥

## दीधीवेवीटां ॥६॥

दीधीवेव्योरिटश्च गुणवृद्धी न स्तः ॥ आदीध्यनं । आदीध्यकः ॥ आवेव्यनं । आवेव्यकः ॥ इट् । भविता ॥

## हलोऽनन्तराः संयोगः ॥७॥

स्वरैरव्यवहिता हलः संयोगसंज्ञाः स्युः ॥ कुक्कुट ॥

## मुखनासिकावचनोऽनुनासिकः ॥८॥

मुखसहितनासिकयोच्चार्यमाणोऽनुनासिकः स्यात् ॥ रामः । सँय्यन्ता ॥

## तुल्यास्यप्रयत्नंसवर्णं ॥९॥

ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्च यस्य येन तुल्यं तद्वर्णद्वयं मिथः सवर्णं स्यात् ॥ दण्डाग्रं ॥

अथ स्थानप्रयत्नविवेकः

| वर्णाः | तदङ्काः | | स्थानानि |
|---|---|---|---|
| ख फ छ ठ थ च ट | ॥ १ ॥ | दृष्टं | कण्ठः |
| र स ट ग ग ज ब श | ॥ ८ ॥ | दृष्टं | तालु |

| | | | |
|---|---|---|---|
| ऋ ट ठ ड ढ ण र ष | ॥ ८ ॥ | एषां | मूर्धा |
| ऌ त थ द ध न ल स | ॥ ८ ॥ | एषां | दन्ताः |
| उ प फ ब भ म | ॥ ६ ॥ | एषां | ओष्ठौ |
| ए ऐ | ॥ २ ॥ | अनयोः | कण्ठतालु |
| ओ औ | ॥ २ ॥ | अनयोः | कण्ठोष्ठं |
| व | ॥ १ ॥ | अस्य | दन्तोष्ठं |

| वर्णाः | तदङ्काः | | आभ्यन्तरप्रयत्नाः |
|---|---|---|---|
| क ख ग घ ङ<br>च छ ज झ ञ<br>ट ठ ड ढ ण<br>त थ द ध न<br>प फ ब भ म | ॥ २५ ॥ | एषां | स्पृष्टं |
| य र ल व | ॥ ४ ॥ | एषां | ईषत्स्पृष्टं |
| अ इ उ ऋ ऌ<br>ए ओ ऐ औ<br>श ष स ह | ॥ १३ ॥ | एषां | विवृतं |
| अ | ॥ १ ॥ | प्रयोगे ऽस्य | संवृतं |
| अ | ॥ १ ॥ | कार्ये ऽस्य | विवृतमेव |

॥ इति सवर्णसंज्ञोपयुक्ताः स्थानप्रयत्नाः ॥

| वर्णाः | तदङ्काः | | स्थानानि |
|---|---|---|---|
| ≍क ≍ख इति जिह्वामूलीयौ | ॥ २ ॥ | एतयोः | जिह्वामूलं |
| ≍प ≍फ इत्युपध्मानीयौ | ॥ २ ॥ | एतयोः | ओष्ठौ |
| ञ म ङ ण न अं इत्यनुस्वारः यमाः | ॥ २६ ॥ | एषां | नासिका |
| अः इति विसर्गः | ॥ १ ॥ | अस्य | आश्रयस्थानानि |

वर्गेष्वाद्यानां चतुर्णां पञ्चमे परे मध्ये यमो नाम पूर्वसदृशो वर्णः प्रातिशाख्ये प्रसिद्धः ॥ २० ॥

## शे ॥१३॥

अयं प्रगृह्यः स्यात् ॥ अस्मे इन्द्राबृहस्पती । अस्मे इति ॥

## निपात एकाजनाङ् ॥१४॥

आङ्भिन्नो ऽजूरूपो निपातः प्रगृह्यसंज्ञः स्यात् ॥ अ अपेहि । इ इन्द्रः । उ उमेशः । आ एवं नु मन्यसे । आ एवं किल तत् ॥ अनाङिति किं । ईषदुष्णं । ओष्णं ॥

## ओत् ॥१५॥

ओदन्तो निपातः प्रगृह्यसंज्ञः स्यात् ॥ अहो ईशाः । आहो इति । उताहो इति ॥

## संबुद्धौ शाकल्यस्येतावनार्षे ॥१६॥

संबुद्धिनिमित्तक ओकारो वा प्रगृह्यः स्यादवैदिक इतौ परे ॥ विष्णो इति । विष्णाविति । विष्ण इति ॥

## उञः ॥१७॥

उञः प्रगृह्यसंज्ञा वा स्यादितौ ॥ उ इति । विति ॥

## ऊँ ॥१८॥

उञ ऊँआदेशो वा स्यादितौ ॥ उ इति । विति । ऊँ इति ॥

## ईदूतौ च सप्तम्यर्थे ॥१९॥

सप्तम्यर्थमात्रे वर्तमानमीदूदन्तं प्रगृह्यसंज्ञं स्यात् ॥ सोमो गौरीअधिश्रितः ॥ तनूइति ॥ अर्थे किं । वाप्यश्वः ॥

## दाधा घ्वदाप् ॥२०॥

दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाब्दैपौ विना ॥ डुदाञ् दाण् दो देङ् डुधाञ् धेट् । एवैते गृहीतव्या न तु दाब्दैपौ न च दीङ् ॥ प्रणिददाति । प्रणियच्छति । प्रणिद्यति । प्रणिदयते ॥ प्रणिदधाति । प्रणिधयति ॥ अदाब्विति किं । दातं बर्हिः । अवदातं मुखं ॥

## आद्यन्तवदेकस्मिन् ॥२१॥

अनन्य आद्याविवान्त एव कार्यं स्यात् ॥ आभ्यां । एभिः ॥

## तरप्तमपौ घः ॥२२॥

तरप् तमप् । एतौ घसंज्ञौ स्तः ॥ कुमारितरा । कुमारितमा ॥

## बहुगणवतुडति संख्या ॥२३॥

बहु गण वतु डति । एते संख्यासंज्ञाः स्युः ॥ बहुकः । गणशः । तावत्कृत्वः । कतिधा ॥

## ष्णान्ता षट् ॥२४॥

षान्ता नान्ता च संख्या षट्संज्ञा स्यात् ॥ षट् । षण्णां ॥ पञ्च । पञ्चानां ॥

## डति च ॥२५॥

डत्यन्ता संख्या षट्संज्ञा स्यात् ॥ कति । कतीनां ॥

## क्तक्तवतू निष्ठा ॥२६॥

एतौ निष्ठासंज्ञौ स्तः ॥ कृतः । लूनः ॥ कृतवान् । लूनवान् ॥

## सर्वादीनि सर्वनामानि ॥२७॥

सर्वादीनि शब्दस्वरूपाणि सर्वनामसंज्ञानि स्युः ॥ सर्वे । सर्वस्मै । सर्वस्मात् । सर्वस्मिन् । सर्वेषां ॥ तदन्तस्यापीयं संज्ञा । द्वन्द्वे चेति ज्ञापकात् । तेन परमसर्वत्रेति त्रल् ॥

## विभाषा दिक्समासे बहुव्रीहौ ॥२८॥

दिगुपदिष्टे बहुव्रीहिसमासे सर्वादीनि वा सर्वनामसंज्ञानि स्युः ॥ उत्तरपूर्वस्यै । उत्तरपूर्वायै ॥

## न बहुव्रीहौ ॥२९॥

बहुव्रीहिसमासे सर्वनामसंज्ञा न स्यात् ॥ प्रियविश्वाय । त्वत्कपितृकः ॥

## तृतीयासमासे ॥३०॥

अत्र सर्वनामसंज्ञा न स्यात् ॥ मासपूर्वाय । मासेन पूर्वाय ॥

## द्वन्द्वे च ॥३१॥

द्वन्द्वे [illegible] न ॥ वर्णाश्रमेतराणां ॥

## विभाषा जसि ॥ ३२ ॥

जसाधारे कार्ये द्वन्द्व उक्ता संज्ञा वा ॥ वर्णाश्रमेतरे । वर्णाश्रमेतराः ॥

## प्रथमचरमतयाल्पार्धकतिपयनेमाश्च ॥ ३३ ॥

एते जसः कार्ये प्रत्युक्तसंज्ञा वा स्युः ॥ प्रथमे । प्रथमाः ॥ चरमे । चरमाः ॥ द्वितये । द्वितयाः ॥ अल्पे । अल्पाः ॥ अर्धे । अर्धाः ॥ कतिपये । कतिपयाः ॥ नेमे । नेमाः ॥

## पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञा-यां ॥ ३४ ॥

गणपाठात् सर्वत्र प्राप्ता संज्ञा जसि वा स्यात् ॥ पूर्वे । पूर्वाः । इत्यादि ॥ व्यवस्थायां किं । दक्षिणा गायकाः ॥

## स्वमज्ञातिधनाख्यायां ॥ ३५ ॥

आत्मात्मीयवाचिनः स्वशब्दस्य प्राप्ता संज्ञा जसि वा ॥ स्वे । स्वाः ॥ अज्ञा-तिधनाख्यायां किं । स्वाः । ज्ञातयो ऽर्था वा ॥

## अन्तरं बहिर्योगोपसंव्यानयोः ॥ ३६ ॥

बाह्ये परिधानीये चार्थे ऽन्तरशब्दस्य प्राप्ता संज्ञा जसि वा ॥ अन्तरे । अन्तराः ॥

## स्वरादिनिपातमव्ययं ॥ ३७ ॥

स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः ॥

## तद्धितश्चासर्वविभक्तिः ॥ ३८ ॥

यस्मात् सर्वा विभक्तिर्नोत्पद्यते स तद्धितान्तो ऽव्ययसंज्ञः स्यात् ॥ ततः । यतः । तत्र । यत्र । यदा । सदा ॥

## कृन्मेजन्तः ॥ ३९ ॥

म् ए ओ ऐ औ एतदन्तं यत् कृत् तदन्तं शब्दस्वरूपमव्ययसंज्ञं स्यात् ॥ स्मारं स्मारं । भोक्तुं पचति ॥ जीवसे । पिबध्यै ॥

## क्त्वातोसुन्कसुनः ॥४०॥

एतदन्तमव्ययसंज्ञं स्यात् ॥ कृत्वा । उदेतोः । विसृपः ॥

## अव्ययीभावश्च ॥४१॥

अव्ययीभावसमासो ऽव्ययसंज्ञः स्यात् ॥ उपाग्नि । अधिहरि ॥

## शि सर्वनामस्थानं ॥४२॥

शि । इत्येतत् सर्वनामस्थानसंज्ञं स्यात् ॥ कुण्डानि सन्ति । कुण्डानि पश्य ॥

## सुडनपुंसकस्य ॥४३॥

सुडिति प्रत्याहारः । सु औ जस् अम् औट् । एते सर्वनामस्थानसंज्ञाः स्युरनपुं-सकस्य न ॥ राजा । राजानौ । राजानः । राजानं । राजानौ ॥ अनपुंसकस्येति किं । सामनी ॥

## न वेति विभाषा ॥४४॥

नेति प्रतिषेधो वेति विकल्पः । एतदुभयं विभाषासंज्ञं स्यात् ॥ शुशाव । शिश्वाय । शुशुवतुः । शिश्वियतुः ॥

## इग्यणः संप्रसारणं ॥४५॥

य व र ल । एषां स्थाने क्रमेण जाता भाविनो वा । इ उ ऋ लृ । एते संप्रसारणसंज्ञाः स्युः ॥ यज । इष्टं । वप् । उप्तं । ग्रह । गृहीतं ॥

## आद्यन्तौ टकितौ ॥४६॥

टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः ॥ भविता ॥ भीषयां ॥

## मिदचो ऽन्त्यात् परः ॥४७॥

मित् इति निर्दिष्टो यो । अचां मध्ये यो ऽन्त्यस्तस्मात् परस्तस्य विधि-समस्यान्तावयवो मित् स्यात् ॥ स्थानेयोगित्वस्य प्रत्ययपरत्वस्य चापवादः ॥ रुणद्धि । मुञ्चति । पयांसि ॥

## एच इग्घ्रस्वादेशे ॥४८॥

ए ओ ऐ औ । एषां स्थाने ह्रस्वे कर्तव्ये । इ उ इ उ । एत एव भवन्ति नान्यत् ॥ रै । अतिरि । नौ । अतिनु । गो । उपगु ॥

## षष्ठी स्थानेयोगा ॥४९॥

इह शास्त्रे ऽज्ञातसंबन्धविशेषा षष्ठी स्थानेयोगा बोध्या । स्थानं च प्रसङ्गः ॥ ब्रुहि । भविता ॥ इत्यादि ॥

## स्थाने ऽन्तरतमः ॥५०॥

प्रसङ्गे सति प्राप्यमाणानां यः सदृशतमः स एवादेशः स्यात् । सादृश्यं च स्थानार्थगुणप्रमाणान्यतमेन ॥ स्थानतः । दण्डाग्रं ॥ अर्थतः । पट् ॥ गुणतः । पाकः ॥ प्रमाणतः । अमुष्मै । अमूभ्यां ॥

## उरण् रपरः ॥५१॥

ऋ । इत्यस्य स्थाने जायमानो ऽण् रेफपरः स्यात् ॥ कर्ता । किरति । द्वैमातुरः ॥

## अलो ऽन्त्यस्य ॥५२॥

षष्ठीनिर्दिष्ट आदेशो ऽन्त्यस्यालः स्यात् ॥ पञ्चगोणिः । दशगोणिः ॥

## ङिच्च ॥५३॥

ङिदनेकालप्यादेशो ऽन्त्यस्य भवति ॥ सखा । होतापोतारौ ॥

## आदेः परस्य ॥५४॥

परस्य विधीयमानं कार्यं परस्यादेर्भवति । क्व च परस्य कार्यं । यत्र पञ्चमीनिर्देशः ॥ उत्थानं । उत्तम्भनं ॥

## अनेकाल्शित् सर्वस्य ॥५५॥

अनेकालादेशः शिच्च सर्वस्य षष्ठीनिर्दिष्टस्य भवति ॥ ब्रुवि । कुण्डानि ॥

## स्थानिवदादेशो ऽनल्विधौ ॥५६॥

आदेशः स्थानितुल्यो भवति । स्थानिनि सति यद्भवति तदादेशे कृते ऽपि भवति । स्थानिसंबन्धिवर्णाश्रितं कार्यं न स्थानिवत् ॥ रामाय । यादेशस्य स्थानिवत्त्वेन सुप्त्वात् सुपि चेति दीर्घः ॥ एवं धात्वाद्यादेशेष्वपि ॥ अनल्विधौ किं । प्रस्तुत्य । अत्रेडागमो न ॥

## अचः परस्मिन् पूर्वविधौ ॥५७॥

अल्विध्यर्थमिदं । परनिमित्तो ऽजादेशः स्थानिवत् स्यात् स्थानिभूतादचः पूर्वत्वेन

दृष्टस्य विधौ कर्तव्ये ॥ अत्र स्थानिनि सति यद्भवति तदादेशे ऽपि भवति । स्थानिनि सति यन्न भवति तदादेशे ऽपि न भवतीति । भावाभावयोरुभयोरप्यतिदेशो लक्ष्यानुरोधात् ॥ पटूव्या । मृदूव्या । पटयति । लघयति ॥ अचः किं । आगत्य । अधिगत्य ॥ परस्मिन्निति किं । युवजानिः ॥ पूर्वविधाविति किं । नैधेयः ॥

## न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ॥५८॥

पदस्यान्तावयवे द्विर्वचनादौ च कर्तव्ये परनिमित्तो ऽजादेशः स्थानिवन्न स्यात् ॥ पदान्तविधौ । कानि सन्ति । कौ स्तः । अत्रास्तेरल्लोपस्य स्थानिवत्त्वनिषेधाद्यणावावादेशौ न ॥ द्विर्वचने । सुद्ध्युपास्यः । अत्र द्वित्वे यणो न स्थानिवत्त्वं ॥ वरे । यायावरः । यातेर्यङन्ताद्वरच् । अल्लोपयलोपौ । आलोपे कर्तव्ये ऽल्लोपो न स्थानिवत् ॥ यलोपे । यातिः । यातेर्यङन्तात् क्तिच् । अल्लोपयलोपौ । तस्य स्थानिवत्त्वादातो लोपः । स चाल्लोपो न स्थानिवत् ॥ स्वरे । चिकीर्षकः । करोतेः सन्नन्तात्ण्वुल् । अतो लोपः । स च लितीति स्वरे न स्थानिवत् ॥ सवर्णानुस्वारयोः ॥ शिण्ढि । शिंषन्ति । अत्र श्नस्याल्लोपो न स्थानिवत् ॥ दीर्घे । प्रतिदीव्नः । अल्लोपो न स्थानिवत् ॥ जशि । जग्धिः । अदेः क्तिनि छन्दसि घस्लादेश उपधालोपः । स च जश्त्वे न स्थानिवत् ॥ चरि । जक्षतुः । उपधालोपो न स्थानिवत् ॥

## द्विर्वचने ऽचि ॥५९॥

द्वित्वनिमित्ते ऽचि परे ऽच आदेशो न स्याद्द्वित्वे कर्तव्ये । द्वित्वे कृते तु भवति ॥ पपतुः । पपुः । जग्मतुः । जग्मुः । जघ्नतुः । जघ्नुः । आटिटत् । आशिशत् । चक्रतुः । चक्रुः ॥ आल्लोपोपधालोपणिलोपयणादेशा द्वित्वे कर्तव्ये निषिद्धाः । कृते द्वित्वे प्रवर्तन्ते ॥

## अदर्शनं लोपः ॥६०॥

प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात् ॥ गौधेरः । पचेरन् ॥ [illegible] ॥

## प्रत्ययस्य लुक्श्लुलुपः ॥६१॥

लुक्श्लुलुप्शब्दैः कृतं प्रत्ययस्यादर्शनं क्रमाल्लुक्श्लुलुप्संज्ञं स्यात् ॥ दधि ॥ जुहोति ॥ वरणाः ॥

## प्रत्ययलोपे प्रत्ययलक्षणं ॥ ६२ ॥

प्रत्यये लुप्ते ऽपि प्रत्ययाश्रितं कार्यं भवति ॥ अग्निचित् । अहन् । सुप्तिङो-र्लुप्तयोरपि तदाश्रया पदसंज्ञा भवति ॥ स्थानिवत्सूत्रेण सिद्धे नियमार्थमिदं । प्रत्ययलक्षणमेव भवति न शब्दलक्षणं । तेन सुदृषद्ब्राह्मण इत्यादावत्वसन्तस्येति शब्दलक्षणो दीर्घो न ॥

## न लुमताङ्गस्य ॥ ६३ ॥

लुक् श्लु लुप् । एते लुमन्तः । एतेन लुप्ते प्रत्यये यदङ्गं तस्याङ्गमनाङ्गं वा प्रत्ययलक्षणं कार्यं न स्यात् ॥ गर्गाः । मृष्टः । जुहुतः ॥ यञ्शपोर्लुमता लुप्तयोरङ्गस्य वृद्धिगुणौ न ॥

## अचो ऽन्त्यादि टि ॥ ६४ ॥

अचां मध्ये ऽन्त्यो यो ऽच् तदादि शब्दरूपं टिसंज्ञं भवति ॥ पचते । पचेते ॥

## अलो ऽन्त्यात् पूर्व उपधा ॥ ६५ ॥

अन्त्यवर्णात् पूर्वो वर्ण उपधासंज्ञः स्यात् ॥ भिद् । भेत्ता ॥ बुध् । बोद्धा ॥

## तस्मिन्निति निर्दिष्टे पूर्वस्य ॥ ६६ ॥

सप्तम्यर्थनिर्देशे पूर्वस्यैव कार्यं भवति । न परस्य नापि व्यवहितस्य ॥ दध्यत्र ॥

## तस्मादित्युत्तरस्य ॥ ६७ ॥

पञ्चम्यर्थे निर्दिष्टे परस्यैव कार्यं स्यात् । न पूर्वस्य नापि व्यवहितस्य ॥ उत्थानं । ओदनं पचति ॥

## स्वं रूपं शब्दस्याशब्दसंज्ञा ॥ ६८ ॥

इह शास्त्रे शब्दस्य स्वरूपं बोधनीयं । न बाह्यो ऽर्थः । व्याकरणशास्त्रे या संज्ञा तां वर्जयित्वा ॥ राजन्यः । श्वशुर्यः । आग्नेयः ॥ नदीपान्नादिभ्यो न यत् । अङ्गारादिभ्यश्च न ढक् ॥ अशब्दसंज्ञेति किं । उपसर्गे घोरित्यादौ स्वरूपग्रहणं मा भूत् ॥

## अणुदित् सवर्णस्य चाप्रत्ययः ॥ ६९ ॥

अण् उदिच्च सवर्णस्य संज्ञा स्यात् । स्वस्य च रूपस्य । प्रत्ययस्तु न ॥ अत्रैवाण् परेण णकारेण ॥ उच्चारीत्या अ इ उ । इति प्रत्येकमष्टादशानां संज्ञाः ॥ ऋ । इति त्रिंशतः संज्ञा ॥ लृकारो ऽपि त्रिंशतः संज्ञा ॥ ए ओ ऐ औ । इति प्रत्येकं द्वादशानां संज्ञाः ॥ एदैतोरोदौतोश्च न परस्परं सावर्ण्यं । ऐ औजिति सूत्रारम्भसामर्थ्यात् । तेनैचश्चतुर्विंशतेः संज्ञा न ॥ अनुनासिकाननुनासिकभेदेन यवला द्विधा । तेनाननुनासिकास्ते द्वयोर्द्वयोः संज्ञा ॥ कु चु टु तु पु । एत उदितः ॥ गङ्गौघः । शुक्लीभवति । गोपी ॥ अप्रत्ययः किं । सन्नाशंनिमित्त उः ॥ दिदृक्षुः । दीर्घो न भवति ॥

## तपरस्तत्कालस्य ॥ ७० ॥

तः परो यस्मात् स तात् परश्च वर्णः स्वसमकालस्य संज्ञा स्यात् ॥ उच्चारीत्या-अत् । इत् । इत्यादयः षण्णां षण्णां संज्ञाः । ऋदिति द्वादशानां संज्ञा ॥ वृत्तैः ॥ तत्कालस्येति किं । सद्भाभिः ॥

## आदिरन्त्येन सहेता ॥ ७१ ॥

अन्त्येनेत्संज्ञकेन। सहोच्चार्यमाण आदिर्मध्यपतितानां संज्ञा स्यात् स्वस्य च रूपस्य ॥ अण् । अच् । सुप् । तिङ् । इत्यादि ॥ अन्त्येनेति किं । सुडिति टाटकारेण मा भूत् ॥

## येन विधिस्तदन्तस्य ॥ ७२ ॥

विशेषणं तदन्तस्य संज्ञा स्यात् स्वस्य च रूपस्य ॥ चेयं । जेयं ॥

## वृद्धिर्यस्याचामादिस्तद्वृद्धं ॥ ७३ ॥

यस्य समुदायस्याचां मध्ये आदिर्वृद्धिस्तद्वृद्धसंज्ञं स्यात् ॥ शालीयः । मालीयः ॥

## त्यदादीनि च ॥ ७४ ॥

सर्वादिगणपठितानि त्यदादीनि वृद्धसंज्ञानि स्युः ॥ तदीयः । यदीयः ॥ इत्यादि ॥

## एङ् प्राचां देशे ॥ ७५ ॥

एङ् यस्याचामादिस्तद्वृद्धसंज्ञं स्यात् प्राचां मतेन ॥ एणीपचनीयः ।

गोनर्दीयाः । भोजकटीयाः । इत्यादि ॥ एङ् किं । आहिच्छत्रं ॥ प्राचां किं । देवदत्तो नाम वाहीकग्रामः । तत्र भवो दैवदत्तः ॥ देशे किं । गोमत्यां भवा मत्स्या गौमताः ॥

॥ इति सूत्रपाठे प्रथमाध्यायस्य प्रथमः पादः ॥

---

## गाङ्कुटादिभ्यो ऽञ्णिन्ङित् ॥१॥

गाङादेशात् । कुट कौटिल्य इत्यारभ्य कुङ् शब्द इत्यन्ता ये कुटादयस्तेभ्यश्च परे ञिन्णिद्भिन्नाः प्रत्यया ङिद्वत् स्युः ॥ गाङ् । अध्यगीष्ट । अध्यगीषातां । अध्यगीषत ॥ कुटादिभ्यः । कुटिता । कुटितुं । कुटितव्यं । पुटिता । पुटितुं । इत्यादि ॥ अञ्णिदिति किं । उत्कोटयति । उत्कोटः ॥

## विज इट् ॥२॥

ओविजी । अस्मात् पर इडादिप्रत्ययो ङिद्वत् स्यात् ॥ उद्विजिता । उद्विजितुं ॥

## विभाषोर्णोः ॥३॥

ऊर्णुञ् । अस्मात् पर इडादिप्रत्ययो वा ङिद्वत् स्यात् ॥ ऊर्णविता । ऊर्णुविता ॥

## सार्वधातुकमपित् ॥४॥

पिद्भिन्ना धात्वधिकारोक्तास्तिङः शितश्च प्रत्यया ङिद्वत् स्युः ॥ कुरुतः । कुर्वन्ति । चिनुतः । चिन्वन्ति ॥ सार्वधातुकं किं । कर्ता ॥ अपित् किं । चिनोति ॥

## असंयोगाल्लिट् कित् ॥५॥

असंयोगात् परो ऽपिल्लिट्प्रत्ययः किद्वत् स्यात् ॥ बिभिदतुः । बिभिदुः । चिच्छिदतुः । चिच्छिदुः । ईजतुः । ईजुः ॥ असंयोगात् किं । सस्रंसे ॥ अपित् किं । बिभेदिथ ॥

## इन्धिभवतिभ्यां च ॥६॥

आभ्यां परो लिट् कित् स्यात् ॥ जिइन्धी । समीधे दस्युहन्तमं । पुत्र ईधे अथर्वणः ॥ भू । बभूव । बभूवतुः ॥ इन्धेः संयोगार्थं ग्रहणं । भवतेः पिदर्थं ॥

## मृडमृदगुधकुषक्लिशवदवसः क्त्वा ॥७॥

एभ्यो धातुभ्यः परः क्त्वाप्रत्ययः कित् स्यात् । न क्त्वा सेडित्यस्य रलो व्युपधादिति विकल्पस्य चापवादः ॥ मृड । मृडित्वा ॥ मृद् । मृदित्वा ॥ गुध । गुधित्वा ॥ कुष । कुषित्वा ॥ क्लिशू । क्लिश । क्लिशित्वा ॥ वद । उदित्वा ॥ वस । उषित्वा ॥

## रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ॥८॥

एभ्यो धातुभ्यः सन् क्त्वा च कितौ स्तः ॥ रुदिर् । रुदित्वा । रुरुदिषति ॥ विद ज्ञाने । विदित्वा । विविदिषति ॥ मुष । मुषित्वा । मुमुषिषति ॥ ग्रह । गृहीत्वा । जिघृक्षति ॥ ञिष्वप् । सुप्त्वा । सुषुप्सति ॥ प्रच्छ । पृष्ट्वा । पिपृच्छिषति ॥

## इको झल् ॥९॥

इगन्ताज्झलादिः सन् कित् स्यात् ॥ चिचीषति । तुष्टूषति । चिकीर्षति । तितीर्षति ॥ इकः किं । तिष्ठासति ॥ झल् किं । शिशयिषते ॥ अगति कित्त्वे दीर्घं परत्वाद्गुणो बाधेत । शोभतीत्यादौ णिलोपवत् ॥

## हलन्ताच्च ॥१०॥

इक्समीपाद्धलः परो झलादिः सन् कित् स्यात् ॥ बिभित्सति । बुभुत्सते ॥ इकः किं । यियक्षति ॥ झल् किं । विवर्धिषते ॥

## लिङ्सिचावात्मनेपदेषु ॥११॥

इक्समीपाद्धलः परौ झलादी लिङ्सिचौ कितौ स्त आत्मनेपदेषु परेषु ॥ भित्सीष्ट । भुत्सीष्ट ॥ अभित्त । अबुद्ध ॥ इकः किं । यक्षीष्ट । अयष्ट ॥ आत्मनेपदेषु किं । अस्राक्षीत् ॥ झलः किं । वर्तिषीष्ट । अवर्तिष्ट ॥

## उश्च ॥१२॥

ऋवर्णान्तात् परौ झलादी लिङ्सिचौ कितौ स्त आत्मनेपदेषु परेषु ॥ कृषीष्ट । हृषीष्ट ॥ अकृत । अहृत ॥ झल् किं । वरिषीष्ट ॥ आत्मनेपदेषु किं । अकार्षीत् ॥

## वा गमः ॥१३॥

गमधातोः परौ कलादी लिङ्सिचौ वा कितौ स्त आत्मनेपदेषु परेषु ॥ गम्लृ । संगसीष्ट । संगंसीष्ट ॥ समगत । समगंस्त ॥

## हनः सिच् ॥ १४ ॥

हनधातोः परः सिच् कित् स्यात् ॥ आहत । आहसातां । आहसत ॥ सिज्ग्रहणं लिङ्निवृत्त्यर्थं ॥

## यमो गन्धने ॥ १५ ॥

गन्धनं सूचनं । तत्र वर्तमानाद्यमधातोः परः सिच् कित् स्यादात्मनेपदेषु परेषु ॥ यम । उदायत । उदायसातां । उदायसत ॥

## विभाषोपयमने ॥ १६ ॥

उपयमनं विवाहः । तत्र वर्तमानाद्यमधातोः परः सिज्वा कित् स्यादात्मनेपदेषु परेषु ॥ उपायत कन्यां । उपायंस्त ॥

## स्थाघ्वोरिच्च ॥ १७ ॥

अनयोरिदादेशः स्यात् सिच्च कित् स्यादात्मनेपदेषु परेषु ॥ ष्ठा । उपास्थित । उपास्थिषातां । उपास्थिषत ॥ घुसंज्ञकस्य । अदित । अधित ॥

## न क्त्वा सेट् ॥ १८ ॥

सेट् क्त्वा किन्न स्यात् ॥ देवित्वा । सेवित्वा । वर्तित्वा ॥ सेडिति किं । कृत्वा ॥ क्त्वा किं । निगृहीतिः । निकुचितिः ॥

## निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ॥ १९ ॥

एभ्यः सेण्निष्ठा किन्न स्यात् ॥ शीङ् । शयितः । शयितवान् ॥ ञिष्विदा । प्रस्वेदितः । प्रस्वेदितवान् ॥ ञिमिदा । प्रमेदितः । प्रमेदितवान् ॥ ञिक्ष्विदा । प्रक्ष्वेदितः । प्रक्ष्वेदितवान् ॥ ञिधृषा । प्रधर्षितः । प्रधर्षितवान् ॥ सेट् किं । ञिष्विदा । स्विन्नः । स्विन्नवान् ॥ शीङोऽनुबन्धनिर्देशो यङ्लुङ्निवृत्त्यर्थः । शेशयितः । शेशयितवान् ॥

## मृषस्तितिक्षायां ॥ २० ॥

मृषधातोः सेण्निष्ठा किन्न स्यात् क्षमायां ॥ मृष । मर्षितः । मर्षितवान् ॥ तितिक्षायां किं । अपमृषितं वाक्यं ॥

## उदुपधाद्भावादिकर्मणोरन्यतरस्यां ॥२१॥

उदुपधाद्धातोर्भाव आदिकर्मणि च वर्तमानः सेण्निष्ठाप्रत्ययो वा किन्न स्यात् ॥ द्युतितमनेन । द्योतितमनेन ॥ प्रद्युतितः । प्रद्योतितः ॥ उदुपधात् किं । लिखितमनेन ॥ भावादिकर्मणोः किं । रुचितं कार्षापणं ॥ सेट् किं । प्रभुक्त ओदनः ॥

## पूङः क्त्वा च ॥२२॥

पूङ्धातोः परौ निष्ठाक्त्वाप्रत्ययौ सेटौ कितौ न स्तः ॥ पूङ् । पवितः । पवितवान् ॥ क्त्वाग्रहणमुत्तरार्थं । न क्त्वा सेडिति सिद्धेः ॥

## नोपधात् थफान्ताद्वा ॥२३॥

निष्ठेति निवृत्तं ॥ नकारोपधात् थकारान्तात् फकारान्ताच्च परः सेट् क्त्वाप्रत्ययः किद्वा न स्यात् ॥ ग्रथित्वा । ग्रन्थित्वा ॥ गुफित्वा । गुम्फित्वा ॥ नोपधात् किं । रेफित्वा ॥ थफान्तात् किं । स्रंसित्वा ॥

## वञ्चिलुञ्च्यृतश्च ॥२४॥

एभ्यः सेट् क्त्वा वा किन्न स्यात् ॥ वञ्चु । वचित्वा । वञ्चित्वा ॥ लुञ्च । लुचित्वा । लुञ्चित्वा ॥ ऋत इति सौत्रो धातुः । ऋतित्वा । अर्तित्वा ॥ सेट् किं । वक्त्वा ॥

## तृषिमृषिकृशेः काश्यपस्य ॥२५॥

एभ्यः सेट् क्त्वा किद्वा स्यात् ॥ ञितृष । तृषित्वा । तर्षित्वा ॥ मृष । मृषित्वा । मर्षित्वा ॥ कृश । कृशित्वा । कर्शित्वा ॥ काश्यपग्रहणं पूजार्थं । वेत्येव हि वर्तते ॥

## रलो व्युपधाद्धलादेः संश्च ॥२६॥

उश्च इश्च वी । वी उपधे यस्य स व्युपधः । उकारोपधादिकारोपधाच्च धातो रलन्ताद्धलादेः परौ क्त्वासनौ सेटौ वा कितौ स्तः ॥ द्युतित्वा । द्योतित्वा । दिद्युतिषते । दिद्योतिषते ॥ रलः किं । देवित्वा ॥ व्युपधात् किं । वर्तित्वा ॥ हलादेः किं । एषित्वा ॥ सेट् किं । भुक्त्वा ॥

## ऊकालोऽज्ह्रस्वदीर्घप्लुतः ॥ २७ ॥

उ ऊ ऊ३ इत्येवंकालोऽच् क्रमेण ह्रस्वदीर्घप्लुतसंज्ञः स्यात् ॥ उकालो ह्रस्वः । दधि । मधु ॥ ऊकालो दीर्घः । गौरी । कुमारी ॥ ऊ३कालः प्लुतः । देवदत्ता३ ॥ कालग्रहणं परिमाणार्थं । दीर्घप्लुतयोर्ह्रस्वसंज्ञा मा भूत् । प्रलूय । ह्रस्वस्य पिति कृति तुगिति तुङ् ॥ अज्ग्रहणं संयोगिसमुदायनिवृत्त्यर्थं । प्रच्छ्य ॥

## अचश्च ॥ २८ ॥

ह्रस्वदीर्घप्लुतशब्दैर्यत्राज्विधीयते तत्राच इति षष्ठ्यन्तं पदमुपतिष्ठते ॥ अतिरि ॥ चीयते ॥ देवदत्ता३ ॥ अजिति किं । अग्निचीऽ३त् । तकारस्य मा भूत् ॥

## उच्चैरुदात्तः ॥ २९ ॥

भागसहिततात्वादिस्थानेपूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात् ॥ ये । के ॥

## नीचैरनुदात्तः ॥ ३० ॥

भागसहितेषु ताल्वादिस्थानेष्वधोभागे निष्पन्नोऽजनुदात्तसंज्ञः स्यात् ॥ त्व । सम । सिम ॥

## समाहारः स्वरितः ॥ ३१ ॥

उदात्तत्वानुदात्तत्वधर्मद्वयसहितो योऽच् स स्वरितसंज्ञः स्यात् ॥ क्व । कर्तव्यं ॥

## तस्यादित उदात्तमर्धह्रस्वं ॥ ३२ ॥

स्वरितस्यादौ वार्धमात्रा सोदात्ता बोध्या । परिशिष्टानुदात्ता ॥ क्व । अत्रादितोऽर्धमात्रोदात्तावशिष्टार्धमात्रानुदात्ता ॥ कन्या । अत्रादितोऽर्धमात्रोदात्तावशिष्टा सार्धैकमात्रानुदात्ता ॥ माणवका३ । अत्रादितोऽर्धमात्रोदात्तावशिष्टे सार्धद्विमात्रे अनुदात्ते ॥

## एकश्रुति दूरात् संबुद्धौ ॥ ३३ ॥

दूरात् संबोधने वाक्यमेकश्रुति भवति ॥ उदात्तानुदात्तस्वरितानामविभागेनोच्चारणमेकश्रुतिः ॥ आगच्छ भो माणवक देवदत्ता३ ॥ दूरादिति किं । आगच्छ भो माणवक देवदत्त ॥

## यज्ञकर्मण्यजपन्यूङ्खसामसु ॥ ३४ ॥

वेदे मन्त्रास्त्रैस्वर्येण पठ्यन्ते तेषां यज्ञक्रियायामेकश्रुतिर्भवति । जपन्यूङ्खसामसु न भवति ॥ अग्निर्मूर्धा दिवः ककुत्पतिः । इत्यादि ॥ अजपेषु किं । ममाग्ने वर्चो विहवेष्वस्तु ॥ जप उपांशुप्रयोगः ॥ अन्यूङ्खेषु किं । न्यूङ्खाः षोडश ओंकारास्तत्र केचिदुदात्ताः केचिदनुदात्ताः ॥ ओमों । इत्यादि ॥ असामसु किं । ए३ विश्वं समत्रिणं दह३ ॥ सामानि वाक्यविशेषस्था गीतय उच्यन्ते ॥ एष्वेकश्रुतिर्न भवति ॥

## उच्चैस्तरां वा वषट्कारः ॥ ३५ ॥

यज्ञकर्मणि वौषट्शब्द उदात्ततरो वा स्यादेकश्रुतिर्वा ॥ वषट्शब्देनात्र वौषट्शब्दो लक्ष्यते ॥ वौ३षट् ॥ पक्ष एकश्रुतिः । वौषट् ॥

## विभाषा छन्दसि ॥ ३६ ॥

छन्दसि विभाषैकश्रुतिः स्यात् । पक्षे त्रैस्वर्यं ॥ अग्न आयाहि वीतये । अग्न आयाहि वीतये । इत्यादि ॥

## न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ॥ ३७ ॥

सुब्रह्मण्या नाम निगदः । तत्र यज्ञकर्मणीति विभाषा छन्दसीति चैकश्रुतिर्न स्यात् । स्वरितस्य तूदात्त आदेशः स्यात् ॥ सुब्रह्मण्यों३ ॥ इन्द्रागच्छ । हरिव आगच्छ । इत्यादि ॥

## देवब्रह्मणोरनुदात्तः ॥ ३८ ॥

अनयोः स्वरितस्यानुदात्तः स्यात् सुब्रह्मण्यायां ॥ देवा ब्रह्माण आगच्छत ॥

## स्वरितात् संहितायामनुदात्तानां ॥ ३९ ॥

स्वरितात् परेषामनुदात्तानामेकश्रुतिः स्यात् संहितायां ॥ इमं मे गङ्गे यमुने सरस्वति ॥

## उदात्तस्वरितपरस्य सन्नतरः ॥ ४० ॥

उदात्तपरस्य स्वरितपरस्य चानुदात्तस्यानुदात्ततरः सन्नतरः स्यात् ॥ सरस्वति शुतुद्रि । [illegible] ॥

## अपृक्त एकाल् प्रत्ययः ॥४१॥

एकवर्णः प्रत्ययो ऽपृक्तसंज्ञः स्यात् ॥ राजा । घृतस्पृक् ॥ एकाल् किं । दर्विः । जागृविः ॥ प्रत्ययः किं । सुराः ॥

## तत्पुरुषः समानाधिकरणः कर्मधारयः ॥४२॥

एकधर्मिबोधकपदस्तत्पुरुषसमासः कर्मधारयसंज्ञः स्यात् ॥ परमराज्यं । महानवमी ॥ तत्पुरुषः किं । पाचिकाभार्यः ॥

## प्रथमानिर्दिष्टं समास उपसर्जनं ॥४३॥

समासशास्त्रे यत् प्रथमान्तपदवाच्यं तदुपसर्जनसंज्ञं स्यात् ॥ द्वितीया श्रितेत्यादिसमासविधायकशास्त्रे प्रथमान्तपदं द्वितीयेत्यादि तद्वाच्यं द्वितीयान्तादि तदुपसर्जनसंज्ञं ज्ञेयं ॥ कृष्णाश्रितः ॥ शङ्कुलाखण्डः ॥ यूपदारु ॥ वृकभयं ॥ राजपुरुषः ॥ अक्षशौण्डः ॥

## एकविभक्ति चापूर्वनिपाते ॥४४॥

विग्रहे यन्नियतविभक्तिकं तदुपसर्जनं स्यान्न तु तस्य पूर्वनिपातः ॥ पञ्चगुः । प्राप्तजीविकः । आपन्नजीविकः । अलंकुमारि । निष्कौशाम्बिः ॥

## अर्थवदधातुरप्रत्ययः प्रातिपदिकं ॥४५॥

धातुप्रत्ययप्रत्ययान्तवर्जमर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात्॥ डित्थः । डवित्थः ॥ अर्थवदिति किं । धनं । अत्र नान्तसमुदायस्य प्रातिपदिकत्वे नलोपः स्यात् ॥ अधातुः किं । अहन् ॥ अप्रत्ययः किं । हरिषु । करोषि । अत्र सुप्तिपोः प्रातिपदिकत्वे तत औत्सर्गिकैकवचने सति पदत्वे सात्पदाद्योरिति षत्वनिषेधः स्यात् ॥ अप्रत्ययान्त इति किं । काण्डे । कुड्ये । अत्र ह्रस्वो नपुंसक इति ह्रस्वः स्यात् ॥

## कृत्तद्धितसमासाश्च ॥४६॥

कृत्तद्धितान्तौ समासाश्च प्रातिपदिकसंज्ञाः स्युः ॥ लिट् । लिड् । रामः । घटः । वृक्षः ॥ औपगवः । दाक्षिः ॥ राजपुरुषः । चित्रगुः ॥ अधातुरिति निषेधे प्राप्ते कृद्ग्रहणं ॥ अप्रत्यय इति निषेधे प्राप्ते तद्धितग्रहणं ॥ समासग्रहणं तु नियमार्थं । तेनार्थवतो वाक्यस्य न प्रातिपदिकत्वं । राज्ञः पुरुषः ॥

## ह्रस्वो नपुंसके प्रातिपदिकस्य ॥४७॥

नपुंसकलिङ्गेऽर्थे वर्तमानस्याजन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात् ॥ अतिरि । अतिनु ॥ प्रातिपदिकग्रहणं सत्वप्रधानप्रातिपदिकपरिग्रहार्थं । तेनेह न भवति । काण्डे । कुड्ये ॥

## गोस्त्रियोरुपसर्जनस्य ॥४८॥

उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च यदुपसर्जनं तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात् ॥ चित्रगुः । शबलगुः ॥ अतिखट्वः । निष्कौशाम्बिः ॥ उपसर्जनस्य किं । राजकुमारी ॥ स्त्रीशब्द ईकारः स्वरितस्तेन स्त्रीप्रत्ययस्यैव ग्रहणं । न तु स्त्रीलिङ्गशब्दमात्रस्य । तेनेह न । अतिलक्ष्मीः । अतिश्रीः ॥ कथमतिराजकुमारिरिति । स्त्रीप्रत्यये तदादिनियमप्रतिषेधस्य वक्ष्यमाणत्वात् ॥

## लुक् तद्धितलुकि ॥४९॥

तद्धितलुकि सति स्त्रीप्रत्ययस्योपसर्जनस्य लुक् स्यात् ॥ पञ्चेन्द्राण्यो देवता अस्य । पञ्चेन्द्रः ॥ दशेन्द्रः । पञ्चशष्कुलः । आमलकं ॥ तद्धितग्रहणं किं । गार्गीकुलं ॥ उपसर्जनस्येत्यनुवृत्तेर्नेह । अवन्ती । कुन्ती । कुरुः ॥

## इद्गोण्याः ॥५०॥

गोणीशब्दस्येकारादेशः स्यात् तद्धितलुकि ॥ पूर्वसूत्रापवादः ॥ पञ्चगोणिः । दशगोणिः ॥ इदिति योगविभागः । पञ्चसूचिः । दशसूचिः ॥

## लुपि युक्तवद्व्यक्तिवचने ॥५१॥

लुबर्थे प्रकृत्यर्थवल्लिङ्गसंख्ये स्तः ॥ पञ्चालाः क्षत्रियाः । तेषां निवासो जनपदः पञ्चालाः ॥ अङ्गाः । वङ्गाः । मगधाः ॥ अत्र प्रकृत्यर्थे क्षत्रिये ये पुंस्त्वबहुत्वे ते लुबर्थेऽपि भवतः ॥ व्यक्तिवचने किं । शिरीषाणामदूरभवो ग्रामः शिरीषास्तस्य वनं शिरीषवणं । अत्र वनस्पतित्वातिदेशे विभाषौषधीति णत्वं स्यात् ॥ लिङ्गातिदेशफलं तु कटुबदर्या अदूरभवो ग्रामः कटुबदरीति ॥

## विशेषणानां चाजातेः ॥५२॥

गुणवचनविशेषणानामपि प्रकृतिवल्लिङ्गसंख्ये स्तः । जातिं वर्जयित्वा ॥ पञ्चाला

रमणीयाः । गोदौ रमणीयौ ॥ अजातेरिति किं । पञ्चाला जनपदः । गोदौ ग्रामः ॥

## तदशिष्यं संज्ञाप्रमाणत्वात् ॥ ५३ ॥

तत् । लुपि युक्तवदिति सूत्रमशिष्यं न कर्तव्यं । कुतः । संज्ञानां लोकव्यवहाराणामेव तत्र प्रमाणत्वात् प्रतिपादकत्वात् । न तु तदंशे शास्त्रव्यापार इत्यर्थः ॥ यथा दारादिशब्दैः शास्त्रीयपुंस्त्वविशिष्टस्यैव स्त्रीरूपार्थस्य बोधस्तथा पञ्चालादिशब्दैरपि शास्त्रीयप्रकृत्यर्थगतलिङ्गसंख्याविशिष्टस्यैव स्वार्थस्य बोधो भविष्यतीति युक्तवद्भावो न कार्य इति समुदायार्थः ॥

## लुब्योगाप्रख्यानात् ॥ ५४ ॥

जनपदे लुबित्यादि सूत्रमप्यशिष्यं । कुतः । योगो ऽवयवार्थस्तस्याप्रख्यानादप्रतीतेः । पञ्चालादिशब्दा देशविशेषस्य संज्ञा एव निवासादिष्वर्थेषु प्रत्यया नैवोत्पद्यन्त इति व्यर्थं लुब्विधानमिति समुदायार्थः ॥

## योगप्रमाणे च तदभावे ऽदर्शनं स्यात् ॥ ५५ ॥

यदि क्षत्रियबोधकः पञ्चालादिशब्दो देशे योगस्यावयवार्थस्य प्रमाणं बोधकः स्यात् तर्हि तदभावे क्षत्रियसंबन्धाभावे देशरूपे ऽर्थे पञ्चालादिशब्दस्यादर्शनमप्रयोगः स्यादित्यर्थः ॥ ननु संप्रति क्षत्रियसंबन्धाभावे ऽपि भूतपूर्वं क्षत्रियसंबन्धमादाय प्रयोगो भविष्यति । मैवं । गौणत्वापत्तेः । न चायं गौणः । पदान्तरमन्तरेणापि प्रतीतेः । तस्माद्देशेष्वपि पञ्चालादिशब्दो रूढ्यैव बोधकः ॥

## प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् ॥ ५६ ॥

प्रधानोपसर्जने प्रधानार्थं सह ब्रूतः । प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः । इति च पूर्वाचार्यैः परिभाषितं वचनमशिष्यं न कर्तव्यं । कुतः । अर्थस्यान्यप्रमाणत्वाल्लोकतः सिद्धेः ॥

## कालोपसर्जने च तुल्यं ॥ ५७ ॥

अतीतरात्रेरन्त्ययामेनागामिरात्रेराद्ययामेन च सहितो दिवसो ऽद्यतनः कालः । अपरे पुनः । अतीतरात्रेरन्त्ययामद्वयेनागामिरात्रेराद्ययामद्वयेन सहितो दिवसो ऽद्यतनः कालः । अप्रधानमुपसर्जनमित्यादि च पूर्वाचार्यैः परिभाषितं तदप्यशिष्यं समानं । कुतः । अर्थस्य लोकतः सिद्धेः ॥

## जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्यां ॥५८॥

जातिप्रतिपादने एको ऽपि जातिरूपो ऽर्थो बहुवद्वा स्यात् ॥ ब्राह्मणः पूज्यः । ब्राह्मणाः पूज्याः ॥ जातिग्रहणं किं । देवदत्तः पूज्यः ॥ आख्यायामिति किं । काश्यपप्रतिकृतिः काश्यपः ॥ एकस्मिन्निति किं । व्रीहियवौ ॥

## अस्मदो द्वयोश्च ॥५९॥

अस्मद एकत्वे द्वित्वे च बहुवद्वा स्यात् ॥ अहं ब्रवीमि ॥ आवां ब्रूवः ॥ वयं ब्रूमः ॥

## फल्गुनीप्रोष्ठपदानां च नक्षत्रे ॥६०॥

द्वित्वे बहुत्वकार्यं वा स्यात् ॥ पूर्वे फल्गुन्यौ । पूर्वाः फल्गुन्यः ॥ पूर्वे प्रोष्ठपदे । पूर्वाः प्रोष्ठपदाः ॥ नक्षत्रे किं । फल्गुन्यौ माणविके ॥

## छन्दसि पुनर्वस्वोरेकवचनं ॥६१॥

वेदे पुनर्वसुशब्दस्य द्वित्व एकत्वकार्यं वा स्यान्नक्षत्रे ॥ पुनर्वसुर्नक्षत्रं । पुनर्वसू वा ॥ नक्षत्रे किं । पुनर्वसू माणवकौ ॥

## विशाखयोश्च ॥६२॥

वेदे विशाखाशब्दस्य द्वित्व एकत्वकार्यं वा स्यान्नक्षत्रे ॥ विशाखा नक्षत्रं । विशाखे वा ॥

## तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यं ॥६३॥

तिष्यपुनर्वसुशब्दयोर्नक्षत्रविषयकद्वन्द्वे बहुत्वं नित्यं द्वित्वकार्यं स्यात् ॥ उदितौ तिष्यपुनर्वसू ॥ तिष्येति किं । विशाखानुराधाः ॥ नक्षत्रद्वन्द्वे किं । तिष्य-पुनर्वसवो माणवकाः ॥ बहुवचनस्य किं । इदं तिष्यपुनर्वसु ॥

## सरूपाणामेकशेष एकविभक्तौ ॥६४॥

विभक्तौ यानि समानरूपाणि तेषामेकः शिष्यते ऽन्ये लुप्यन्ते ॥ रामश्च रामश्च रामौ । रामश्च रामश्च रामश्च रामाः ॥ सरूपाणां किं । प्लक्षन्य-ग्रोधौ ॥ रूपग्रहणं किं । अर्थभेदे ऽपि यथा स्यात् । अक्षाः ॥ एकेति किं ।

द्विवह्नोः शेषो मा भूत् ॥ शेषः किं । आदेशो मा भूत् ॥ एकविभक्ताविति किं । पयः पयो जरयति ॥

## वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ॥ ६५ ॥

यूना सह वृद्धस्योक्तौ वृद्धः शिष्यते युवा लुप्यते । गोत्रयुवप्रत्ययनिमित्तकमेव यदि वैरूप्यं भवति ॥ गोत्रस्य वृद्ध इति संज्ञा ॥ गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ ॥ वात्स्यौ ॥ वृद्धः किं । गर्गगार्ग्यायणौ ॥ यूना किं । गर्गगार्ग्यौ ॥ तल्लक्षणः किं ॥ गार्ग्यवात्स्यायनौ ॥ एवेति किं । भागवित्तिभागवित्तिकौ । अत्र कुत्सा सौवीरत्वं च भागवित्तिकस्यापरो विशेषः ॥

## स्त्री पुंवच्च ॥ ६६ ॥

यूना सहोक्तौ वृद्धा स्त्री शिष्यते युवा लुप्यते । तदर्थश्च पुंवत् । गोत्रयुवप्रत्ययनिमित्तकमेव यदि वैरूप्यं भवति ॥ गार्गी च गार्ग्यायणश्च गार्ग्यौ । वात्स्यौ । दाक्षी च दाक्षायणश्च दाक्षी ॥

## पुमान् स्त्रिया ॥ ६७ ॥

स्त्रिया सहोक्तौ पुमान् शिष्यते स्त्री लुप्यते । स्त्री पुंनिमित्तक एव विशेषश्चेत् ॥ ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ । कुक्कुटश्च कुक्कुटी च कुक्कुटौ ॥ तल्लक्षणः किं । कुक्कुटमयूर्यौ ॥ एवेति किं । इन्द्रेन्द्राण्यौ । अत्र पुंयोगकृतो ऽपीन्द्राण्यां विशेषः ॥ पुमानिति किं । प्राक्प्राच्यौ । प्रागित्यव्ययमलिङ्गं ॥

## भ्रातृपुत्रौ स्वसृदुहितृभ्यां ॥ ६८ ॥

आभ्यां क्रमेण सहोक्तौ भ्रातृपुत्रौ शिष्येते ॥ भ्राता च स्वसा च भ्रातरौ ॥ पुत्रश्च दुहिता च पुत्रौ ॥

## नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यां ॥ ६९ ॥

अनपुंसकेन सहोक्तौ नपुंसकं शिष्यते । तदर्थश्च वैकवत् । तल्लक्षण एव विशेषश्चेत् ॥ शुक्लः पटः शुक्ला शाटी शुक्लं वस्त्रं तदिदं शुक्लं । तानीमानि शुक्लानि ॥ अनपुंसकेनेति किं । शुक्लं च शुक्लं च शुक्लं च शुक्लानि ॥

## पिता मात्रा ॥ ७० ॥

मात्रा सहोक्तौ पिता वा शिष्यते ॥ माता च पिता च पितरौ । माता-पितरौ ॥

## श्वशुरः श्वश्र्वा ॥७१॥

श्वश्र्वा सहोक्तौ श्वशुरो वा शिष्यते ॥ श्वश्रूश्च श्वशुरश्च श्वशुरौ ॥ श्वश्रू-श्वशुरौ ॥

## त्यदादीनि सर्वैर्नित्यं ॥७२॥

सर्वैः सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते ॥ स च देवदत्तश्च तौ । यौ ॥ त्यदादीनां मिथो यत् परं तच्छिष्यते । शब्दपरविप्रतिषेधात् । स च यश्च यौ ॥

## ग्राम्यपशुसंघेष्वतरुणेषु स्त्री ॥७३॥

ग्राम्यपशुविशेषसमुदायेषु स्त्री शिष्यते ॥ पुमान् स्त्रियेत्यस्यापवादः ॥ गाव इमाः ॥ ग्राम्येति किं । रुरव इमे ॥ पशुग्रहणं किं । ब्राह्मणा इमे ॥ संघेषु किं । एतौ गावौ ॥ अतरुणेषु किं । वत्सा इमे ॥

॥ इति सूत्रपाठे प्रथमाध्यायस्य द्वितीयः पादः ॥

---

## भूवादयो धातवः ॥१॥

क्रियावाचका भ्वादयो धातुसंज्ञाः स्युः ॥ भू । भवति ॥ एध । एधते ॥ स्पर्ध । स्पर्धते ॥ इत्यादिर्गणपाठे पठितोदाहरणं ॥ क्रियावाचकाः किं । विकल्पार्थकवाच्यस्य मा भूत् ॥ भ्वादयः किं । पाणावयति । इत्यादिप्राकृतशब्दानां मा भूत् ॥

## उपदेशे ऽजनुनासिक इत् ॥२॥

धातुप्रातिपदिकप्रत्ययनिपातागमादेशे ऽनुनासिको ऽजित्संज्ञः स्यात् ॥ एध । भज । गु । फल । कुक । मुद । ए । इत्यादिपूर्वकवर्गस्वरा पदादयो

ऽनुनासिकाः ॥ एधते । इत्यादि ॥ उपदेश इत्युत्तरार्थं ॥ अनुनासिकः किं । सप्तमीबहुवचने मा भूत् ॥ अच् किं । मनिनो मकारस्य मा भूत् ॥

## हलन्त्यं ॥ ३ ॥

हल् च हल् च हलौ । हलोरन्त्यमिति संबन्धसामान्यषष्ठ्या समासः । हल्सूत्रस्यान्त्यं । उपदेशे हलन्तरूपान्त्यं च इत् स्यात् । द्वितीये ऽर्थे राहोः शिर इतिवत् षष्ठी ॥ एवं सति नान्योन्याश्रयदोषः ॥ हल् । अण् । अच् । सुप् । तिङ् । इत्यादि ॥ अन्त्यं किं । वाचालः ॥

## न विभक्तौ तुस्माः ॥ ४ ॥

विभक्तिस्थास्तवर्गसकारमकारा इत्संज्ञका न स्युः ॥ रामात् । सर्वस्मिन् ॥ रामाः । पचथः ॥ अपचतां । अपचतं ॥ विभक्तौ किं । चेयं । अहँयुः ॥ इदमस्थमुरित्युकारोच्चारणसामर्थ्यादनित्यो ऽयं । तेन क्व इति सिद्धं ॥

## आदिर्ञिटुडवः ॥ ५ ॥

उपदेशे धातोराद्या ञि टु डु एत इत्संज्ञाः स्युः ॥ ञिइन्धी । इद्धः ॥ टुओश्वि । श्वयथुः ॥ डुपचष् । पक्त्रिमं ॥ उपदेशे किं । ञिकारीयति ॥ आदिः किं । कण्डूयति ॥

## षः प्रत्ययस्य ॥ ६ ॥

प्रत्ययस्यादिः षकार इत् स्यात् ॥ गार्ग्यायणी । नर्तकी ॥ प्रत्ययस्येति किं । षडिकः ॥ आदिः किं । अविषः । महिषः ॥

## चुटू ॥ ७ ॥

प्रत्ययाद्यौ चवर्गटवर्गावितौ स्तः ॥ रामाः । कौञ्जायनः ॥ अन्ना । सीमा । सीमे ॥ योगविभागो ऽस्यानित्यत्वज्ञापनार्थः । नेह । विद्याचुञ्चुः । विद्याचणः । अवटीटः । इत्यादि ॥

## लशक्वतद्धिते ॥ ८ ॥

तद्धितभिन्नप्रत्ययाद्या लकारशकारकवर्गा इतः स्युः ॥ भवति ॥ गोदः ॥

## तस्य लोपः ॥ ९ ॥

तस्य । इत्संज्ञकस्य लोपः स्यात् ॥ रामः । गार्ग्यः । इद्धः । गार्ग्यायणी ।

रामाः । भवति ॥ इत्पदानुवृत्त्यैव सिद्धे तस्यग्रहणं सर्वलोपार्थं । तेन जिटु-डूनामलो ऽन्त्यपरिभाषयान्त्यलोपो न ॥

## यथासंख्यमनुदेशः समानां ॥१०॥

तुल्यसंख्यानां वाक्यार्थबोधकालिकः संबन्धो यथाक्रमं भवति । प्रथमस्य प्रथमेन । द्वितीयस्य द्वितीयेनेत्यादि ॥ तौदेयः । शालातुरीयः । वार्मतेयः । कौच-वार्यः ॥

## स्वरितेनाधिकारः ॥११॥

स्वरितः शब्दनिष्ठो धर्मविशेषः । तेन चिह्नेनाधिकारो विज्ञेयः ॥

## अनुदात्तङित आत्मनेपदं ॥१२॥

तिप् तस् झीत्यादिना वक्ष्यमाणेन सूत्रेण धातोरात्मनेपदे परस्मैपदं च सिद्धे नियमार्थमिदं ॥ अनुदात्तेतो ये धातवस्तेभ्य एव । उपदेशे ये ङितश्च तदन्तेभ्य एवात्मनेपदं स्यात् । नान्येभ्यः ॥ एध । एधते । स्पर्ध । स्पर्धते ॥ षूङ् । सूते । शीङ् । शेते । यङ् । बोभूयते ॥

## भावकर्मणोः ॥१३॥

लः कर्मणीत्यादिना विहितस्य लस्य भावकर्मणोरेवात्मनेपदं स्यात् ॥ भावे । भूयते भवता भवद्भ्यां भवद्भिः । सुप्यते त्वया मया अन्यैश्च ॥ अत्र धातुवाच्या क्रिया भावार्थकलकारेणानूद्यते । ततश्च युष्मदस्मदोस्तिङ्वाच्यकारकवाचि-त्वाभावान्न मध्यमोत्तमौ । किं तु प्रथमपुरुष एव । तत्रापि धातुवाच्यक्रि-याया अद्रव्यरूपत्वेन द्वित्वबहुत्वाप्रतीतेर्न द्विवचनबहुवचने । किं त्वेकवचनमेव । तस्यौत्सर्गिकत्वेन संख्यानपेक्षत्वात् । कर्तुरनुक्तत्वात् तृतीया ॥ कर्मणि । क्रियते कटः । क्रियेते कटौ । क्रियन्ते कटाः । त्वया मया अन्यैश्च ॥ क्रियसे त्वं । क्रियेथे युवां । क्रियध्वे यूयं । ईश्वरेण ॥ क्रिये ऽहं । क्रियावहे आवां । क्रियामहे वयं । ईश्वरेण ॥ कर्मण उक्तत्वात् प्रथमा कर्तुरनुक्तत्वात् तृतीया ॥

## कर्तरि कर्मव्यतिहारे ॥१४॥

क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदं स्यात् ॥ व्यतिलुनीते । अन्यस्य योग्यं

लवनं करोतीत्यर्थः ॥ कर्मव्यतिहारे किं । लुनाति ॥ कर्तृग्रहणं शेषात् कर्तरीत्यत्रानुवृत्त्यर्थं ॥

## न गतिहिंसार्थेभ्यः ॥ १५ ॥

एभ्यः क्रियाविनिमय आत्मनेपदं न स्यात् ॥ गत्यर्थेभ्यः । व्यतिगच्छन्ति ॥ हिंसार्थेभ्यः । व्यतिहिंसन्ति । व्यतिघ्नन्ति ॥

## इतरेतरान्योन्योपपदाच्च ॥ १६ ॥

इतरेतर । अन्योन्य । इत्येतदुपपदाद्धातोः क्रियाविनिमय आत्मनेपदं न स्यात् ॥ इतरेतरस्य व्यतिलुनन्ति ॥ अन्योन्यस्य व्यतिलुनन्ति ॥

## नेर्विशः ॥ १७ ॥

नेः परस्माद्विश इत्येतस्मादात्मनेपदं स्यात् ॥ शेषात् कर्तरीत्यस्यापवादः ॥ निविशते । निविशेते । निविशन्ते ॥ यदागमा इति परिभाषयात्रापि । न्यविशत ॥ अर्थवद्ग्रहणपरिभाषया नेह । मधुनि विशन्ति ॥

## परिव्यवेभ्यः क्रियः ॥ १८ ॥

अकर्त्रभिप्रायार्थमिदं ॥ परि । वि । अव । एभ्यः परस्मात् । डुक्रीञ् । इत्येतस्मादात्मनेपदं स्यात् ॥ परिक्रीणीते ॥ विक्रीणीते ॥ अवक्रीणीते ॥ परस्परसाहचर्यादुपसर्गस्यैव ग्रहणं । नेह । बहुवि क्रीणाति वनं ॥

## विपराभ्यां जेः ॥ १९ ॥

शेषात् कर्तरीत्यस्यापवादः ॥ वि । परा । इत्येताभ्यां परस्मात् । जि जये । इत्येतस्माद्धातोरात्मनेपदं स्यात् ॥ विजयते ॥ पराजयते ॥ साहचर्यादुपसर्गावेव गृह्येते । तेनेह न । बहुवि जयति वनं । परा जयति सेना ॥

## आङो दोऽनास्यविहरणे ॥ २० ॥

अकर्त्रभिप्रायार्थमिदं ॥ आङ्पूर्वान्मुखविकासनादन्यत्रार्थे वर्तमानात् । डुदाञ् । इत्येतस्मादात्मनेपदं स्यात् ॥ विद्यामादत्ते ॥ अनास्येति किं । मुखं व्याददाति ॥ आस्यग्रहणमविवक्षितं । विपादिकां व्याददाति । नदीकूलं व्याददाति ॥

## क्रीडोऽनुसंपरिभ्यश्च ॥ २१ ॥

अनु । सं । परि । इत्येतेभ्यः परस्मात् क्रीड् । इत्येतस्मादात्मनेपदं स्यात् । चकारादाङ्पूर्वादपि ॥ अनुक्रीडते ॥ संक्रीडते ॥ परिक्रीडते । आक्रीडते ॥

## समवप्रविभ्यः स्थः ॥२२॥

सं । अव । प्र । वि । इत्येतेभ्यः परस्मात् ष्ठा । इत्येतस्मादात्मनेपदं स्यात् ॥ संतिष्ठते ॥ अवतिष्ठते ॥ प्रतिष्ठते ॥ वितिष्ठते ॥

## प्रकाशनस्थेयाख्ययोश्च ॥२३॥

स्वाभिप्रायाविष्करणे विवादपदनिर्णेतरि चार्थे ष्ठा । इत्येतस्मादात्मनेपदं स्यात् ॥ तिष्ठते कन्या छात्राय ॥ तिष्ठते कर्णादिषु ॥

## उदोऽनूर्ध्वकर्मणि ॥२४॥

उत्पूर्वात् ष्ठा । इत्येतस्मादनूर्ध्वक्रियायां वर्तमानादात्मनेपदं स्यात् ॥ मुक्तावुत्तिष्ठते । गेह उत्तिष्ठते ॥ अनूर्ध्वेति किं । पीठादुत्तिष्ठति ॥

## उपान्मन्त्रकरणे ॥२५॥

मन्त्रकरणे वर्तमानादुपपूर्वात् तिष्ठतेरात्मनेपदं स्यात् ॥ ऐन्द्र्या गार्हपत्यमुपतिष्ठते ॥ मन्त्रकरणे किं । पतिमुपतिष्ठति यौवनेन ॥

## अकर्मकाच्च ॥२६॥

उपात् तिष्ठतेरकर्मकादात्मनेपदं स्यात् ॥ भोजनकाल उपतिष्ठते । संनिहितो भवतीत्यर्थः ॥ अकर्मकात् किं । राजानमुपतिष्ठति ॥

## उद्विभ्यां तपः ॥२७॥

उद् । वि । इत्येतत्पूर्वात् तप । इत्येतस्मादकर्मकादात्मनेपदं स्यात् ॥ उत्तपते । वितपते । दीप्यत इत्यर्थः ॥

## आङो यमहनः ॥२८॥

आङः पराभ्यां यम । हन । इत्येताभ्यामकर्मकाभ्यामात्मनेपदं स्यात् ॥ आयच्छते ॥ आहते ॥ अकर्मकाभ्यां किं । आयच्छति कूपाद्रज्जुं । आहन्ति वृषभं ॥

## समो गम्यृच्छिभ्यां ॥२९॥

समः पराभ्यामकर्मकाभ्यां गम्लृ । ऋच्छ । इत्येताभ्यामात्मनेपदं स्यात् ॥ संगच्छते ॥ ऋच्छेर्नादेशस्य ग्रहणं । समृच्छिष्यते ॥ अकर्मकाभ्यां किं । ग्रामं संगच्छति ॥

## निसमुपविभ्यो ह्वः ॥ ३० ॥

अकर्मकादिति निवृत्तं ॥ नि । सं । उप । वि । इत्येतेभ्यः परस्मात् । ह्वेञ् । इत्येतस्मादात्मनेपदं स्यात् ॥ निह्वयते ॥ संह्वयते ॥ उपह्वयते ॥ विह्वयते ॥ अकर्त्रभिप्रायार्थमिदं ॥

## स्पर्धायामाङः ॥ ३१ ॥

स्पर्धाविषय आङः परस्मात् । ह्वेञ् । इत्येतस्मादात्मनेपदं स्यात् ॥ शत्रुमाह्वयते ॥ स्पर्धायां किं । पुत्रमाह्वयति ॥

## गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ॥ ३२ ॥

अकर्त्रभिप्रायार्थमिदं ॥ एष्वर्थेषु डुकृञ् । इत्येतस्मादात्मनेपदं स्यात् ॥ गन्धनं प्राणवियोगानुकूलं सूचनं । उत्कुरुते ॥ अवक्षेपणं भर्त्सनं । श्येनो वर्तिकामुदाकुरुते ॥ सेवनं सेवा । हरिमुपकुरुते ॥ साहसिक्यं सहसाप्रवर्तनं । परदारान् प्रकुरुते ॥ प्रतियत्नो गुणाधानं । एधोदकस्योपस्कुरुते ॥ प्रकथनं प्रकर्षेण प्रतिपादनं । गाथाः प्रकुरुते ॥ उपयोगो धर्मादिफलको विनियोगः । शतं प्रकुरुते ॥ एषु किं । कटं करोति ॥

## अधेः प्रसहने ॥ ३३ ॥

प्रसहनं क्षमा । अभिभवश्च । तत्र वर्तमानादधिपूर्वात् करोतेरात्मनेपदं स्यात् ॥ शत्रुमधिकुरुते । क्षमते ऽभिभवतीति वार्थः ॥

## वेः शब्दकर्मणः ॥ ३४ ॥

शब्दकर्मकाद्विपूर्वात् करोतेरात्मनेपदं स्यात् ॥ विकुरुते स्वरान् ॥ शब्दकर्मणः किं । चित्तं विकरोति कामः ॥

## अकर्मकाच्च ॥ ३५ ॥

विपूर्वात् करोतेरकर्मकादात्मनेपदं स्यात् ॥ विकुर्वते सैन्धवाः । वल्गन्तीत्यर्थः ॥

## संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ॥३६॥

णीञ् । इत्येतस्मादात्मनेपदं स्यादेष्वर्थेषु गम्यमानेषु ॥ शास्त्रे नयते । शास्त्रस्थं सिद्धान्तं शिष्येभ्यः प्रापयति । तेन च शिष्यसंमाननं फलितं ॥ उत्सञ्जने । दण्डमुन्नयते । उत्क्षिपतीत्यर्थः ॥ माणवकमुपनयते । आत्मानमाचार्यीकुर्वन् माणवकं स्वसमीपं प्रापयतीत्यर्थः ॥ ज्ञाने । तत्त्वं नयते । निश्चिनोतीत्यर्थः ॥ भृतिर्वेतनं । कर्मकरानुपनयते । वेतनदानेन स्वसमीपं प्रापयतीत्यर्थः ॥ विगणनमृणादिनिर्यातनं । करं विनयते । राज्ञे देयं भागं परिशोधयतीत्यर्थः ॥ व्ययो धर्मादिषु विनियोगः । शतं विनयते । धर्मार्थं शतं विनियुङ्क्त इत्यर्थः ॥ एषु किं । अजां ग्रामं नयति ॥

## कर्तृस्थे चाशरीरे कर्मणि ॥३७॥

स्वरितञित इत्येव सिद्धे नियमार्थमिदं ॥ णीञ् । इत्येतस्य कर्तृस्थे कर्मणि यदात्मनेपदं प्राप्तं तच्छरीरावयवभिन्न एव स्यात् ॥ क्रोधं विनयते । दूरीकरोतीत्यर्थः ॥ कर्तृस्थे किं । परस्य क्रोधं विनयति ॥ अशरीरे किं । गडुं विनयति ॥ कर्मणि किं । बुद्ध्या विनयति ॥

## वृत्तिसर्गतायनेषु क्रमः ॥३८॥

शेषात् कर्तरीत्यस्यापवादः ॥ एष्वर्थेषु क्रमु । इत्येतस्मादात्मनेपदं स्यात् ॥ वृत्तिरप्रतिबन्धः । शास्त्रे क्रमते बुद्धिः । न प्रतिहन्यत इत्यर्थः ॥ सर्ग उत्साहः । व्याकरणाध्ययनाय क्रमते । उत्सहत इत्यर्थः ॥ तायनं स्फीतता । अस्मिन् क्रमन्ते शास्त्राणि । स्फीतानि भवन्तीत्यर्थः ॥ एषु किं । अपक्रामति ॥

## उपपराभ्यां ॥३९॥

पूर्वेण सिद्धे नियमार्थमिदं ॥ वृत्त्यादिष्वर्थेष्वाभ्यामेव क्रमेरात्मनेपदं स्यात् । न तूपसर्गान्तरपूर्वात् ॥ उपक्रमते ॥ पराक्रमते ॥ उपपराभ्यां किं । संक्रामति ॥ वृत्त्यादिषु किं । उपक्रामति ॥

## आङ उद्गमने ॥४०॥

आङ्पूर्वात् क्रमेरूर्ध्वगमने ऽर्थे वर्तमानादात्मनेपदं स्यात् ॥ आक्रमते सूर्यः ॥ उद्गमने किं । आक्रामति वृद्धः कुतपं ॥

## वेः पादविहरणे ॥ ४१ ॥

विपूर्वात् क्रमेरात्मनेपदं स्यात् पादविक्षेपे ऽर्थे ॥ साधु विक्रमते वाजी ॥ पादविहरणे किं । विक्रामति सन्धिः । द्विधा भवतीत्यर्थः ॥

## प्रोपाभ्यां समर्थाभ्यां ॥ ४२ ॥

प्र । उप । इत्येताभ्यां तुल्यार्थाभ्यां परस्मात् क्रमेरात्मनेपदं स्यात् ॥ प्रक्रमते । उपक्रमते भोक्तुं ॥ प्रारम्भे ऽर्थे ऽनयोस्तुल्यार्थता ॥ समर्थाभ्यां किं । प्रक्रामति । गच्छतीत्यर्थः ॥ उपक्रामति । आगच्छतीत्यर्थः ॥

## अनुपसर्गाद्वा ॥ ४३ ॥

अप्राप्तविभाषेयं । अनुपसर्गात् क्रमेरात्मनेपदं वा स्यात् ॥ क्रमते । क्रामति ॥ अनुपसर्गात् किं । संक्रामति ॥

## अपह्नवे ज्ञः ॥ ४४ ॥

शेषात् कर्तरीत्यस्यापवादः ॥ अपलापे ऽर्थे वर्तमानाज्जानातेरात्मनेपदं स्यात् ॥ ज्ञा । शतमपजानीते । अपलपतीत्यर्थः ॥

## अकर्मकाच्च ॥ ४५ ॥

अकर्मकाज्जानातेरात्मनेपदं स्यात् ॥ मधुनो जानीते । मधुनोपायेन प्रवर्तत इत्यर्थः ॥ अकर्मकात् किं । पुत्रं जानाति ॥

## संप्रतिभ्यामनाध्याने ॥ ४६ ॥

सकर्मकार्थमिदं ॥ सं । प्रति । इत्येवंपूर्वाज्जानातेरनाध्याने वर्तमानादात्मनेपदं स्यात् ॥ शतं संजानीते । शतं प्रतिजानीते ॥ अनाध्याने किं । आध्यानमुत्कण्ठापूर्वकं स्मरणं तत्र मा भूत् । मातरं संजानाति ॥ अनाध्यान इति योगो विभज्यते । तत्सामर्थ्यादकर्मकात्सेत्यस्यापि निषेधः । मातुः संजानाति ॥

## भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ॥ ४७ ॥

शेषात् कर्तरीत्यस्यापवादः ॥ वद । इत्येतस्माद्धातोरात्मनेपदं स्याद्भासनादिष्वर्थेषु ॥

भासनं दीप्तिः । शास्त्रे वदते । भासमानो ब्रवीतीत्यर्थः ॥ उपसंभाषोपसान्त्वनं । कर्मकरानुपवदते । उपसान्त्वयतीत्यर्थः ॥ ज्ञानं सम्यगवबोधः । शास्त्रे वदते । सम्यग्बोधपूर्वकं वदतीत्यर्थः ॥ यत्न उत्साहः । क्षेत्रे वदते । तद्विषयकमुत्साहमाविष्करोतीत्यर्थः ॥ विमतिर्नानामतिः । क्षेत्रे विवदन्ते । विमतिपतिताश्चित्रं विभान्त इत्यर्थः ॥ उपमन्त्रणं रहस्युपछन्दनं । कुलभार्यामुपवदते । परदारानुपवदते । उपछन्दयतीत्यर्थः ॥ एष्वर्थेष्विति किं । किंचिद्वदति ॥

## व्यक्तवाचां समुच्चारणे ॥४८॥

मनुष्यादीनां सहोच्चारणे वद । इत्येतस्माद्धातोरात्मनेपदं स्यात् ॥ संप्रवदन्ते ब्राह्मणाः ॥ व्यक्तवाचां किं । संप्रवदन्ति खगाः ॥ समुच्चारणे किं । ब्राह्मणो वदति ॥

## अनोरकर्मकात् ॥४९॥

व्यक्तवाग्विषयादनुपूर्वकादकर्मकात् । वद । इत्येतस्माद्धातोरात्मनेपदं स्यात् ॥ अनुवदते कठः कलापस्य ॥ अनुः सादृश्ये । यथा कलापो ऽधीयानो वदति तथा कठ इत्यर्थः ॥ अकर्मकात् किं । उक्तमनुवदति ॥ व्यक्तवाचां किं । अनुवदति वीणा ॥

## विभाषा विप्रलापे ॥५०॥

प्राप्तविभाषेयं ॥ विरोधोक्तिरूपे व्यक्तवाचां समुच्चारणे वद । इत्येतस्माद्धातोरात्मनेपदं वा स्यात् ॥ विप्रवदन्ते सांवत्सराः । विप्रवदन्ते मौहूर्ताः । युगपत् परस्परप्रतिषेधेन विरुद्धं वदन्तीत्यर्थः ॥ विप्रलापे किं । संप्रवदन्ते ब्राह्मणाः ॥ व्यक्तवाचां किं । संप्रवदन्ति शकुनयः ॥ समुच्चारणे किं । क्रमेण मौहूर्ता मौहूर्तेन संप्रवदन्ति ॥

## अवाद्ग्रः ॥५१॥

शेषात् कर्तरीत्यस्यापवादः ॥ अवपूर्वात् । गॄ निगरणे । इत्येतस्माद्धातोरात्मनेपदं स्यात् ॥ अवगिरते । अवगिरेते । अवगिरन्ते ॥ अवादिति किं । गिरति ॥

## समः प्रतिज्ञाने ॥५२॥

संपूर्वात् । गॄ निगरणे । इत्येतस्मात् प्रतिज्ञाने वर्तमानादात्मनेपदं स्यात् ॥ प्रति-

ज्ञानमभ्युपगमः ॥ शतं संगिरते । नित्यं शब्दं संगिरते ॥ प्रतिज्ञाने किं । संगिरति ग्रासं ॥

## उदश्चरः सकर्मकात् ॥ ५३ ॥

शेषात् कर्तरीत्यस्यापवादः ॥ उत्पूर्वात् । चर । इत्येतस्मात् सकर्मकादात्मनेपदं स्यात् ॥ धर्ममुच्चरते । गुरुवचनमुच्चरते । उल्लङ्घ्य गच्छतीत्यर्थः ॥ सकर्मकात् किं । वाष्प उच्चरति ॥

## समस्तृतीयायुक्तात् ॥ ५४ ॥

तृतीयान्तार्थेन युक्तात् संपूर्वात् । चर । इत्येतस्माद्धातोरात्मनेपदं स्यात् ॥ अश्वेन संचरते । रथेन संचरते ॥ तृतीयायुक्तात् किं । उभौ लोकौ संचरति ॥

## दाणश्च सा चेच्चतुर्थ्यर्थे ॥ ५५ ॥

तृतीयान्तार्थेन युक्तात् संपूर्वात् । दाण् । इत्येतस्मादात्मनेपदं स्यात् । सा तृतीया यदि चतुर्थ्यर्थे भवति ॥ दास्या संयच्छते कामुकः । दास्यै ददातीत्यर्थः ॥ चतुर्थ्यर्थे किं । पाणिना संप्रयच्छति ॥ समः प्रशब्देन व्यवधाने कथमात्मनेपदं भवति । सम इति षष्ठी । न पञ्चमी ॥

## उपाद्यमः स्वकरणे ॥ ५६ ॥

शेषात् कर्तरीत्यस्यापवादः ॥ उपपूर्वात् । यम । इत्येतस्मादात्मनेपदं स्यात् पाणिग्रहणविशिष्टस्वीकारे ॥ भार्यामुपयच्छते ॥ स्वकरणे किं । परस्य भार्यामुपयच्छति ॥

## ज्ञाश्रुस्मृदृशां सनः ॥ ५७ ॥

ज्ञा । श्रु । स्मृ । दृश । इत्येतेषां सन्नन्तानामात्मनेपदं स्यात् ॥ धर्मं जिज्ञासते । गुरुं शुश्रूषते । नष्टं सुस्मूर्षते । नृपं दिदृक्षते ॥

## नानोर्ज्ञः ॥ ५८ ॥

ज्ञा । इत्येतस्मादनुपूर्वात् सन्नन्तादात्मनेपदं न स्यात् ॥ पुत्रमनुजिज्ञासति ॥ अनोः किं । धर्मं जिज्ञासते ॥ पूर्वसूत्रस्यैवायं निषेधः । अनन्तरस्येति न्यायात् । तेनेह न । सर्पिषो ऽनुजिज्ञासते । पूर्ववत् सन इत्यात्मनेपदं ॥

## प्रत्याङ्भ्यां श्रुवः ॥५९॥

प्रति । आङ् । इत्येवंपूर्वात् श्रु । इत्येतस्मात् सन्नन्तादात्मनेपदं न स्यात् ॥ प्रतिशुश्रूषति ॥ आशुश्रूषति ॥

## शदेः शितः ॥६०॥

शद्लृ । इत्येतस्मात् शिद्भाविन आत्मनेपदं स्यात् ॥ शीयते । शीयेते । शीयन्ते ॥ शितः किं । अशात्स्यत् ॥

## म्रियतेर्लुङ्लिङोश्च ॥६१॥

ङित्वादात्मनेपदे सिद्धे नियमार्थमिदं ॥ मृङ् । इत्येतस्माद् लुङ्लिङोः शिद्भाविनश्चात्मनेपदं स्यात् । नान्यत्र ॥ अमृत ॥ मृषीष्ट ॥ म्रियन्ते ॥ नियमः किमर्थः । मरिष्यति । अमरिष्यत् ॥

## पूर्ववत् सनः ॥६२॥

सनः पूर्वो यो धातुरात्मनेपदी तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात् ॥ आस्ते । शेते । सन्नन्तादपि तदेव निमित्तं । आसिसिषते । शिशयिषते । निविविक्षते । आचिक्रंसते ॥ गुप । इत्यादिष्वनुदात्तेत्त्वसामर्थ्यात् सन्नन्तादनुदात्तङित इत्यनेनैवात्मनेपदं भवति । जुगुप्सिषते । मीमांसिषते ॥

## आम्प्रत्ययवत् कृञो ऽनुप्रयोगस्य ॥६३॥

अकर्त्रभिप्रायार्थमिदं ॥ आम् प्रत्ययो यस्मात् स आम्प्रत्ययः । आम्प्रकृतिरिति यावत् । तेन तुल्यमनुप्रयुज्यमानात् । डुकृञ् । इत्येतस्मादात्मनेपदं स्यात् ॥ ईक्षांचक्रे ॥ अत्र सूत्रे पूर्ववदित्यनुवर्त्य वाक्यभेदेन नियमः । पूर्ववदेवात्मनेपदं भवति । न तु तद्विपरीतं । तेन कर्तृगामिन्यपि क्रियाफल ऊहांचकारेत्यादौ नात्मनेपदं ॥

## प्रोपाभ्यां युजेरयज्ञपात्रेषु ॥६४॥

अकर्त्रभिप्रायार्थमिदं ॥ प्र । उप । इत्येवंपूर्वाद्युजेरात्मनेपदं स्यात् ॥ युजिर् । प्रयुङ्क्ते । उपयुङ्क्ते ॥ अयज्ञपात्रेषु किं । द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति ॥

## समः क्ष्णुवः ॥६५॥

संपूर्वात् क्ष्णु । इत्येतस्मादात्मनेपदं स्यात् ॥ संक्ष्णुते शस्त्रं । संक्ष्णुवाते । संक्ष्णुवते ॥

## भुजो ऽनवने ॥ ६६ ॥

भुज । इत्येतस्मादात्मनेपदं स्याद्रक्षणभिन्ने ऽर्थे ॥ भुङ्क्ते । भुञ्जाते । भुञ्जते ॥ अनवने किं । महीं भुनक्ति ॥ अनवन इति निर्बंधन रुधादिपठितस्यैव ग्रहणं । न तु भुजो । इत्येतस्य ॥

## णेरणौ यत् कर्म णौ चेत् स कर्तानाध्याने ॥ ६७ ॥

णिचश्चेत्येव सिद्धे ऽकर्त्रभिप्रायार्थमिदं ॥ एयन्तादात्मनेपदं स्यात् । अणौ यत् कर्म णौ यदि तदेव कर्म भवति । अन्यत् कर्म न भवति । स एव कर्म णौ यदि कर्ता भवति । आध्याने तु न भवति ॥ आरोहन्ति हस्तिनं हस्तिपकाः । आरोहयते हस्ती स्वयमेव ॥ पश्यन्ति भृत्या राजानं । दर्शयते भृत्यान् राजा स्वयमेव ॥ णेरिति किं । आरोहयमाणो हस्ती साध्वारोहति ॥ अणाविति किं । गणयति गणं गोपालः । गणयति गणः स्वयमेव ॥ कर्मग्रहणं किं । लुनाति दात्रेण । लावयति दात्रं स्वयमेव ॥ अणौ यत् कर्म णौ चेदिति किं । हस्तिनमारोहन्ति मनुष्याः । हस्ती स्थलमारोहयति मनुष्यान् ॥ स कर्तेति किं । आरोहयन्ति हस्तिनं हस्तिपकाः ॥ अनाध्याने किं । स्मरति वनगुल्मं कोकिलः । स्मरयति कोकिलं वनगुल्मः स्वयमेव ॥ कर्मस्थभावकेषु कर्मस्थक्रियकेषु च धातुषु कर्मवत् कर्मणा तुल्यक्रिय इति कर्मवद्भावेनात्मनेपदं भवति । णेरणाविति सूत्रं तु कर्तृस्थकृयकार्ये कर्तृस्थभावकार्ये च कृतं ॥

## भीस्म्योर्हेतुभये ॥ ६८ ॥

अकर्त्रभिप्रायार्थो ऽयमारम्भः ॥ ञिभी । ष्मिङ् । इत्येताभ्यां एयन्ताभ्यामात्मनेपदं स्याद्लकारवाच्यकर्तृहेतुकौ यदि भयस्मयौ भवतः ॥ भयग्रहणं विस्मयस्याप्युपलक्षणं ॥ मुण्डो भीषयते । जटिलो भीषयते ॥ मुण्डो विस्मापयते । जटिलो विस्मापयते ॥ हेतुभये किं । कुञ्चिकयैनं भाययति । रूपेण विस्माययति ॥

## गृधिवञ्च्योः प्रलम्भने ॥ ६९ ॥

अकर्त्रभिप्रायार्थमिदं ॥ गृधु । वञ्चु । इत्येताभ्यां एयन्ताभ्यामात्मनेपदं स्यान्मिथ्याफलाख्याने ॥ माणवकं गर्धयते ॥ माणवकं वञ्चयते ॥ प्रलम्भने किं । श्वानं गर्धयति । अभिकाङ्क्षामन्योत्पादयतीत्यर्थः । अहिं वञ्चयति । परिहरतीत्यर्थः ॥

## लियः संमाननशालीनीकरणयोश्च ॥७०॥

अकर्त्रभिप्रायार्थमिदं ॥ लीङ् । ली । इत्येताभ्यां णयन्ताभ्यामात्मनेपदं स्यात् पूजने न्यग्भावने चार्थे । चशब्दात् प्रलम्भने च ॥ जटाभिर्लापयते । पूजामधिगच्छतीत्यर्थः ॥ श्येनो वर्तिकामुल्लापयते । न्यग्भावयतीत्यर्थः ॥ बालमुल्लापयते । वञ्चयतीत्यर्थः ॥ संमाननेत्यादि किं । बालमुल्लापयति ॥

## मिथ्योपपदात् कृञो ऽभ्यासे ॥७१॥

अकर्त्रभिप्रायार्थमिदं ॥ डुकृञ् । इत्येतस्माण्णयन्तान्मिथ्या । इत्येतदुपपदादात्मनेपदं स्यात् पौनःपुन्ये ऽर्थे ॥ पदं मिथ्या कारयते । स्वरादि दुष्टमसकृदुच्चारयतीत्यर्थः ॥ मिथ्योपपदादिति किं । पदं सुष्ठु कारयति ॥ कृञः किं । पदं मिथ्या वाचयति ॥ अभ्यासे किं । सकृत् पदं मिथ्या कारयति ॥

## स्वरितञितः कर्त्रभिप्राये क्रियाफले ॥७२॥

णेरिति निवृत्तं । शेषात् कर्तरीति परस्मैपदे प्राप्ते । स्वरितेतो ये धातवो ञितश्च ये तेभ्य आत्मनेपदं स्यात् कर्तृगामिनि प्रधाने क्रियाफले सति ॥ यजमानो यजते । देवदत्तः पचते ॥ ञितः । सुनुते । कुरुते ॥ स्वर्गादि क्रियाफलमिह कर्तारमभिप्रैति ॥ कर्त्रभिप्राये किं । यजन्ति याजकाः । पचन्ति पाचकाः । कुर्वन्ति कर्मकराः । यद्यपि दक्षिणा वेतनं च कर्तुः फलमिच्छन्ति तथापि न तत् प्रधानं फलं तदर्थं क्रियारम्भाभावात् ॥

## अपाद्वदः ॥७३॥

वद । इत्येतस्मादपपूर्वादात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले ॥ अपवदते धनकामो न्यायं ॥ कर्त्रभिप्राये किं । अपवदति ॥

## णिचश्च ॥७४॥

णिजन्तादात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले ॥ कारयते । पाचयते ॥ परगामिनि क्रियाफले शेषात् कर्तरीति परस्मैपदं । कारयति कटं परस्य ॥

## समुदाङ्भ्यो यमो ऽग्रन्थे ॥७५॥

सं । उद् । आङ् । इत्येतत्पूर्वात् । यम । इत्येतस्मादात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले । ग्रन्थविषयश्चेत् प्रयोगो न भवति ॥ व्रीहीन् संयच्छते ॥ आद-

मुद्यच्छते ॥ वस्त्रमायच्छते ॥ अग्रन्थे किं । उद्यच्छति वेदं । ज्ञातुमुद्यमं करोतीत्यर्थः ॥

## अनुपसर्गाज्ज्ञः ॥ ७६ ॥

ज्ञा । इत्येतस्मादनुपसर्गादात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले ॥ गां जानीते ॥ अनुपसर्गात् किं । स्वर्गं लोकं न प्रजानाति मूढः ॥

## विभाषोपपदेन प्रतीयमाने ॥ ७७ ॥

स्वरितञित इत्यादिपञ्चभिः सूत्रैर्यदात्मनेपदं विहितं तत् समीपोच्चारितेन पदेन क्रियाफलस्य कर्तृगामित्वे द्योतिते वा स्यात् ॥ स्वं यज्ञं यजति । यजते वा ॥ स्वं कटं करोति । कुरुते वा ॥ स्वं पुत्रमपवदति । अपवदते वा ॥ स्वं यज्ञं कारयति । कारयते वा ॥ स्वं व्रीहिं संयच्छति । संयच्छते वा ॥ स्वां गां जानाति । जानीते वा ॥

## शेषात् कर्तरि परस्मैपदं ॥ ७८ ॥

पूर्वप्रकरणेनात्मनेपदनियमः कृतः । न परस्मैपदनियमस्तत् सर्वतः प्राप्नोति । तन्नियमार्थमिदं ॥ आत्मनेपदनिमित्तरहितेभ्यो धातुभ्य एव कर्तरि परस्मैपदं स्यात् । नान्येभ्यो धातुभ्यः ॥ भवति । एति ॥ कर्तरि किं । पच्यत ओदनः स्वयमेव ॥ कर्तरि कर्मव्यतिहार इत्यतः कर्तृग्रहणमनुवर्तते । तेन कर्तैव यः कर्ता तत्र परस्मैपदं भवति न तु कर्मकर्तरि ॥

## अनुपराभ्यां कृञः ॥ ७९ ॥

कर्तृगामिनि क्रियाफले गन्धनादिषु च परस्मैपदार्थमिदं ॥ अनु । परा । इत्येवंपूर्वात् । डुकृञ् । इत्येतस्मात् परस्मैपदं स्यात् ॥ अनुकरोति । पराकरोति ॥ कर्तरीत्येव । भावकर्मणोर्मा भूत् ॥ द्वितीयकर्तृग्रहणानुवृत्तेर्नेह । अनुक्रियते स्वयमेव ॥

## अभिप्रत्यतिभ्यः क्षिपः ॥ ८० ॥

क्षिप प्रेरणे स्वरितेत् । ततः कर्त्रभिप्राये परस्मैपदार्थमिदं ॥ अभि । प्रति । अति । इत्येवंपूर्वात् क्षिपः परस्मैपदं स्यात् ॥ अभिक्षिपति ॥ प्रतिक्षिपति ॥ अतिक्षिपति ॥ अभिप्रत्यतिभ्यः किं । आक्षिपते ॥ द्वितीयमपि कर्तृग्रहणमनुवर्तते । तेनेह न अभिक्षिप्यते स्वयमेव ॥

## प्राद्वहः ॥ ८१ ॥

वह प्रापणे स्वरितेत् । तत्र कर्तृगामिनि क्रियाफले परस्मैपदार्थमिदं ॥ प्रपूर्वाद्वहतेः परस्मैपदं स्यात् ॥ प्रवहति । प्रवहतः । प्रवहन्ति ॥ प्रात् किं । आवहते ॥

## परेर्मृषः ॥ ८२ ॥

मृष तितिक्षायां स्वरितेत् । ततः परस्मैपदार्थमिदं ॥ परिपूर्वान्मृष्यतेः परस्मैपदं स्यात् ॥ परिमृष्यति ॥ परेः किं । आमृष्यते ॥ वहतिमपि केचिदत्रानुवर्तयन्ति । परिवहति ॥

## व्याङ्परिभ्यो रमः ॥ ८३ ॥

रमु । अनुदात्तेत् । तत आत्मनेपदमेव प्राप्तं परस्मैपदार्थमिदं ॥ वि । आङ् । परि । इत्येवंपूर्वाद्रमतेः परस्मैपदं स्यात् ॥ विरमति ॥ आरमति ॥ परिरमति ॥ व्याङ्परिभ्यः किं । अभिरमते ॥

## उपाच्च ॥ ८४ ॥

उपपूर्वाद्रमु । इत्येतस्मात् परस्मैपदं स्यात् ॥ देवदत्तमुपरमति । उपरमयतीत्यर्थः । अन्तर्भावितण्यर्थो ऽत्र रमिः ॥ योगविभाग उत्तरार्थः । उत्तरत्र उपादित्यस्यैव संबन्धो यथा स्यात् ॥

## विभाषाकर्मकात् ॥ ८५ ॥

पूर्वेण नित्ये प्राप्ते विकल्पो ऽयं । उपपूर्वाद्रमु । इत्येतस्मादकर्मकादात्मनेपदं स्यात् ॥ यावद्भुक्तमुपरमति । उपरमते वा । निवर्त्तत इत्यर्थः ॥

## बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ॥ ८६ ॥

णिजन्तेभ्य एभ्य आत्मनेपदे प्राप्ते परस्मैपदार्थमिदं ॥ बुध । युध । नश । जन । इङ् । प्रु । द्रु । स्रु । इत्येतेभ्यो ण्यन्तेभ्यः परस्मैपदं स्यात् ॥ बोधयति पद्मं ॥ योधयति काष्ठानि ॥ नाशयति दुःखं ॥ जनयति सुखं ॥ अध्यापयति शास्त्रं ॥ प्रावयति । प्रापयतीत्यर्थः ॥ द्रावयति । विलापयतीत्यर्थः ॥ स्रावयति । स्यन्दयतीत्यर्थः ॥ ये [illegible]—

दित्येवात्मनेपदे सिद्धे ऽचित्तवत्कर्तृकार्थमत्र सूत्रे ग्रहणं ॥ चलनार्थानां निगरणाचलनार्थेभ्य इत्येव सिद्धे ऽचलने ऽर्थे ऽप्यात्मनेपदार्थमिह ग्रहणं ॥

## निगरणचलनार्थेभ्यश्च ॥ ८७ ॥

णिचश्चेत्यस्यापवादः ॥ भक्षणार्थेभ्यः कम्पनार्थेभ्यश्च ण्यन्तेभ्यो धातुभ्यः परस्मैपदं स्यात् ॥ आशयति । भोजयति ॥ चलयति । कम्पयति ॥

## अणावकर्मकाच्चित्तवत्कर्तृकात् ॥ ८८ ॥

णिचश्चेत्यस्यापवादः ॥ अणौ यो धातुरकर्मकश्चित्तवत्कर्तृकश्च तस्माण्ण्यन्तात् परस्मैपदं स्यात् ॥ आसयति देवदत्तं । शाययति देवदत्तं ॥ अणाविति किं । आरोहयमाणं प्रेरयति । आरोहयते ॥ अकर्मकात् किं । कटं कुर्वाणं प्रेरयति । कारयते ॥ चित्तवत्कर्तृकात् किं । शुष्यन्ति व्रीहयः । शोषयति व्रीहीनातपः ॥

## न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ॥ ८९ ॥

पा । दमि । आङ्यम । आङ्यस । परिमुह । रुचि । नृति । वद । वस । इत्येतेभ्यो ण्यन्तेभ्यः परस्मैपदं न स्यात् ॥ पा । पाययते ॥ दम । दमयते ॥ आङ्पूर्वो यम । आयामयते । यमो ऽपरिवेषण इति मित्संज्ञानिषेधः ॥ आङ्पूर्वो यसु । आयासयते ॥ परिपूर्वो मुह । परिमोहयते ॥ रुच । रोचयते ॥ नृती । नर्तयते ॥ वद । वादयते ॥ वस । वासयते ॥ अत्र पिबतिर्निगरणार्थः । नृतिश्चलनार्थो ऽपि । अन्ये चित्तवत्कर्तृका अकर्मकाः । तत्र पूर्वसूत्रद्वयप्राप्तस्य परस्मैपदस्य निषेधो न तु शेषादित्यस्य ॥

## वा क्यषः ॥ ९० ॥

क्यष्प्रत्ययान्ताद्धातोः परस्मैपदं वा स्यात् ॥ लोहितायति । लोहितायते ॥

## द्युद्भ्यो लुङि ॥ ९१ ॥

अनुदात्तेत्त्वान्नित्यं प्राप्ते ऽयं विकल्पः ॥ बहुवचनादाद्यर्थलाभः ॥ द्युत दीप्तौ । इत्यारभ्य कृपू । इत्यन्तेभ्यो धातुभ्यो लुङः परस्मैपदं वा स्यात् ॥ अद्युतत् । अद्योतिष्ट । अलुठत् । अलोठिष्ट ॥ लुङीति किं । द्योतते ॥

## वृद्भ्यः स्यसनोः ॥ ९२ ॥

वृतु । वृधु । शृधु । स्यन्दू । कृपू । इत्येतेभ्यः स्यसनोर्विषये परस्मैपदं वा स्यात् ॥ वृतु । वर्त्स्यति । अवर्त्स्यत् । वर्तिष्यते । अवर्तिष्यत ॥ विवृत्सति । विवर्तिषते ॥

## लुटि च कृपः ॥९३॥

लुटि स्यसनोश्च विषये कृपू । इत्येतस्मात् परस्मैपदं वा स्यात् ॥ कल्प्ता । कल्प्तारौ । कल्प्तारः । कल्प्तासि । कल्पितासे ॥ कल्प्स्यति । कल्पिष्यते । अकल्प्स्यत् । अकल्पिष्यत ॥ चिक्लृप्सति । चिकल्पिषते ॥

॥ इति सूत्रपाठे प्रथमाध्यायस्य तृतीयः पादः ॥

---

## आ कडारादेका संज्ञा ॥१॥

इत ऊर्ध्वं कडाराः कर्मधारये इति सूत्रात् प्राग्या या संज्ञा सैकस्यैकैव ज्ञेया । का पुनरसौ । या परानवकाशा च ॥ अततक्षत् । अररक्षत् ॥ अत्र ह्रस्वं लघु । इत्यनेन लघुसंज्ञा प्राप्ता तां बाधित्वा परत्वात् संयोगे गुरु । इत्यनेन गुरुसंज्ञैव भवति । तेन सन्वल्लघुनीत्यादिना सन्वद्भावो न ॥

## विप्रतिषेधे परं कार्यं ॥२॥

तुल्यबलयोर्विरोधे परं कार्यं स्यात् ॥ सुपि चेत्यस्यावकाशः । वृक्षाभ्यां । बहुवचने झल्येदित्यस्यावकाशः । वृक्षेषु ॥ इहोभयं प्राप्नोति वृक्षेभ्यः । परमेत्वं भवति विप्रतिषेधेन ॥

## यू स्त्र्याख्यौ नदी ॥३॥

ई । ऊ । इत्येतदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः ॥ कुमारी । गौरी ॥ ब्रह्मबन्धूः । यवागूः ॥ यू किं । माले ॥ स्त्र्याख्यौ किं । ग्रामणीः । खलपूः ॥ [illegible] किं । ग्रामणी स्त्री ॥

## नेयङुवङुस्थानावस्त्री ॥ ४ ॥

इयङुवङोः स्थितिर्ययोस्तौ । ई ऊ । इत्येतौ नदीसंज्ञौ न स्तः । स्त्रीशब्दं वर्जयित्वा ॥ हे श्रीः । हे भ्रूः ॥ अस्त्रीति किं । हे स्त्रि ॥

## वामि ॥ ५ ॥

इयङुवङोः स्थितिर्ययोस्तौ । ई । ऊ । इत्येतौ वा आमि नदीसंज्ञौ न स्तः ॥ श्रियां । श्रीणां ॥ भ्रुवां । भ्रूणां ॥ अस्त्रीत्येव । स्त्रीणां ॥

## ङिति ह्रस्वश्च ॥ ६ ॥

इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गौ । ई । ऊ । इत्येतौ ह्रस्वौ च । इ । उ । इत्येतौ स्त्रियां ङिति परे वा नदीसंज्ञौ स्तः ॥ कृत्यै । कृतये ॥ धेन्वै । धेनवे ॥ श्रियै । श्रिये ॥ भ्रुवै । भ्रुवे ॥ अस्त्रीत्येव । स्त्रियै ॥ स्त्रियां किं । अग्नये ॥

## शेषो घ्यसखि ॥ ७ ॥

इ उ । इत्येतौ ह्रस्वौ घिसंज्ञौ स्तः । सखिशब्दं वर्जयित्वा ॥ अग्नये । कृतये ॥ वायवे । धेनवे ॥ असखीति किं । सख्या ॥

## पतिः समास एव ॥ ८ ॥

नियमार्थमिदं ॥ पतिशब्दः समास एव घिसंज्ञः स्यात् ॥ भूपतिना । भूपतये ॥ समास इति किं । पत्या । पत्ये ॥ एवकारो विपरीतनियमवारणार्थः । दृढमुष्टिना ॥

## षष्ठीयुक्तश्छन्दसि वा ॥ ९ ॥

षष्ठ्यन्तेन युक्तः पतिशब्दो वेदे घिसंज्ञो वा स्यात् ॥ कुलुञ्चानां पतये नमः ॥ षष्ठीति किं । मया पत्या जरदष्टिर्यथा नः ॥

## ह्रस्वं लघु ॥ १० ॥

ह्रस्वमक्षरं लघुसंज्ञं स्यात् ॥ भिद् । भेत्ता ॥

## संयोगे गुरु ॥ ११ ॥

संयोगे परे ह्रस्वमक्षरं गुरुसंज्ञं स्यात् ॥ देवदाऽत्र । शिक्षा ॥

## दीर्घं च ॥१२॥

दीर्घमक्षरं गुरुसंज्ञं स्यात् ॥ ईहांचक्रे । ऊहांचक्रे ॥

## यस्मात् प्रत्ययविधिस्तदादि प्रत्यये ऽङ्गं ॥१३॥

यस्मात् प्रत्ययो विधीयते तदादि शब्दस्वरूपं तस्मिन् प्रत्यये परे ऽङ्गसंज्ञं स्यात् ॥ कर्ता । करिष्यति ॥ यस्मादिति संज्ञिनिर्देशार्थं । तदादीति संबन्धात् ॥ प्रत्ययग्रहणं किं । न्यविशत ॥ नेर्विश इत्युपसर्गाद्विधिरस्ति । तदादेरङ्गसंज्ञा स्यात् ॥ विधिरिति किं । स्त्री इयती ॥ तदादीति स्यादिनुमर्थं । करिष्यावः । कुण्डानि ॥ प्रत्यये किं । स्त्र्यर्थं ॥

## सुप्तिङन्तं पदं ॥१४॥

सुबन्तं तिङन्तं च शब्दस्वरूपं पदसंज्ञं स्यात् ॥ ब्राह्मणाः ॥ पचन्ति ॥

## नः क्ये ॥१५॥

नियमार्थमिदं ॥ क्यच् । क्यष् । क्यङ् । इत्येतेषु नान्तमेव पदसंज्ञं स्यात् ॥ क्यच् । राजीयति ॥ क्यष् । चर्मायते ॥ क्यङ् । राजायते ॥ न इति किं । वाच्यति । स्रुच्यति ॥

## सिति च ॥१६॥

यचि भमित्यस्यापवादः ॥ सिति प्रत्यये पूर्वं पदसंज्ञं स्यात् ॥ भवदीयः । ऊर्णायुः ॥

## स्वादिष्वसर्वनामस्थाने ॥१७॥

कप्प्रत्ययावधिषु स्वादिषु सर्वनामस्थानवर्जितेषु पूर्वं पदसंज्ञं स्यात् ॥ राजभ्यां । राजभिः । राजता । राजत्वं ॥ असर्वनामस्थाने किं । राजानौ । राजानः ॥

## यचि भं ॥१८॥

यकारादिष्वजादिषु च स्वादिषु सर्वनामस्थानवर्जितेषु परेषु पूर्वं भसंज्ञं स्यात् ॥ गार्ग्यः । वात्स्यः ॥ दाक्षिः ॥

## तसौ मत्वर्थे ॥१९॥

तान्तसान्तौ मत्वर्थे प्रत्यये परे भसंज्ञौ भवतः ॥ उदश्वित्वान् घोषः । विद्युत्वान् मेघः ॥ यशस्वी । पयस्वी ॥ तसौ किं । तक्षवान् ॥

## अयस्मयादीनि छन्दसि ॥ २० ॥

अयस्मय । इत्यादीनि शब्दस्वरूपाणि वेदे भसंज्ञानि स्युः ॥ अयस्मयं चर्म ॥

## बहुषु बहुवचनं ॥ २१ ॥

ङ्याप्प्रातिपदिकात् स्वादयः । लस्य तिबादयः सामान्येन विहिताः । तत्र बहुष्वर्थेषु वाच्येषु बहुवचनमेव भवति ॥ ब्राह्मणाः । पचन्ति ॥

## द्व्येकयोर्द्विवचनैकवचने ॥ २२ ॥

द्वित्वैकत्वयोर्द्विवचनैकवचने क्रमेण भवतः ॥ ब्राह्मणौ । पचतः ॥ ब्राह्मणः । पचति ॥

## कारके ॥ २३ ॥

अधिकारो ऽयं ॥ इत ऊर्ध्वं यदनुक्रमिष्यामः कारक इत्येवं तद्वेदितव्यं ॥ ग्रामादायाति । इत्यादि ॥

## ध्रुवमपाये ऽपादानं ॥ २४ ॥

विश्लेषे ऽवधिभूतं कारकसंज्ञं तदपादानसंज्ञं स्यात् ॥ ग्रामादायाति । पर्वतात् पतितः ॥

## भीत्रार्थानां भयहेतुः ॥ २५ ॥

भयार्थानां त्राणार्थानां च धातूनां प्रयोगे भयहेतुः कारकमपादानं स्यात् ॥ चोराद्बिभेति ॥ चोरात्त्रायते ॥ भयहेतुः किं ? अरण्ये बिभेति ॥

## पराजेरसोढः ॥ २६ ॥

परापूर्वस्य जयतेः प्रयोगे ऽसह्यो यो ऽर्थस्तत् कारकमपादानं स्यात् ॥ अध्ययनात् पराजयते ॥ असोढः किं । शत्रून् पराजयते ॥

## वारणार्थानामीप्सितः ॥ २७ ॥

वारणार्थानां धातूनां प्रयोग इष्टो यो ऽर्थस्तत् कारकमपादानं स्यात् ॥ यवेभ्यो गां वारयति ॥ ईप्सितः किं । यवेभ्यो गां वारयति क्षेत्रे ॥

## अन्तर्धौ येनादर्शनमिच्छति ॥२८॥

व्यवधाने सति स्वात्मकर्मकदर्शनाभावं यत् कर्तृकमिच्छति तत् कारकमपादानं स्यात् ॥ उपाध्यायादन्तर्धत्ते । मातुर्निलीयते ॥ अन्तर्धौ किं । चौरं न दिदृक्षते ॥ इच्छतिग्रहणं किं । अदर्शनेच्छायां सत्यपि दर्शने यथा स्यात् ॥

## आख्यातोपयोगे ॥२९॥

नियमपूर्वकविद्याग्रहणे यो वक्ता तत् कारकमपादानं स्यात् ॥ उपाध्यायादधीते ॥ उपयोगे किं । नटस्य शृणोति ॥

## जनिकर्तुः प्रकृतिः ॥३०॥

उत्पद्यमानस्य यो हेतुस्तत् कारकमपादानं स्यात् ॥ गोमयाद्वृश्चिको जायते ॥

## भुवः प्रभवः ॥३१॥

भवनं भूः । उत्पत्तिः । तत्कर्तुर्यत् प्रकाशस्थानं तत् कारकमपादानं स्यात् ॥ हिमवतो गङ्गा प्रभवति । प्रथमत उपलभ्यत इत्यर्थः ॥

## कर्मणा यमभिप्रैति स संप्रदानं ॥३२॥

ददातिकर्मणा करणभूतेन कर्ता यमिच्छति तत् कारकसंज्ञकं सत् संप्रदानसंज्ञं स्यात् ॥ विप्राय गां ददाति ॥ भिक्षवे भिक्षां ददाति ॥

## रुच्यर्थानां प्रीयमाणः ॥३३॥

अन्यकर्तृकोऽभिलाषो रुचिः । रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणो योऽर्थस्तत् कारकं संप्रदानं स्यात् ॥ देवदत्ताय रोचते मोदकः । देवदत्ताय स्वदते अपूपः । देवदत्तस्याभिलाषस्य मोदकः कर्ता ॥ प्रीयमाणः किं । देवदत्ताय रोचते मोदकः पथि । अत्र पथो मा भूत् ॥

## श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ॥३४॥

श्लाघ । ह्नुङ् । स्था । शप । इत्येषां प्रयोगे बोधयितुमिष्टो योऽर्थस्तत् कारकं संप्रदानं स्यात् ॥ देवदत्ताय श्लाघते ॥ देवदत्ताय ह्नुते ॥ देवदत्ताय तिष्ठते ॥ देवदत्ताय शपते ॥ ज्ञीप्स्यमानः किं । देवदत्तं श्लाघते ॥

## धारेरुत्तमर्णः ॥३५॥

धारयतेः प्रयोगे धनस्वामी कारकं सत् संप्रदानसंज्ञः स्यात् ॥ देवदत्ताय शतं धारयति ॥ उत्तमर्णः किं । देवदत्ताय शतं धारयति ग्रामे ॥

## स्पृहेरीप्सितः ॥ ३६ ॥

स्पृह ईप्सायां चुरादावदन्तः । तस्य प्रयोग इष्टः कारकं संप्रदानं स्यात् ॥ पुष्पेभ्यः स्पृहयति ॥ ईप्सितः किं । पुष्पेभ्यो वने स्पृहयति ॥

## क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ॥ ३७ ॥

क्रोधो ऽमर्षः । द्रोहो ऽपकारः । ईर्ष्याक्षमा । असूया गुणेषु दोषाविष्करणं ॥ क्रोधाद्यर्थानां प्रयोगे यं प्रति कोपस्तत् कारकं संप्रदानं स्यात् ॥ द्रोहादयो ऽपि कोपप्रभवा एव गृह्यन्ते । अतो विशेषणं सामान्येन यं प्रति कोप इति ॥ देवदत्ताय क्रुध्यति ॥ देवदत्ताय द्रुह्यति ॥ देवदत्तायेर्ष्यति ॥ देवदत्तायासूयति ॥ यं प्रति कोपः किं । भार्यामीर्ष्यति । मैनामन्यो ऽद्राक्षीदिति ॥

## क्रुधद्रुहोरुपसृष्टयोः कर्म ॥ ३८ ॥

सोपसर्गयोः क्रुध द्रुह । इत्येतयोः प्रयोगे यं प्रति कोपस्तत् कारकं कर्मसंज्ञं स्यात् ॥ देवदत्तमभिक्रुध्यति ॥ देवदत्तमभिद्रुह्यति ॥ उपसृष्टयोः किं । देवदत्ताय क्रुध्यति । यज्ञदत्ताय द्रुह्यति ॥

## राधीक्ष्योर्यस्य विप्रश्नः ॥ ३९ ॥

राध । ईक्ष । इत्येतयोः प्रयोगे यत् संबन्धिशुभाशुभं पृच्छ्यते तत् कारकं संप्रदानं स्यात् ॥ देवदत्ताय राध्यति ॥ देवदत्तायेक्षते ॥ पृष्टः सन् देवदत्तस्य शुभाशुभं पर्यालोचयतीत्यर्थः ॥

## प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ॥ ४० ॥

प्रति । आङ् । इत्येवंपूर्वस्य शृणोतेः प्रयोगे पूर्वस्य प्रवर्तनारूपव्यापारस्य कर्तृकारकं संप्रदानसंज्ञं स्यात् ॥ विप्राय गां प्रतिशृणोति ॥ विप्राय गामाशृणोति ॥ विप्रेण मह्यं देहीति प्रवर्तितः । प्रतिजानीत इत्यर्थः ॥

## अनुप्रतिगृणश्च ॥ ४१ ॥

अनु । प्रति । इत्येवंपूर्वस्य गृणातेः प्रयोगे पूर्वस्य प्रवर्तनारूपव्यापारस्य कर्तृका-

रकं संप्रदानसंज्ञं स्यात् ॥ होत्रे ऽनुगृणाति ॥ होत्रे प्रतिगृणाति ॥ होता प्रथमं शंसति तमध्वर्युः प्रोत्साहयतीत्यर्थः ॥

## साधकतमं करणं ॥४२॥

क्रियासिद्धौ यत् प्रकृष्टोपकारकं तत् कारकं करणसंज्ञं स्यात् ॥ दात्रेण लुनाति ॥ तमग्रहणं किं । गङ्गायां घोषः ॥

## दिवः कर्म च ॥४३॥

दिवु । इत्येतस्य यत् साधकतमं कारकं तत् कर्मसंज्ञं स्यात् । चात् करणसंज्ञं ॥ अक्षान् दीव्यति । अक्षैर्दीव्यति ॥

## परिक्रयणे संप्रदानमन्यतरस्यां ॥४४॥

नियतकालं भृत्यास्वीकरणं परिक्रयणं । तस्मिन् साधकतमं कारकं संप्रदानसंज्ञं वा स्यात् । पक्षे करणसंज्ञा ॥ शताय परिक्रीतः । शतेन परिक्रीतः ॥

## आधारो ऽधिकरणं ॥४५॥

क्रियाधारभूतयोः कर्तृकर्मणोर्य आधारस्तत् कारकमधिकरणसंज्ञं स्यात् ॥ कटे आस्ते विप्रः । कटे शेते विप्रः । स्थाल्यां तण्डुलं पचति । मोक्ष इच्छास्ति । तिलेषु तैलं ॥

## अधिशीङ्स्थासां कर्म ॥४६॥

शीङ् । स्था । आस् । इत्येतेषामधिपूर्वाणामाधारः कारकं कर्मसंज्ञं स्यात् ॥ ग्राममधिशेते ॥ ग्राममधितिष्ठति ॥ ग्राममध्यास्ते ॥

## अभिनिविशश्च ॥४७॥

अभिनि । इत्येतत्समुदायपूर्वस्य विश । इत्येतस्याधारः कारकं कर्मसंज्ञं स्यात् ॥ ग्राममभिनिविशते ॥ परिक्रयणे संप्रदानमन्यतरस्यामित्यतो मण्डूकप्लुत्यान्यतरस्यांग्रहणानुवृत्तेः क्वचिन्न । पापे ऽभिनिवेशः ॥

## उपान्वध्याङ्वसः ॥४८॥

उप । अनु । अधि । आङ् । इत्येवंपूर्वस्य वसतेराधारः कर्मसंज्ञः स्यात् ॥ ग्राममुपवसति ॥ ग्राममनुवसति ॥ ग्राममधिवसति ॥ ग्राममावसति ॥

## कर्तुरीप्सिततमं कर्म ॥४९॥

कर्तुः क्रियया व्याप्तुमिष्टतमं यत् कारकं तत् कर्मसंज्ञं स्यात् ॥ ओदनं पचति देवदत्तः । कटं करोति । ग्रामं गच्छति ॥ कर्तुः किं । माषेष्वश्वं बध्नाति । कर्मण ईप्सिता माषा न कर्तुः ॥ ईप्सिततमं किं । पयसौदनं भुङ्क्ते ॥ तमग्रहणं किं । अग्नेर्माणवकं वारयति । अत्रानवकाशत्वान्माणवकस्यापि वारणार्थानामित्यपादानत्वं स्यात् ॥ कर्मेत्यनुवर्तमाने पुनः कर्मग्रहणमाधार-निवृत्त्यर्थं । आधारानुवृत्तौ गेहं प्रविशतीत्यत्रैव स्यात् । न तु । ओदनं पचतीत्यत्र ॥

## तथायुक्तं चानीप्सितं ॥५०॥

ईप्सिततमवत् क्रियया युक्तमनीप्सितमपि कारकं कर्मसंज्ञं स्यात् ॥ विषं भक्षयति । चोरान् पश्यति । ग्रामं गच्छन् वृक्षमूलमुपसर्पति ॥

## अकथितं च ॥५१॥

अपादानादिविशेषकथाभिरविवक्षितं कारकं कर्मसंज्ञं स्यात् ॥ गां दोग्धि पयः । पौरवं गां याचते । अवरुणद्धि गां व्रजं । माणवकं पन्थानं पृच्छति । पौरवं गां भिक्षते । वृक्षमवचिनोति फलानि । माणवकं धर्मं ब्रूते । माणवकं धर्ममनुशास्ति ॥

## गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ ॥५२॥

एयामण्यन्ते यः कर्ता स ण्यन्ते कर्मसंज्ञः स्यात् ॥ गत्यर्थ । गच्छति ग्रामं देवदत्तः । गमयति ग्रामं देवदत्तं ॥ बुद्ध्यर्थ । बुध्यते धर्मं देवदत्तः । बोधयति धर्मं देवदत्तं ॥ भक्षणार्थ । भुङ्क्ते ओदनं माणवकः । भोजयत्योदनं माणवकं ॥ शब्दकर्म । अधीते वेदं माणवकः । अध्यापयति वेदं माणवकं ॥ अकर्मक । शेते कृष्णः । शाययति कृष्णं गोपी ॥ एयामिति किं । पचत्योदनं देवदत्तः । पाचयत्योदनं देवदत्तेन यज्ञदत्तः ॥ अण्यन्त इति किं । गमयति देवदत्तं यज्ञदत्तः । तमपरः प्रेरयति । गमयति देवदत्तं यज्ञदत्तेन विष्णुमित्रः ॥

## हृक्रोरन्यतरस्यां ॥५३॥

हृञ् । डुकृञ् । इत्येतयोरण्यन्ते यः कर्ता स णौ वा कर्मसंज्ञः स्यात् ॥ हरति भारं देवदत्तः । हारयति भारं देवदत्तं देवदत्तेन वा ॥ करोति कटं देवदत्तः । कारयति कटं देवदत्तं देवदत्तेन वा ॥

## स्वतन्त्रः कर्ता ॥५४॥

क्रियासिद्धौ स्वातन्त्र्येण विवक्षितो यस्तत् कारकं कर्तृसंज्ञं स्यात् ॥ देवदत्तः पचति । स्थाली पचति । देवदत्तेन पच्यते तण्डुलः ॥

## तत्प्रयोजको हेतुश्च ॥५५॥

कर्तुः प्रेरको हेतुसंज्ञः स्यात् कर्तृसंज्ञश्च ॥ करोति देवदत्तः । कुर्वन्तं प्रेरयति । कारयति देवदत्तं यज्ञदत्तः

## प्राग्रीश्वरान्निपाताः ॥५६॥

अधिरीश्वर इति वक्ष्यति । ततः प्राक् प्राङ्निपाता इत्यधिकारो वेदितव्यः ॥ च । वा । ह ॥ प्राग्ग्रहणं निपातादिसंज्ञासमावेशार्थं ॥ रेफोच्चारणमीश्वरे तोसुन्कसुनावित्यवधिर्मा विज्ञायीति ॥

## चादयो ऽसत्त्वे ॥५७॥

अद्रव्यार्थाश्चादयो निपातसंज्ञाः स्युः ॥ च । वा । ह ॥ निपातत्वादव्ययत्वं । अव्ययत्वाद्विभक्तिलुक् ॥ असत्त्वे किं । पशुः पुरुषः ॥

## प्रादयः ॥५८॥

अद्रव्यार्थकाः प्रादयो निपातसंज्ञाः स्युः ॥ प्र । परा ॥ असत्त्व इत्येव । पराः सेनाः ॥

## उपसर्गाः क्रियायोगे ॥५९॥

प्रादयः क्रियायोग उपसर्गसंज्ञाः स्युः ॥ प्रणयति । परिणयति ॥ क्रियायोगे किं । प्रगतो नायको ऽस्माद्देशात् प्रनायकः ॥

## गतिश्च ॥६०॥

प्रादयः प्राङ्निपाताः सन्त उपसर्गसंज्ञका गतिसंज्ञकाश्च स्युः ॥ प्रकृत्य । प्रकृतं ॥

योगविभाग उत्तरार्थः । उत्तरत्र गतिसंज्ञैव यथा स्यात् । उपसर्गसंज्ञा मा भूत् । चकारस्तूपसर्गसंज्ञासमावेशार्थः । प्रतिप्रणीतं ॥

## ऊर्यादिच्विडाचश्च ॥ ६१ ॥

ऊर्यादयः शब्दाश्च्विप्रत्ययान्ता डाच्प्रत्ययान्ताश्च क्रियायोगे गतिसंज्ञाः स्युः ॥ ऊरीकृत्य ॥ च्वि । शुक्लीकृत्य ॥ डाच् । पटपटाकृत्य ॥

## अनुकरणं चानितिपरं ॥ ६२ ॥

इतिशब्दपरकं यन्न भवति तदनुकरणं गतिसंज्ञं स्यात् ॥ खात्कृत्य ॥ अनितिपरं किं । खादिति कृत्वा निरष्ठीवत् ॥

## आदरानादरयोः सदसती ॥ ६३ ॥

सत् । असत् । इत्येतौ गतिसंज्ञौ स्तः क्रमेणादरानादरयोरर्थयोः ॥ सत्कृत्य ॥ असत्कृत्य ॥ आदरेत्यादि किं । सत् कृत्वा काण्डं गतः ॥

## भूषणे ऽलं ॥ ६४ ॥

भूषणे यो ऽलंशब्दः स गतिसंज्ञः स्यात् ॥ अलंकृत्य ॥ भूषणे किं । अलं कृत्वोदनं गतः ॥

## अन्तरपरिग्रहे ॥ ६५ ॥

अन्तर् । इत्ययं शब्दो ऽपरिग्रहे ऽर्थे गतिसंज्ञः स्यात् ॥ अन्तर्हत्य ॥ अपरिग्रहे किं । अन्तर्हत्वा गतः । हतं परिगृह्य गत इत्यर्थः ॥

## कणेमनसी श्रद्धाप्रतीघाते ॥ ६६ ॥

कणे । मनस् । इत्येतौ गतिसंज्ञौ स्तः श्रद्धाप्रतिघाते ऽर्थे ॥ कणेहत्य । मनोहत्य पयः पिबति ॥ कणेशब्दः सप्तमीप्रतिरूपको निपातो ऽभिलाषातिशये वर्तते । मनःशब्दो ऽप्यत्रैव ॥ श्रद्धाप्रतीघाते किं । कणे हत्वा गतः ॥

## पुरो ऽव्ययं ॥ ६७ ॥

पुरस् । इत्येतदव्ययं गतिसंज्ञं स्यात् ॥ पुरस्कृत्य ॥ अव्ययं किं । पुरः कृत्वा काण्डं गतः ॥

## अस्तं च ॥६८॥

अस्तं । इत्येतन्मान्तमव्ययं गतिसंज्ञं स्यात् ॥ अस्तंगत्य ॥

## अच्छ गत्यर्थवदेषु ॥६९॥

अच्छ । इत्येतदव्ययं गतिसंज्ञं स्याद्गत्यर्थधातुयोगे वद्धातुयोगे सति ॥ अच्छगत्य । अभिमुखं गत्वेत्यर्थः ॥ अच्छोद्य । अभिमुखमुक्त्वेत्यर्थः ॥ अव्ययं किं । जलमच्छं गच्छति ॥

## अदोऽनुपदेशे ॥७०॥

अदस् । इत्येतस्य गतिसंज्ञा स्यात् परं प्रत्यनुपदेशे ॥ अदःकृत्य ॥ अनुपदेशे किं । अदः कृत्वा काण्डं गतः । परं प्रत्युपदेशोऽयं ॥

## तिरोऽन्तर्धौ ॥७१॥

तिरस् । इत्ययं शब्दो व्यवधानेऽर्थे गतिसंज्ञः स्यात् ॥ तिरोभूय ॥ अन्तर्धौ किं । तिरो भूत्वा तिष्ठति ॥

## विभाषा कृञि ॥७२॥

प्राप्तविभाषेयं ॥ तिरस् । इत्येतत् कृञ्योगे वा गतिसंज्ञं स्यात् ॥ तिरस्कृत्य । तिरःकृत्य । तिरः कृत्वा ॥ अन्तर्धावित्येव । नेह । तिरः कृत्वा काण्डं तिष्ठति ॥

## उपाजेऽन्वाजे ॥७३॥

एतौ कृञ्योगे वा गतिसंज्ञौ स्तः ॥ उपाजेकृत्य । उपाजे कृत्वा ॥ अन्वाजेकृत्य । अन्वाजे कृत्वा ॥ दुर्बलस्य बलमाधायेत्यर्थः ॥

## साक्षात्प्रभृतीनि च ॥७४॥

साक्षात् । इत्येवमादीनि शब्दस्वरूपाणि कृञ्योगे वा गतिसंज्ञानि स्युः ॥ साक्षात्कृत्य । साक्षात् कृत्वा ॥ लवणंकृत्य । लवणं कृत्वा ॥ मान्तत्वं निपातनात् ॥

## अनत्याधान उरसिमनसी ॥७५॥

उरसि । मनसि । इत्येतौ कृञ्योगे वा गतिसंज्ञौ स्तः । अत्याधानमुपश्लेषणं

न ॥ उरसिकृत्य । उरसि कृत्वा । स्वीकृत्येत्यर्थः ॥ मनसिकृत्य । मनसि कृत्वा । निश्चित्येत्यर्थः ॥

## मध्ये पदे निवचने च ॥ ७६ ॥

एते शब्दा अनत्याधाने ऽर्थे कृञ्योगे वा गतिसंज्ञाः स्युः ॥ मध्येकृत्य । मध्ये कृत्वा ॥ पदेकृत्य । पदे कृत्वा ॥ निवचनेकृत्य । निवचने कृत्वा । वाचं नियम्येत्यर्थः ॥ अनत्याधाने किं । हस्तिनः पदे कृत्वा शिरः शेते ॥

## नित्यं हस्ते पाणावुपयमने ॥ ७७ ॥

हस्ते । पाणौ । इत्येतौ कृञ्योगे नित्यं गतिसंज्ञौ भवतो विवाहे ॥ हस्तेकृत्य । पाणौकृत्य । दारकर्म कृत्वेत्यर्थः ॥ उपयमने किं । हस्ते कृत्वा कार्षापणं गतः ॥

## प्राध्वं बन्धने ॥ ७८ ॥

प्राध्वं । इत्येतदव्ययं बन्धनहेतुक आनुकूल्ये वर्तमानं कृञ्योगे नित्यं गतिसंज्ञं स्यात् ॥ प्राध्वंकृत्य । बन्धनेनानुकूल्यं कृत्वेत्यर्थः ॥ बन्धने किं । प्राध्वं कृत्वा गतः ॥

## जीविकोपनिषदावौपम्ये ॥ ७९ ॥

जीविका । उपनिषद् । इत्येतौ सादृश्ये वर्तमानौ कृञ्योगे नित्यं गतिसंज्ञौ भवतः ॥ जीविकामिव कृत्वा जीविकाकृत्य ॥ उपनिषत्कृत्य ॥ औपम्ये किं । जीविकां कृत्वा ॥

## ते प्राग्धातोः ॥ ८० ॥

गत्युपसर्गसंज्ञका धातोः प्रागेव प्रयोक्तव्याः ॥ प्रभवति ॥

## छन्दसि परे ऽपि ॥ ८१ ॥

गत्युपसर्गसंज्ञका वेदे परे प्रयोक्तव्याः । अपिशब्दात् पूर्वे ऽपि ॥ हन्ति नि मुष्टिना । निहन्ति मुष्टिना ॥

## व्यवहिताश्च ॥ ८२ ॥

गत्युपसर्गसंज्ञका वेदे व्यवहिता अपि प्रयुज्यन्ते ॥ आ मन्द्रैरिन्द्र हरिभिर्याहि । आयाहीत्यन्वयः ॥

## कर्मप्रवचनीयाः ॥ ८३ ॥

गत्युपसर्गसंज्ञापवादः संज्ञाधिकारो ऽयं । लः परस्मैपदमित्यतः प्राक् ॥ इत ऊर्ध्वं याननुक्रमिष्यामस्ते कर्मप्रवचनीयसंज्ञका वेदितव्याः ॥ अनु हरिं ॥

## अनुर्लक्षणे ॥ ८४ ॥

अनु । इत्येषः कर्मप्रवचनीयसंज्ञः स्याद्लक्षणे द्योत्ये ॥ शाकल्यस्य संहितामनु प्रावर्षत् । हेतुभूतसंहिताज्ञानोपलक्षितं वर्षणमित्यर्थः ॥ लक्षणेत्थंभूतेत्यादिनानोः कर्मप्रवचनीयत्वे सिद्धे पुनः संज्ञाविधानसामर्थ्यात् परामपि हेतुतृतीयां बाधित्वा द्वितीयैव भवति ॥

## तृतीयार्थे ॥ ८५ ॥

साहित्ये द्योत्ये ऽनुशब्द उक्तसंज्ञः स्यात् ॥ पर्वतमन्ववसिता सेना । पर्वतेन सह संबद्धेत्यर्थः ॥

## हीने ॥ ८६ ॥

अपकृष्टे द्योत्ये ऽनुशब्द उक्तसंज्ञः स्यात् ॥ अनु हरिं सुराः । हरेर्हीना इत्यर्थः ॥

## उपो ऽधिके च ॥ ८७ ॥

उप । इत्ययं शब्दो ऽधिके हीने च द्योत्ये कर्मप्रवचनीयसंज्ञः स्यात् ॥ उप निष्के कार्षापणं ॥ उप शाकटायनं वैयाकरणाः ॥

## अपपरी वर्जने ॥ ८८ ॥

अप । परि । इत्येतौ वर्जने द्योत्ये कर्मप्रवचनीयसंज्ञौ भवतः ॥ अप त्रिगर्तेभ्यो वृष्टो देवः ॥ परि त्रिगर्तेभ्यो वृष्टो देवः ॥ वर्जने किं । परिषिञ्चति ॥ कर्मप्रवचनीयसंज्ञयोपसर्गसंज्ञाबाध उपसर्गात् सुनोतीति षत्वं न स्यात् ॥

## आङ् मर्यादावचने ॥ ८९ ॥

आङ् । इत्येष शब्दो ऽवधौ कर्मप्रवचनीयसंज्ञः स्यात् ॥ वचनग्रहणादभिविधिरपि गृह्यते ॥ आ पाटलिपुत्राद्वृष्टो देवः । आ कुमारेभ्यः ॥ मर्यादावचने किं । ईषदर्थे मा भूत् ॥

## लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः ॥ ९० ॥

लक्षणादिष्वर्थेषु विषयभूतेषु । प्रति । परि । अनु । इत्येते कर्मप्रवचनीयसंज्ञाः स्युः ॥ लक्षणे । वृक्षं प्रति विद्योतते विद्युत् । वृक्षं परि । वृक्षमनु ॥ इत्थंभूताख्याने । साधुर्देवदत्तो मातरं प्रति । मातरं परि । मातरमनु ॥ भागे । यदत्र मां प्रति स्यात् । मां परि स्यात् । मामनु स्यात् । अनुपसर्गत्वात् षत्वं न ॥ वीप्सायां । वृक्षं वृक्षं प्रति सिञ्चति । परि सिञ्चति । अनु सिञ्चति ॥ लक्षणादिषु किं । ओदनं परिषिञ्चति । अत्र परिशब्दयोगे पञ्चम्यपाङ्परिभिरिति पञ्चमी तु न भवति । अपशब्दसाहचर्येण वर्जनार्थस्यैव परिशब्दस्य तत्र ग्रहणात् ॥

## अभिरभागे ॥ ९१ ॥

भागवर्जितेषु लक्षणादिष्वभिशब्दः कर्मप्रवचनीयसंज्ञः स्यात् ॥ लक्षणे । वृक्षमभि द्योतते ॥ इत्थंभूताख्याने । साधुर्देवदत्तो मातरमभि ॥ वीप्सायां । वृक्षं वृक्षमभि सिञ्चति ॥ अभागे किं । यदत्र ममाभिष्यात् तद्दीयतां । मम भागः स्यादित्यर्थः ॥

## प्रतिः प्रतिनिधिप्रतिदानयोः ॥ ९२ ॥

मुख्यसदृशः प्रतिनिधिः । दत्तस्य निर्यातनं प्रतिदानं । एतयोर्विषये प्रतिशब्दः कर्मप्रवचनीयसंज्ञः स्यात् ॥ प्रद्युम्नः कृष्णात् प्रति ॥ तिलेभ्यः प्रति यच्छति माषान् ॥

## अधिपरी अनर्थकौ ॥ ९३ ॥

अधि । परि । इत्येतौ विशेषार्थस्याद्योतकौ कर्मप्रवचनीयसंज्ञौ भवतः ॥ कुतो ऽध्यागच्छति ॥ कुतः पर्यागच्छति ॥ गतिसंज्ञाया आधाद्गतिर्गताविति निघातो न ॥

## सुः पूजायां ॥ ९४ ॥

सु । इत्येषः कर्मप्रवचनीयसंज्ञः स्यात् पूजायामर्थे ॥ सुसिक्तं । सुस्तुतं ॥ अनुपसर्गत्वान्न षत्वं ॥ पूजायां किं । सुषिक्तं किं तवात्र ॥

## अतिरतिक्रमणे च ॥ ९५ ॥

अतिशब्दो ऽतिक्रमणे पूजायां च कर्मप्रवचनीयसंज्ञः स्यात् ॥ निष्पन्ने ऽपि वस्तुनि क्रियाप्रवृत्तिरतिक्रमणं । अतिसिक्तमेव भवता ॥ पूजायां । अतिस्तुतं ॥

## अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु ॥ ९६ ॥

अपिशब्दः कर्मप्रवचनीयसंज्ञः स्यादेष्वर्थेषु द्योत्येषु ॥ अप्रयुज्यमानपदान्तरस्यार्थः पदार्थः । सर्पिषो ऽपि स्यात् । सर्पिषो बिन्दुरपि स्यादित्यर्थः । अत्र बिन्दुरूपकर्तृद्योतको ऽपिशब्दः ॥ शक्त्युत्कर्षप्रकाशनायात्युक्तिः संभावनं । अपि स्तुयाद्रुद्रं ॥ कामचारानुज्ञान्ववसर्गः । अपि सिञ्च । अपि स्तुहि ॥ निन्दा गर्हा । अपि सिञ्चेत् पलाण्डुं धिग्देवदत्तं ॥ समुच्चये । अपि स्तुहि । अपि सिञ्च । स्तुतिं सेचनं च कुर्वित्यर्थः ॥ उपसर्गसंज्ञाबाधात् षत्वं न ॥

## अधिरीश्वरे ॥ ९७ ॥

अधिशब्दः कर्मप्रवचनीयसंज्ञः स्यात् स्वस्वामिसंबन्धे द्योत्ये ॥ कर्मप्रवचनीय-विभक्तिः सप्तमी कदाचित् स्वामिनो भवति । कदाचित् स्वात् ॥ अधि ब्रह्मदत्ते पञ्चालाः । अधि पञ्चालेषु ब्रह्मदत्तः ॥

## विभाषा कृञि ॥ ९८ ॥

डुकृञ् । इत्येतस्य योगे ऽधिशब्दः कर्मप्रवचनीयसंज्ञो वा स्यात् ॥ यदत्र मामधि करिष्यति ॥ गतिसंज्ञाबाधात् तिङि चोदात्तवतीति निघातो न भवति ॥

## लः परस्मैपदं ॥ ९९ ॥

लकारस्य य आदेशास्ते परस्मैपदसंज्ञाः स्युः ॥ तिप् । तस् । झि । सिप् । थस् । थ । मिप् । वस् । मस् । इत्येते । शतृप्रत्ययेषु । शतृ । क्वसु । इत्येतौ च ॥ भवति । पचन् । [illegible]

## तङानावात्मनेपदं ॥ १०० ॥

पूर्वसंज्ञापवादः ॥ तङ्प्रत्याहारः शानच्कानचौ आत्मनेपदसंज्ञाः स्युः ॥ त । आतां । झ । थास् । आथां । ध्वम् । इट् । वहि । महिङ् । इत्येते । प्रत्ययेषु । शानच् । कानच् । इत्येतौ च ॥ एधते । [illegible] निघ्नानः ॥

## तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ॥ १०१ ॥

तिङ्संबन्धिनः परस्मैपदेष्वात्मनेपदेषु च त्रयस्त्रिकाः क्रमात् प्रथममध्यमोत्तमसंज्ञाः स्युः ॥ तिप् । तस् । झि । इति प्रथमः ॥ सिप् । थस् । थ । इति मध्यमः ॥ मिप् । वस् । मस् ॥ इत्युत्तमः ॥ एवमात्मनेपदेष्वपि ॥

## तान्येकवचनद्विवचनबहुवचनान्येकशः ॥१०२॥

लब्धप्रथमादिसंज्ञानि तिङस्त्रीणि त्रीणि प्रत्येकं क्रमेणैकवचनद्विवचनबहुवचन-संज्ञानि स्युः ॥ तिप् । इत्येकवचनं ॥ तस् । इति द्विवचनं ॥ झि । इति बहुवचनं ॥ इत्यग्रे ऽपि ॥

## सुपः ॥१०३॥

सुपस्त्रीणि त्रीणि वचनानि प्रत्येकमेकवचनद्विवचनबहुवचनसंज्ञानि स्युः ॥ सु । इत्येकवचनं ॥ औ । इति द्विवचनं ॥ जस् । इति बहुवचनं ॥ एवमग्रे ऽपि ॥

## विभक्तिश्च ॥१०४॥

सुप्तिङौ विभक्तिसंज्ञौ भवतः ॥ अष्टाभिः ॥ पचतः ॥

## युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ॥१०५॥

सामान्यविहिततिबादीनां पुरुषनियमो ऽयं ॥ लकारवाच्यकारकवाचिनि युष्मदि प्रयुज्यमाने ऽप्रयुज्यमाने च मध्यमः पुरुषः स्यात् ॥ त्वं पचसि । युवां पचथः । यूयं पचथ ॥ अप्रयुज्यमाने ऽपि । पचसि । पचथः । पचथ ॥ अत्र लका-रवाच्यः कर्ता तद्वाची युष्मच्छब्दः ॥

## प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ॥१०६॥

पूर्वोत्तरसूत्रयोरपवादः ॥ परिहासे गम्यमाने लकारवाच्यकारकवाचिन्यस्मदि सति मन्यधातुरुपपदं तस्य तस्माद्धातोर्मध्यमः स्यात् । तथाभूते युष्मदि सति मन्यतेरुत्तमः स्यात् स चैकार्थस्य वाचकः ॥ मध्यमोत्तमयोर्व्यत्ययेन प्रयोगा-र्थमिदं सूत्रं ॥ एहि मन्ये ओदनं भोक्ष्यसे भुक्तः सो ऽतिथिभिः । इति त्वं मन्यसे ऽहमोदनं भोक्ष्य इत्यर्थः । सत्यमोदने परिहासाय मन्यतेरुत्तमोक्तं-नम् ॥ एतं मन्ये ओदनं भोक्ष्येथे । इति युवां मन्येथे आवामोदनं भोक्ष्यावे

इत्यर्थः ॥ एत मन्य ओदनं भोक्ष्यध्वे । इति यूयं मन्यध्वे वयमोदनं भोक्ष्यामह इत्यर्थः ॥ उदाहरणेषु पुरुषव्यत्ययेन परिहासो व्यज्यते ॥ प्रहासे किं । यथार्थकथने मा भूत् । एहि मन्यसे ओदनं भोक्ष्ये भुक्तः सो ऽतिथिभिः ॥ मन्यतिप्रयना निर्देशादिह न । एहि मनुषे रथेन यास्यामि ॥ युष्मद्युपपद इत्याद्यनुवृत्तेर्नेह । एतु भवान् मन्यत ओदनं भोक्ष्ये ॥

## अस्मद्युत्तमः ॥ १०७ ॥

मध्यमपुरुषनियमो ऽयं ॥ लकारवाच्यकारकवाचिन्यस्मद्युपपदे प्रयुज्यमाने ऽप्रयुज्यमाने चोत्तमः स्यात् ॥ अहं पचामि । आवां पचावः । वयं पचामः ॥ अप्रयुज्यमाने ऽपि । पचामि । पचावः । पचामः ॥

## शेषे प्रथमः ॥ १०८ ॥

मध्यमोत्तमयोरविषयः शेषस्तत्र प्रथमः स्यात् ॥ स पचति । तौ पचतः । ते पचन्ति । पचति । पचतः । पचन्ति ॥

## परः संनिकर्षः संहिता ॥ १०९ ॥

वर्णानामतिशयितः संनिधिः संहितासंज्ञः स्यात् ॥ दध्यत्र ॥

## विरामो ऽवसानं ॥ ११० ॥

वर्णानामभावो ऽवसानसंज्ञः स्यात् ॥ रामः ॥

॥ इति सूत्रपाठे प्रथमाध्यायस्य चतुर्थः पादो ऽध्यायश्च समाप्तः ॥

॥ अथ द्वितीयो ऽध्यायः ॥

## समर्थः पदविधिः ॥१॥

पदसंबन्धी यो विधिः स समर्थपदाश्रितो वेदितव्यः ॥ विशेष्यविशेषणभावावगाह्युपस्थितिजनकत्वरूप एकार्थीभावः सामर्थ्यं गृह्यते । न तु परस्पराकाङ्क्षारूपा व्यपेक्षा ॥ कष्टश्रितः । शङ्कुलाखण्डः ॥ समर्थग्रहणं किं । पश्य देवदत्त कष्टं श्रितो विष्णुमित्रो गुरुकुलं ॥ पदग्रहणं किं । तिष्ठतु दध्यशान त्वं शाकेन । अत्र वर्णविधौ परिभाषोपस्थितौ यण् न स्यात् ॥

## सुबामन्त्रिते पराङ्गवत् स्वरे ॥२॥

सुबन्तमामन्त्रिते परे पराङ्गवद्भवति स्वरे कर्तव्ये ॥ मद्राणां राजन् । परशुना वृश्चन् । आमन्त्रितस्य विधीयमानमाद्युदात्तत्वं ससुप्कस्य भवति ॥ सुबिति किं । पीड्ये पीड्यमान ॥ आमन्त्रिते किं । गेहे गार्ग्यः ॥ परग्रहणं किं । पूर्वस्य मा भूत् । देवदत्त कुण्डेनाटन् ॥ अङ्गग्रहणमुभयोराद्युदात्तत्ववारणाय ॥ वत्करणं किं । स्वाश्रयमपि यथा स्यात् । आ कुण्डेनाटन् । आम एकान्तरमामन्त्रितमनन्तिक इत्येकान्तरता भवति ॥ स्वरे किं । कूपे सिञ्चन् । चर्म नमन् । षत्वणत्वे प्रति पराङ्गवन्न भवति ॥

## प्राक् कडारात् समासः ॥ ३ ॥

अधिकारो ऽयं ॥ कडाराः कर्मधारय इति सूत्रात् प्राग्याननुक्रमिष्यामस्ते समास । इत्येतत्संज्ञका वेदितव्याः ॥ अधिहरि । राजपुरुषः ॥ स च समासो द्विविधः । नित्यो ऽनित्यश्च । अविग्रहो नित्यसमासः । समस्यमानयावत्पदरहितविग्रहो वा ॥ वृत्त्यर्थबोधकं वाक्यं विग्रहः ॥ वृत्तयः पञ्च । कृत् । तद्धित । समास । एकशेष । सन्नाद्यन्तधातु । इत्येतद्रूपाः ॥ विग्रहस्तु द्विविधः । प्रयोगार्हः साधुर्लौकिकः । हरौ इति । राज्ञः पुरुष इति । प्रयोगानर्हो ऽसाधुरलौकिकः । हरिङि अधि । राजन्ङस् पुरुषसु इति ॥

## सह सुपा ॥ ४ ॥

इत ऊर्ध्वं सहेत्येतत् सुपेत्येतत् पदद्वयमधिकृतं वेदितव्यं ॥ वक्ष्यति । अव्ययं विभक्तीत्यादि । अधिहरि ॥ सहेति योगविभागार्थं ॥ तत्र सुबामन्त्रित इत्यतो ऽधिकृतं प्रथमान्तं सुब्ग्रहणमनुवर्तते । सुबन्तं समर्थेन सह समाससंज्ञं स्यात् ॥ पर्यभूषत् । अनुव्यचलत् ॥ यत् किंचित् तिङन्तोत्तरपदको ऽयं समासश्छन्दोमात्रविषयक एव । योगविभागस्येष्टसाधनत्वात् ॥ ततः । सुपा । सुबन्तं सुबन्तेन सह समाससंज्ञं स्यात् ॥ पूर्वं भूतः । भूतपूर्वः ॥ सुपेत्यनेनैव सर्वत्र समासे सिद्धे ऽव्ययं विभक्तीत्यादिना पुनः समाससंज्ञाविधानसामर्थ्यादयं वैकल्पिकः । भूतपूर्वे चरडिति निर्देशाद्भूतशब्दस्य पूर्वनिपातः ॥

## अव्ययीभावः ॥ ५ ॥

अधिकारो ऽयं ॥ इत ऊर्ध्वं याननुक्रमिष्यामस्ते ऽव्ययीभावसंज्ञका बोध्याः ॥ वक्ष्यति । अव्ययं विभक्तीत्यादि । अधिहरि ॥

## अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु ॥ ६ ॥

विभक्त्यर्थादिषु वर्तमानमव्ययं सुबन्तं समर्थेन सुबन्तेन सह प्राक् समाससंज्ञं स्यात् ततो ऽव्ययीभावसंज्ञं स्यात् ॥ वचनग्रहणं प्रत्येकमभिसंबध्यते ॥ विभक्त्यर्थवचने । हरौ इति । अधिहरि । स्त्रियामिति । अधिस्त्रि । समृद्ध-

र्थद्योतको ऽधिशब्दः ॥ समीप । कुम्भस्य समीपं । उपकुम्भं ॥ समृद्धि । ऋद्धेराधिक्यं समृद्धिः । मद्राणां समृद्धिः । सुमद्रं ॥ व्यृद्धि । विगतर्द्धिर्व्यृद्धिः । शाकानां व्यृद्धिः । दुःशाकं ॥ अर्थाभाव । मक्षिकाणामभावः । निर्मक्षिकं ॥ अत्ययो ध्वंसः । अतीतानि शीतानि । अतिशीतं । हिमस्यात्ययः । निर्हिमं ॥ असंप्रति । निद्रा संप्रति न युज्यत इति । अतिनिद्रं ॥ शब्दप्रादुर्भाव । पाणिनिशब्दस्य प्रकाशः । इतिपाणिनि ॥ पश्चात् । रथस्य पश्चात् । अनुरथं ॥ यथा । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । यथार्थे यदव्ययं तत् समस्यते । रूपस्य योग्यं । अनुरूपं । अर्थमर्थं प्रति । प्रत्यर्थं । शक्तिमनतिक्रम्य । यथाशक्ति । हरेः सादृश्यं । सहरि । वक्ष्यमाणः सादेशः सहशब्दस्य ॥ आनुपूर्व्य । ज्येष्ठस्यानुपूर्व्येण । अनुज्येष्ठं । ज्येष्ठानुक्रमेणेत्यर्थः ॥ यौगपद्यमेककालता । चक्रेण युगपत् । सचक्रं ॥ सादृश्यं तुल्यता । यथार्थत्वेनैव सिद्धे सादृश्यग्रहणं गुणभूते ऽपि सादृश्ये यथा स्यादित्येतदर्थं । सदृशः सख्या । ससखि ॥ संपत्तिः समस्यमानोत्तरपदस्य योग्यं प्रवृत्तिनिमित्तं । क्षत्राणां संपत्तिः । सक्षत्रं । क्षत्रियाणां योग्यं क्षत्रत्वमित्यर्थः ॥ साकल्यमशेषता । तृणमप्यपरित्यज्य । सतृणमत्ति ॥ अन्त इति परिग्रहापेक्षया समाप्तिरुच्यते । अग्निग्रन्थपर्यन्तमधीते । साग्नि । इयं समाप्तिः साकल्ये ऽप्यध्ययनस्य भवतीति साकल्यात् पृथगुच्यते ॥ प्रायः पूर्वपदार्थप्रधानो ऽव्ययीभावः ॥

## यथासादृश्ये ॥ ७ ॥

यथा । इत्येतदव्ययमसादृश्ये वर्तमानं सुपा सह समाससंज्ञं भवति सो ऽव्ययीभावसंज्ञः स्यात् ॥ ये ये वृद्धाः । यथावृद्धं । अभिरूपस्य योग्यं । यथाभिरूपं । अध्यापकमनतिक्रम्य । यथाध्यापकं ॥ असादृश्ये किं । यथा देवदत्तस्तथा यज्ञदत्तः ॥ यथार्थे यदव्ययमिति पूर्वेणैव सिद्ध इदं वचनं सादृश्यप्रतिषेधार्थं ॥

## यावदवधारणे ॥ ८ ॥

यावत् । इत्येतदव्ययमवधारणे वर्तमानं सुपा सह समाससंज्ञं स्यात् सो ऽव्ययीभावः ॥ अवधारणमियत्तापरिच्छेदः ॥ यावदमत्रं ब्राह्मणानामन्त्रयस्व । यावन्त्यमत्राणि संभवन्ति पञ्च षड्वा तावत आमन्त्रयस्वेत्यर्थः ॥ अवधारणे किं । यावद्दत्तं तावद्भुक्तं ॥

## सुप् प्रतिना मात्रार्थे ॥ ९ ॥

मात्रा विन्दुः स्तोकमल्पमित्येते पर्यायाः ॥ सुबन्तं मात्रार्थे वर्तमानेन प्रतिना सह समानसंज्ञं स्यात् सो ऽव्ययीभावः ॥ किंचित्सूपः । सूपप्रति ॥ शाकप्रति ॥ मात्रार्थे किं । वृक्षं प्रति विद्योतते विद्युत् ॥ सुबित्यनुवर्तमाने पुनः सुब्ग्रहण-मव्ययनिवृत्त्यर्थं ॥

## अक्षशलाकासंख्याः परिणा ॥१०॥

अक्ष । शलाका । संख्यावाचक । इत्येते शब्दाः परिशब्देन सह समा-ससंज्ञाः स्युः सो ऽव्ययीभावः ॥ पञ्चिका नाम द्यूतविशेषः पञ्चभिः कपर्दै-र्भवति । तत्र यदा सर्वे उत्तानाः पतन्त्यवाञ्चो वा तदा पातयितान्यं जयति । तस्यैवान्यथापाते सति पातयितान्येन जीयते । अक्षेणेदं न तथा वृत्तं यथा पूर्वं जये । अक्षपरि ॥ शलाकापरि ॥ एकपरि । द्विपरि ॥

## विभाषा ॥११॥

अधिकारो ऽयं ॥ इत ऊर्ध्वं यदनुक्रमिष्यामस्तद्विभाषा भवति ॥ अपत्रिगर्त्तं वृष्टो देवः । अप त्रिगर्त्तेभ्यः ॥

## अपपरिवहिरञ्चवः पञ्चम्या ॥१२॥

अप । परि । वहिस् । अञ्चूत्तरपद । इत्येते पञ्चम्यन्तेन सह समाससंज्ञा वा स्युः सो ऽव्ययीभावः ॥ अपत्रिगर्त्तं वृष्टो देवः । अप त्रिगर्त्तेभ्यः ॥ परित्रिगर्त्तं । परि त्रिगर्त्तेभ्यः ॥ वहिर्ग्रामं । वहिर्ग्रामात् ॥ प्राग्ग्रामं । प्राग्ग्रामात् ॥ अत एव ज्ञापकाद्वहिःशब्दयोगे पञ्चमी ॥

## आङ् मर्यादाभिविध्योः ॥१३॥

तेन विना मर्यादा । तत्सहितो ऽभिविधिः । एतयोरर्थयोर्य आङ् स पञ्चम्यन्तेन सह वा समाससंज्ञः स्यात् सो ऽव्ययीभावः ॥ आपाटलिपुत्रं । आ पाटलिपु-त्रात्रो देवः ॥ आकुमारं । आ कुमारेभ्यो यशः पाणिनेः ॥ मर्यादाभि-विध्योरिति [illegible] । [illegible]

शलभाः पतन्ति ॥ लक्षणेनेति किं । स्रुघ्नं प्रति गतः ॥ अभिप्रती इति किं । येनाग्निस्तेन गतः ॥ आभिमुख्ये किं । अभ्यङ्काः । प्रत्यङ्का गावः ॥

## अनुर्यत्समया ॥ १५ ॥

अनुशब्दो यस्य समीपवाची तेन लक्षणभूतेन सुबन्तेन सह वा समाससंज्ञः स्यात् सोऽव्ययीभावः ॥ अनुवनमशनिर्गतः । वनस्य समीपं गत इत्यर्थः ॥ अनुरिति किं । वनं समया ॥ यत् समया किं । वृक्षं प्रति विद्योतते विद्युत् ॥ अव्ययं विभक्तिसमीपेत्येव सिद्धे पुनर्वचनं विभाषार्थं ॥

## यस्य चायामः ॥ १६ ॥

आयामो दैर्घ्यं ॥ अनुशब्दो यस्य दैर्घ्यवाची तेन लक्षणवाचिना सुबन्तेन सह वा समाससंज्ञः स्यात् सोऽव्ययीभावः ॥ अनुगङ्गं वाराणसी । गङ्गाया अनु । गङ्गादैर्घ्यसदृशदैर्घ्योपलक्षितेत्यर्थः ॥

## तिष्ठद्गुप्रभृतीनि च ॥ १७ ॥

तिष्ठद्गु । इत्यादीनि शब्दस्वरूपाणि निपात्यन्ते । तान्यव्ययीभावसंज्ञानि स्युः ॥ तिष्ठन्ति गावो यस्मिन् काले स तिष्ठद्गु । दोहनकाल इत्यर्थः । इह शत्रादेशो निपात्यते ॥ चकारोऽवधारणार्थः । तेनैषामपरः समासो न । परमं तिष्ठद्गु । इति ॥

## पारे मध्ये षष्ठ्या वा ॥ १८ ॥

षष्ठीतत्पुरुषापवादोऽयं ॥ पारमध्यशब्दौ षष्ठ्यन्तेन सह वा समाससंज्ञौ भवतः सोऽव्ययीभावः ॥ पारं गङ्गायाः । पारेगङ्गं ॥ मध्यं गङ्गायाः । मध्येगङ्गं ॥ महाविभाषया सिद्धे वाग्रहणात् पक्षे षष्ठीसमासोऽपि । गङ्गापारं । गङ्गामध्यं ॥

## संख्या वंश्येन ॥ १९ ॥

वंशो द्विधा । विद्यावंशो जन्मवंशश्च । तत्र भवो वंश्यः । तद्वाचिना सुबन्तेन सह संख्यावाचकः समाससंज्ञो भवति सोऽव्ययीभावः ॥ द्वौ मुनी वंश्यौ । द्विमुनि व्याकरणस्य । त्रिमुनि व्याकरणस्य ॥ यदा तु विद्यया सह तद्वतामभेदविवक्षा तदा सामानाधिकरण्यं भवति । द्विमुनि व्याकरणं । त्रिमुनि व्याकरणं ॥

## नदीभिश्च ॥२०॥

नदीवाचकैः सुबन्तैः सह संख्यावाचकः समाससंज्ञो भवति सो ऽव्ययीभावः ॥ सप्तगङ्गं । द्वियमुनं । पञ्चनदं । सप्तगोदावरं ॥

## अन्यपदार्थे च संज्ञायां ॥२१॥

संख्येति निवृत्तं ॥ अन्यस्य पदस्यार्थे वर्तमानं सुबन्तं नदीवाचकैः सह समाससंज्ञं स्यात् सो ऽव्ययीभावः ॥ उन्मत्तगङ्गं नाम देशः । लोहितगङ्गं । तूष्णींगङ्गं । प्रनैर्गङ्गं ॥ विभाषाधिकारे ऽपि नित्यसमास एवायं । न हि वाक्येन संज्ञा गम्यते ॥ अन्यपदार्थे किं । कृष्णवेणा ॥ संज्ञायां किं । शीघ्रगङ्गो देशः ॥

## तत्पुरुषः ॥२२॥

संज्ञाधिकारो ऽयं प्राग्बहुव्रीहेः ॥ इत ऊर्ध्वं याननुक्रमिष्यामस्तत्पुरुषसंज्ञास्ते ज्ञेयाः ॥ कष्टश्रितः ॥ प्राय उत्तरपदार्थप्रधानस्तत्पुरुषः ॥

## द्विगुश्च ॥२३॥

द्विगुसमासो ऽपि तत्पुरुषसंज्ञः स्यात् ॥ पञ्चराजी । द्व्यहः । पञ्चगवं ॥

## द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ॥२४॥

द्वितीयान्तं सुबन्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समाससंज्ञं भवति । स समासस्तत्पुरुषसंज्ञो भवति ॥ कष्टं श्रितः । कष्टश्रितः ॥ दुःखमतीतः । दुःखातीतः ॥ नरकं पतितः । नरकपतितः ॥ ग्रामं गतः । ग्रामगतः ॥ तुहिनमत्यस्तः । तुहिनात्यस्तः ॥ सुखं प्राप्तः ॥ सुखप्राप्तः ॥ सुखमापन्नः । सुखापन्नः ॥

## स्वयं क्तेन ॥२५॥

स्वयमित्येतन्मान्तमव्ययं क्तप्रत्ययान्तेन सुबन्तेन समाससंज्ञं स्यात् स तत्पुरुषः ॥ स्वयंकृतं । आत्मना कृतमित्यर्थः ॥ अत्र सूत्रे द्वितीयेति न संबध्यते । स्वयनित्यस्य द्वितीयान्तत्वासंभवात् ॥ ऐकपद्यमैकस्वर्यमेकविभक्तित्वं च समासाद्भवति ॥

## खट्वा क्षेपे ॥२६॥

खट्वाशब्दो द्वितीयान्तः क्तान्तेन सह समाससंज्ञः स्यात् स तत्पुरुषः । समासेन

निन्दायां गम्यमानायां ॥ खट्वारूढो जाल्मः । खट्वाप्लुतः । उत्पथप्रस्थित इत्यर्थः ॥ विभाषाधिकारे ऽपि नित्यसमास एवायं । न हि वाक्येन निन्दा गम्यते ॥ क्षेपे किं । खट्वामारूढः ॥

## सामि ॥२७॥

सामि । इत्येतदव्ययं क्तान्तेन सह वा समाससंज्ञं भवति स तत्पुरुषः ॥ सामिकृतं । अर्धं कृतमित्यर्थः ॥ सामिपीतं । सामिभुक्तं ॥ समासफलमैकपद्यादि ॥

## कालाः ॥२८॥

द्वितीयान्ताः कालवाचिनः क्तान्तेन सुबन्तेन सह वा समाससंज्ञाः स्युः स तत्पुरुषः ॥ मासं प्रमितः । मासप्रमितः प्रतिपच्चन्द्रमाः । मासं परिच्छेत्तुमारब्धवानित्यर्थः ॥

## अत्यन्तसंयोगे च ॥२९॥

क्तेनेति निवृत्तं ॥ द्वितीयान्ताः कालवाचिनः सुबन्तेन सह वा समाससंज्ञाः स्युर्निरन्तरसंबन्धे स तत्पुरुषः ॥ मुहूर्तं सुखं । मुहूर्तसुखं । मासं कल्याणी । मासकल्याणी ॥

## तृतीया तत्कृतार्थेन गुणवचनेन ॥३०॥

तृतीयान्तं सुबन्तं तृतीयान्तार्थकृतगुणवचनेन सुबन्तेन । अर्थशब्देन च समाससंज्ञं स्यात् स तत्पुरुषः ॥ शङ्कुलया खण्डः । शङ्कुलाखण्डः ॥ अर्थशब्देन । धान्येनार्थः । धान्यार्थः ॥ तत्कृतेनेति किं । अक्ष्णा काणः ॥ गुणवचनेनेति किं । गोभिर्वपावान् ॥

## पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ॥३१॥

एतैः सह तृतीयान्तं वा समस्यते स तत्पुरुषः ॥ मासेन पूर्वः । मासपूर्वः ॥ मात्रा सदृशः । मातृसदृशः ॥ पित्रा समः । पितृसमः ॥ ऊनार्थाः । माषेणोनं । माषोनं । माषेण विकलं । माषविकलं ॥ असिना कलहः । असिकलहः ॥ वाचा निपुणः । वाङ्निपुणः ॥ गुडेन मिश्रः । गुडमिश्रः ॥ आचारेण श्लक्ष्णः । आचारश्लक्ष्णः ॥

## कर्तृकरणे कृता बहुलं ॥३२॥

कर्तरि करणे च या तृतीया तदन्तं शब्दस्वरूपं कृदन्तेन सह वा समस्यते स तत्पुरुषः ॥ कर्तरि । अहिना हतः । अहिहतः ॥ करणे । नखैर्भिन्नः । नखभिन्नः ॥ कर्तृकरणे किं । भिक्षाभिरुषितः ॥ बहुलग्रहणं सर्वोपाधिव्यभिचारार्थं । तेनेह न । दात्रेण लूनवान् । परशुना छिन्नवान् । इह तु भवत्येव । पादहारकः । गलेचोपकः ॥

## कृत्यैरधिकार्थवचने ॥३३॥

स्तुतिनिन्दाफलकमध्यारोपितार्थवचनमधिकार्थवचनं । कृत्यप्रत्ययान्तैः सहाधिकार्थवचने कर्तृकरणे समस्येते स तत्पुरुषः ॥ कर्तरि । काकपेया नदी । श्वलेह्यः कूपः ॥ करणे । वातच्छेद्यानि तृणानि ॥ पूर्वस्यैवायं प्रपञ्चः ॥

## अन्नेन व्यञ्जनं ॥३४॥

संस्कारकद्रव्यवाचकं तृतीयान्तमन्नवाचिना सुबन्तेन सह वा समस्यते स तत्पुरुषः ॥ दध्नोपसिक्त ओदनः । दध्योदनः ॥ क्षीरौदनः । घृतौदनः ॥ वृत्तावुपसेकक्रियाया अन्तर्भावादन्नव्यञ्जनयोः सामर्थ्यं ॥

## भक्ष्येण मिश्रीकरणं ॥३५॥

मिश्रीकरणवाचि तृतीयान्तं भक्ष्यवाचिना सुबन्तेन सह वा समस्यते स तत्पुरुषः ॥ खरविशदमभ्यवहार्यं भक्ष्यं । तस्य संस्कारकं मिश्रीकरणं ॥ गुडेन संमिश्रा धानाः । गुडधानाः ॥ वृत्तौ मिश्रणक्रियाया अन्तर्भावात् सामर्थ्यं पूर्वोत्तरपदयोः ॥

## चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ॥३६॥

चतुर्थ्यन्तं चतुर्थ्यन्तार्थाय यत् तद्वाचिना सुबन्तेन । अर्थ । बलि । हित । सुख । रक्षित । इत्येतैश्च वा समस्यते स तत्पुरुषः ॥ यूपाय दारु । यूपदारु । कुण्डलाय हिरण्यं । कुण्डलहिरण्यं ॥ तदर्थेनात्र प्रकृतिविकृतिभाव एव । इह तु न भवति । रन्धनाय स्थाली ॥ अर्थ । ब्राह्मणार्थः सूपः ॥ भूताय बलिः । भूतबलिः ॥ गवे हितं । गोहितं ॥ गवे सुखं । गोसुखं ॥ गवे रक्षितं । गोरक्षितं ॥

## पञ्चमी भयेन ॥३७॥

पञ्चम्यन्तं भयशब्देन सुबन्तेन सह वा समस्यते स तत्पुरुषः ॥ वृकाद्भयं । वृकभयं ॥

## अपेतापोढमुक्तपतितापत्रस्तैरल्पशः ॥ ३८ ॥

अपेत । अपोढ । मुक्त । पतित । अपत्रस्त । इत्येतैः सहाल्पं पञ्चम्यन्तं वा समस्यते स तत्पुरुषः ॥ सुखादपेतः । सुखापेतः ॥ कल्पनाया अपोढः । कल्पनापोढः ॥ चक्रान्मुक्तः । चक्रमुक्तः ॥ स्वर्गात् पतितः । स्वर्गपतितः ॥ तरंगादपत्रस्तः । तरंगापत्रस्तः ॥ अल्पशः किं । सर्वस्य पञ्चम्यन्तस्य मा भूत् । प्रासादात् पतितः ॥

## स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ॥ ३९ ॥

स्तोकार्थ । अन्तिकार्थ । दूरार्थाः । शब्दाः पञ्चम्यन्ताः कृच्छ्रशब्दश्च क्तान्तेन सुबन्तेन सह वा समस्यते स तत्पुरुषः ॥ स्तोकान्मुक्तः । अल्पान्मुक्तः ॥ अन्तिकादागतः । अभ्याशादागतः ॥ दूरादागतः । विप्रकृष्टादागतः ॥ कृच्छ्रान्मुक्तः । कृच्छ्राल्लब्धः ॥ पञ्चम्याः स्तोकादिभ्य इति पञ्चम्या अलुक् ॥

## सप्तमी शौण्डैः ॥ ४० ॥

सप्तम्यन्तं शौण्डादिभिः सुबन्तैः सह वा समस्यते स तत्पुरुषः ॥ अक्षेषु प्रसक्तः शौण्डः । अक्षशौण्डः ॥

## सिद्धशुष्कपक्वबन्धैश्च ॥ ४१ ॥

सिद्ध । शुष्क । पक्व । बन्ध । इत्येतैः सुबन्तैः सह सप्तम्यन्तं वा समस्यते स तत्पुरुषः ॥ सांकाश्ये सिद्धः । सांकाश्यसिद्धः ॥ आतपे शुष्कः । आतपशुष्कः ॥ स्थाल्यां पक्वः । स्थालीपक्वः ॥ चक्रे बन्धः । चक्रबन्धः ॥

## ध्वाङ्क्षेण क्षेपे ॥ ४२ ॥

ध्वाङ्क्षवाचिना सुबन्तेन सह सप्तम्यन्तं निन्दायां गम्यमानायां समस्यते स तत्पुरुषः ॥ तीर्थे ध्वाङ्क्ष इव । तीर्थध्वाङ्क्षः ॥ तीर्थकाकः । तीर्थवायसः ॥ अनवस्थित इत्यर्थः ॥ क्षेपे किं । तीर्थे ध्वाङ्क्षस्तिष्ठति ॥

## कृत्यैर्ऋणे ॥ ४३ ॥

कृत्यप्रत्ययान्तैः सह सप्तम्यन्तमृणे गम्यमाने समस्यते स तत्पुरुषः ॥ मासे देयं ।

पूर्वकालवाचक । एक । सर्व । जरत् । पुराण । नव । केवल । इत्येते सुबन्ताः समानाधिकरणेन सुबन्तेन सह वा समस्यन्ते स तत्पुरुषः ॥ पूर्वं स्नातः पश्चादनुलिप्तः । स्नातानुलिप्तः ॥ एका शाटी । एकशाटी ॥ सर्वे देवाः । सर्वदेवाः ॥ जरन् गौः । जरद्गवः ॥ पुराणमन्नं । पुराणान्नं ॥ नवमन्नं । नवान्नं ॥ केवलो नैयायिकः । केवलनैयायिकः ॥ समानाधिकरणेनेति किं । एकस्याः शाटी ॥

## दिक्संख्ये संज्ञायां ॥५०॥

दिग्वाचिनः संख्यावाचिनश्च समानाधिकरणेन सुबन्तेन सह समस्यन्ते संज्ञायां स तत्पुरुषः ॥ पूर्वेषुकामशमी ॥ सप्तर्षयः ॥ संज्ञायामिति किं । उत्तरा वृक्षाः । पञ्च ब्राह्मणाः ॥

## तद्धितार्थोत्तरपदसमाहारे च ॥५१॥

तद्धितार्थविषय उत्तरपदे परतः समाहारे च वाच्ये दिक्संख्ये समानाधिकरणेन सुपा सह वा समस्येते स तत्पुरुषः ॥ दिक् तद्धितार्थे । पूर्वस्यां शालायां भवः । दिक्पूर्वपदादसंज्ञायामिति ञः । पौर्वशालः ॥ उत्तरपदे । पूर्वा शाला प्रिया यस्येति त्रिपदे बहुव्रीहौ प्रियाशब्द उत्तरपदे परतः पूर्वयोस्तत्पुरुषः । तेन शालाशब्द आकार उदात्तः । पूर्वशालाप्रियः ॥ समाहारे दिग्वाचको नास्त्येव ॥ संख्या तद्धितार्थे । पाञ्चनापितिः । पञ्चकपालः ॥ उत्तरपदे । पञ्चगवधनः ॥ समाहारे । पञ्चपूली । दशकुमारी ॥

## संख्यापूर्वो द्विगुः ॥५२॥

पूर्वसूत्रोक्तः संख्यापूर्वस्तत्पुरुषसमासो द्विगुसंज्ञः स्यात् ॥ तद्धितार्थे । पञ्चकपालः । द्विगोर्लुगनपत्य इति तद्धितलुक् ॥ उत्तरपदे । पञ्चनावप्रियः । नावो द्विगोरिति टच् ॥ समाहारे । पञ्चपूली । द्विगोरिति ङीप् ॥

## कुत्सितानि कुत्सनैः ॥५३॥

विशेषणं विशेष्येणेति प्राप्ते विशेष्यस्य पूर्वनिपातार्थमिदं ॥ कुत्स्यमानवाचीनि कुत्सनवाचिभिः समानाधिकरणैः सह वा समस्यन्ते स तत्पुरुषः ॥ वैयाकरणखसूचिः । विस्मृतव्याकरण इत्यर्थः ॥ याज्ञिककितवः । अयाज्ययाजनात् तृष्णापर इत्यर्थः ॥ मीमांसकदुर्दुरूटः । नास्तिक इत्यर्थः ॥ कुत्सितानीति

किं । नैयायिकश्चोरः । न ह्यत्र नैयायिकत्वं कुत्स्यते ॥ कुत्सनैः किं । कुत्सितो ब्राह्मणः ॥

## पापाणके कुत्सितैः ॥५४॥

पूर्वसूत्रापवादः ॥ पाप । अणक । इत्येतौ कुत्सितवचनैः सुबन्तैः सह प्राग्वत् ॥ पापनापितः ॥ अणककुलालः ॥

## उपमानानि सामान्यवचनैः ॥५५॥

उपमीयते ऽनेनेत्युपमानं । उपमानवाचीनि सुबन्तान्युपमानोपमेयधर्मबोधकैः सुबन्तैः सह समस्यन्ते स तत्पुरुषः ॥ घन इव श्यामः । घनश्यामः ॥ उपमानानीति किं । देवदत्तः श्यामः ॥ सामान्यवचनैः किं । फाला इव तण्डुलाः ॥

## उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ॥५६॥

विशेषणं विशेष्येणेत्येव सिद्धे विशेष्यस्य पूर्वनिपातार्थमिदं ॥ उपमेयं सुबन्तं व्याघ्रादिभिः सुबन्तैः सह समस्यते । उपमानोपमेयगतधर्मवाचकशब्दस्याप्रयोगे सति ॥ पुरुषो व्याघ्र इव । पुरुषव्याघ्रः ॥ सामान्याप्रयोगे किं । पुरुषो व्याघ्र इव शूरः ॥

## विशेषणं विशेष्येण बहुलं ॥५७॥

भेदकं भेद्येन सह वा प्राग्वत् ॥ नीलमुत्पलं । नीलोत्पलं ॥ बहुलग्रहणात् क्वचिन्नित्यं । कृष्णसर्पः । लोहिताहिः ॥ क्वचिन्न भवत्येव । रामो जामदग्न्यः ॥ अत्र सूत्रे विषयताविशेषरूपं विशेषणत्वं गृह्यते । न तु व्यावर्तकत्वरूपं । नीलसामान्योपक्रम उत्पलस्यापि व्यावर्तकत्वेन विशेषणत्वापत्तेः । जातिसंज्ञयोर्गुणक्रियाभ्यां समभिव्याहारे विशेष्यतैव । गुणयोः क्रिययोर्गुणक्रिययोश्चानियम एव । व्याप्यव्यापकभावानापन्नजात्योरप्यनियम एव । व्याप्यव्यापकभावापन्नजात्योस्तु व्यापकस्य विशेष्यतैव ॥

## पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च ॥५८॥

पूर्व । अपर । इत्येवमादयः शब्दाः समानाधिकरणेन सुपा सह वा प्राग्वत् ॥ पूर्वपुरुषः ॥ अपरपुरुषः ॥ प्रथमपुरुषः ॥ चरमपुरुषः ॥ जघन्यपुरुषः ॥ समानपुरुषः ॥ मध्यपुरुषः ॥ मध्यमपुरुषः ॥ वीरपुरुषः ॥ पूर्वसूत्रस्यैवायं प्रपञ्चः ॥

## श्रेण्यादयः कृतादिभिः ॥ ५९ ॥

श्रेण्यादयः सुबन्ताः कृतादिभिः समानाधिकरणैः सुबन्तैः सह वा प्राग्वत् ॥ अश्रेणयः श्रेणयः कृताः । श्रेणिकृताः ॥ पूगकृताः ॥

## क्तेन नञ्विशिष्टेनानञ् ॥ ६० ॥

क्तान्तेन नञ्विशिष्टेन समर्थेन सह नञ्रहितं क्तान्तं वा प्राग्वत् ॥ कृतं च तदकृतं च । कृताकृतं ॥ भुक्ताभुक्तं । अशितानशितेन जीवति । क्लिष्टाक्लिशितेन वर्तते ॥

## सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ॥ ६१ ॥

सत् । महत् । परम । उत्तम । उत्कृष्ट । इत्येते पूज्यमानैः सह वा प्राग्वत् ॥ सत्पुरुषः ॥ महापुरुषः ॥ परमपुरुषः ॥ उत्तमपुरुषः ॥ उत्कृष्टपुरुषः ॥ पूज्यमानैः किं । उत्कृष्टो गौः । पङ्कादुद्धृत इत्यर्थः ॥

## वृन्दारकनागकुञ्जरैः पूज्यमानं ॥ ६२ ॥

वृन्दारक । नाग । कुञ्जर । इत्येतैः पूज्यमानं सुबन्तं वा प्राग्वत् ॥ गोवृन्दारकः ॥ गोनागः ॥ गोकुञ्जरः ॥ पूज्यमानं किं । सुषीमो नागः ॥

## कतरकतमौ जातिपरिप्रश्ने ॥ ६३ ॥

कतर । कतम । इत्येतौ जातिपरिप्रश्ने वर्तमानौ समर्थेन सुपा वा समस्येते ॥ कतरः कठः । कतरकठः ॥ कतमकलापः ॥ जातिपरिप्रश्ने किं । कतरो देवदत्तः । कतमो यज्ञदत्तो भवतां ॥

## किं क्षेपे ॥ ६४ ॥

किं । इत्येष शब्दो निन्दायामर्थे समर्थेन सुपा सह समस्यते ॥ किंराजा यो न रक्षति । किंसखा यो ऽभिद्रुह्यति ॥ किमः क्षेप इति टचो निषेधः ॥ क्षेपे किं । को राजा काश्यां ॥

## पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः ॥ ६५ ॥

एतैः सह जातिवाचि सुबन्तं समस्यते ॥ स्त्रीपुरुषलक्षणा पोटेत्युच्यते ।

इभपोटा ॥ इभयुवतिः ॥ अग्निस्तोकः ॥ उदश्वित्कतिपयं ॥ गृष्टिरेकवारप्रसूता ।
गोगृष्टिः ॥ धेनुः प्रत्यग्रप्रसवा । गोधेनुः ॥ वशा वन्ध्या । गोवशा ॥
वेहद्गर्भघातिनी । गोवेहत् ॥ वष्कयणी तरुणवत्सा । गोवष्कयणी ॥
कठप्रवक्ता ॥ कठश्रोत्रियः ॥ कठाध्यापकः ॥ कठधूर्तः ॥ जातिः किं ।
देवदत्तः प्रवक्ता ॥ धूर्तग्रहणमकुत्सनार्थं ॥

## प्रशंसावचनैश्च ॥ ६६ ॥

जातिवाचि सुबन्तं प्रशंसावाचकैः सह समस्यते ॥ रूढिशब्दा मतल्लिकादयः
प्रशंसावचना गृह्यन्ते ॥ गोमतल्लिका । गोमचर्चिका । गोप्रकाण्डं । गवोद्घः ।
गोतल्लजः ॥

## युवा खलतिपलितवलिनजरतीभिः ॥ ६७ ॥

युवन् । इत्येष शब्दः खलत्यादिभिः समानाधिकरणैः सह समस्यते ॥ जरती-
ति स्त्रीलिङ्गनिर्देशः प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषा-
ज्ञापनार्थः ॥ युवा खलतिः । युवखलतिः । युवतिः खलती । युवखलती ॥
युवा पलितः । युवपलितः । युवतिः पलिता । युवपलिता ॥ युवा वलिनः ।
युववलिनः । युवतिर्वलिना । युववलिना ॥ युवा जरन् । युवजरन् ।
युवतिर्जरती । युवजरती ॥

## कृत्यतुल्याख्या अजात्या ॥ ६८ ॥

कृत्यप्रत्ययान्तास्तुल्यवाचिनश्चाजातिवाचकेन सुपा सह समस्यन्ते । भोज्योष्णं ।
पानीयशीतं ॥ तुल्यश्वेतः । सदृशश्वेतः ॥ अजात्या किं । भोज्य ओदनः ॥

## वर्णो वर्णेन ॥ ६९ ॥

वर्णविशेषवाचि सुबन्तं वर्णवाचिना समानाधिकरणेन सुबन्तेन सह समस्यते ॥
कृष्णसारंगः । लोहितशवलः ॥ अवयवद्वारेण कृष्णलोहितशब्दौ समुदाये
वर्तमानावुत्तरपदसमानाधिकरणौ भवतः ॥

## कुमार श्रमणादिभिः ॥ ७० ॥

कुमारशब्दः श्रमणादिभिः समानाधिकरणैः सह समस्यते ॥ प्रातिपदिकग्रहणे
लिङ्गविशिष्टस्यापि ग्रहणं ॥ कुमारी श्रमणा । कुमारश्रमणा ॥

## चतुष्पादो गर्भिण्या ॥७१॥

चतुष्पाद्वाचिनो गर्भिणीशब्देन समानाधिकरणेन समस्यन्ते ॥ गोगर्भिणी ॥ चतुष्पादिति किं । ब्राह्मणी गर्भिणी ॥

## मयूरव्यंसकादयश्च ॥७२॥

मयूरव्यंसक । इत्येवमादयः समुदाया निपात्यन्ते । ते च तत्पुरुषसंज्ञाः स्युः ॥ मयूरो व्यंसकः । मयूरव्यंसकः । धूर्तमयूर इत्यर्थः ॥ चकारोऽवधारणार्थः । तेनैषां समासान्तरे प्रवेशो न । परमो मयूरव्यंसकः ॥

॥ इति सूत्रपाठे द्वितीयाध्यायस्य प्रथमः पादः ॥

---

## पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ॥ १ ॥

वक्ष्यमाणषष्ठीसमासापवादः ॥ पूर्व । अपर । अधर । उत्तर । इत्येतेऽवयविवाचिना सुबन्तेन समस्यन्ते । एकत्वसंख्याविशिष्टश्चेदवयवी ॥ पूर्वं कायस्य । पूर्वकायः ॥ अपरकायः ॥ अधरकायः ॥ उत्तरकायः ॥ एकदेशिना किं । पूर्वं नाभेः कायस्य ॥ एकाधिकरणे किं । पूर्वं छात्राणामामन्त्रयस्व ॥ कथं मध्याह्न इति । सर्वोऽप्यवयवोऽह्ना समस्यते । संख्याविसायेति ज्ञापकात् ॥

## अर्धं नपुंसकं ॥२॥

षष्ठीसमासापवादोऽयं ॥ अर्ध । इत्येतन्नपुंसकं समप्रविभागवाचकमवयविना सह समस्यते । एकत्वसंख्याविशिष्टश्चेदवयवी ॥ अर्धं पिप्पल्याः । अर्धपिप्पली ॥ नपुंसकं किं । ग्रामार्धः ॥ एकदेशिनेत्येव । अर्धं पशोर्देवदत्तस्य । देवदत्तशब्देन समासो न भवति ॥ एकाधिकरण इत्येव । अर्धं पिप्पलीनां ॥

## द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्यां ॥ ३ ॥

द्वितीय । तृतीय । चतुर्थ । तुर्य । इत्येतान्यवयविना सह वा समस्यन्ते । एकश्चेदवयवी ॥ द्वितीयं भिक्षायाः । द्वितीयभिक्षा । अन्यतरस्यांग्रहणसामर्थ्यात्

पूरणगुणेति निषेधं बाधित्वा पक्षे षष्ठीसमासः । भिक्षाद्वितीयं ॥ तृतीयं भिक्षायाः । तृतीयभिक्षा । भिक्षातृतीयं ॥ चतुर्थं भिक्षायाः । चतुर्थभिक्षा । भिक्षाचतुर्थं ॥ तुर्यं भिक्षायाः । तुर्यभिक्षा । भिक्षातुर्यं ॥ एकदेशिनेत्येव । द्वितीयं भिक्षाया भिक्षुकस्य ॥ एकाधिकरण इत्येव । द्वितीयं भिक्षाणां ॥

## प्राप्तापन्ने च द्वितीयया ॥४॥

द्वितीयासमासे प्राप्ते वचनमिदं ॥ प्राप्त । आपन्न । इत्येते शब्दरूपे द्वितीयान्तेन समस्येते ॥ प्राप्तो जीविकां । प्राप्तजीविकः ॥ आपन्नो जीविकां । आपन्नजीविकः ॥ विधानसामर्थ्यात् पक्षे द्वितीयासमासोऽपि । जीविकाप्राप्तः । जीविकापन्नः ॥

## कालाः परिमाणिना ॥५॥

षष्ठीसमासापवादः ॥ कालवाचकाः परिच्छेद्यवाचिना सुबन्तेन समस्यन्ते ॥ मासो जातस्य । मासजातः । द्व्यहजातः ॥

## नञ् ॥६॥

नञ् । इत्येतदव्ययं सुपा समस्यते ॥ न ब्राह्मणः । अब्राह्मणः ॥

## ईषदकृता ॥७॥

ईषत् । इत्येतदव्ययं कृदन्तभिन्नेन सुबन्तेन समस्यते ॥ ईषत्कडारः । ईषत्पिङ्गलः । ईषद्विकटः ॥

## षष्ठी ॥८॥

षष्ठ्यन्तं समर्थेन सुबन्तेन सह समस्यते ॥ राज्ञः पुरुषः । राजपुरुषः ॥

## याजकादिभिश्च ॥९॥

तृजकाभ्यामिति निषेधे प्राप्ते वचनं ॥ याजक । इत्यादिशब्दैः सह षष्ठी समस्यते ॥ ब्राह्मणयाजकः । क्षत्रिययाजकः ॥

## न निर्धारणे ॥१०॥

निर्धारणे या षष्ठी सा न समस्यते ॥ मनुष्याणां क्षत्रियः शूरः । गवां कृष्णा बहुक्षीरा । अध्वगानां धावन् शीघ्रतमः ॥

## पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ॥ ११ ॥

पूरण । गुण । सुहितार्थ । सत् । अव्यय । तव्य । समानाधिकरण । इत्येतैः षष्ठी न समस्यते ॥ अर्थशब्दः प्रत्येकमभिसंबध्यते ॥ पूरणार्थे । छात्राणां पञ्चमः ॥ गुणे । बलाकायाः शौक्ल्यं । घटस्य शुक्लः ॥ सुहितार्थास्तृप्त्यर्थाः । फलानां तृप्तः ॥ सत्संज्ञकः प्रत्ययः । ब्राह्मणस्य कुर्वन् । ब्राह्मणस्य कुर्वाणः ॥ अव्यय । ब्राह्मणस्य कृत्वा ॥ तव्य । ब्राह्मणस्य कर्तव्यं ॥ समानाधिकरणे । राज्ञः पाटलिपुत्रकस्य ॥ षष्ठीसमासे पूर्वनिपातानियमः स्यात् ॥ विशेषणं विशेष्येणेति समासस्तु भवत्येव ॥

## क्तेन च पूजायां ॥ १२ ॥

पूजायां विहितो यः क्तप्रत्ययस्तदन्तेन षष्ठी न समस्यते ॥ मतिबुद्धिपूजार्थेभ्यश्चेति वक्ष्यति ॥ राज्ञां मतः । राज्ञां बुद्धः । राज्ञां पूजितः ॥

## अधिकरणवाचिना च ॥ १३ ॥

अधिकरणवाचिना क्तेन षष्ठी न समस्यते ॥ क्तो ऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यश्चेति वक्ष्यति ॥ इदमेषामासितं । इदमेषां गतं । इदमेषां भुक्तं ॥

## कर्मणि च ॥ १४ ॥

कर्मणि या षष्ठी सा न समस्यते ॥ आश्चर्यो गवां दोहो ऽगोपेन ॥

## तृजकाभ्यां कर्तरि ॥ १५ ॥

तृच् । अक । इत्येताभ्यां योगे कर्तरि या षष्ठी सा न समस्यते ॥ भवतः शायिका ॥ तृज्ग्रहणमुत्तरार्थं । कर्तर्येव तृचो विधानेन तत्प्रयोगे कर्तृषष्ठ्या अभावात् ॥

## कर्तरि च ॥ १६ ॥

कर्तरि च यौ तृजकौ ताभ्यां सह षष्ठी न समस्यते ॥ तृच् । अपां स्रष्टा । वज्रस्य भर्ता ॥ पतिपर्यायभर्तृशब्दस्य याजकादित्वात् समासो भवत्येव ॥ अक । ओदनस्य पाचकः ॥

## नित्यं क्रीडाजीविकयोः ॥१७॥

क्रीडा । जीविका । इत्येतयोरर्थयोर्गम्यमानयोः षष्ठ्यकेन नित्यं समस्यते ॥ उद्दालकपुष्पभञ्जिका । क्रीडाविशेषः ॥ जीविकायां । दन्तलेखकः ॥ क्रीडाजीविकयोः किं । ओदनस्य भोजकः ॥

## कुगतिप्रादयः ॥१८॥

कु । गति । प्रादि । एते समर्थेन सुबन्तेन सह नित्यं समस्यन्ते ॥ कुत्सितः पुरुषः । कुपुरुषः ॥ गति । ऊरीकृत्य ॥ प्रादयः । दुष्पुरुषः । सुपुरुषः । अतिपुरुषः ॥

## उपपदमतिङ् ॥१९॥

उपपदमतिङन्तं समर्थेन सह नित्यं समस्यते ॥ कुम्भकारः ॥ अतिङ् किं । एधानाहारको व्रजति ॥

## अमैवाव्ययेन ॥२०॥

पूर्वेणा सिद्धे नियमार्थमिदं ॥ अमैव तुल्यविधानं यदुपपदं तदेवाव्ययेन सह समस्यते ॥ स्वादुंकारं भुङ्क्ते ॥ अमैवेति किं । अग्रे भोजं । अग्रे भुक्त्वा ॥ अना चान्येन च तुल्यविधानमेतत् ॥ तदेवेति किं । कालो भोक्तुं ॥

## तृतीयाप्रभृतीन्यन्यतरस्यां ॥२१॥

उभयत्र विभाषेयं ॥ उपदंशस्तृतीयायां । इत्येवमादीन्युपपदान्यमन्तेनाव्ययेन सह वा समस्यन्ते ॥ मूलकेनोपदंशं भुङ्क्ते । मूलकोपदंशं भुङ्क्ते । उच्चैः कारमाचष्टे । उच्चैःकारं ॥ अमन्तेनेति किं । पर्याप्तो भोक्तुं ॥

## क्त्वा च ॥२२॥

अमेति निवृत्तं ॥ क्त्वाप्रत्ययान्तेन सह तृतीयाप्रभृतीन्युपपदानि वा समस्यन्ते ॥ उच्चैःकृत्य । उच्चैः कृत्वा ॥ तृतीयाप्रभृतीनीति किं । अलं कृत्वा ॥

## शेषो बहुव्रीहिः ॥२३॥

अधिकारो ऽयं ॥ शेषः समासो बहुव्रीहिसंज्ञो भवति ॥ चित्रगुः ॥ शेषः किं । उन्मत्तगङ्गं ॥

## अनेकमन्यपदार्थे ॥ २४ ॥

पूर्वसूत्रमनुवर्तते ॥ अनेकं सुबन्तं प्रथमान्तादन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः ॥ प्राप्तमुदकं यं ग्रामं । स प्राप्तोदको ग्रामः ॥ ऊढो रथो येन । स ऊढरथो ऽनड्वान् ॥ उपहृतः पशुर्यस्मै । स उपहृतपशू रुद्रः ॥ उद्धृत ओदनो यस्याः । सोद्धृतौदना स्थाली ॥ चित्रा गावोऽस्य । स चित्रगुः ॥ वीरः पुरुषो यस्मिन् ग्रामे । स वीरपुरुषको ग्रामः ॥ प्रथमान्तार्थे तु न भवति । वृष्टे देवे गतः ॥ पदग्रहणं किं । वाक्यार्थे मा भूत् । यथा मे माता तथा मे पिता सुस्नातं भो इति ॥ अन्य इति किं । नीलोत्पलं सरः । अन्यपदार्थे ऽपि स्वपदार्थ इव तत्पुरुषो बहुव्रीहिं बाधेत ॥ प्रायो ऽन्यपदार्थप्रधानो बहुव्रीहिः ॥

## संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये ॥ २५ ॥

शेष इति निवृत्तं ॥ अव्यय । आसन्न । अदूर । अधिक । संख्या । इत्येते संख्येये या संख्या तया समस्यन्ते स बहुव्रीहिः ॥ दशानां समीपे ये ते । उपदशाः ॥ विंशतेरासन्नाः । आसन्नविंशाः ॥ त्रिंशतो ऽदूरे । अदूरत्रिंशाः ॥ चत्वारिंशतो ऽधिकाः । अधिकचत्वारिंशाः ॥ द्वौ वा त्रयो वा । द्वित्राः ॥ द्विर्दश । द्विदशाः ॥ संख्ययेति किं । पञ्च ब्राह्मणाः ॥ अव्ययेत्यादि किं । ब्राह्मणाः पञ्च ॥ संख्येय इति किं । अधिका विंशतिर्गवां ॥

## दिङ्नामान्यन्तराले ॥ २६ ॥

दिशां नामानि सुबन्तान्यन्तराले वाच्ये समस्यन्ते स बहुव्रीहिः ॥ दक्षिणस्याः पूर्वस्याश्च दिशोरन्तरालं । दक्षिणपूर्वा ॥ पूर्वोत्तरा । उत्तरपश्चिमा ॥ नामग्रहणं रूढपरिग्रहार्थं । नेह । ऐन्द्र्याश्च कौबेर्याश्च दिशोर्यदन्तरालमिति ॥

## तत्र तेनेदमिति सरूपे ॥ २७ ॥

तत्रेति सप्तम्यन्ते सरूपे पदे तेनेति च तृतीयान्ते सरूपे पद इदमित्येतस्मिन्नर्थे समस्येते स बहुव्रीहिः ॥ इतिशब्दो लौकिकविवक्षाबोधनार्थः । तेन कर्मव्यतिहारे युद्ध एवायं समासः । तत्रापि सप्तम्यन्तस्य ग्रहणविषये । तृतीयान्तस्य प्रहरणविषये ॥ केशेषु केशेषु गृहीत्वेदं युद्धं प्रवृत्तं । केशाकेशि ॥ दण्डैश्च

दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तं । दण्डादण्डि ॥ इच् कर्मव्यतिहारे इति इच्प्रत्ययः समासान्तः । तिष्ठद्गुप्रभृतिष्विचः पाठादव्ययत्वं । अन्येषामपि दृश्यत इति पूर्वपदस्य दीर्घः ॥ सरूपे किं । हलैश्च मुसलैश्चेदं युद्धं प्रवृत्तं ॥

## तेन सहेति तुल्ययोगे ॥२८॥

सह । इत्येतदव्ययं तुल्यसंबन्धे वर्तमानं तृतीयान्तेन सह समस्यते स बहुव्रीहिः ॥ पुत्रेण सह । सपुत्र आगतः । सच्छात्रः ॥ तुल्ययोगे किं । सहैव दशभिः पुत्रैर्भारं वहति गर्दभी । अत्र विद्यमानवाची सहशब्दः ॥ तुल्ययोग इति प्रायिकं । तेनान्यत्रापि । सकर्मकः । सलोमकः ॥

## चार्थे द्वन्द्वः ॥२९॥

अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स समासो द्वन्द्वसंज्ञः स्यात् ॥ समुच्चय । अन्वाचय । इतरेतरयोग । समाहार । इत्येते चार्थाः । तत्राद्ययोर्न समासः । असामर्थ्यात् ॥ इतरेतरयोगे । प्लक्षश्च न्यग्रोधश्च । प्लक्षन्यग्रोधौ । धवश्च खदिरश्च पलाशश्च । धवखदिरपलाशाः ॥ समाहारे । वाक् च त्वक् च । वाक्त्वचं । शमीदृषदं ॥ प्राय उभयपदार्थप्रधानो द्वन्द्वः ॥

## उपसर्जनं पूर्वं ॥३०॥

समासे उपसर्जनसंज्ञकं पूर्वं प्रयोक्तव्यं ॥ अधिहरि । कष्टश्रितः । शङ्कुलाखण्डः । यूपदारु । वृकभयं । राजपुरुषः । अक्षशौण्डः ॥

## राजदन्तादिषु परं ॥३१॥

राजदन्त । इत्येवमादिषूपसर्जनं परं प्रयोक्तव्यं ॥ दन्तानां राजा । राजदन्तः ॥

## द्वन्द्वे घि ॥३२॥

द्वन्द्वसमासे घ्यन्तं पूर्वं प्रयोक्तव्यं ॥ पटुगुप्तौ । हरिशिवौ ॥ अनेकप्राप्तावेकस्य नियमोऽनियमः शेषे । पटुमृदुशुक्लाः । पटुशुक्लमृदवः ॥ द्वन्द्वे किं । विस्पष्टपटुः ॥

## अजाद्यदन्तं ॥३३॥

अजाद्यदन्तानां द्वन्द्वे पूर्वं प्रयोक्तव्यं ॥ उष्ट्रखरं । ईशकृष्णौ ॥ बहुष्वनियमः । अश्वरथेन्द्राः । इन्द्राश्वरथाः ॥ तपरकरणं किं । अश्वावृषौ । [illegible] ॥

## अल्पाच्तरं ॥ ३४ ॥

स्वल्पाच्कं शब्दस्वरूपं द्वन्द्वे पूर्वं प्रयोक्तव्यं ॥ प्लक्षन्यग्रोधं ॥ बहुष्वनियमः । शङ्खदुन्दुभिवीणाः । वीणाशङ्खदुन्दुभयः ॥

## सप्तमीविशेषणे बहुव्रीहौ ॥ ३५ ॥

सप्तम्यन्तं विशेषणं च बहुव्रीहिसमासे पूर्वं प्रयोक्तव्यं ॥ कण्ठेकालः । उरसिलोमा ॥ विशेषणं । चित्रगुः । शुक्लगुः ॥

## निष्ठा ॥ ३६ ॥

निष्ठान्तं बहुव्रीहौ पूर्वं प्रयोक्तव्यं ॥ कृतकटः । भक्षितभिक्षः ॥ ननु च विशेषणमेवात्र निष्ठान्तं । नैष नियमः । विशेष्यविशेषणभावस्य विवक्षानिबन्धनत्वात् ॥

## वाहिताग्न्यादिषु ॥ ३७ ॥

आहिताग्नि । इत्येवमादिषु निष्ठान्तं वा पूर्वं प्रयोक्तव्यं ॥ आहिताग्निः ॥ अग्न्याहितः ॥

## कडाराः कर्मधारये ॥ ३८ ॥

कडार । इत्येवमादयः शब्दाः कर्मधारये समासे वा पूर्वं प्रयोक्तव्याः ॥ कडारजैमिनिः । जैमिनिकडारः ॥ कर्मधारये किं । कडारपुरुषो ग्रामः ॥

॥ इति सूत्रपाठे द्वितीयाध्यायस्य द्वितीयः पादः ॥

---

## अनभिहिते ॥ १ ॥

अधिकारोऽयं ॥ इत ऊर्ध्वं वक्ष्यमाणा द्वितीयाद्या विभक्तयोऽनुक्ते कर्मादौ वेद्याः ॥ कटं करोति । ग्रामं गच्छति ॥ अनभिहिते किं । क्रियते कटः । कर्मणि लट् ॥

## कर्मणि द्वितीया ॥ २ ॥

ङ्याप्प्रातिपदिकात् स्वादयो वक्ष्यन्ते । तेषामर्थविशेषव्यवस्थाबोधनार्थमिदं प्रकरणं ॥ अम् । औट् । शस् । इत्येतस्य त्रिकस्य द्वितीयेति संज्ञा प्राचां ॥ अनुक्ते कर्मणि द्वितीया स्यात् ॥ कटं करोति । ग्रामं गच्छति ॥

## तृतीया च होश्छन्दसि ॥३॥

टा । भ्याम् । भिस् । इत्येतस्य तृतीयेति संज्ञा प्राचां ॥ जुहोतेरनुक्ते कर्मणि तृतीया स्याद्वेदे । चकाराद्द्वितीयापि भवति ॥ यवाग्वाग्निहोत्रं जुहोति । यवागूमग्निहोत्रं जुहोति ॥ अग्निहोत्रशब्देन हविरुच्यते ॥ छन्दसि किं । यवागूं जुहोति ॥

## अन्तरान्तरेण युक्ते ॥४॥

द्वितीया संबध्यते । न तु तृतीयास्वरितत्वात् ॥ अन्तरा । अन्तरेण । इत्येताभ्यां योगे द्वितीया स्यात् ॥ अन्तरा त्वां मां च कमण्डलुः । तव मम च मध्य इत्यर्थः ॥ अन्तरेण त्वां मां च कमण्डलुः । मध्य इत्यर्थः ॥ अन्तरेण यत्नं न किंचिल्लभ्यते । यत्नं विनेत्यर्थः ॥

## कालाध्वनोरत्यन्तसंयोगे ॥५॥

गुणक्रियाद्रव्यैः कालाध्वनोर्निरन्तरसंबन्धे गम्यमाने कालवाचकादध्ववाचकाच्च द्वितीया स्यात् ॥ मासं कल्याणी । मासमधीते । मासं गुडधानाः ॥ क्रोशं कुटिला नदी । क्रोशमधीते । क्रोशं पर्वतः ॥ अत्यन्तसंयोगे किं । मासस्य द्विरधीते । क्रोशस्यैकदेशे पर्वतः ॥

## अपवर्गे तृतीया ॥६॥

अपवर्गः फलप्राप्तिपूर्विका क्रियापरिसमाप्तिः । तत्र कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात् ॥ मासेनानुवाको ऽधीतः ॥ क्रोशेनानुवाको ऽधीतः ॥ अपवर्गे किं । मासमधीतो ऽनुवाको ऽनेन न गृहीतः ॥

## सप्तमीपञ्चम्यौ कारकमध्ये ॥७॥

ङि । ओस् । सुप् । इत्येतस्य सप्तमीति संज्ञा । ङसि । भ्याम् । भ्यस् । इत्येतस्य पञ्चमीति संज्ञा प्राचां ॥ कारकयोर्मध्ये यौ कालाध्वानौ ताभ्यां सप्तमीपञ्चम्यौ भवतः ॥ अद्य भुक्त्वा देवदत्तो द्व्यहे भोक्ता । अद्य भुक्त्वा देवदत्तो द्व्यहाद्भोक्ता । कर्तृशक्त्योर्मध्ये ऽयं कालः ॥ इहस्थ इष्वासः क्रोशे लक्ष्यं

विध्यति । इहस्य इष्वासः क्रोशाल्लक्ष्यं विध्यति । कर्तृकर्मकारकयोर्मध्ये ऽयमध्वा ॥ यथासंख्यं तु न । अस्वरितत्वात् ॥

## कर्मप्रवचनीययुक्ते द्वितीया ॥ ८ ॥

कर्मप्रवचनीयैर्योगे द्वितीया स्यात् ॥ शाकल्यस्य संहितामनु प्रावर्षत् ॥

## यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ॥ ९ ॥

कर्मप्रवचनीयैर्योगे यस्मादाधिक्यमुच्यते यस्य चेश्वरत्वमुच्यते तत्र सप्तमी स्यात् ॥ आधिक्ये । उप परार्धे हरेर्गुणाः । परार्धादधिका इत्यर्थः ॥ ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमी स्यात् । अधि ब्रह्मदत्ते पञ्चालाः । अधि पञ्चालेषु ब्रह्मदत्तः ॥

## पञ्चम्यपाङ्परिभिः ॥ १० ॥

अप । आङ् । परि । इत्येतैः कर्मप्रवचनीयैर्योगे पञ्चमी स्यात् ॥ अप त्रिगर्तेभ्यो वृष्टो देवः ॥ आ पाटलिपुत्रात् ॥ परि त्रिगर्तेभ्यः ॥ परिशब्दो वर्जनार्थ एव गृह्यते । अपशब्दसाहचर्यात् । तेन लक्षणादिषु न । वृक्षं परि विद्योतते विद्युत् ॥

## प्रतिनिधिप्रतिदाने च यस्मात् ॥ ११ ॥

मुख्यसदृशः प्रतिनिधिः । दत्तस्य प्रतिनिर्यातनं प्रतिदानं ॥ यस्मात् प्रतिनिधिर्यतश्च प्रतिदानं तत्र कर्मप्रवचनीययुक्ते पञ्चमी स्यात् ॥ प्रद्युम्नः कृष्णात् प्रति ॥ तिलेभ्यः प्रति यच्छति माषान् ॥

## गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ॥ १२ ॥

अध्वभिन्ने गत्यर्थानां धातूनां कर्मणि द्वितीयाचतुर्थ्यौ भवतः । चेष्टायां सत्यां ॥ ग्रामं गच्छति । ग्रामाय गच्छति ॥ गत्यर्थेति किं । ओदनं पचति ॥ कर्मणीति किं । अश्वेन गच्छति ॥ चेष्टायां किं । मनसा मथुरां गच्छति ॥ अनध्वनीति किं । अध्वानं गच्छति ॥

## चतुर्थी संप्रदाने ॥ १३ ॥

ङे । भ्याम् । भ्यस् । इत्येतस्य चतुर्थीति संज्ञा प्राचां ॥ संप्रदाने चतुर्थी स्यात् ॥ विप्राय गां ददाति । देवदत्ताय रोचते । पुष्पेभ्यः स्पृहयति ॥

## क्रियार्थोपपदस्य च कर्मणि स्थानिनः ॥१४॥

क्रियाफलकक्रियावाचकमुपपदं यस्य तुमुनन्तस्याप्रयुज्यमानस्य कर्मणि चतुर्थी स्यात् ॥ फलेभ्यो याति । फलान्याहर्तुं यातीत्यर्थः ॥ क्रियार्थोपपदस्य किं । प्रविश पिण्डीं ॥ कर्मणि किं । फलेभ्यो याति शकटेन ॥ स्थानिनः किं । फलान्याहर्तुं याति ॥

## तुमर्थाच्च भाववचनात् ॥१५॥

तुमुना समानार्थाद्भाववचनप्रत्ययान्ताच्चतुर्थी स्यात् ॥ भाववचनाश्चेति वक्ष्यति । तद्विहितः प्रत्ययो गृह्यते ॥ पाकाय व्रजति । भूतये व्रजति ॥ तुमर्थात् किं । पाकः ॥ भाववचनादिति किं । कारको व्रजति ॥

## नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च ॥१६॥

नमस् । स्वस्ति । स्वाहा । स्वधा । अलं । वषट् । इत्येतैर्योगे चतुर्थी स्यात् ॥ नमो देवेभ्यः ॥ स्वस्ति प्रजाभ्यः ॥ स्वाहाग्नये ॥ स्वधा पितृभ्यः ॥ अलं मल्लो मल्लाय ॥ वषडिन्द्राय ॥

## मन्यकर्मण्यनादरे विभाषाप्राणिषु ॥१७॥

मन ज्ञाने । इत्येतस्य प्राणिवर्जिते कर्मणि चतुर्थी वा स्यात् तिरस्कारे गम्यमाने । पक्षे द्वितीया ॥ न त्वां तृणाय मन्ये । न त्वां तृणं मन्ये ॥ मन्येति किं । न त्वां तृणं चिन्तयामि ॥ श्यना निर्देशान्मनु अवबोधन इति तनादिपठितो न गृह्यते । न त्वां तृणं मन्वे ॥ अनादरे किं । मन्ये काष्ठमुलूखलं ॥

## कर्तृकरणयोस्तृतीया ॥१८॥

अनुक्ते कर्तरि करणे च तृतीया स्यात् ॥ देवदत्तेन पच्यते । देवदत्तेन कृतं ॥ करणे । दात्रेण लुनाति ॥

## सहयुक्तेऽप्रधाने ॥१९॥

सहार्थेन युक्तेऽप्रधाने तृतीया स्यात् ॥ पुत्रेण सहागतः पिता ॥ सहार्थकशब्दमात्रग्रहणं । पुत्रेण समं स्थूलः । पुत्रेण सार्धं धनवान् ॥ पितुरत्र क्रिया-

संबन्धः साक्षाच्छब्देनोच्यते । पुत्रस्य तु प्रतीयमान इति पुत्रस्याप्राधान्यं ॥ सहार्थशब्दप्रयोगं विनापि तृतीया । वृद्धो यूनेति निर्देशात् ॥

## येनाङ्गविकारः ॥ २० ॥

येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया स्यात् ॥ अक्ष्णा काणः । पादेन खञ्जः ॥ अङ्गविकारः किं । अक्षि काणमस्य ॥

## इत्थंभूतलक्षणे ॥ २१ ॥

कंचित् प्रकारं प्राप्त इत्थंभूतः । तस्य चिह्ने तृतीया स्यात् ॥ जटाभिस्तापसः ॥

## संज्ञो ऽन्यतरस्यां कर्मणि ॥ २२ ॥

ज्ञा अवबोधने । इत्येतस्य संपूर्वस्य कर्मणि तृतीया वा स्यात् । पक्षे द्वितीया ॥ पित्रा संजानीते । पितरं संजानीते ॥

## हेतौ ॥ २३ ॥

फलसाधनयोग्यः पदार्थो हेतुः । तत्र तृतीया स्यात् ॥ धनेन कुशलं । विद्यया यशः ॥

## अकर्तर्यृणे पञ्चमी ॥ २४ ॥

पूर्वसूत्रापवादः ॥ कर्तृवर्जितं यदृणं हेतुभूतं तत्र पञ्चमी स्यात् ॥ शताद्बद्धः ॥ अकर्तरीति किं । शतेन बन्धितः । शतमृणं भवति । प्रयोजकत्वात् कर्तृसंज्ञं च ॥

## विभाषा गुणे ऽस्त्रियां ॥ २५ ॥

स्त्रीलिङ्गभिन्ने गुणे हेतौ पञ्चमी वा स्यात् । पक्षे तृतीया ॥ जाड्याद्बद्धः । जाड्येन बद्धः ॥ गुणे किं । धनेन कुलं ॥ अस्त्रियां किं । प्रज्ञया मुक्तः ॥

## षष्ठी हेतुप्रयोगे ॥ २६ ॥

हेतुशब्दस्य प्रयोगे हेतौ द्योत्ये षष्ठी स्यात् ॥ अन्नस्य हेतोर्वसति ॥

## सर्वनाम्नस्तृतीया च ॥ २७ ॥

सर्वनामसंज्ञकस्य हेतुशब्दस्य प्रयोगे हेतौ द्योत्ये तृतीया स्यात् । चकारात् षष्ठी ॥ केन हेतुना वसति । कस्य हेतोर्वसति ॥

## अपादाने पञ्चमी ॥२८॥

अपादाने पञ्चमी स्यात् ॥ ग्रामादागच्छति । वृश्चिकाद्बिभेति । अध्ययनात् पराजयते ॥

## अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते ॥२९॥

अन्य । आरात् । इतर । ऋते । दिक्शब्द । अञ्चूत्तरपद । आच् । आहि । इत्येतैर्युक्ते पञ्चमी स्यात् ॥ अन्य । इत्यन्यार्थकशब्दग्रहणं । इतर-ग्रहणं स्पष्टार्थं ॥ अन्यो देवदत्तात् । भिन्नो देवदत्तात् ॥ आराद्देवदत्तात् ॥ इतरो देवदत्तात् ॥ ऋते देवदत्तात् ॥ दिशि दृष्टः शब्दो दिक्शब्दः । तेन देशकालवाचित्वे ऽपि भवति ॥ पूर्वो ग्रामात् । चैत्रो मैत्रात् पूर्वदेशे । चैत्रात् पूर्वः फाल्गुनः ॥ अञ्चूत्तरपद । प्राग्ग्रामात् । ननु चायमपि दिक्शब्द एव । षष्ठ्यतसर्थप्रत्ययेनेति षष्ठीं वक्ष्यति तद्बाधनार्थमिदं ॥ आच् । दक्षिणा ग्रामात् ॥ आहि । दक्षिणाहि ग्रामात् ॥

## षष्ठ्यतसर्थप्रत्ययेन ॥३०॥

उस् । अस् । आस् । इत्येतस्य षष्ठीति संज्ञा प्राचां ॥ अतसुच् । इत्येतदर्थ-कप्रत्ययान्तेन योगे षष्ठी स्यात् ॥ दक्षिणतो ग्रामस्य । पुरो ग्रामस्य । पुरस्ताद्ग्रामस्य ॥

## एनपा द्वितीया ॥३१॥

पूर्वसूत्रापवादः ॥ एनप् । इत्येतत्प्रत्ययान्तेन युक्ते द्वितीया स्यात् ॥ दक्षिणेन ग्रामं ॥ षष्ठ्यपीष्यते । दक्षिणेन ग्रामस्य । तदर्थं योगविभागः कर्तव्यः ॥

## पृथग्विनानानाभिस्तृतीयान्यतरस्यां ॥३२॥

पृथक् । विना । नाना । इत्येतैर्योगे तृतीया स्यात् । द्वितीयापञ्चम्यौ च ॥ पृथग्देवेन । पृथग्देवं । पृथग्देवात् ॥ विना देवेन । विना देवं । विना देवात् ॥ नाना देवेन । नाना देवं । नाना देवात् ॥

## करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ॥३३॥

स्तोक । अल्प । कृच्छ्र । कतिपय । इत्येतेभ्यो ऽसत्त्ववचनेभ्यः करणे तृतीयापञ्चम्यौ भवतः ॥ स्तोकेन मुक्तः । स्तोकान्मुक्तः ॥ अल्पेन मुक्तः । अल्पान्मुक्तः ॥ कृच्छ्रेण मुक्तः । कृच्छ्रान्मुक्तः ॥ कतिपयेन मुक्तः । कतिपयान्मुक्तः ॥ असत्त्ववचनस्येति किं । स्तोकेन मद्येन मत्तः ॥ करणे किं । क्रियाविशेषणे कर्मणि मा भूत् । स्तोकं चलति ॥

## दूरान्तिकार्थैः षष्ठ्यन्यतरस्यां ॥३४॥

दूरार्थैरन्तिकार्थैश्च योगे षष्ठीपञ्चम्यौ भवतः ॥ दूरं ग्रामस्य । दूरं ग्रामात् ॥ अन्तिकं ग्रामस्य । अन्तिकं ग्रामात् ॥ अन्यतरस्यांग्रहणं पञ्चम्यर्थं । अन्यथा तृतीया पक्षे स्यात् ॥

## दूरान्तिकार्थेभ्यो द्वितीया च ॥३५॥

दूरार्थेभ्यो ऽन्तिकार्थेभ्यश्च द्वितीया स्यात् । चकारात् पञ्चमीतृतीये भवतः ॥ दूरं ग्रामस्य । दूराद्ग्रामस्य । दूरेण ग्रामस्य ॥ अन्तिकं ग्रामस्य । अन्तिकाद्ग्रामस्य । अन्तिकेन ग्रामस्य ॥ प्रातिपदिकार्थमात्रे विधिरयं ॥ असत्त्ववचनस्येत्यनुवर्तते । तेनेह न भवति । दूरः पन्थाः ॥

## सप्तम्यधिकरणे च ॥३६॥

ङि । ओस् । सुप् । इत्येतस्य सप्तमीति संज्ञा प्राचां ॥ अधिकरणे सप्तमी स्यात् । चकाराद्दूरान्तिकार्थेभ्यो ऽपि ॥ कटे आस्ते ॥ दूरान्तिकार्थेभ्यः । दूरे ग्रामस्य । अन्तिके ग्रामस्य ॥ द्वितीया तृतीया सप्तमी पञ्चमी । इत्येताश्चतस्रो विभक्तयो दूरान्तिकार्थेभ्यो भवन्ति ॥

## यस्य च भावेन भावलक्षणं ॥३७॥

यस्य क्रियया क्रियान्तरं लक्ष्यते ततो भाववतः सप्तमी स्यात् । प्रसिद्धा च क्रियाप्रसिद्धां क्रियां लक्षयति ॥ गोषु दुह्यमानासु गतः । दुग्धास्वागतः ॥ भावेनेति किं । यो जटालिः स भुङ्क्ते ॥ पुनर्भावग्रहणं किं । यो भोक्ता स देवदत्तः ॥

## षष्ठी चानादरे ॥३८॥

अनादराधिके भावलक्षणे भाववतः षष्ठी स्यात् । चकारात् सप्तमी च

भवति ॥ रुदतः प्राव्राजीत् । रुदति प्राव्राजीत् ॥ रुदन्तं पुत्रादिकमनादृत्य, प्रव्रजित इत्यर्थः ॥

## स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ॥३९॥

स्वामिन् । ईश्वर । अधिपति । दायाद । साक्षिन् । प्रतिभू । प्रसूत । इत्येतैर्योगे षष्ठीसप्तम्यौ भवतः ॥ गवां स्वामी । गोषु स्वामी ॥ गवामीश्वरः । गोष्वीश्वरः ॥ गवामधिपतिः । गोष्वधिपतिः ॥ गवां दायादः । गोषु दायादः ॥ गवां साक्षी । गोषु साक्षी ॥ गवां प्रतिभूः । गोषु प्रतिभूः ॥ गवां प्रसूतः । गोषु प्रसूतः ॥

## आयुक्तकुशलाभ्यां चासेवायां ॥४०॥

आयुक्त । कुशल । इत्येताभ्यां योगे षष्ठीसप्तम्यौ भवतः । तात्पर्ये गम्यमाने ॥ आयुक्तः कटकरणस्य । आयुक्तः कटकरणे ॥ आयुक्तो व्यापारितः ॥ कुशलः कटकरणस्य । कुशलः कटकरणे ॥ कुशलो निपुणः ॥ आसेवायामिति किं । आयुक्तो गौः शकटे । ईषद्युक्त इत्यर्थः । अत्र सप्तम्येवाधिकरणे भवति ॥

## यतश्च निर्धारणं ॥४१॥

जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणं । यतो भवति तस्मात् षष्ठीसप्तम्यौ भवतः ॥ मनुष्याणां क्षत्रियः शूरतमः । मनुष्येषु क्षत्रियः शूरतमः । गवां कृष्णा बहुक्षीरा । गोषु कृष्णा बहुक्षीरा । अध्वगानां धावन्तः शीघ्रतमाः । अध्वगेषु धावन्तः शीघ्रतमाः । छात्राणां मैत्रः पटुः । छात्रेषु मैत्रः पटुः ॥

## पञ्चमी विभक्ते ॥४२॥

विभागो विभक्तं ॥ निर्धार्यमाणस्य भेदे यस्मान्निर्धारणं ततः पञ्चमी स्यात् ॥ माथुराः पाटलिपुत्रकेभ्य आढ्यतराः ॥

## साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ॥४३॥

साधु । निपुण । इत्येताभ्यां योगे पूजायां गम्यमानायां सप्तमी स्यात् । प्रतिशब्दप्रयोगे तु न भवति ॥ मातरि साधुः ॥ मातरि निपुणः ॥ अर्चायां किं । साधुर्भृत्यो राज्ञः । इह यथार्थकथने तात्पर्यं ॥ अप्रतेरिति किं । साधुर्देवदत्तो मातरं प्रति ॥

## प्रसितोत्सुकाभ्यां तृतीया च ॥ ४४ ॥

प्रसित । उत्सुक । इत्येताभ्यां योगे तृतीया स्यात् । चकारात् सप्तमी ॥ केशैः प्रसितः । केशेषु प्रसितः । केशरचनातत्पर इत्यर्थः ॥ केशैरुत्सुकः । केशेषूत्सुकः ॥

## नक्षत्रे च लुपि ॥ ४५ ॥

लुबन्तान्नक्षत्रशब्दादधिकरणे तृतीयासप्तम्यौ भवतः ॥ पुष्येण पायसमश्नीयात् । पुष्ये पायसमश्नीयात् ॥ लुबविशेष इत्यणो लुप् ॥ नक्षत्रे किं । पञ्चालेषु वसति ॥ लुपीति किं । मघासु ग्रहः ॥ अधिकरणानुवृत्तिः किं । अद्य पुष्यः ॥

## प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ॥ ४६ ॥

सु । औ । जस् । इत्येतस्य प्रथमा । इति संज्ञा प्राचां ॥ अवधारणार्थो मात्रशब्दः प्रत्येकं संबध्यते ॥ प्रातिपदिकार्थमात्रे लिङ्गमात्रे परिमाणमात्रे वचनमात्रे च प्रथमा स्यात् ॥ अत्र प्रवृत्तिनिमित्तं तदाश्रयश्च प्रातिपदिकार्थः । अलिङ्गमव्ययं लिङ्गप्रवृत्तिनिमित्तकाः पुमादय उदाहरणं । उच्चैः । नीचैः । पुमान् । स्त्री । नपुंसकं ॥ लिङ्गं पुंस्त्रीनपुंसकाख्यं । वृक्षः । कुमारी । कुलं । तटः । तटी । तटं ॥ परिमाणं परिच्छेदकं । द्रोणः । खारी । आढकं ॥ वचनं संख्या । एकः । द्वौ । बहवः ॥ उक्तेष्वेकत्वादिषु प्रथमाया अप्राप्तौ वचनग्रहणं ॥ प्रातिपदिकग्रहणं निपातस्यानर्थकस्य प्रातिपदिकत्वमुक्तं ततोऽपि प्रथमा यथा स्यात् । अध्यागच्छति ॥

## संबोधने च ॥ ४७ ॥

संबोधनमभिमुखीकरणं । तत्र प्रथमा स्यात् ॥ हे देव । हे देवौ । हे देवाः ॥

## सामन्त्रितं ॥ ४८ ॥

संबोधने या प्रथमा तदन्तमामन्त्रितसंज्ञं स्यात् ॥ हे देव ॥

## एकवचनं संबुद्धिः ॥ ४९ ॥

संबोधने प्रथमाया एकवचनं संबुद्धिसंज्ञं स्यात् ॥ हे एरं । हे पटो ॥

## षष्ठी शेषे ॥५०॥

कर्मादिकारकेभ्यो ऽन्यः प्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिसंबन्धादिः शेषः । तत्र षष्ठी स्यात् ॥ राज्ञः पुरुषः । पशोर्मुखं । पितुः पुत्रः ॥

## ज्ञो ऽविदर्थस्य करणे ॥५१॥

जानातेरज्ञानार्थस्य करणे शेषत्वेन विवक्षिते षष्ठी स्यात् ॥ सर्पिषो जानीते ॥ सर्पिषा करणभूतेन प्रवर्तत इत्यर्थः ॥ अविदर्थस्य किं । स्वरेण पुत्रं जानाति ॥

## अधीगर्थदयेशां कर्मणि ॥५२॥

अधीगर्थाः स्मरणार्थाः । दय दानगतिहिंसादानेषु । ईश ऐश्वर्ये । एतेषां कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यात् ॥ मातुः स्मरति ॥ सर्पिषो दयते ॥ सर्पिष ईष्टे ॥ कर्मणीति किं । मातुर्गुणैः स्मरति ॥ शेष इत्येव । मातरं स्मरति ॥

## कृञः प्रतियत्ने ॥५३॥

सतो गुणान्तराधानं प्रतियत्नः ॥ डुकृञ् । इत्येतस्य कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यात् प्रतियत्ने गम्यमाने ॥ एधोदकस्योपस्कुरुते ॥ शेष इत्येव । एधोदकमुपस्कुरुते ॥

## रुजार्थानां भाववचनानामज्वरेः ॥५४॥

रोगार्थानां धातूनां भावकर्तृकाणां ज्वरिभिन्नानां कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यात् ॥ चौरस्य रुजति रोगः ॥ रुजार्थानां किं । एति जीवन्तमानन्दः ॥ भाववचनानां किं । नदी कूलानि रुजति ॥ अज्वरेः किं । चौरं ज्वरयति ज्वरः ॥

## आशिषि नाथः ॥५५॥

नाथ । इत्येतस्याशीरर्थस्य कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यात् ॥ सर्पिषो नाथते । मधुनो नाथते ॥ आशिषि किं । राजानमुपनाथति । याचत इत्यर्थः ॥ नाथः किं । त्वं शीघ्र ॥

## जासिनिप्रहणनाटक्राथपिषां हिंसायां ॥५६॥

ज्ञासि । निप्रहण । नाट । क्राथ । पिष । इत्येतेषां हिंसार्थकानां कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यात् ॥ ज्ञसु । इति चुरादिर्गृह्यते । चौरस्योज्जासयति ॥ नि प्र । इत्येतौ संहतौ विपर्यस्तौ व्यस्तौ च गृह्येते । चौरस्य निप्रहन्ति । चौरस्य प्रणिहन्ति । चौरस्य निहन्ति । चौरस्य प्रहन्ति ॥ णाट । वृषलस्योन्नाटयति ॥ क्रथ । वृषलस्य क्राथयति ॥ णाटक्रथोर्घटादयो मित इति मित्त्वे ऽपि निपातनाद्वृद्धिः ॥ पिष्लृ । चौरस्य पिनष्टि ॥ हिंसायां किं । धानाः पिनष्टि ॥ एतेषां किं । चौरं हिनस्ति ॥

## व्यवहृपणोः समर्थयोः ॥५७॥

व्यवहृ । पण । इत्येतयोस्तुल्यार्थयोः कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यात् ॥ द्यूते क्रयविक्रयव्यवहारे तुल्यार्थावेतौ ॥ शतस्य व्यवहरति ॥ शतस्य पणते ॥ समर्थयोः किं । शलाकां व्यवहरति । विक्षिपतीत्यर्थः ॥

## दिवस्तदर्थस्य ॥५८॥

दिवु । इत्येतस्य द्यूतार्थस्य क्रयविक्रयव्यवहारार्थस्य च कर्मणि षष्ठी स्यात् ॥ शतस्य दीव्यति ॥ तदर्थस्य किं । ब्राह्मणं दीव्यति । स्तौतीत्यर्थः ॥ योगविभाग उत्तरार्थः ॥

## विभाषोपसर्गे ॥५९॥

पूर्वसूत्रेण नित्ये प्राप्ते विकल्पो ऽयं ॥ उपसर्गे सति दिवः कर्मणि षष्ठी वा स्यात् ॥ शतस्य प्रदीव्यति ॥ पक्षे द्वितीया । शतं प्रदीव्यति ॥ उपसर्गे किं । शतस्य दीव्यति ॥ तदर्थस्येत्येव । शलाकां प्रतिदीव्यति ॥

## द्वितीया ब्राह्मणे ॥६०॥

दिवस्तदर्थस्येत्यस्यापवादः ॥ ब्राह्मणो मन्त्रभिन्नो वेदः । तत्र दिवः कर्मणि द्वितीया स्यात् ॥ गामस्य तदहः सभायां दीव्येयुः ॥

## प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने ॥६१॥

इष गतौ । ब्रूञ् । इत्येतयोर्लोण्मध्यमपुरुषैकवचनान्तयोर्देवतासंप्रदाने ऽर्थे वर्तमानयोर्हविषः कर्मणः षष्ठी स्यात् ॥ अग्नये छागस्य हविषो वपाया मेदसः प्रेष्य । अनुब्रूहि वा ॥ प्रेष्यब्रुवोः किं । अग्नये छागं हविर्वपां मेदो

जुहुधि ॥ हविषः किं । अग्नये गोमयानि प्रेष्य ॥ देवतासंप्रदाने किं । माणवकाय पुरोडाशान् प्रेष्य ।

## चतुर्थ्यर्थे बहुलं छन्दसि ॥६२॥

चतुर्थ्यर्थे षष्ठी वा स्याद्वेदे । पक्षे चतुर्थी ॥ पुरुषमृगश्चन्द्रमसः । पुरुषमृगश्चन्द्रमसे दातव्य इत्यर्थः ॥ बहुलं किं । हिमवते हस्ती ॥

## यजेश्च करणे ॥६३॥

यज । इत्येतस्य धातोः करणे षष्ठी वा स्याद्वेदे ॥ आग्नेय्या घृतस्य यजते । घृतेन यजते ॥

## कृत्वोर्थप्रयोगे कालेऽधिकरणे ॥६४॥

कृत्वोर्थानां प्रयोगे कालेऽधिकरणे षष्ठी स्यात् ॥ पञ्चकृत्वोऽह्नो भुङ्क्ते । द्विरह्नोऽधीते ॥ कृत्वोर्थग्रहणं किं । अह्नि शेते ॥ प्रयोगग्रहणं किं । रात्रौ भुङ्क्ते । गम्यते हि द्विस्त्रिर्वेति ॥ काल इति किं । द्विः कांस्यपात्र्यां भुङ्क्ते ॥ अधिकरणे किं । द्विरह्ना भुङ्क्ते ॥ शेष इत्येव । द्विरह्न्यधीते ॥

## कर्तृकर्मणोः कृति ॥६५॥

कृत्प्रत्ययान्तयोगेऽनुक्ते कर्तरि कर्मणि च षष्ठी स्यात् ॥ भवतः शायिका ॥ कर्मणि । अपां स्रष्टा । पुरां भेत्ता ॥ कर्तृकर्मणोः किं । शस्त्रेण भेत्ता ॥ कृति किं । तद्धिते मा भूत् । कृतपूर्वी कटं । भुक्तपूर्व्योदनं ॥ अविवक्षितकर्मभ्यां कृभुजिभ्यां भावे क्तः । सुप् सुपेति समासः । पूर्वादिनिः सपूर्वाच्चेतीनिप्रत्ययः । पश्चात् कर्मयोगस्तद्धितान्तशब्दोपस्थाप्यक्रियायां । कृद्ग्रहणे तु कृदन्तशब्दमात्रोपस्थाप्यक्रिया कर्तृकर्मणोः षष्ठीविधानादत्र न षष्ठी ॥

## उभयप्राप्तौ कर्मणि ॥६६॥

पूर्वसूत्रस्य नियमोऽयं ॥ उभयोः प्राप्तिर्यस्मिन् कृति तत्र कर्मण्येव षष्ठी स्यात् । न तु कर्तरि ॥ आश्चर्यो गवां दोहोऽगोपेन । पयसः पानं देवदत्तेन ॥

## क्तस्य च वर्तमाने ॥६७॥

न लोकेति वक्ष्यमाणनिषेधे प्राप्ते पुनः षष्ठी विधीयते । वर्तमाने विहितस्य

क्तप्रत्ययस्य योगे षष्ठी स्यात् ॥ राज्ञां मतः । राज्ञां बुद्धः । राज्ञां पूजितः ॥ क्तस्य किं । ओदनं पचमानः ॥ वर्तमाने किं । ग्रामं गतः ॥

## अधिकरणवाचिनश्च ॥ ६८ ॥

क्तो ऽधिकरणे चेति वक्ष्यति । तस्य प्रयोगे षष्ठी स्यात् ॥ इदमेषां शयितं । इदमेषामासितं । इदमेषां गतं । इदमेषां भुक्तं ॥

## न लोकाव्ययनिष्ठाखलर्थतृनां ॥ ६९ ॥

कर्तृकर्मणोः कृतीति प्राप्ता षष्ठी निषिध्यते ॥ ल । उ । उक । अव्यय । निष्ठा । खलर्थ । तृन् । इत्येतेषां प्रयोगे षष्ठी न स्यात् ॥ ल इति शतृ । शानच् । कानच् । क्वसु । कि । किन् । इत्येते लादेशा गृह्यन्ते ॥ ओदनं पचन् । ओदनं पचमानः । ओदनं पेचानः । ओदनं पेचिवान् । पपिः सोमं । ददिर्गाः ॥ उ । कटं चिकीर्षुः । कन्यामलंकरिष्णुः ॥ उक । दैत्यान् घातुको हरिः ॥ अव्यय । कटं कृत्वा ॥ निष्ठा । ओदनं भुक्तवान् । देवदत्तेन भुक्तं ॥ खलर्थ । ईषत्करः कटो भवता ॥ तृन्निति प्रत्याहारग्रहणं । लटः शतृशानचावित्यारभ्या तृनो नकारात् । तेन शानन् । चानश् । शतृ । तृन् । इत्येतेषां ग्रहणं भवति । सोमं पवमानः । नडमाघ्नानः । वेदमधीयन् । कर्ता कटान् ॥

## अकेनोर्भविष्यदाधमर्ण्ययोः ॥ ७० ॥

भविष्यदर्थस्याकस्य भविष्यदर्थस्याधमर्ण्यार्थस्येनश्च योगे षष्ठी न स्यात् ॥ कटं कारको व्रजति ॥ इनः । ग्रामं गमी । शतं दायी ॥ भविष्यदाधमर्ण्ययोः किं । यवानां लावकः । अवश्यं कारी कटस्य ॥

## कृत्यानां कर्तरि वा ॥ ७१ ॥

कर्तृकर्मणोः कृतीति नित्यं प्राप्ते विकल्पो ऽयं ॥ कृत्यप्रत्ययान्तानां योगे कर्तरि षष्ठी वा स्यात् ॥ भवता कर्तव्यः कटः । भवतः कर्तव्यः कटः ॥ कर्तरि किं । गेयो माणवकः साम्नां । भव्यगेयेत्यादिना कर्तरि यत् ॥

## तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्यां ॥ ७२ ॥

तुल्यार्थैः शब्दैर्योगे तृतीया वा स्यात् । तुला । उपमा । इत्येतौ वर्जयित्वा ॥ पक्षे षष्ठी ॥ तुल्यो देवेन । तुल्यो देवस्य ॥ अतुलोपमाभ्यां किं । तुला

देवदत्तस्य नास्ति । उपमा कृष्णस्य नास्ति ॥ वेत्यनुवृत्त्यैव सिद्धे ऽन्यतरस्यां ग्रहणमुत्तरार्थं । अन्यथा चकारेण तृतीयानुकृष्येत ॥

## चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ॥७३॥

आयुष्य । मद्र । भद्र । कुशल । सुख । अर्थ । हित । इत्येतदर्थैर्योगे चतुर्थी वा स्यात् ॥ पक्षे षष्ठी ॥ आयुष्यं देवदत्ताय भूयात् । आयुष्यं देवदत्तस्य । चिरं जीवितं देवदत्ताय । चिरं जीवितं देवदत्तस्य ॥ मद्रभद्रौ पर्यायौ । तत्रान्यतरोपादानं प्रपञ्चार्थं ॥ मद्रं देवदत्ताय । मद्रं देवदत्तस्य ॥ भद्रं देवदत्ताय । भद्रं देवदत्तस्य ॥ कुशलं देवदत्ताय । कुशलं देवदत्तस्य । निरामयं देवदत्ताय । निरामयं देवदत्तस्य ॥ सुखं देवदत्ताय । सुखं देवदत्तस्य । शं देवदत्ताय । शं देवदत्तस्य ॥ अर्थो देवदत्ताय । अर्थो देवदत्तस्य । प्रयोजनं देवदत्ताय । प्रयोजनं देवदत्तस्य ॥ हितं देवदत्ताय । हितं देवदत्तस्य । पथ्यं देवदत्ताय । पथ्यं देवदत्तस्य ॥ आशिषि किं । आयुष्यं देवदत्तस्य पयः ॥

॥ इति सूत्रपाठे द्वितीयाध्यायस्य तृतीयः पादः ॥

---

## द्विगुरेकवचनं ॥१॥

द्विगर्थः समाहार एकवत् स्यात् ॥ पञ्चपूली ॥ अर्थस्यैकत्वादनुप्रयोगे ऽप्येक-वचनं । पञ्चपूलीयं ॥

## द्वन्द्वश्च प्राणितूर्यसेनाङ्गानां ॥२॥

एकवचनमित्यनुवर्तते । अङ्गशब्दः प्रत्येकं संबध्यते ॥ प्राण्यङ्ग । तूर्याङ्ग । सेनाङ्ग । इत्येतेषां द्वन्द्व एकवत् स्यात् ॥ प्राणी जीवः । पाणिपादं ॥ तूर्यं वाद्यं । मार्दङ्गिकपाणविकं ॥ सेना सैन्यं । रथिकाश्वारोहं ॥ एतस्याश्वादिपशु-द्वन्द्वे तु पक्षान्तरेण बहुतृणत्यादिना विकल्पो भवति ॥ इतरेतरयोगे समाहारे च द्वन्द्वो विहितः । तत्र समुदायैकत्वादेकवचनं सिद्धं । नियमा-र्थमिदं प्रकरणं । प्राण्यङ्गादीनां समाहार एव द्वन्द्वो भवति । न त्वितरे-तरयोगे ॥

## अनुवादे चरणानां ॥ ३ ॥

चरणः शाखा । तदध्येतृवाचिनां द्वन्द्व एकवत् स्यात् । ज्ञातार्थस्य प्रतिपादने सति ॥ उदगात् कठकौथुमं । प्रत्यष्ठात् कठकालापं ॥ कठकालापानामुदयप्रतिष्ठे ज्ञाते यदा शब्देनानूद्येते तदेदमुदाहरणं । यदा तु प्राथमिकं प्रतिपादनं तदा प्रत्युदाहरणं ॥ अनुवादे किं । उदगुः कठकालापाः ॥

## अध्वर्युक्रतुरनपुंसकं ॥ ४ ॥

अध्वर्युर्यजुर्वेदः । क्रतुः सोमसाध्यो यागः । यजुर्वेदविहितक्रतुवाचिनामनपुंसकलिङ्गानां द्वन्द्व एकवत् स्यात् ॥ अर्काश्वमेधं ॥ अध्वर्युक्रतुः किं । इषुवज्रौ । सामवेदविहितावेतौ ॥ अनपुंसकं किं । राजसूयवाजपेये ॥ इह तु न भवति । दर्शपौर्णमासौ । यजुर्वेदविहितत्वे ऽपि तयोः सोमसाध्यत्वाभावात् ॥

## अध्ययनतो ऽविप्रकृष्टाख्यानां ॥ ५ ॥

अध्ययनेन प्रत्यासन्ना आख्या येषां तेषां द्वन्द्व एकवत् स्यात् ॥ पदकक्रमकं ॥ अध्ययनतः किं । पितापुत्रौ ॥ अविप्रकृष्टाख्यानां किं । याज्ञिकवैयाकरणौ ॥

## जातिरप्राणिनां ॥ ६ ॥

प्राणिभिन्नजातिवाचिनां द्वन्द्व एकवत् स्यात् ॥ आराशस्त्रि । धानाशष्कुलि ॥ जातिः किं । नन्दकपाञ्चजन्यौ ॥ अप्राणिनां किं । ब्राह्मणक्षत्रियाः ॥ अप्राणिनामिति पर्युदासाद्द्रव्यजातीयानामेव । न तु गुणक्रियाजातीयानां । रूपरसौ । गमनाकुञ्चने ॥ जातेः प्राधान्यविवक्षायामयमेकवद्भावः । द्रव्यविवक्षायां तु । बदरामलकानि ॥

## विशिष्टलिङ्गो नदीदेशो ऽग्रामाः ॥ ७ ॥

भिन्नलिङ्गानां नदीवाचिनां ग्रामवर्जदेशवाचिनां च द्वन्द्व एकवत् स्यात् ॥ उद्ध्यश्च इरावती च । उद्ध्येरावति । गङ्गा च शोणश्च । गङ्गाशोणं ॥ कुरवश्च कुरुक्षेत्रं च । कुरुकुरुक्षेत्रं । कुरुजाङ्गलं ॥ विशिष्टलिङ्गः किं । गङ्गायमुने । मद्रकेकयाः ॥ नदीदेशः किं । कुक्कुटमयूर्यौ ॥ अग्रामाः किं । जाम्बवं नगरं शालूकिनी ग्रामः । जाम्बवशालूकिन्यौ ॥

## क्षुद्रजन्तवः ॥ ८ ॥

क्षुद्रजन्तुवाचिनां द्वन्द्व एकवत् स्यात् ॥ दंशमशकं । यूकालिक्षं ॥ आ नकुलात् क्षुद्रजन्तवः ॥

## येषां च विरोधः शाश्वतिकः ॥ ९ ॥

विरोधो वैरं । शाश्वतिको नित्यः ॥ येषां नित्यो विरोधस्तद्वाचिनां द्वन्द्व एकवत् स्यात् ॥ मार्जारमूषिकं । अहिनकुलं ॥ चकारः पुनर्विधानार्थः । तेन विभाषा वृक्षमृगेति परमपि विकल्पं बाधित्वा नित्यमेव भवति । गोव्याघ्रं । काकोलूकं ॥ शाश्वतिकः किं । स्त्रीपुरुषौ कलहायेते ॥

## शूद्राणामनिरवसितानां ॥ १० ॥

यैर्भुक्ते पात्रं संस्कारेणापि न शुध्यति ते निरवसिताः । तद्भिन्ना ये शूद्रास्तद्वाचिनां द्वन्द्व एकवत् स्यात् ॥ तक्षायस्कारं । रजकतन्तुवायं ॥ अनिरवसितानां किं । चाण्डालमृतपाः ॥

## गवाश्वप्रभृतीनि च ॥ ११ ॥

गवाश्व । इत्येवमादीनि कृतैकवद्भावानि द्वन्द्वरूपाणि साधूनि भवन्ति ॥ गवाश्वं ॥ रूपान्तरे तु नायं विधिः । गोश्वं । गोश्वौ । पशुद्वन्द्व उत्तरसूत्रेण विकल्पः ॥

## विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणां ॥ १२ ॥

वृक्ष । मृग । तृण । धान्य । व्यञ्जन । पशु । शकुनि । इत्येतद्वाचिनां द्वन्द्वो वैकवत् । अश्ववडव । पूर्वापर । अधरोत्तर । इत्येतद्द्वन्द्वत्रयं च वैकवत् स्यात् ॥ प्लक्षन्यग्रोधं । प्लक्षन्यग्रोधाः ॥ रुरुपृषतं । रुरुपृषताः ॥ कुशकाशं । कुशकाशाः ॥ व्रीहियवं । व्रीहियवाः ॥ दधिघृतं । दधिघृते ॥ गोमहिषं । गोमहिषाः ॥ तित्तिरिकपिञ्जलं । तित्तिरिकपिञ्जलाः ॥ अश्ववडवं । अश्ववडवौ ॥ पूर्वापरं । पूर्वापरे ॥ अधरोत्तरं । अधरोत्तरे ॥

## विप्रतिषिद्धं चानधिकरणवाचि ॥ १३ ॥

अधिकरणं द्रव्यं । विरुद्धार्थानामद्रव्यवाचिनां द्वन्द्व एकवद्वा स्यात् ॥ शीतोष्णं । शीतोष्णे ॥ विप्रतिषिद्धं किं । कामक्रोधौ ॥ अनधिकरणवाचीति किं । शीतोष्णे उदके ॥

## न दधिपयआदीनि ॥ १४ ॥

दधिपयम् । इत्येवमादीनि शब्दस्वरूपाण्येकवन्न भवन्ति ॥ दधिपयसी ॥

## अधिकरणैतावत्त्वे च ॥ १५ ॥

द्रव्यसंख्यापरिमाणे गम्यमाने द्वन्द्व एकवन्न भवति ॥ दश दन्तोष्ठाः । दश मार्दङ्गिकपाणविकाः ॥

## विभाषा समीपे ॥ १६ ॥

द्रव्यसंख्यापरिमाणस्य सामीप्येन परिच्छेदे सति द्वन्द्व एकवद्वा स्यात् ॥ उपदशं दन्तोष्ठं । उपदशा दन्तोष्ठाः ॥

## स नपुंसकं ॥ १७ ॥

परवल्लिङ्गमित्यस्यापवादः ॥ समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात् ॥ पञ्चगवं ॥ द्वन्द्वे । पाणिपादं ॥

## अव्ययीभावश्च ॥ १८ ॥

अव्ययीभावसमासो ऽपि नपुंसकं स्यात् ॥ अधिस्त्रि । अधिहरि । उन्मत्तगङ्गं ॥ पूर्वपदार्थप्रधानस्यालिङ्गत्वं प्राप्तं । अन्यपदार्थप्रधानस्य वाच्यलिङ्गत्वं प्राप्तं । अनेन नपुंसकत्वं कृतं ॥

## तत्पुरुषो ऽनञ्कर्मधारयः ॥ १९ ॥

अधिकारो ऽयं ॥ इत ऊर्ध्वं वक्ष्यमाणो नञ्समासकर्मधारयसमासवर्जस्तत्पुरुषो नपुंसकः स्यात् ॥ वक्ष्यति विभाषा सेनासुरेति । ब्राह्मणसेनं । ब्राह्मणसेना ॥ तत्पुरुषः किं । दृढसेनो राजा ॥ अनञ्कर्मधारयः किं । असेना । परमसेना ॥

## संज्ञायां कन्थोशीनरेषु ॥ २० ॥

कन्थाशब्दान्तस्तत्पुरुषो नपुंसकः स्यात् संज्ञायां । सा कन्या यद्युशीनरदेशेषु

भवति ॥ सौश्रमिकन्थं । आह्वरकन्थं ॥ संज्ञायां किं । वीरणकन्था ॥ उशीनरेषु किं । दाक्षिकन्था ॥ परवल्लिङ्गमित्येतस्य बाधकमिदं प्रकरणं ॥

## उपज्ञोपक्रमं तदाद्याचिख्यासायां ॥२१॥

उपज्ञा । उपक्रम । इत्येतदन्तस्तत्पुरुषो नपुंसकः स्यात् । तयोरुपज्ञायमानोपक्रम्यमाणयोरादिः प्राथम्यं चेत् प्रतिपादयितुमिष्यते ॥ उपज्ञायत इत्युपज्ञा । आतश्चोपसर्गे इति कर्मण्यङ् ॥ पाणिनेरुपज्ञा । पाणिन्युपज्ञं व्याकरणं । पाणिनेरुपज्ञातेन प्रथमतः प्रणीतमित्यर्थः ॥ उपक्रम्यत इत्युपक्रमः । दर्शनीयोपक्रमं सुकुमारं ॥ उपज्ञोपक्रमं किं । वाल्मीकिश्लोकाः ॥ तयोरादिस्तदादिः । आख्यातुमिच्छाचिख्यासा । तदादेराचिख्यासा ॥ तदाद्याचिख्यासायामिति किं । देवदत्तोपज्ञो रथः । देवदत्तोपक्रमो रथः ॥

## छाया बाहुल्ये ॥२२॥

विभाषा सेनेति वक्ष्यति नित्यार्थमिदं ॥ छाया । इत्येतदन्तस्तत्पुरुषो नपुंसकः स्यात् पूर्वपदार्थस्य बाहुल्ये सति ॥ इक्षूणां छाया । इक्षुछायं ॥ बाहुल्ये किं । कुड्यछाया ॥

## सभा राजामनुष्यपूर्वा ॥२३॥

सभा । इत्येतदन्तस्तत्पुरुषो नपुंसकः स्यात् । सा चेत् सभा राजपर्यायपूर्वामनुष्यपूर्वा च भवति ॥ इनसभं । ईश्वरसभं ॥ राजपर्यायस्यैव । न तु स्वरूपविशेषयोः । राजसभा । चन्द्रगुप्तसभा ॥ अमनुष्यपूर्वा । रक्षःसभं । पिशाचसभं ॥ अमनुष्यशब्दो रक्षःपिशाचादिषु रूढः । तेनात्र न भवति । काकसभा ॥ राजामनुष्यपूर्वेति किं । देवदत्तसभा ॥

## अशाला च ॥२४॥

शालाभिन्नार्थबोधको यः सभाशब्दस्तदन्तस्तत्पुरुषो नपुंसकः स्यात् ॥ स्त्रीसभं । स्त्रीणां समूह इत्यर्थः ॥ अशाला किं । अनाथसभा । अनाथकुटीत्यर्थः ॥

## विभाषा सेनासुराछायाशालानिशानां ॥२५॥

सेना । सुरा । छाया । शाला । निशा । इत्येतदन्तस्तत्पुरुषो वा नपुंसकः स्यात् ॥ ब्राह्मणसेनं । ब्राह्मणसेना ॥ यवसुरं । यवसुरा ॥ कुड्यछायं । कुड्यछाया ॥ गोशालं । गोशाला ॥ श्वनिशं । श्वनिशा ॥

## परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ॥२६॥

द्वन्द्वस्य तत्पुरुषस्य च परवत्तुल्यं लिङ्गं भवति ॥ द्वन्द्व । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ ॥ तत्पुरुष । अर्धं पिप्पल्याः । अर्धपिप्पली ॥

## पूर्ववदश्ववडवौ ॥२७॥

अश्ववडवयोरितरेतरयोगद्वन्द्वे पूर्वपदस्येव लिङ्गं भवति ॥ अश्ववडवौ । अश्ववडवान् । अश्ववडवैः ॥

## हेमन्तशिशिरावहोरात्रे च छन्दसि ॥२८॥

हेमन्तशिशिरौ । अहोरात्रे । इत्येतयोर्द्वन्द्वयोर्वेदे पूर्वपदस्येव लिङ्गं भवति ॥ हेमन्तशिशिरावृतूनां प्रीणामि ॥ अहोरात्रे इदं ब्रूमः । अहोरात्राणीष्टकाः ॥ छन्दसि किं । दुःखे हेमन्तशिशिरे । अहोरात्राविमौ पुण्ये ॥ छन्दसि लिङ्गव्यत्यय उक्तस्तस्यैवायं प्रपञ्चः ॥

## रात्राह्नाहाः पुंसि ॥२९॥

परवल्लिङ्गमित्यस्यापवादः ॥ रात्र । अह्न । अह । इत्येतदन्तौ द्वन्द्वतत्पुरुषौ पुंसि भवतः ॥ अहश्च रात्रिश्च । अहोरात्रः । रात्रेः पूर्वो भागः । पूर्वरात्रः ॥ अह्नः पूर्वः । पूर्वाह्णः । अपराह्णः । मध्याह्नः ॥ द्वयोरह्नोः समाहारः । द्व्यहः । त्र्यहः ॥ परत्वात् समाहारनपुंसकत्वं बाधते ॥

## अपथं नपुंसकं ॥३०॥

अपथ । इत्येतन्नपुंसकं भवति ॥ अपथमिदं । अपथानि गाहते मूढः ॥ तत्पुरुष इत्येव । अपथो देशः । अपथा नगरी ॥ कृतसमासान्तनिर्देशादिह न भवति । अपन्थाः ॥

## अर्धर्चाः पुंसि च ॥३१॥

अर्धर्च । इत्येवमादयः शब्दाः पुंसि क्लीबे च भवन्ति ॥ अर्धर्चः । अर्धर्चं ॥

## इदमो ऽन्वादेशे ऽशनुदात्तस्तृतीयादौ ॥३२॥

इदं । इत्येतस्यान्वादेशविषये ऽनुदात्तो ऽश् । इत्ययमादेशो भवति तृतीयादौ विभक्तौ परतः ॥ आभ्यां छन्दो ऽधीतं । अथो आभ्यां व्याकरणमधीयते । एभिः । अस्मै । आभ्यां । एभ्यः । अस्मात् । आभ्यां । एभ्यः । अस्य । एषां । एषु ॥

## एतदस्त्रतसोस्त्रतसौ चानुदात्तौ ॥३३॥

एतद् । इत्येतस्यान्वादेशविषये ऽनुदात्तो ऽश् । इत्यादेशो भवति त्रतसोः परतः । त्र । तस् । इत्येतौ चानुदात्तौ भवतः ॥ एतस्मिन् ग्रामे सुखं वसामः । अथो अत्र युक्ता अधीमहे । एतस्माच्छन्दो ऽधीष्व । अथो अतो व्याकरणमप्यधीष्व ॥ एतदो ऽशित्यनेनैवाशादेशे सिद्धे पुनर्वचनं सर्वानुदात्तत्वाय ॥

## द्वितीयाटौःस्वेनः ॥३४॥

द्वितीया । टा । ओस् । इत्येतेषु परेष्वन्वादेशविषये । इदं । एतद् । इत्येतयोरनुदात्त एन आदेशो भवति ॥ अनेन व्याकरणमधीतं । एनं छन्दो ऽध्यापय । एनौ । एनान् । एनेन । एनयोः । एनयोः ॥ एतेन छन्दो ऽधीतं । अथो एनं व्याकरणमध्यापय । एनौ । एनान् । एनेन । एनयोः । एनयोः ॥

## आर्धधातुके ॥३५॥

अधिकारो ऽयं । ण्यक्षत्रियार्ष इत्यतः प्राक् ॥ यदित ऊर्ध्वमनुक्रमिष्यामस्तदार्धधातुकविषये वेद्यं ॥ वक्ष्यति हनो वध लिङि । वध्यात् ॥ अस्तेर्भूः । भव्यं ॥ अजेर्वी । प्रवेयं ॥ चक्षिङः ख्याञ् । आख्येयं ॥ आर्धधातुके किं । हन्यात् ॥

## अदो जग्धिर्ल्यप्ति किति ॥३६॥

अद् । इत्येतस्य धातोर्जग्धि । इत्ययमादेशो भवति ल्यपि तकारादौ च किति परे ॥ ल्यप् । प्रजग्ध्य ॥ ति किति । जग्धः । जग्धवान् ॥ आदेश इकार उच्चारणार्थः । न तु किंचित्कार्यार्थः ॥ तीति किं । अद्यते ॥ कितीति किं । अत्तव्यं ॥

## लुङ्सनोर्घसॢ ॥३७॥

अद् । इत्येतस्य लुङि सनि च परे घसॢ । इत्ययमादेशः स्यात् ॥ लृदित्करणमङर्थं । अघसत् । अघसतां । अघसन् ॥ जिघत्सति । जिघत्सतः । जिघत्सन्ति ॥

## घञपोश्च ॥३८॥

अद् । इत्येतस्य घस्लादेशः स्यात् । घञि । अपि च परे ॥ घासः ॥ प्रघसः ॥ उपसर्गे ऽद इत्यप् ॥

## बहुलं छन्दसि ॥ ३९ ॥

वेदे बहुलं घस्लादेशो भवति ॥ घस्तां नूनं । सग्धिश्च मे ॥ इह तु न भवति । आत्तामद्य मध्यतो मेद उद्भृतं ॥ उत्तरसूत्रस्यान्यतरस्यांग्रहणे ऽत्र कृते विकल्पो भविष्यति । कार्यान्तरार्थं च बहुलग्रहणं । घस्तामित्यत्रो-पधालोपो न भवति ॥

## लिट्यन्यतरस्यां ॥ ४० ॥

अदो लिटि घस्लादेशो वा स्यात् ॥ जघास । जक्षतुः । जक्षुः ॥ आद । आदतुः । आदुः ॥

## वेञो वयिः ॥ ४१ ॥

वेञ् । इत्येतस्य धातोर्लिटि परे वयि । इत्यादेशो वा स्यात् ॥ इकार उच्चारणार्थः ॥ उवाय । ऊयतुः । ऊयुः । लिटि वयो य इति यकारस्य संप्रसारणनिषेधः । वश्चास्यान्यतरस्यामिति वकारादेशपक्षे । ऊवतुः । ऊवुः ॥ वयादेशाभावे । ववौ । ववतुः । ववुः । वेञ इति संप्रसारणनिषेधः ॥

## हनो वध लिङि ॥ ४२ ॥

हन् । इत्येतस्य धातोर्लिङि परे वधादेशः स्यात् ॥ वध्यात् । वध्यास्तां । वध्यासुः ॥

## लुङि च ॥ ४३ ॥

हनो वधादेशः स्याल्लुङि परे ॥ अवधीत् । अवधिष्टां । अवधिषुः ॥ वधा-देशो ऽदन्तः । अतो लोप इत्यकारलोपः । तस्य स्थानिवद्भावाद्धलन्तलक्षणा वृद्धिरतो हलादेर्लघोरिति वा वृद्धिर्न भवति ॥ योगविभाग उत्तरार्थः । आत्मनेपदेषु लिङि विकल्पो मा भूत् ॥

## आत्मनेपदेष्वन्यतरस्यां ॥ ४४ ॥

पूर्वेण नित्ये प्राप्ते ऽयं विकल्पः ॥ लुङ्यात्मनेपदेषु परेषु हनो वधादेशो वा स्यात् ॥ आवधिष्ट । आवधिषातां । आवधिषत । आहत । आहसातां । आहसत ॥

## इणो गा लुङि ॥४५॥

इण् । इत्येतस्य धातोर्लुङि परे गा । इत्ययमादेशः स्यात् ॥ अगात् । अगातां । अगुः । अगायि भवता ॥ लुङीति वर्तमाने पुनर्लुङ्ग्रहणमात्मनेपदेष्वन्यतरस्यामित्येतन्निवृत्त्यर्थं ॥

## णौ गमिरबोधने ॥४६॥

इण् । इत्येतस्य धातोर्णौ परे गमि । इत्ययमादेशः स्यात् । न तु बोधनेऽर्थे ॥ इकार उच्चारणार्थः ॥ गमयति । गमयतः । गमयन्ति ॥ अबोधने किं । प्रत्याययत्यर्थान् ॥ इणवदिक इत्येव । अधिगमयति ॥

## सनि च ॥४७॥

सनि परे इणो गमिरादेशः स्यात् । न तु बोधनेऽर्थे ॥ जिगमिषति । जिगमिषतः । जिगमिषन्ति ॥ अबोधन इत्येव । अर्थान् प्रतीषिषति ॥ इणवदिकः । अधिजिगमिषति ॥ योगविभाग उत्तरार्थः । इङश्चेत्यत्र सनीत्येवानुवर्तते ॥

## इङश्च ॥४८॥

इङ् । इत्येतस्य च गमि । इत्ययमादेशः स्यात् सनि परतः ॥ अधिजिगांसते ॥

## गाङ् लिटि ॥४९॥

इङ् । इत्येतस्य गाङ् । इत्ययमादेशः स्याल्लिटि विवक्षिते ॥ अधिजगे । अधिजगाते । अधिजगिरे ॥

## विभाषा लुङ्लृङोः ॥५०॥

इङो गाङादेशो वा स्याल्लुङ्लृङोर्विषये ॥ आदेशपक्षे गाङ्कुटेति ङित्त्वं । घुमास्थेतीत्वं ॥ अध्यगीष्ट । अध्यगीषातां । अध्यगीषत ॥ आदेशाभावे । अध्यैष्ट । अध्यैषातां । अध्यैषत ॥ लृङि । अध्यगीष्यत । अध्यगीष्येतां । अध्यगीष्यन्त ॥ आदेशाभावे । अध्यैष्यत । अध्यैष्येतां । अध्यैष्यन्त ॥

## णौ च संश्चङोः ॥५१॥

इङो गाङादेशो वा स्यात् सन्परे चङ्परे च णौ परतः ॥ अधिजिगापयिषति । अध्यापिपयिषति ॥ चङि । अध्यजीगपत् । अध्यापिपत् ॥

## अस्तेर्भूः ॥५२॥

अस । इत्येतस्य धातोर्भू । इत्ययमादेशः स्यात् । आर्धधातुके ॥ भविता । भवितारौ । भवितारः । भवितुं । भवितव्यं ॥

## ब्रुवो वचिः ॥५३॥

ब्रूञ् । इत्येतस्य धातोर्वचि । इत्ययमादेशः स्यात् । आर्धधातुके ॥ इकार उच्चारणार्थः ॥ वक्ता । वक्तारौ । वक्तव्यं । स्थानिवद्भावेन कर्तृगामिनि क्रियाफल आत्मनेपदं । ऊचे । वक्ष्यते ॥

## चक्षिङः ख्याञ् ॥५४॥

चक्षिङ् । इत्येतस्य धातोः ख्याञ् । इत्ययमादेशः स्यात् । आर्धधातुके ॥ आख्याता । आख्यातव्यं । स्थानिवद्भावेन नित्यमात्मनेपदं तु न भवति ञकारानुबन्धकरणसामर्थ्यात् । क्शादिरयमादेशः । क्शाता । क्शातव्यं ॥

## वा लिटि ॥५५॥

चक्षिङः ख्याआदेशो वा स्याल्लिटि ॥ आचख्यौ । आचख्यतुः । आचख्युः ॥ आदेशाभावे । आचचक्षे । आचचक्षाते । आचचक्षिरे ॥

## अजेर्व्यघञपोः ॥५६॥

अज । इत्येतस्य धातोर्वी । इत्ययमादेशः स्यात् । आर्धधातुके । घञपं च वर्जयित्वा ॥ प्रवायकः । प्रवयणीयं ॥ अघञपोः किं । समाजः । समजः ॥ दीर्घोच्चारणं किं । प्रवीतः ॥

## वा यौ ॥५७॥

यु । इति ल्युटो ग्रहणं ॥ अजेर्वीत्ययमादेशो वा भवति यौ परं ॥ प्रवयणः । प्राजनः ॥

## ण्यक्षत्रियार्षञितो यूनि लुगणिञोः ॥५८॥

ण्य । क्षत्रिय । आर्ष । ञित् । इत्येते गोत्रप्रत्ययाः । तदन्तेभ्यः परयोर्यूनि ज्ञातयोरणिञोर्लुक् स्यात् ॥ ण्य । कौरव्यः पिता । कौरव्यः पुत्रः । कुर्वादिभ्यो ण्यः । तदन्ताद्यून्यपत्ये ऽत इञ्तस्य लुक् ॥ तिकादिगणे कौरव्यशब्दपाठसामर्थ्यात् कुर्वादिभ्यो ण्य इति ण्यप्रत्ययान्तस्य क्षत्रियगोत्रबोधकस्य

कौरव्यशब्दस्य ग्रहणं । इदं तु ब्राह्मणगोत्रं । अतः फिञ् न भवति ॥ क्षत्रिय । श्वाफल्कः पिता । श्वाफल्कः पुत्रः । ऋष्यन्धकवृष्णिकुरुभ्यश्चेत्यण् । ततो यून्यपत्ये ऽत इञ् । तस्य लुक् ॥ आर्ष । वासिष्ठः पिता । वासिष्ठः पुत्रः ॥ ञितः । वैदः पिता । वैदः पुत्रः । अनृष्यानन्तर्ये बिदादिभ्यो ऽञ् । ततो यून्यत इञ् । तस्य लुक् ॥ अणः खल्वपि । तैकायनिः पिता । तैकायनिः पुत्रः । तिकादिभ्यो फिञ् । ततः प्राग्दीव्यतो ऽण् । तस्य लुक् ॥ एतेभ्यः किं । कौहडः पिता । कौहडिः पुत्रः । शिवादिभ्यो ऽण् । ततो यून्यत इञ् । तस्य लुग्न भवति ॥ यूनि किं । वामरथ्यस्य छात्राः । वामरथाः । कुर्वादिभ्यो ण्यः । तस्मात् कण्वादिभ्यो गोत्र इति शैषिको ऽण् । तस्य लुग्न भवति ॥ अणिञोः किं । दाक्षायणः ॥

## पैलादिभ्यश्च ॥५९॥

पैल । इत्येवमादिभ्यो युवप्रत्ययस्य लुक् स्यात् ॥ पैलः पिता पुत्रश्च । पीलाया वेत्यण् । तस्मादणो द्व्यच इति फिञ्तस्य लुक् ॥ आङ्गः पिता पुत्रश्च । द्व्यञ्मगधेत्यादिना तद्राजसंज्ञको ऽण् । ततः फिञ्तस्य लुक् ॥ अन्ये पैलादय इञन्तास्तेभ्य इञः प्राचामिति लुकि सिद्धे ऽप्रागर्थः पाठः ॥

## इञः प्राचां ॥६०॥

गोत्रे य इञ्तदन्ताद्युवप्रत्ययस्य लुक् स्यात् । तच्चेद्गोत्रं प्राचां भवति ॥ पान्नागारिः पिता पुत्रश्च । इञन्तात् फक् तस्य लुक् ॥ प्राचां किं । दाक्षिः पिता । दाक्षायणः पुत्रः ॥

## न तौल्वलिभ्यः ॥६१॥

तौल्वलि । इत्येवमादिभ्यः परस्य युवप्रत्ययस्य पूर्वसूत्रविहितो लुग्न स्यात् ॥ तौल्वलिः पिता । तौल्वलायनः पुत्रः ॥

## तद्राजस्य बहुषु तेनैवास्त्रियां ॥६२॥

तद्राजसंज्ञकस्य प्रत्ययस्य लुक् स्यात् । तद्राजेनैव कृतं बहुत्वं । स्त्रियां तु लुग्न भवति ॥ अङ्गाः । कलिङ्गाः ॥ तद्राजस्य किं । औपगवाः ॥ बहुषु किं । आङ्गः ॥ तेनैवेति किं । प्रियकालिङ्गाः ॥ अस्त्रियां किं । आङ्ग्यः स्त्रियः ॥

## यस्कादिभ्यो गोत्रे ॥ ६३ ॥

यस्क । इत्येवमादिभ्यः परस्य गोत्रप्रत्ययस्य लुक् स्यात् । गोत्रप्रत्ययकृते बहुत्वे । स्त्रियां तु न लुक् ॥ यस्काः । लह्याः ॥ बहुष्वित्येव । यास्कः ॥ तेनैवेत्येव । प्रिययास्काः ॥ अस्त्रियामित्येव । यास्क्यः स्त्रियः ॥ गोत्रे किं । यास्काश्छात्राः ॥

## यञञोश्च ॥ ६४ ॥

यञ् । अञ् । इत्येतयोर्गोत्रप्रत्यययोर्लुग्भवति । गोत्रप्रत्ययकृते बहुत्वे । न तु स्त्रियां ॥ यञ् । गर्गाः । वत्साः ॥ अञ् । विदाः । उर्वाः ॥ बहुष्वित्येव । गार्ग्यः । वैदः ॥ तेनैवेत्येव । प्रियगार्ग्याः । प्रियवैदाः ॥ अस्त्रियामित्येव । गार्ग्यः स्त्रियः । वैद्यः स्त्रियः ॥ गोत्र इत्येव । द्वैप्याः । द्वीपादनुसमुद्रं यञ् । औत्साः । उत्सादिभ्यो ऽञ् ॥

## अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च ॥ ६५ ॥

अत्रि । इत्येवमादिभ्यः परस्य गोत्रप्रत्ययस्य लुक् स्याद्गोत्रकृते बहुत्वे । न तु स्त्रियां ॥ अत्रेर्गोत्रापत्यानि पुमांसः । अत्रयः । इतश्चानिञ इति ढक् तस्य लुक् ॥ भृगवः । कुत्साः । वसिष्ठाः । गोतमाः । अङ्गिरसः ॥ ऋष्यण् तस्य लुक् ॥ बहुष्वित्येव । आत्रेयः । भार्गवः ॥ तेनैवेत्येव । प्रियात्रेयाः । प्रियभार्गवाः ॥ स्त्रियां तु । आत्रेय्यः स्त्रियः ॥

## बह्वच इञः प्राच्यभरतेषु ॥ ६६ ॥

बह्वचो विहितो य इञ् प्राच्यगोत्रे भरतगोत्रे च वर्तमानस्तस्य लुक् स्याद्गोत्रकृते बहुत्वे ॥ पन्नागाराः । मन्थरेषणाः ॥ युधिष्ठिराः । अर्जुनाः ॥ बह्वचः किं । बैङ्क्यः । पौष्पयः ॥ प्राच्यभरतेष्विति किं । बालाकयः । हास्तिदासयः ॥

## न गोपवनादिभ्यः ॥ ६७ ॥

गोपवन । इत्येवमादिभ्यः परस्य गोत्रप्रत्ययस्य लुग्न स्यात् ॥ यञञोश्चेति लुक् प्राप्तः प्रतिषिध्यते ॥ गौपवनाः ॥

## तिककितवादिभ्यो द्वन्द्वे ॥ ६८ ॥

तिकादिभ्यः कितवादिभ्यश्च द्वन्द्वे गोत्रप्रत्ययस्य लुक् स्याद्गोत्रकृते बहुत्वे ॥ तैकायनयश्च कैतवायनयश्च । तिककितवाः । तिकादिभ्यः फिञ् । तस्य लुक् ॥

## उपकादिभ्यो ऽन्यतरस्यामद्वन्द्वे ॥६९॥

उपक । इत्येवमादिभ्यः परस्य गोत्रप्रत्ययस्य वा लुक् स्याद्गोत्रकृते बहुत्वे द्वन्द्वे चाद्वन्द्वे च ॥ उपकाः । औपकायनाः । लमकाः । लामकायनाः ॥ उपकलमकाः । अष्टककपिष्ठलाः । कृष्णाजिनकृष्णासुन्दराः । इत्येतद्द्वन्द्वत्रयं तिककितवादिषु पठ्यते । तत्र पूर्वसूत्रेण नित्यं लुक् । अद्वन्द्वे त्वनेन विकल्पः । परिशिष्टानां द्वन्द्वे ऽद्वन्द्वे च विकल्पः ॥

## आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ॥७०॥

आगस्त्य । कौण्डिन्य । इत्येतयोरवयवस्य गोत्रप्रत्ययस्याणो यञश्च लुक् स्यात् । अगस्ति । कुण्डिनच् । इत्येतावादेशौ च क्रमेण भवतः ॥ अगस्तयः । कुण्डिनाः ॥

## सुपो धातुप्रातिपदिकयोः ॥७१॥

धातु । प्रातिपदिक । एतयोरवयवस्य सुपो लुक् स्यात् ॥ धातु । आत्मनः पुत्रमिच्छति । पुत्रीयति ॥ प्रातिपदिकस्य । राजपुरुषः । औपगवः ॥ धातुप्रातिपदिकयोः किं । वृक्षः ॥

## अदिप्रभृतिभ्यः शपः ॥७२॥

अद । इत्येवमादिभ्यो धातुभ्यः परस्य शप् । इत्येतस्य लुक् स्यात् ॥ अत्ति । हन्ति । द्वेष्टि ॥

## बहुलं छन्दसि ॥७३॥

वेदे शपो बहुलं लुक् स्यात् । अदिप्रभृतिभ्यो न भवत्यपि ॥ वृत्रं हनति । अहिः शयते ॥ अन्येभ्यश्च भवति । त्राध्वं नो देवाः ॥

## यङो ऽचि च ॥७४॥

यङ् । इत्येतस्य बहुलं लुग्भवति । अचि प्रत्यये परे । चकारात् तं विनापि बहुलं लुक् स्यात् ॥ लोलुवः । पोपुवः । मनीसंगः । दनीध्वंसः ॥ अच्प्रत्ययं विनापि । चोक्रोति शकुन्तः । वावदीति दुन्दुभिः ॥

## जुहोत्यादिभ्यः श्लुः ॥७५॥

हु । इत्येवमादिभ्यो धातुभ्यः परस्य शपः श्लुः स्यात् ॥ लुकि प्रकृते श्लुविधानं श्लाविति द्वित्वार्थं ॥ जुहोति । बिभर्ति । नेनेक्ति ॥

## बहुलं छन्दसि ॥७६॥

वेदे बहुलं शपः श्लुर्भवति ॥ जुहोत्यादिभ्य उक्तास्तत्र क्वचिन्न भवति । दाति प्रियाणि ॥ अन्येभ्यश्च भवति । पूर्णां विवष्टि । जनिमा विवक्ति ॥

## गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ॥७७॥

गाति । स्था । घु । पा । भू । इत्येतेभ्यः परस्य सिच् । इत्येतस्य लुक् स्यात् परस्मैपदेषु परेषु ॥ गातीति इणादेशस्य ग्रहणं । न तु गै । इत्येतस्य । अगात् ॥ स्था । अस्थात् ॥ घु । अदात् । अधात् ॥ पा पान इति गृह्यते । न तु पा रक्षणे । अपात् ॥ भू । अभूत् ॥ परस्मैपदेष्विति किं । अगासातां ग्रामौ देवदत्तेन ॥

## विभाषा घ्राधेट्शाछासः ॥७८॥

घ्रा । धेट् । शा । छा । सा । इत्येतेभ्यः परस्य सिचो लुग्वा स्यात् परस्मैपदेषु ॥ अघ्रासीत् । अघ्रात् ॥ अधासीत् । अधात् ॥ शो । अशासीत् । अशात् ॥ छो । अच्छासीत् । अच्छात् ॥ षो । असासीत् । असात् ॥ परस्मैपदेष्वित्येव । अघ्रासातां सुमनसौ देवदत्तेन ॥

## तनादिभ्यस्तथासोः ॥७९॥

तनु । इत्येवमादिभ्यो धातुभ्यः परस्य सिचो लुग्वा स्यात् । त । थास् । इत्येतयोः परयोः ॥ अतत । अतनिष्ट । अतथाः । अतनिष्ठाः ॥ असात । असनिष्ट । असाथाः । असनिष्ठाः ॥ जनसनेत्यात्वं ॥ थासा साहचर्यादात्मनेपदस्य तशब्दस्य ग्रहणं । परस्मैपदे न भवति । अतनिष्ट यूयं ॥

## मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः ॥८०॥

घस । ह्वर । नश । वृ । दह । आत् । वृच् । कृ । गमि । जनि । इत्येतेभ्यः परस्य लेर्लुग्भवति मन्त्रे ॥ घस । अक्षन्नमी मदन्त पितरः । अदो घस्लादेशः । गमहनेत्युपधालोपः । शासिवसीति षः ॥ ह्वृ कौटिल्ये ।

मा दुर्मित्रत्वं ॥ णश । प्रणङ्मर्त्यस्य । नशेर्वेति कुत्वं ॥ वृङ्वृञौ द्वावपि । सुरुचोवेन आवः ॥ दह । मा नो धक् ॥ आदित्याकारान्तग्रहणं । प्रा पूरणे । आप्रा द्यावापृथिवी अन्तरीक्षं ॥ वृञ्जी । परावर्गभारभृधथा ॥ डुकृञ् । अक्रन् कर्म ॥ गम्लृ । अग्मन् ॥ जनी । अज्ञ तवा अस्य दन्ताः ॥ ब्राह्मणप्रयोगो ऽयं । मन्त्रग्रहणं ब्राह्मणस्याप्युपलक्षणं ॥

## आमः ॥ ८१ ॥

आम् । इत्येतदन्तात् परस्य लेर्लुक् स्यात् ॥ एधांचक्रे । ईहांचक्रे ॥

## अव्ययादाप्सुपः ॥ ८२ ॥

अव्ययाद्विहितस्यापः सुपश्च लुक् स्यात् ॥ तत्र शालायां ॥ सुपः । कृत्वा । दत्वा । च । वा ॥

## नाव्ययीभावादतो ऽम् त्वपञ्चम्याः ॥ ८३ ॥

अदन्तादव्ययीभावात् सुपो न लुक् । किं तु तस्य पञ्चमीं विना अमादेशो भवति ॥ उपकुम्भं तिष्ठति । उपकुम्भं पश्य ॥ अतः किं । अधिस्त्रि ॥ अपञ्चम्याः किं । उपकुम्भादानय ॥

## तृतीयासप्तम्योर्बहुलं ॥ ८४ ॥

पूर्वसूत्रेण नित्यममादेशे प्राप्ते विकल्पो ऽयं ॥ अदन्तादव्ययीभावात् तृतीयासप्तम्योर्वा अमादेशः स्यात् ॥ उपकुम्भेन कृतं । उपकुम्भं कृतं ॥ उपकुम्भे निधेहि । उपकुम्भं निधेहि ॥

## लुटः प्रथमस्य डारौरसः ॥ ८५ ॥

लुटः स्थाने यः प्रथमपुरुषस्तस्य । डा । रौ । रस् । इत्येत आदेशाः क्रमेण भवन्ति ॥ कर्ता । कर्तारौ । कर्तारः ॥

॥ इति सूत्रपाठे द्वितीयाध्यायस्य चतुर्थः पादो ऽध्यायश्च समाप्तः ॥

॥ अथ तृतीयः पादः ॥

## प्रत्ययः ॥ १ ॥

संज्ञाधिकारो ऽयं ॥ इत ऊर्ध्वमा पञ्चमपरिसमाप्तेर्यानतुक्रमिष्यामस्ते प्रत्ययसंज्ञका बोध्याः ॥ वक्ष्यति तव्यत्तव्यानीयरः । करणीयं ॥

## परश्च ॥ २ ॥

आ पञ्चमपरिसमाप्तेरयमधिकारः । धातोः प्रातिपदिकाद्वा परः प्रत्ययसंज्ञक उत्पद्यते ॥ कर्तव्यं । करणीयं ॥ चकारः समुच्चयार्थः । तेनोणादीनां परत्वं न विकल्पते ॥

## आद्युदात्तश्च ॥ ३ ॥

अधिकारो ऽयमा पञ्चमाध्यायात् । प्रत्यय आद्युदात्तो भवति ॥ कर्तव्यं ॥

## अनुदात्तौ सुप्पितौ ॥ ४ ॥

पूर्वसूत्रापवादः ॥ सुपः पितश्च प्रत्यया अनुदात्ता भवन्ति ॥ दृषदौ । दृषदः ॥ पितः । पचति ॥

## गुप्तिज्किद्भ्यः सन् ॥ ५ ॥

गुप । तिज । कित । इत्येतेभ्यो धातुभ्यः सन्प्रत्ययः स्यात् ॥ जुगुप्सते ॥ तितिक्षते ॥ चिकित्सति । चिकित्सते ॥ गुपादिष्वनुबन्धकरणासामर्थ्यात् सन्नन्तादात्मनेपदं ॥

## मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ॥ ६ ॥

मान । बध । दान । शान । इत्येतेभ्यो धातुभ्यः सन् स्यात् । अभ्यासस्य दीर्घश्च भवति ॥ मीमांसते ॥ बीभत्सते ॥ दीदांसते ॥ शीशांसते ॥ उत्तरसूत्रे वाग्रहणं सर्वस्य शेषो विज्ञायते । तेन क्वचिन्न भवति । अभिमानयति ॥

## धातोः कर्मणः समानकर्तृकादिच्छायां वा ॥ ७ ॥

इषिकर्म यो धातुरिषिणैव समानकर्तृकस्तस्मादिच्छायामर्थे सन्प्रत्ययो वा स्यात् ॥ कर्तुमिच्छति । चिकीर्षति । हर्तुमिच्छति । जिहीर्षति ॥ धातोः किं । सोपसर्गान्मा भूत् । प्रकर्तुमैच्छत् । प्राचिकीर्षत् ॥ कर्मणः किं । गमनेनेच्छति । इति करणान्मा भूत् ॥ समानकर्तृकात् किं । शिष्याः पठन्तु इतीच्छति गुरुः ॥ इच्छायां किं । कर्तुं जानाति ॥ धातुशब्दमुच्चार्य विधानादस्य सन आर्धधातुकसंज्ञा भवति । पूर्वसूत्रद्वयविहितस्य तु न भवति ॥

## सुप आत्मनः क्यच् ॥ ८ ॥

इषिकर्मण इच्छाकर्तृसंबन्धिनः सुबन्तादिच्छायामर्थे क्यच्प्रत्ययो वा स्यात् ॥ आत्मनः पुत्रमिच्छति । पुत्रीयति ॥ सुपः किं । वाक्यान्मा भूत् । महान्तं पुत्रमिच्छति ॥ आत्मनः किं । राज्ञः पुत्रमिच्छति ॥ ककारो नः क्ये इति विशेषणार्थः । चकारः सामान्यग्रहणाविघातार्थः ॥

## काम्यच् च ॥ ९ ॥

इषिकर्मणः सुबन्तादात्मन इच्छायामर्थे काम्यच्प्रत्ययो वा स्यात् ॥ पुत्रमात्मन इच्छति । पुत्रकाम्यति ॥ योगविभाग उत्तरत्र क्यच एवानुकर्षणार्थः ॥ चकारादिकात् काम्यचः ककारस्येत्संज्ञा न भवति ॥

## उपमानादाचारे ॥ १० ॥

उपमानात् कर्मणः सुबन्तादाचारेऽर्थे वा क्यच् स्यात् ॥ पुत्रमिवाचरति । पुत्रीयति शिष्यं ॥ प्रासादीयति कुट्यां ॥

## कर्तुः क्यङ् सलोपश्च ॥ ११ ॥

उपमानात् कर्तुः सुबन्तादाचारेऽर्थे क्यङ् वा स्यात् । यत्र तु सकारान्तं

सुबन्तं तत्र नकारलोपश्च वा भवति ॥ श्येन इवाचरति । श्येनायते काकः ॥ व्यवस्थितविकल्पो ऽयं नलोपः । ओजायते । अप्सरायते । अत्र नित्यं भवति । पयायते । पयस्यते । अत्र वा भवति ॥ अलो ऽन्त्यस्येति परिभाषया नेह । एनायते ॥

## भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ॥ १२ ॥

भृश । इत्येवमादिभ्यः प्रातिपदिकेभ्यो ऽच्व्यन्तेभ्यो भवतीत्यर्थे क्यङ् वा स्यात् । हलन्तानां भृशादीनामन्त्यस्य लोपश्च भवति ॥ अभृशो भृशो भवति । भृशायते ॥ हलन्तस्य तु । उन्मनायते ॥ चुरादौ संग्राम युद्ध इत्येव पठितव्यं । युद्धे यो ऽर्थे ग्रामशब्द इत्युक्ते सामर्थ्यात् संग्रामशब्दं लब्ध्वा संग्राम इति पाठो ज्ञापयति । उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजकप्रत्ययोत्पत्तौ पृथक् क्रियत इति तेन मनःशब्दात् प्रागट् । उदमनायत ॥ अच्वेः किं । भृशीभवति ॥

## लोहितादिडाज्भ्यः क्यष् ॥ १३ ॥

लोहित । इत्येवमादिभ्यो ऽच्व्यन्तेभ्यः प्रातिपदिकेभ्यो डाच्प्रत्ययान्तेभ्यश्च भवतीत्यर्थे वा क्यष् स्यात् ॥ लोहितायति । लोहितायते ॥ डाच् । पटपटायति । पटपटायते ॥ वा क्यष इति परस्मैपदं ॥ अच्वेरित्यनुवृत्तेरभूततद्भाव एव क्यष् ॥

## कष्टाय क्रमणे ॥ १४ ॥

कष्टशब्दाच्चतुर्थ्यन्तात् क्रमणे ऽर्थे क्यङ् वा स्यात् ॥ कष्टाय क्रमते । कष्टायते ॥

## कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ॥ १५ ॥

रोमन्थ । तपस् । इत्येताभ्यां कर्मभ्यां क्रमेण वर्तनायां चरणे चार्थे क्यङ् वा स्यात् ॥ रोमन्थं वर्त्तयति । रोमन्थायते ॥ तपश्चरति । तपस्यति ॥

## वाष्पोष्मभ्यामुद्वमने ॥ १६ ॥

वाष्प । उष्मन् । इत्येताभ्यां कर्मभ्यामुद्वमने ऽर्थे क्यङ् वा स्यात् ॥ वाष्पमुद्वमति । वाष्पायते ॥ उष्माणमुद्वमति । उष्मायते ॥

## शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ॥ १७ ॥

शब्दादिभ्यः क्यङ् वा स्यात् करोतीत्यर्थे ॥ शब्दं करोति । शब्दायते ॥ वैरायते ॥ कलहायते ॥ अभ्रायते ॥ कण्वायते ॥ मेघायते ॥

## सुखादिभ्यः कर्तृवेदनायां ॥१८॥

सुख । इत्येवमादिभ्यः कर्मभ्यो ऽनुभवे ऽर्थे क्यङ् वा स्यात् । वेदना कर्तुरेव यदि सुखादीनि भवन्ति ॥ सुखं वेदयते । सुखायते ॥ कर्तृग्रहणं किं । परस्य सुखं वेदयति ॥

## नमोवरिवश्चित्रङः क्यच् ॥१९॥

नमस् । वरिवस् । चित्रङ् । इत्येतेभ्यः करोतीत्यर्थे वा क्यच् स्यात् ॥ नमस्करोति । नमस्यति देवान् ॥ वरिवस्यति गुरून् ॥ चित्रीयते । चित्रङो ङित्करणादात्मनेपदं ॥

## पुच्छभाण्डचीवराण्णिङ् ॥२०॥

पुच्छ । भाण्ड । चीवर । इत्येतेभ्यः करोतीत्यर्थे णिङ् वा स्यात् ॥ पुच्छमुदस्यति । उत्पुच्छयते ॥ भाण्डानि समाचिनोति । संभाण्डयते ॥ चीवराण्यर्जयति । संचीवरयते । चीवराणि परिधत्ते । संचीवरयते भिक्षुः ॥ ङकार आत्मनेपदार्थः ॥ णकारः सामान्यग्रहणार्थः । णेरनिटीति ॥

## मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ॥२१॥

मुण्डप्रभृतिभ्यः करोतीत्यर्थे णिच् स्यात् ॥ मुण्डं करोति । मुण्डयति ॥ मिश्रयति ॥ श्लक्ष्णयति ॥ लवणयति ॥ व्रतयति पयः । भुङ्क्त इत्यर्थः । व्रतयति शूद्रान्नं । वर्जयतीत्यर्थः ॥ हलयति । हलिं गृह्णातीत्यर्थः ॥ कलयति । कलिं गृह्णातीत्यर्थः ॥ कृतयति । कृतं गृह्णातीत्यर्थः ॥ तूस्तानि विहन्ति । वितूस्तयति । केशान् विशदीकरोतीत्यर्थः ॥

## धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ॥२२॥

पौनःपुन्यं भृशार्थश्च क्रियासमभिहारः । तत्र वर्तमानादेकाचो हलादेर्धातोर्यङ् वा स्यात् ॥ पुनः पुनः पचति । पापच्यते ॥ अतिशयेन ज्वलति । जाज्वल्यते ॥

धातोः किं । सोपसर्गान्माभूत् । भृशं प्राटति ॥ एकाचः किं । भृशं जागर्ति ॥ हलादेः किं । भृशमीक्षते ॥

## नित्यं कौटिल्ये गतौ ॥ २३ ॥

गत्यर्थाद्धातोः कौटिल्य एव यङ् स्यात् । न तु क्रियासमभिहारे ॥ कुटिलं व्रजति । वाव्रज्यते ॥ कुटिलं क्रामति । चङ्क्रम्यते ॥ नित्यग्रहणं विषयनियमार्थं । तेन क्रियासमभिहारे न भवति । भृशं व्रजति ॥

## लुपसदचरजपजभदहदशगृभ्यो भावगर्हायां ॥ २४ ॥

लुप । सद । चर । जप । जभ । दह । दश । गृ । इत्येतेभ्यो धात्वर्थगर्हायां यङ् स्यात् ॥ लुप्लृ । गर्हितं लुम्पति । लोलुप्यते ॥ षद्लृ । सासद्यते ॥ चर । चञ्चूर्यते ॥ जप । जञ्जप्यते ॥ जभ । जञ्जभ्यते ॥ दह । दन्दह्यते ॥ दंश । दन्दश्यते ॥ गृ । निजेगिल्यते ॥ भावगर्हायां किं । साधु जपति ॥ भावग्रहणं किं । साधनगर्हायां मा भूत् । मन्त्रं जपति शूद्रः ॥ नित्यग्रहणानुवृत्तेर्भावगर्हायामेव न तु क्रियासमभिहारे । भृशं लुम्पति ॥

## सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ॥ २५ ॥

सत्यादिभ्यश्चूर्णान्तेभ्यः प्रातिपदिकेभ्यश्चुरादिभ्यश्च धातुभ्यो णिच् स्यात् ॥ सत्यमाचष्टे । सत्यापयति । सत्यशब्दस्य वक्ष्यमाण आपुगागमः ॥ पाशं विमुञ्चति । विपाशयति ॥ रूपं पश्यति । रूपयति ॥ वीणयोपगायति । उपवीणयति ॥ तूलेनानुकुष्णाति । अनुतूलयति ॥ श्लोकैरुपस्तौति । उपश्लोकयति ॥ सेनयाभियाति । अभिषेणयति ॥ लोमान्यनुमार्ष्टि । अनुलोमयति ॥ त्वचं गृह्णाति । त्वचयति ॥ वर्मणा संनह्यति । संवर्मयति ॥ वर्णं गृह्णाति । वर्णयति ॥ चूर्णैरवध्वंसयति । अवचूर्णयति ॥ चुरादिभ्यः स्वार्थे णिच् । चोरयति । चिन्तयति ॥

## हेतुमति च ॥ २६ ॥

हेतुमति व्यापारे प्रेरणादौ वाच्ये धातोर्णिच् स्यात् ॥ कुर्वन्तं प्रेरयति । कारयति । कारयते ॥ पचन्तं प्रेरयति । पाचयति । पाचयते ॥

## कण्ड्वादिभ्यो यक् ॥ २७ ॥

कण्डूञ् । इत्येवमादिभ्यो यक्प्रत्ययः स्यात् ॥ कण्ड्वादयो धातवः प्रातिपदिकानि च । तत्र धात्वधिकाराद्धातुभ्यो यग्भवति । न तु प्रातिपदिकेभ्यः ॥ कण्डूयति । कण्डूयते ॥ ञित्वात् कर्तृगामिनि क्रियाफल आत्मनेपदं ॥

# गुपूधूपविच्छिपणिपनिभ्य आयः ॥२८॥

गुपू । धूप । विच्छ । पण । पन । इत्येतेभ्यो धातुभ्य आयप्रत्ययः स्यात् स्वार्थे ॥ गोपायति ॥ धूपायति ॥ विच्छायति ॥ पणायति ॥ पनायति ॥ पनधातोः स्तुतावेवायप्रत्ययः । न तु व्यवहारे । पणनाद्भर्यात् । शतस्य पनते ॥ अनुबन्धः केवले चरितार्थस्तेनायप्रत्ययान्तादात्मनेपदं न भवति ॥

# ऋतेरीयङ् ॥२९॥

ऋत् । इति सौत्रो धातुर्घृणायां वर्तते । तस्मादीयङ् स्यात् ॥ ङित्वादात्मनेपदं ॥ ऋतीयते । ऋतीयेते । ऋतीयन्ते ॥ ऋतेश्छङिति वक्तव्य ईयङ्विधानं ज्ञापयति । धातुविहितानां प्रत्ययानामायन्नादयो न भवन्तीति ॥

# कमेर्णिङ् ॥३०॥

कमु । इत्येतस्माद्धातोर्णिङ् स्यात् ॥ कामयते । कामयेते । कामयन्ते ॥ णकारो वृद्ध्यर्थः । ङकार आत्मनेपदार्थः ॥

# आयादय आर्धधातुके वा ॥३१॥

पूर्वोक्ता आय । ईयङ् । णिङ् । इत्येते प्रत्यया आर्धधातुकविषये वा भवन्ति ॥ गोप्ता । गोपायिता ॥ अर्तिता । ऋतीयिता ॥ कमिता । कामयिता ॥

# सनाद्यन्ता धातवः ॥३२॥

सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञा भवन्ति ॥ चिकीर्षति । पुत्रीयति । पुत्रकाम्यति ॥

# स्यतासी लृलुटोः ॥३३॥

स्य । तासि । इत्येतौ प्रत्ययौ धातोर्भवतो यथाक्रमं लृलुटोः परतः ॥ लृ । इति लृङ्लृटोर्ग्रहणं ॥ करिष्यति । अकरिष्यत् ॥ श्वः कर्ता ॥ तासीतीदित्करणमनुनासिकलोपप्रतिषेधार्थं । संगन्ता ॥

# सिब्बहुलं लेटि ॥३४॥

सिप् । इत्येष प्रत्ययो धातोर्बहुलं भवति लेटि परतः ॥ जोषिषत् । तारिषत् । मन्दिषत् ॥ बहुलग्रहणात् क्वचिन्न भवति । पताति विद्युत् । उदधिं च्यावयाति ॥

## कास्प्रत्ययादाममन्त्रे लिटि ॥ ३५ ॥

कास् । इत्येतस्माद्धातोः प्रत्ययान्तेभ्यश्च धातुभ्य आम्प्रत्ययः स्याल्लिटि परे । न तु मन्त्रे ॥ कासांचक्रे ॥ प्रत्ययान्तेभ्यः । लोलूयांचक्रे ॥ अमन्त्रे किं । कृष्णो नोनाव ॥ आमो मकारस्येत्संज्ञा न भवति । कास आम्विधानसामर्थ्यात् ॥

## इजादेश्च गुरुमतोऽनृच्छः ॥ ३६ ॥

इजादिर्यो धातुर्गुरुमानृच्छभिन्नस्तत आम् स्याल्लिटि परे ॥ ईहांचक्रे । ऊहांचक्रे । एधांचक्रे ॥ इजादेः किं । ततक्ष ॥ गुरुमतः किं । इयेष ॥ अनृच्छः किं । आनर्छ ॥

## दयायासश्च ॥ ३७ ॥

दय । अय । आस । इत्येतेभ्यश्च । आम् स्याल्लिटि परे ॥ दयांचक्रे ॥ अयांचक्रे ॥ आसांचक्रे ॥

## उषविदजागृभ्योऽन्यतरस्यां ॥ ३८ ॥

उष दाहे । विद ज्ञाने । जागृ । इत्येतेभ्य आम् वा स्याल्लिटि परे ॥ ओषांचकार । उवोष ॥ विदांचकार । विवेद ॥ जागरांचकार । जजागार ॥

## भीह्रीभृहुवां श्लुवच्च ॥ ३९ ॥

ञिभी । ह्री । डुभृञ् । हु । इत्येतेभ्य आम् वा स्याल्लिटि परे । तस्मिन्नामि परे श्लाविव कार्यं च भवति ॥ श्लुवद्भावाद्द्वित्वं । इत्वंच ॥ बिभयांचकार । बिभाय ॥ जिह्रयांचकार । जिह्राय ॥ बिभरांचकार । बभार ॥ जुहवांचकार । जुहाव ॥

## कृञ् चानुप्रयुज्यते लिटि ॥ ४० ॥

आम्प्रत्ययान्तात् परो लिट्परः कृञनुप्रयुज्यते ॥ कृभ्वस्तियोग इति कृशब्दात् कृञो द्वितीयस्येति ञकारेण कृञिति प्रत्याहारः । कृ । भू । अस । इत्येते

गृह्यन्ते । संपदिस्तु न गृह्यते । अनन्वितार्थत्वात् ॥ पाचयांचकार ॥ पाचयांबभूव ॥ पाचयामास ॥ अनुप्रयोगविधानसामर्थ्यादस्तेर्भूभावो न भवति ॥

## विदांकुर्वन्त्वित्यन्यतरस्यां ॥४१॥

विदांकुर्वन्तु । इत्येतद्वा निपात्यते ॥ किं पुनरिह निपात्यते । वेत्तेर्लोटि परे आम्प्रत्ययः । गुणाभावः । लोटो लुक् । लोट्परकस्य कृञो ऽनुप्रयोगश्च निपात्यते ॥ इतिकरणं प्रदर्शनार्थं । न केवलं प्रथमपुरुषबहुवचनं । किं तर्हि सर्वाण्येव लोड्वचनान्यनुप्रयुज्यन्ते ॥ विदांकरोतु । विदांकुरुतात् । विदांकुरुतां । विदांकुर्वन्तु ॥ पक्षे वेत्तु । वित्तात् । वित्तां । विदन्तु ॥

## अभ्युत्सादयांप्रजनयांचिकयांरमयामकः पावयांक्रियाद्विदामक्रन्निति च्छन्दसि ॥४२॥

अभ्युत्सादयां । प्रजनयां । चिकयां । रमयां । इत्येतेषु चतुर्षु लुङि । आमकरित्येतस्यानुप्रयोगश्चिनोतेर्द्वित्वं कुत्वं च निपात्यते ॥ पावयांक्रियात् । इत्यत्र लिङि । आम् क्रियादित्येतस्य चानुप्रयोगो निपात्यते ॥ विदामक्रन् । इत्यत्र विदेर्लुङि । आम् गुणाभावो ऽक्रन्नित्येतस्य चानुप्रयोगो निपात्यते वेदे ॥ षद्लृ । णिच् । अभ्युत्सादयामकः । लोके त्वभ्युदसीषदत् ॥ जनेर्णिच् । प्रजनयामकः । लोके तु प्राजीजनत् ॥ चिनोतेर्णिच् । चिकयामकः । लोके त्वचीचयत् ॥ रम । णिच् । रमयामकः । लोके त्वरीरमत् ॥ पूङ् । पूञ् । णिच् । पावयांक्रियात् । लोके तु पाव्यात् ॥ विद । विदामक्रन् । लोके त्ववेदिषुः ॥

## च्लि लुङि ॥४३॥

च्लि । इत्येष प्रत्ययो धातोः स्याल्लङि परे ॥ अकार्षीत् ॥ इकार उच्चारणार्थः । चकारः स्वरार्थः । लकारस्यादेशाः सिजादयो वक्ष्यन्ते ॥

## च्लेः सिच् ॥४४॥

च्लि । इत्येतस्य सिजादेशः स्यात् ॥ अकार्षीत् । अहार्षीत् ॥ इकार उच्चारणार्थः । चकारः स्वरार्थः । आगमानुदात्तत्वं हि प्रत्ययस्वरमिव चित्स्वरमपि बाधेत । अतः स्थानिन्यादेशे द्विश्चकारो ऽनुबध्यते ॥

## शल इगुपधादनिटः क्सः ॥४५॥

शलन्तो यो धातुरिगुपधस्तस्मादनिटः परस्य च्लि । इत्येतस्य क्स । इत्यादेशः स्यात् ॥ दुह । अधुक्षत् ॥ लिह । अलिक्षत् ॥ शलः किं । अभैत्सीत् ॥ इगुपधात् किं । अवाक्षीत् ॥ अनिटः किं । अकोषीत् ॥

## श्लिष आलिङ्गने ॥४६॥

श्लिष । इत्येतस्माद्धातोः परस्य च्लि । इत्येतस्य क्स । इत्यादेशः स्यादालिङ्गने ऽर्थे ॥ अश्लिक्षत् कन्यां देवदत्तः ॥ आलिङ्गने किं । समश्लिषज्जतु काष्ठं ॥

## न दृशः ॥४७॥

दृशिर् । इत्येतस्माद्धातोः परस्य च्लेः क्सादेशो न स्यात् ॥ अदर्शत् । अद्राक्षीत् ॥ इरितो वेत्यङ्विकल्पः ॥

## णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ॥४८॥

सिचो ऽपवादः ॥ णयन्तेभ्यो धातुभ्यः । श्रिञ् । द्रु । स्रु । इत्येतेभ्यश्च परस्य च्लि । इत्येतस्य चङ् । इत्ययमादेशः स्यात् कर्तृवाचिनि लुङि परे ॥ अचीकरत् । अजीहरत् ॥ अशिश्रियत् ॥ अदुद्रुवत् ॥ असुस्रुवत् ॥ चङो ङकारो गुणप्रतिषेधार्थः । चकारश्चङीति विशेषणार्थः ॥ कर्तरि किं । अकारयिषातां कटौ देवदत्तेन ॥

## विभाषा धेट्श्व्योः ॥४९॥

धेट् । टुओश्वि । इत्येताभ्यां परस्य च्लेश्चङादेशो वा स्यात् ॥ अदधत् । चङो ऽभावे विभाषा घ्राधेडिति वा सिचो लुक् । अधात् । अधासीत् ॥ अशिश्वियत् । चङो ऽभावे ऽङ्विकल्पः । अश्वत् । अश्वयीत् ॥ कर्तरीत्येव । अधिषातां गावौ वत्सेन ॥

## गुपेश्छन्दसि ॥५०॥

गुपू । इत्येतस्मात् परस्य च्लेश्चङादेशो वा स्याद्वेदे ॥ इमान् नो मित्रावरुणौ गृहानजूगुपतं । अगौप्तं । अगोपिष्टं । अगोपायिष्टं । इति भाषायां ॥

## नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः ॥५१॥

ऊन । ध्वन । इल । अर्द । इत्येतेभ्यो णयन्तेभ्यो णिश्रीत्यादिना प्राप्तश्चङा-

देशो न स्याद्वेदे ॥ काममूनयीः । औननत् । इति लोके ॥ मा त्वाग्निर्ध्व-नयीत् । अदध्वनत् । इति लोके ॥ काममैलयीत् । ऐलिलत् । इति लोके ॥ काममर्दयीत् । आर्दिदत् । इति लोके ॥

## अस्यतिवक्तिख्यातिभ्यो ऽङ् ॥५२॥

असु क्षेपणे । वच । ख्या । इत्येतेभ्यः परस्य च्लेः । इत्येतस्य । अङ् । इत्ययमादेशः स्यात् कर्तृवाचिनि लुङि परे ॥ पर्यास्थत । पर्यास्थेतां । पर्यास्थन्त ॥ वचधातुर्ब्रूञादेशो वा । अवोचत् । अवोचतां । अवोचन् ॥ ख्याधातुश्चक्षिङादेशो वा । अख्यत् । अख्यतां । अख्यन् ॥ कर्तरि किं । पर्यासिषातां गावौ वत्सेन ॥

## लिपिसिचिह्वश्च ॥५३॥

लिप । षिच । ह्वेञ् । इत्येतेभ्यः परस्य च्लेरङादेशः स्यात् ॥ अलिपत् ॥ असिचत् ॥ आह्वत् ॥ योगविभाग उत्तरार्थः ॥

## आत्मनेपदेष्वन्यतरस्यां ॥५४॥

लिप । षिच । ह्वेञ् । इत्येतेभ्यः परस्य च्लेरङादेशो वा स्यादात्मनेपदेषु परेषु ॥ अलिपत । अलिप्त ॥ असिचत । असिक्त ॥ आह्वत । आह्वास्त ॥

## पुषादिद्युताद्यॢदितः परस्मैपदेषु ॥५५॥

पुष । इत्यादिभ्यः । द्युत । इत्यादिभ्यः । ऌकारेत्संज्ञकेभ्यश्च धातुभ्यः परस्य च्लेरङादेशः स्यात् परस्मैपदेषु ॥ दिवाद्यन्तर्गणः पुषादिर्गृह्यते । न तु भ्वाद्यन्तर्गणः । नापि क्र्याद्यन्तर्गणः ॥ अपुषत् । अशुषत् ॥ द्युतादिर्भ्वाद्यन्तर्गणः । अद्युतत् । अश्वितत् ॥ ऌदितः । गम्ऌ । अगमत् ॥ परस्मैपदेषु किं । अद्योतिष्ट ॥

## सर्तिशास्त्यर्तिभ्यश्च ॥५६॥

सृ । शासु । ऋ । इत्येतेभ्यः परस्य च्लेरङादेशः स्यात् ॥ असरत् ॥ अशिषत् ॥ आरत् ॥ योगविभाग आत्मनेपदार्थः । समारत ॥ चकारः परस्मैपदानुकर्षणार्थः । तच्चोत्तरत्रोपयोक्ष्यते ॥

## इरितो वा ॥५७॥

इरितो धातोः परस्य च्लेरङादेशो वा स्यात् ॥ भिदिर् । अभिदत् । अभै-त्सीत् ॥ छिदिर् । अच्छिदत् । अच्छैत्सीत् ॥ परस्मैपदेष्वित्येव । अभित्त । अच्छित्त ॥

## जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ॥ ५८ ॥

जृष् । स्तम्भुः सौत्रो धातुः । म्रुचु । म्लुचु । ग्रुचु । ग्लुचु । ग्लुञ्चु । टुओश्वि । इत्येतेभ्यः परस्य च्लेरङादेशो वा स्यात् ॥ अजरत् । अजारीत् ॥ अस्तभत् । अस्तम्भीत् ॥ अम्रुचत् । अम्रोचीत् ॥ अम्लुचत् । अम्लोचीत् ॥ अग्रुचत् । अग्रोचीत् ॥ अग्लुचत् । अग्लोचीत् ॥ अग्लुचत् । अग्लुञ्चीत् ॥ अश्वत् । अश्वयीत् । अशिश्वियत् ॥

## कृमृदृरुहिभ्यश्छन्दसि ॥ ५९ ॥

कृ । मृङ् । दृ । रुह । इत्येतेभ्यः परस्य च्लेरङादेशो वा स्याद्वेदे ॥ शकु-लादिष्टको ऽकरत् ॥ अयो ऽमरत् ॥ अदरदर्वान् ॥ पर्वतानारुहत् ॥ छन्दसि किं । अकार्षीत् । अमृत । अदारीत् । अरुक्षत् ॥

## चिण् ते पदः ॥ ६० ॥

पद । इत्येतस्माद्धातोः परस्य च्लि । इत्येतस्य चिण् । इत्ययमादेशः स्यात् । एकवचने तशब्दे परे ॥ उदपादि शस्यं ॥ ते किं । उदपत्सातां ॥

## दीपजनबुधपूरितायिप्यायिभ्यो ऽन्यतरस्यां ॥ ६१ ॥

दीपी । जनी । बुध । पूरी । तायृ । ओप्यायी । इत्येतेभ्यः परस्य च्लेश्चि-णादेशो वा स्यात् तशब्दे परे ॥ अदीपि । अदीपिष्ट ॥ जनी प्रादुर्भावे । न तु जन जनने । अजनि । अजनिष्ट ॥ बुध अवबोधन इति गृह्यते । न तु बुध बोधने । अबोधि । अबुद्ध ॥ अपूरि । अपूरिष्ट ॥ अतायि । अता-यिष्ट ॥ अप्यायि । अप्यायिष्ट ॥

## अचः कर्मकर्तरि ॥ ६२ ॥

चिण् भावकर्मणोरिति नित्यं प्राप्ते ऽयं विकल्पः । अजन्ताद्धातोः परस्य च्लेश्चिणादेशो वा स्यात् कर्मकर्तरि तशब्दे परतः ॥ अकारि कटः स्वयमेव । अकृत ॥ अलावि केदारः । अलविष्ट ॥ कर्मकर्तरीति किं । अकारि कटो देवदत्तेन ॥

## दुहश्च ॥ ६३ ॥

दुह । इत्येतस्माद्धातोः परस्य च्लेश्चिणादेशो वा स्यात् कर्मकर्तरि तशब्दे परतः ॥ अदोहि गौः स्वयमेव । अदुग्ध ॥ कर्मकर्तरीत्येव । अदोहि गौर्गोपालेन ॥

## न रुधः ॥ ६४ ॥

रुधिर् । इत्येतस्मात् परस्य च्लेश्चिणादेशो न भवति कर्मकर्तरि ॥ अवारुद्ध गौः स्वयमेव ॥ कर्मकर्तरीत्येव । अवारोधि गौर्देवदत्तेन ॥

## तपोऽनुतापे च ॥ ६५ ॥

तप संतापे । इत्येतस्मात् परस्य च्लेश्चिणादेशो न स्यात् कर्मकर्तर्यनुतापे च ॥ कर्मकर्तरि । अतप्त तपस्तापसः ॥ अनुतापे । अन्वतप्त पापेन । कर्मणि लुङ् । पापंकर्तृत्वेनाभ्याहृत इत्यर्थः । अथवा भावे लुङ् । पापवता पुंसा कर्त्राशोचीत्यर्थः ॥

## चिण् भावकर्मणोः ॥ ६६ ॥

धातोः परस्य च्लेश्चिणादेशो भवति भावकर्मवाचिनि तशब्दे परतः ॥ भावे । अशायि भवता ॥ कर्मणि । अकारि कटो देवदत्तेन ॥ चिणग्रहणं विस्पष्टार्थं ॥

## सार्वधातुके यक् ॥ ६७ ॥

धातोर्यक्प्रत्ययो भवति भावकर्मवाचिनि सार्वधातुके परतः ॥ भावे । भूयते भवता । आस्यते । शय्यते ॥ कर्मणि । पच्यत ओदनः । गम्यते ग्रामो देवदत्तेन ॥ ककारो गुणवृद्धिनिषेधार्थः ॥

## कर्तरि शप् ॥ ६८ ॥

कर्तृवाचिनि सार्वधातुके परे धातोः शप् स्यात् ॥ पचति । भवति ॥ पकारः स्वरार्थः । शकारः सार्वधातुकसंज्ञार्थः ॥

## दिवादिभ्यः श्यन् ॥ ६९ ॥

पूर्वसूत्रापवादः ॥ दिवु । इत्येवमादिभ्यो धातुभ्यः श्यन् स्यात् ॥ दीव्यति । सीव्यति ॥ नकारः स्वरार्थः । शकारः सार्वधातुकसंज्ञार्थः ॥

## वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ॥ ७० ॥

प्राप्ताप्राप्तविभाषेयं ॥ टुभ्राशृ । टुभ्लाशृ । भ्रमु । क्रमु । क्लमु । त्रसी । त्रुट । लष । इत्येतेभ्यो धातुभ्यः श्यन् वा स्यात् ॥ भ्राश्यते । भ्राशते ॥ भ्लाश्यते । भ्लाशते ॥ भ्राम्यति । भ्रमति । भ्रामति ॥ क्राम्यति । क्रामति ॥ त्रस्यति । त्रसति ॥ त्रुट्यति । त्रुटति ॥ लष्यति । लषति ॥

## यसोऽनुपसर्गात् ॥ ७१ ॥

यसु प्रयत्ने । इत्येतस्मादनुपसर्गाद्दिवादेः श्यन् वा स्यात् ॥ यस्यति । यसति ॥ अनुपसर्गात् किं । प्रयस्यति ॥

## संयसश्च ॥ ७२ ॥

यसः संपूर्वाच्च श्यन् वा स्यात् ॥ संयस्यति । संयसति ॥

## स्वादिभ्यः श्नुः ॥ ७३ ॥

शपोऽपवादः ॥ षुञ् । इत्येवमादिभ्यः श्नुप्रत्ययः स्यात् ॥ सुनोति । सिनोति ॥ शकारः शित्कार्यार्थः ॥

## श्रुवः शृ च ॥ ७४ ॥

श्रु । इत्येतस्माद्धातोः श्नुप्रत्ययो भवति । तत्संनियोगेन श्रु । इत्येतस्य शृ । इत्यादेशश्च भवति ॥ शृणोति । शृणुतः । शृण्वन्ति ॥

## अक्षोऽन्यतरस्यां ॥ ७५ ॥

अक्षू । इत्येतस्माद्भौवादिकात् श्नुप्रत्ययो वा स्यात् ॥ अक्ष्णोति । अक्षति ॥

## तनूकरणे तक्षः ॥ ७६ ॥

तक्षू । इत्येतस्मात् तनूकरणेऽर्थे वर्तमानात् श्नुप्रत्ययो वा स्यात् ॥ तक्ष्णोति । तक्षति काष्ठं ॥ तनूकरणे किं ॥ संतक्षति वाग्भिः ॥ अनेकार्थत्वाद्धातूनां विशेषणोपादानं ॥

## तुदादिभ्यः शः ॥ ७७ ॥

शपोऽपवादः ॥ तुद । इत्येवमादिभ्यो धातुभ्यः शप्रत्ययः स्यात् ॥ तुदति । तुदतः । तुदन्ति ॥

## रुधादिभ्यः श्नम् ॥७८॥

शपो ऽपवादः ॥ रुधिर् । इत्येवमादिभ्यो धातुभ्यः श्नम्प्रत्ययः स्यात् ॥ रुणद्धि । भिनत्ति ॥ शकारः श्नसोरल्लोप इति विशेषणार्थः ॥ मकारस्त्वन्त्यादचः परप्रयोगार्थः ॥

## तनादिकृञ्भ्य उः ॥७९॥

शपो ऽपवादः ॥ तनु । इत्येवमादिभ्यो धातुभ्यो डुकृञ् । इत्येतस्माच्च । उप्रत्ययः स्यात् ॥ तनोति । सनोति ॥ करोति । कुरुतः । कुर्वन्ति ॥

## धिन्विकृण्व्योर् च ॥८०॥

धिवि । कृवि । इत्येतयोर्धात्वोरुप्रत्ययः स्यात् तयोश्च । अकारो ऽन्तादेशः स्यात् ॥ धिनोति । कृणोति ॥ अतो लोपस्य स्थानिवद्भावाद्गुणो न भवति ॥

## क्र्यादिभ्यः श्ना ॥८१॥

शपो ऽपवादः ॥ डुक्रीञ् । इत्येवमादिभ्यो धातुभ्यः श्नाप्रत्ययः स्यात् ॥ क्रीणाति । प्रीणाति ॥ शकारः सार्वधातुकसंज्ञार्थः ॥

## स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ॥८२॥

आद्याश्चत्वारो धातवः सौत्रास्तेभ्यः । स्कुञ् । इत्येतस्मात् क्र्यादिकाच्च श्नुप्रत्ययः स्यात् । श्नाप्रत्ययश्च ॥ स्तभ्नोति । स्तभ्नाति ॥ स्तुभ्नोति । स्तुभ्नाति ॥ स्कभ्नोति । स्कभ्नाति ॥ स्कुभ्नोति । स्कुभ्नाति ॥ स्कुनोति । स्कुनाति ॥ उदित्करणसामर्थ्याद्विकरणविषयादन्यत्रापि सौत्राणां धातूनां प्रयोगो भवति ॥

## हलः श्नः शानज्झौ ॥८३॥

हल उत्तरस्य श्ना । इत्येतस्य शानच् । इत्येष आदेशो भवति हिप्रत्यये परतः ॥ पुषाण । मुषाण ॥ हलः किं । क्रीणीहि ॥ हौ किं । पुष्णाति ॥

## छन्दसि शायजपि ॥८४॥

वेदे श्नः शायजादेशो भवति हौ परतः । अपिशब्दाच्छानजपि भवति ॥ गृभाय जिह्वया मधु । वधान वत्सं ॥

## व्यत्ययो बहुलं ॥ ८५ ॥

शबादयो ये विकरणप्रत्ययास्तेषां वेदे बहुलं व्यत्ययो भवति ॥ आण्डा शुष्णस्य भेदति । भिनत्तीति प्राप्ते ॥ स च न मरति । म्रियत इति प्राप्ते ॥ इन्द्रो वस्तेन नेषतु । नयत्विति प्राप्ते । नयतेर्लोट् शप्सिपौ द्वौ विकरणौ ॥ इन्द्रेण युजा तरुषेम वृत्रं । तरेमेति प्राप्ते । तरतेर्विध्यादौ लिङ् । उः सिप् शप् चेति त्रयो विकरणाः ॥

## लिङ्याशिष्यङ् ॥ ८६ ॥

शपो ऽपवादः ॥ आशिषि लिङि परे वेदे ऽङ्प्रत्ययः स्यात् ॥ छन्दस्युभयथेति लिङः सार्वधातुकसंज्ञापि ॥ स्था । उपस्थेयं ॥ गा । सत्यमुपगेयं ॥ गम्लृ । गमेयमज्ञानतो गृहान् ॥ वच । मन्त्रं वोचेमाग्नये ॥ विद । विदेयमेनां मनसि प्रविष्टां ॥ शक्लृ । व्रतं चरिष्यामि तच्छकेयं ॥ रुह । स्वर्गं लोकमारुहेयं ॥

## कर्मवत् कर्मणा तुल्यक्रियः ॥ ८७ ॥

कर्तरि शबित्यतः कर्तृग्रहणमनुवर्तते । तच्च प्रथमया विपरिणम्यते ॥ कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवद्भवति ॥ कर्मावस्थायां यथा यगात्मनेपदचिण्चिण्वद्भावा भवन्ति तथा कर्त्रवस्थायामपीत्यर्थः ॥ भिद्यते काष्ठं स्वयमेव । अभेदि काष्ठं स्वयमेव । पच्यत ओदनः स्वयमेव । कारिष्यते कटः स्वयमेव ॥ वत्करणं स्वाश्रयमपि यथा स्यात् । भिद्यते कुशूलेन ॥ अकर्मकाणां भावे लकारः सिद्धो भवति ॥ कर्मणा किं । करणाधिकरणाभ्यां तुल्यक्रिये मा भूत् । साध्वसिश्छिनत्ति । साधु स्थाली पचति ॥

## तपस्तपःकर्मकस्यैव ॥ ८८ ॥

तप संतापे । इत्येतस्य कर्ता कर्मवद्भवति । स च तपःकर्मकस्यैव नान्यकर्मकस्य ॥ तपति तापसं तपः । दुःखयतीत्यर्थः । तप्यते तपस्तापसः । अर्जयतीत्यर्थः ॥ तपःकर्मकस्यैवेति किं । उत्तपति सुवर्णं सुवर्णकारः ॥

## न दुहस्नुनमां यक्चिणौ ॥ ८९ ॥

दुह । ष्णु । णम । इत्येतेषां कर्मवद्भावात् प्राप्तौ यक्चिणौ न भवतः ॥ दुहेरनेन यक् प्रतिषिध्यते । चिण् दुहश्चेत्यनेन पूर्वं विहितः ॥ दुग्धे गौः

स्वयमेव । अदुग्ध । अदोहि । अधुक्षत ॥ प्रस्नुते गौः स्वयमेव । प्रास्नोष्ट गौः स्वयमेव ॥ नमते । अनंस्त दण्डः स्वयमेव ॥

## कुषिरञ्जोः प्राचां श्यन् परस्मैपदं च ॥१०॥

कुष । रञ्ज । इत्येताभ्यां धातुभ्यां कर्मकर्तरि श्यन् परस्मैपदं च वा स्यात् ॥ कुष्यति पादः स्वयमेव । रज्यति वस्त्रं स्वयमेव ॥ पक्षे । कुष्यते । रज्यते ॥

## धातोः ॥११॥

अधिकारो ऽयमा तृतीयाध्यायपरिसमाप्तेः ॥ इत ऊर्ध्वं वक्ष्यमाणाः प्रत्यया धातोर्वेद्याः ॥ वक्ष्यति तव्यत्तव्यानीयरः । कर्तव्यं । करणीयं ॥

## तत्रोपपदं सप्तमीस्थं ॥१२॥

एतस्मिन् धात्वधिकारे सप्तम्यन्तपदबोध्यमुपपदसंज्ञं स्यात् ॥ वक्ष्यति कर्मण्यण् । कुम्भकारः ॥ स्थग्रहणं सूत्रेषु सप्तमीनिर्देशप्रतिपत्त्यर्थं ॥

## कृदतिङ् ॥१३॥

एतस्मिन् धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात् ॥ कर्तव्यं । करणीयं ॥ अतिङ् किं । स्तूयात् ॥

## वासरूपो ऽस्त्रियां ॥१४॥

अस्मिन् धात्वधिकारे ऽसरूपो ऽपवादप्रत्यय उत्सर्गस्य बाधको वा स्यात् । स्त्र्यधिकारोक्तप्रत्ययं विना ॥ ण्वुल्तृचावुत्सर्गौ । इगुपधज्ञाप्रीकिरः क इत्यपवादः । तद्विषये ण्वुल्तृचावपि भवतः ॥ क्षिपः । क्षेपकः । क्षेप्ता ॥ असरूपः किं । गोदः ॥ अस्त्रियां किं । चिकीर्षा ॥

## कृत्याः ॥१५॥

ण्वुल्तृचौ । इत्यतः प्राग्ये प्रत्ययास्ते कृत्यसंज्ञा भवन्ति ॥ काकपेया ॥ अचो यत् । कृत्यैरधिकार्थवचन इति समासः ॥

## तव्यत्तव्यानीयरः ॥१६॥

तव्यत् । तव्य । अनीयर् । इत्येते प्रत्यया धातोर्भवन्ति ॥ कर्तव्यं ॥ कर्तव्यं ॥ करणीयं ॥ तकाररेफौ स्वरार्थौ ॥

## अचो यत् ॥ ९७ ॥

अजन्ताद्धातोर्यत्प्रत्ययो भवति ॥ गेयं । चेयं । जेयं ॥ यतो ऽनाव इति स्वरार्थस्तकारः ॥ अज्ग्रहणमनन्तभूतपूर्वादपि यथा स्यात् । दित्स्यं । धित्स्यं ॥

## पोरदुपधात् ॥ ९८ ॥

ण्यतो ऽपवादः ॥ पवर्गान्ताद्धस्वाकारोपधाद्धातोर्यत् स्यात् ॥ शप् । शप्यं ॥ लभ् । लभ्यं ॥ पोरिति किं । पाक्यं ॥ अदुपधात् किं । कोप्यं ॥ तपरकरणं किं । आप्यं ॥

## शकिसहोश्च ॥ ९९ ॥

शक्लृ । षह । इत्येताभ्यां यत् स्यात् ॥ शक्यं ॥ सह्यं ॥

## गदमदचरयमश्चानुपसर्गे ॥ १०० ॥

गद । मदी । चर । यम । इत्येतेभ्यो ऽनुपसर्गेभ्यो यत् स्यात् ॥ गद्यं ॥ मद्यं ॥ चर्यं ॥ यम्यं ॥ अनुपसर्गे किं । प्रगाद्यं ॥ यमः पूर्वेण सिद्धे नियमार्थं ग्रहणं ॥

## अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु ॥ १०१ ॥

अवद्य । पण्य । वर्या । इत्येते निपात्यन्ते । क्रमेण गर्ह्य । पणितव्य । अनिरोध । इत्येतेष्वर्थेषु ॥ अवद्यं पापं । अनूद्यमन्यत् । वदः सुपि क्यप् च ॥ पण्यः कम्बलः । व्यवहर्तव्य इत्यर्थः । पाण्यमन्यत् ॥ शतेन वर्या कन्या । वृत्यान्या ॥ स्त्रीलिङ्गनिर्देशः किमर्थः । वार्या ऋत्विजः ॥

## वह्यं करणं ॥ १०२ ॥

वह्यं । इत्येतद्यत्प्रत्ययान्तं निपात्यते करणं चेद्विशेष्यं ॥ वह । वहन्त्यनेनेति । वह्यं शकटं ॥ करणं किं । वाह्यमन्यत् ॥

## अर्यः स्वामिवैश्ययोः ॥ १०३ ॥

अर्य । इत्येतद्यत्प्रत्ययान्तं निपात्यते स्वामिवैश्ययोर्वाच्ययोः ॥ ऋ । अर्यः स्वामी । अर्यो वैश्यः ॥ स्वामिवैश्ययोः किं । आर्यो ब्राह्मणः ॥

## उपसर्या काल्या प्रजने ॥ १०४ ॥

उपसर्या । इत्येतद्यत्प्रत्ययान्तं निपात्यते गर्भग्रहणे प्राप्तकाला यदि भवति ॥ सृ । उपसर्या गौः ॥ काल्या प्रजने किं । उपसार्या मथुरा ॥

## अजर्यं संगतं ॥१०५॥

अजर्यं । इत्येतन्नञ्पूर्वस्य जीर्यतेर्यत्प्रत्ययान्तं निपात्यते संगतं चेद्विशेष्यं भवति ॥ जॄष् । न जीर्यतीति । अजर्यमार्यसंगतं ॥ संगतं किं । अजरिता कम्बलः ॥ अजर्यं कर्तरि ॥

## वदः सुपि क्यप् च ॥१०६॥

वद् । इत्येतस्मादनुपसर्गो सुबन्त उपपदे क्यप् स्यात् । चकाराद्यत् ॥ ब्रह्मोद्यं । ब्रह्मवद्यं ॥ सुपि किं । वाद्यं ॥ अनुपसर्गे किं । प्रवाद्यं ॥

## भुवो भावे ॥१०७॥

भू । इत्येतस्मादनुपसर्गे सुबन्त उपपदे भावे क्यप् स्यात् ॥ ब्रह्मभूयं गतः । ब्रह्मत्वं गत इत्यर्थः ॥ भावग्रहणमुत्तरार्थं ॥ सुपीत्येव । भव्यं ॥ अनुपसर्ग इत्येव । प्रभव्यं ॥

## हनस्त च ॥१०८॥

हन । इत्येतस्मादनुपसर्गो सुबन्त उपपदे भावे क्यप् स्यात् । हन्तेस्तकारो ऽन्तादेशश्च ॥ ब्रह्मणो हननं । ब्रह्महत्या ॥ अश्वहत्या ॥

## एतिस्तुशास्वृदृजुषः क्यप् ॥१०९॥

इण् । ष्टुञ् । शासु । वृञ् । दृ । जुषी । इत्येतेभ्यः क्यप् स्यात् ॥ इत्यः ॥ स्तुत्यः ॥ शिष्यः ॥ वृत्यः ॥ दृत्यः ॥ जुष्यः ॥ क्यबित्यनुवर्तमाने पुनः क्यब्ग्रहणं बाधकविषये ऽपि प्रवृत्त्यर्थं । अवश्यस्तुत्यः । ओरावश्यक इति ण्यन्न भवति ॥

## ऋदुपधाच्चाक्लृपिचृतेः ॥११०॥

ऋकारोपधाद्धातोः क्यप् स्यात् । कृपू । चृती । इत्येतौ वर्जयित्वा ॥ वृतु । वृत्यं ॥ वृधु । वृध्यं ॥ अक्लृपिचृतेः किं । कल्प्यं । चर्त्यं ॥ तपरकरणं किं । कॄत । कीर्त्यं ॥

## ई च खनः ॥१११॥

सनु । इत्येतस्मात् क्यप् स्यात् । ईकारश्चान्तादेशः ॥ स्त्रियं ॥

## भृञो ऽसंज्ञायां ॥ ११२ ॥

डुभृञ् । इत्येतस्मात् क्यप् स्यात् संज्ञां वर्जयित्वा ॥ भृत्याः कर्मकराः । भर्तव्या इत्यर्थः ॥ असंज्ञायां किं । भार्या नाम क्षत्रियाः ॥

## मृजेर्विभाषा ॥ ११३ ॥

ऋदुपधत्वात् प्राप्तविभाषेयं ॥ मृजू । इत्येतस्माद्वा क्यप् स्यात् ॥ परिमृज्यः । परिमार्ग्यः ॥

## राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ॥ ११४ ॥

राजसूय । सूर्य । मृषोद्य । रुच्य । कुप्य । कृष्टपच्य । अव्यथ्य । इत्येते क्यबन्ता निपात्यन्ते ॥ षुञ् । राज्ञा सोतव्यः सोमो राजा वेह सूयत इति । राजसूयः क्रतुः । निपातनाद्दीर्घः ॥ षू । सृ । सुवति सरति वा । सूर्यः । क्यपो रुडागमः सर्तेरुत्वं वा ॥ मृषोपपदाद्वदेः क्यप् । मृषोद्यं ॥ रुच । रोचते ऽसौ । रुच्यः ॥ गुप । इत्येतस्यादेः कत्वं च । कुप्यं । सुवर्णरजतभिन्नं धनं । गोप्यमन्यत् ॥ डुपचष् । कृष्टे स्वयमेव पच्यन्त इति । कृष्टपच्याः शालयः । कर्मकर्तरि क्यप् ॥ व्यथ । न व्यथते । अव्यथ्यः ॥

## भिद्योद्ध्यौ नदे ॥ ११५ ॥

भिद्य । उद्ध्य । इत्येतौ कर्तृक्यबन्तौ निपात्यते । नदे वाच्ये ॥ भिदिर् । भिनत्ति कूलमिति । भिद्यः ॥ उज्झ । उज्झत्युदकमिति । उद्ध्यः । उज्झेर्धत्वं च निपात्यते ॥ नदे किं । भेत्ता । उज्झिता ॥

## पुष्यसिध्यौ नक्षत्रे ॥ ११६ ॥

पुष्य । सिध्य । इत्येतावधिकरणक्यबन्तौ निपात्यते नक्षत्रे वाच्ये ॥ पुष । पुष्यन्त्यर्था अस्मिन्निति । पुष्यः ॥ षिध । सिध्यन्त्यर्था अस्मिन्निति । सिध्यः ॥ नक्षत्रे किं-। पोषणः । सेधनः ॥

## विपूयविनीयजित्या मुञ्जकल्कहलिषु ॥ ११७ ॥

विपूय । विनीय । जित्य । इत्येते क्यबन्ता निपात्यन्ते क्रमेण मुञ्जादिष्व-

येषु ॥ पूङ् । विपूयो मुञ्जः । विपव्यमन्यत् ॥ णीञ् । विनीयः कल्कः । विनेयमन्यत् ॥ जि । जित्यो हलिः । जेयमन्यत् ॥

## प्रत्यपिभ्यां ग्रहेः ॥११८॥

प्रति । अपि । इत्येवंपूर्वाद्ग्रहधातोः क्यप्प्रत्ययो भवति ॥ मत्तस्य न प्रतिगृह्यं । तस्मान्नापिगृह्यं ॥

## पदास्वैरिबाह्यापक्ष्येषु च ॥११९॥

ग्रहेः क्यप्प्रत्ययो भवति पदादिषु वाच्येषु ॥ पदं सुबन्तं तिङन्तं वा ॥ प्रगृह्यं पदं । यस्य प्रगृह्यसंज्ञा कृता । अवगृह्यं पदं । यस्यावग्रहः क्रियते ॥ अस्वैरी परतन्त्रः । गृह्यका शुकाः । पञ्जरादिबन्धनेन परतन्त्रीकृता इत्यर्थः ॥ बाह्यायां । ग्रामगृह्या सेना । ग्रामबहिर्भूतेत्यर्थः । स्त्रीलिङ्गनिर्देशादन्यत्र न भवति ॥ पक्षे भवः पक्ष्यः । अर्जुनगृह्याः । तत्पक्षाश्रिता इत्यर्थः ॥

## विभाषा कृवृषोः ॥१२०॥

डुकृञ् । वृषु । इत्येताभ्यां क्यप्प्रत्ययो वा स्यात् ॥ कृत्यं । पक्षे ण्यत् । कार्यं ॥ वृष्यं । पक्षे ण्यत् । वर्ष्यं ।

## युग्यं च पत्रे ॥१२१॥

युग्य । इत्येतत् क्यबन्तं निपात्यते वाहने वाच्ये ॥ युजिर् । युग्यो गौः । युग्यो ऽश्वः । युजेः कुत्वं निपातनात् ॥ पत्रे किं । योग्यमन्यत् ॥

## अमावस्यदन्यतरस्यां ॥१२२॥

अमेत्यव्ययं सहार्थे । तस्मिन्नुपपदे वसधातोः काले ऽधिकरणे ण्यत्प्रत्ययो वृद्ध्यभावश्च वा निपात्यते ॥ सह वसतो ऽस्यां चन्द्रार्काविति । अमावस्या । अमावास्या ॥

## छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि ॥१२३॥

वेदे निष्टर्क्य । इत्येवमादयः शब्दा निपात्यन्ते ॥ यदिह लक्षणेन न प्राप्यते

तत् सर्वं निपातनाद्भवति ॥ कृती । इत्येतस्मात् क्यपि प्राप्ते एयत् । आद्यन्तवर्णविपर्ययः । निसः षत्वं च निपात्यते । निष्टर्क्यं चिन्वीत पशुकामः ॥ ह्वेञ् । ह्व । देवशब्द उपपदे क्यब्दीर्घौ । देवहूयं ॥ प्रपूर्वो णीञ् । क्यप् । प्रणीयः ॥ उत्पूर्वो णीञ् । क्यप् । उन्नीयः ॥ उत्पूर्वः शिष्लृ । क्यप् । उच्छिष्यः ॥ मृङ् । यत् । मर्यः ॥ स्तृञ् । यत् । स्तर्या । स्त्रियामेव निपातनं ॥ ध्वृ । यत् । ध्वर्यः ॥ खनु । यत् । खन्यः ॥ खनु । एयत् । खान्यः ॥ यज । देवशब्द उपपदे यः । देवयज्या । स्त्रियां निपातनं ॥ आङ्पूर्वः प्रच्छ । क्यप् । आपृच्छ्यः ॥ प्रतिपूर्वः षिवु । क्यप् षत्वं च । प्रतिषीव्यः ॥ वद । ब्रह्मण्युपपदे एयत् । ब्रह्मवाद्यः ॥ भू । एयत् । भाव्यः ॥ ष्टुञ् । एयत् । स्ताव्यः ॥ चिञ् उपपूर्वः । एयत् । उपचाय्यपृडं । पृडशब्द उत्तरपद एव निपातनं ॥

## ऋहलोर्ण्यत् ॥ १२४ ॥

ऋकारान्ताद्धातोर्हलन्ताच्च एयत्प्रत्ययः स्यात् ॥ डुकृञ् । कार्यं । हृञ् । हार्यं ॥ हलन्तात् । डुपचष् । पाक्यं । वच । वाक्यं ॥

## ओरावश्यके ॥ १२५ ॥

यतो ऽपवादः ॥ उकारान्ताद्धातोर्ण्यत् स्यादावश्यके द्योत्ये ॥ लाव्यं । पाव्यं ॥ आवश्यके किं । लव्यं ॥

## आसुयुवपिरपिलपित्रपिचमश्च ॥ १२६ ॥

यतो ऽपवादः ॥ आङ्पूर्वः षुञ् । यु । डुवप् । रप । लप । त्रपूष् । चमु । इत्येतेभ्यो एयत् स्यात् ॥ आसाव्यं ॥ याव्यं ॥ वाप्यं ॥ राप्यं ॥ लाप्यं ॥ अपत्राप्यं ॥ आचाम्यं ॥

## आनाय्यो ऽनित्ये ॥ १२७ ॥

आनाय्य । इत्येतन्निपात्यते ऽनित्ये ऽभिधेये ॥ आङ्पूर्वो णीञ् । आनाय्यो गार्हपत्यादानीतो दक्षिणाग्निः ॥ अनित्ये किं । आनेयो ऽन्यः ॥

## प्रणाय्यो ऽसंमतौ ॥ १२८ ॥

प्रणाय्य । इत्येतन्निपात्यते ऽपूज्ये ऽर्थे ॥ प्रपूर्वो णीञ् । प्रणाय्यश्चोरः । एयदायादेशौ निपात्यौ ॥ असंमतौ किं । प्रणेयो ऽन्यः ॥

## पाय्यसांनाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ॥१२९॥

पाय्य । सांनाय्य । निकाय्य । धाय्या । इत्येते एयत्प्रत्ययान्ता निपात्यन्ते क्रमेण मानादिष्वर्थेषु ॥ माङ् । मीयते ऽनेनेति । पाय्यं मानं । धात्वादेः पकारादेशः । ऐकारस्यायादेशश्च निपातनात् । मेयमन्यत् ॥ संपूर्वो णीञ् । सांनाय्यं हविः । आयादेशः । उपसर्गस्य दीर्घत्वं च निपातनात् । संनेयो ऽन्यः ॥ निपूर्वश्चिञ् । निकाय्यो निवासः । धात्वादेः ककारादेशः । आयादेशश्च निपात्यते । निचेयमन्यत् ॥ डुधाञ् । धाय्या सामिधेनी । ऋग्विशेषे रूढो ऽयं । एयदायादेशौ निपात्यौ । धेयमन्यत् ॥

## क्रतौ कुण्डपाय्यसंचाय्यौ ॥१३०॥

कुण्डपाय्य । संचाय्य । इत्येतौ निपात्येते यज्ञे वाच्ये ॥ पा । कुण्डेन पीयते सोमो ऽस्मिन्निति । कुण्डपाय्यः क्रतुः । आतो युगिति युक् ॥ संपूर्वश्चिञ् । संचीयते ऽसौ । संचाय्यः क्रतुः ॥ एयदायादेशौ निपात्यौ ॥ क्रतौ किं । कुण्डपानं । संचेयं ॥ कुण्डपाय्ये यद्विधिः ॥

## अग्नौ परिचाय्योपचाय्यसमूह्याः ॥१३१॥

परिचाय्य । उपचाय्य । समूह्य । इत्येते एयत्प्रत्ययान्ता निपात्यन्ते ऽग्नौ वाच्ये ॥ परिपूर्वश्चिञ् । परिचाय्यो ऽग्निः ॥ उपपूर्वश्चिञ् । उपचाय्यः ॥ संपूर्वो वह् । समूह्यः । संप्रसारणदीर्घत्वे निपात्येते ॥ अग्नौ किं । परिचेयं । उपचेयं । संवाह्यं ॥

## चित्याग्निचित्ये च ॥१३२॥

चित्य । अग्निचित्या । इत्येतौ यप्रत्ययान्तौ निपात्येते ॥ चिञ् । चीयते ऽसौ । चित्यो ऽग्निः । निपातनात् तुगागमः ॥ अग्नेश्चयनं । अग्निचित्या । भावे यस्तुक् च निपात्यते ॥ इत उत्तरं कृत्याधिकारो निवृत्तः ॥

## ण्वुल्तृचौ ॥१३३॥

ण्वुल् । तृच् । इत्येतौ प्रत्ययौ धातोर्भवतः ॥ कारकः । पाचकः ॥ कर्ता । पक्ता ॥

## नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ॥ १३४ ॥

नन्द्यादिभ्यः । ग्रहादिभ्यः । पचादिभ्यः । क्रमेण ल्यु । णिनि । अच् । इत्येते प्रत्यया भवन्ति ॥ टुनदि । नन्दयतीति । नन्दनः ॥ ग्रह । गृह्णातीति । ग्राही ॥ डुपचष् । पचतीति । पचः ॥

## इगुपधज्ञाप्रीकिरः कः ॥ १३५ ॥

इगुपधेभ्यो धातुभ्यः । ज्ञा । प्रीञ् । कृ । इत्येतेभ्यश्च कप्रत्ययः स्यात् ॥ क्षिपः । लिखः । बुधः ॥ जानातीति । ज्ञः ॥ प्रीणातीति । प्रियः ॥ किरतीति । किरः ॥

## आतश्चोपसर्गे ॥ १३६ ॥

श्याद्व्यधेति णस्यापवादः ॥ आकारान्तेभ्यो धातुभ्य उपसर्ग उपपदे कप्रत्ययः स्यात् ॥ प्रस्थः । सुग्लः ॥

## पाघ्राध्माधेट्दृशः शः ॥ १३७ ॥

पा । घ्रा । ध्मा । धेट् । दृशिर् । इत्येतेभ्यो धातुभ्यः शप्रत्ययः स्यात् ॥ पिबः ॥ जिघ्रः ॥ धमः ॥ धयः ॥ पश्यः ॥

## अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ॥ १३८ ॥

लिम्प । विन्द । धारि । पारि । वेदि । उदेजि । चेति । साति । साहि । इत्येतेभ्यो ऽनुपसर्गेभ्यः शः स्यात् ॥ लिप । लिम्पतीति । लिम्पः ॥ विद्लृ । विन्दतीति । विन्दः ॥ धृञ् । धृङ् । धारयः ॥ पार । पारयः ॥ विद । वेदयः ॥ एजृ । उदेजयः ॥ चिती । चेतयः ॥ सातिः सौत्रो धातुः । सातयः ॥ षह । साहयः ॥

## ददातिदधात्योर्विभाषा ॥ १३९ ॥

डुदाञ् । डुधाञ् । इत्येताभ्यां वा शः स्यात् ॥ ददः ॥ दधः ॥ पक्षे श्याद्व्यधेति णः । दायः । धायः ॥ अनुपसर्गादित्येव । प्रदः । प्रधः ॥

## ज्वलिति कसन्तेभ्यो णः ॥ १४० ॥

ज्वल दीप्तौ । इत्येवमादिभ्यः कस गतावित्यन्तेभ्यो धातुभ्यो णप्रत्ययो वा स्यात् ॥ ज्वालः । चालः ॥ पक्षे ऽच् । ज्वलः । चलः ॥ अनुपसर्गादित्येव । उज्ज्वलः ॥

## श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च ॥१४१॥

श्या । आत् । व्यध । आस्रु । संस्रु । अतीण् । अवसा । अवहृ । लिह । श्लिष । श्वस । इत्येतेभ्यो णः स्यात् ॥ श्यैङ् । अवश्यायः । प्रतिश्यायः । श्यायतेरादन्तत्वादेव सिद्धे पृथग्ग्रहणमातश्चोपसर्ग इति कप्रत्ययबाधनार्थं ॥ आदन्तेभ्यः । दायः । धायः ॥ व्यध । व्याधः ॥ स्रु । आस्रावः । संस्रावः ॥ इण् । अत्यायः ॥ षो । अवसायः ॥ हृञ । अवहारः ॥ लेहः ॥ श्लेषः ॥ श्वासः ॥

## दुन्योरनुपसर्गे ॥१४२॥

टुदु । णीञ । इत्येताभ्यामनुपसर्गाभ्यां णः स्यात् ॥ दुनोतीति । दावः ॥ नयतीति । नायः ॥ अनुपसर्गे किं । प्रदवः । प्रणयः ॥

## विभाषा ग्रहः ॥१४३॥

ग्रह । इत्येतस्माद्धातोर्वा णः स्यात् ॥ ग्राहः । पक्षे ऽच् । ग्रहः ॥ व्यवस्थितविभाषेयं । जलचरे ग्राह एव । ज्योतिषि ग्रह एव ॥

## गेहे कः ॥१४४॥

ग्रह । इत्येतस्माद्धातोः कप्रत्ययो भवति । गेहे कर्तरि ॥ गृह्णातीति । गृहं वेश्म ॥ तात्स्थ्याद्दारा अपि गृहाः ॥

## शिल्पिनि ष्वुन् ॥१४५॥

धातोः ष्वुन्प्रत्ययः स्यात् । शिल्पिनि कर्तरि ॥ नर्तकः ॥ षकारो ङीषर्थः । नर्तकी ॥

## गस्थकन् ॥१४६॥

गै । इत्येतस्मात् थकन्प्रत्ययः स्यात् । शिल्पिनि कर्तरि ॥ गाथकः ॥

## ण्युट् च ॥१४७॥

गै । इत्येतस्माद्धातोर्ण्युट्प्रत्ययः स्यात् । शिल्पिनि कर्तरि ॥ गायनः ॥ टकारो ङीबर्थः । गायनी ॥

## हश्च व्रीहिकालयोः ॥ १४८ ॥

ओहाक् । ओहाङ् । इत्येताभ्यां ण्युट् स्यात् । व्रीहौ काले च कर्तरि ॥ जहात्युदकमिति । हायनो व्रीहिः ॥ जिहीते भावानिति । हायनः संवत्सरः ॥

## प्रुसृल्वः समभिहारे वुन् ॥ १४९ ॥

प्रुङ् । सृ । लूञ् । इत्येतेभ्यो वुन्प्रत्ययः स्यात् । क्रियासमभिहारे ॥ प्रवकः ॥ सरकः ॥ लवकः ॥

## आशिषि च ॥ १५० ॥

धातोर्वुन् स्यादाशिष्यर्थे ॥ जीवतात् । जीवकः ॥ नन्दतात् । नन्दकः ॥

॥ इति तृतीयाध्यायस्य प्रथमः पादः ॥

---

## कर्मण्यण् ॥ १ ॥

धातोः कर्मण्युपपदे ऽण्प्रत्ययः स्यात् ॥ कुम्भं करोतीति । कुम्भकारः ॥ काण्डलावः । वेदाध्यायः ॥

## ह्वावामश्च ॥ २ ॥

कस्यापवादः ॥ ह्वेञ् । वेञ् । माङ् । इत्येतेभ्यः कर्मण्युपपदे ऽण् स्यात् ॥ स्वर्गह्वायः ॥ तन्तुवायः ॥ धान्यमायः ॥

## आतो ऽनुपसर्गे कः ॥ ३ ॥

अणो ऽपवादः ॥ आकारान्ताद्धातोरनुपसर्गात् कर्मण्युपपदे कप्रत्ययः स्यात् ॥ गोदः । कम्बलदः । पार्ष्णित्रं ॥ अनुपसर्गे किं । गोसंदायः ॥

## सुपि स्थः ॥४॥

ष्ठा । इत्येतस्माद्धातोः सुबन्त उपपदे कः स्यात् ॥ समस्थः । विषमस्थः ॥ इत उत्तरं सकर्मकेषु कर्मणीत्यनुवर्तते । अकर्मकेषु सुपीत्यनुवर्तते ॥

## तुन्दशोकयोः परिमृजापनुदोः ॥५॥

परिमृज । अपनुद । इत्येताभ्यां तुन्दशोकयोः कर्मणोरुपपदयोः कः स्यात् ॥ मृजू । तुन्दं परिमार्ष्टीति । तुन्दपरिमृजो ऽलसः ॥ णुद । शोकमपनुदति । शोकापनुदः पुत्रः ॥

## प्रे दाज्ञः ॥६॥

डुदाञ् । ज्ञा । इत्येताभ्यां प्रोपसर्गाभ्यां कर्मण्युपपदे कः स्यात् ॥ सर्वप्रदः ॥ पथिप्रज्ञः ॥ प्रे किं । गोसंदायः ॥

## समि ख्यः ॥७॥

ख्याञ् । इत्येतस्मात् संपूर्वात् कर्मण्युपपदे कः स्यात् ॥ गां संचष्टे । गोसंख्यः ॥ पशुसंख्यः ॥

## गापोष्टक् ॥८॥

गै । पा । इत्येताभ्यामनुपसर्गाभ्यां कर्मण्युपपदे टक्प्रत्ययः स्यात् ॥ सामगः ॥ सुरां पिबति । सुरापः ॥ शीधुपः ॥ टकारो ङीबर्थः । सामगी । सुरापी ॥

## हरतेरनुद्यमने ऽच् ॥९॥

हृञ् । इत्येतस्मादनुद्यमनादन्यस्मिन्नर्थे वर्तमानात् कर्मण्युपपदे अच्प्रत्ययः स्यात् ॥ अंशहरः । कवचहरः ॥ अनुद्यमने किं । भारहारः ॥

## वयसि च ॥१०॥

हृञ् । इत्येतस्मात् कर्मण्युपपदे अच्प्रत्ययः स्यात् । वयसि गम्यमाने ॥ यत्रो-द्यमनं कर्तुं शक्नोति तादृशं [illegible] । कवचहरः कुमारः ॥

## आङि ताच्छील्ये ॥११॥

हृञ् । इत्येतस्मादाङ्पूर्वात् कर्मण्युपपदे अच् स्यात् । ताच्छील्यं [illegible] । [illegible] ॥ पुष्पाहरः । फलाहरः ॥ ताच्छील्ये किं । भारस्य आहर्ता ॥

## अर्हः ॥ १२ ॥

अर्ह । इत्येतस्मात् कर्मण्युपपदे ऽच् स्यात् ॥ पूजार्हा ब्राह्मणी । गन्धार्हा ॥

## स्तम्बकर्णयो रमिजपोः ॥ १३ ॥

रम । जप । इत्येताभ्यां क्रमेण स्तम्बकर्णयोः सुबन्तयोरुपपदयोरच् स्यात् ॥ स्तम्बेरमो हस्ती ॥ कर्णेजपः सूचकः ॥

## शमि धातोः संज्ञायां ॥ १४ ॥

शं । इत्येतस्मिन्नुपपदे धातोरच् स्यात् । संज्ञायां गम्यमानायां ॥ शंकरः । शंभवः । शंवदः ॥

## अधिकरणे शेतेः ॥ १५ ॥

शीङ् । इत्येतस्मादधिकरणे सुबन्त उपपदे ऽच् स्यात् ॥ खे शेते । खशयः ॥

## चरेष्टः ॥ १६ ॥

चर । इत्येतस्मादधिकरणे सुबन्त उपपदे टप्रत्ययः स्यात् ॥ कुरुषु चरतीति । कुरुचरः ॥ टकारो ङीबर्थः । कुरुचरी ॥

## भिक्षासेनादायेषु च ॥ १७ ॥

भिक्षा । सेना । आदाय । इत्येतेषु सुबन्तेषूपपदेषु चरेष्टः स्यात् ॥ भिक्षाचरः । सेनाचरः । आदायचरः ॥

## पुरोग्रतोग्रेषु सर्तेः ॥ १८ ॥

सृ । इत्येतस्माद्धातोः पुरस् । अग्रतस् । अग्रे । इत्येतेषूपपदेषु टः स्यात् ॥ पुरः सरतीति । पुरःसरः ॥ अग्रतःसरः । अग्रेसरः ॥

## पूर्वे कर्तरि ॥ १९ ॥

पूर्वशब्दे कर्तृवाचिन्युपपदे सृधातोष्टः स्यात् ॥ पूर्वः सरतीति । पूर्वसरः ॥ कर्तरि किं । पूर्वं देशं सरतीति । पूर्वसारः ॥

## कृञो हेतुताच्छील्यानुलोम्येषु ॥ २० ॥

डुकृञ् । इत्येतस्मात् कर्मण्युपपदे टः स्यात् । हेतौ ताच्छील्य आनुलोम्ये च गम्ये ॥ हेतौ । शोककरी कन्या । यशस्करी विद्या ॥ ताच्छील्ये । श्राद्धकरः । अर्थकरः ॥ आनुलोम्ये । वचनकरः ॥ एतेषु किं । कुम्भकारः ॥

## दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिं-लिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वह-र्यत्तद्धनुररुःषु ॥२१॥

अहेत्वाद्यर्थमिदं ॥ दिवा । इत्येवमादिषूपपदेषु डुकृञष्टः स्यात् ॥ कर्मणि सुपीति द्वयमप्यनुवर्तते ॥ दिवा करोतीति । दिवाकरः ॥ विभाकरः ॥ निशाकरः ॥ प्रभाकरः ॥ भास्करः । सकारस्य निपातनाद्विसर्जनीयजिह्वामूलीयौ न भवतः ॥ कारकरः । कार एव कारः स्वार्थिकः प्रज्ञाद्यण् ॥ अन्तकरः ॥ अनन्तकरः ॥ आदिकरः ॥ बहुकरः ॥ नान्दीकरः ॥ किंकरः ॥ लिपिकरः ॥ लिबिकरः ॥ बलिकरः ॥ भक्तिकरः ॥ कर्तृकरः ॥ चित्रकरः ॥ क्षेत्रकरः ॥ संख्या । एककरः । द्विकरः ॥ जङ्घाकरः ॥ बाहुकरः ॥ अहस्करः ॥ यत्करः ॥ तत्करः ॥ धनुष्करः ॥ अरुष्करः ॥

## कर्मणि भृतौ ॥२२॥

कर्मशब्द उपपदे करोतेष्टः स्यात् । वेतने गम्ये ॥ कर्म करोतीति । कर्मकरो भृतकः ॥ भृतौ किं । कर्मकारः ॥

## न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ॥२३॥

शब्द । इत्येवमादिषूपपदेषु डुकृञष्टप्रत्ययो न भवति ॥ शब्दकारः । श्लोककारः । कलहकारः । गाथाकारः । वैरकारः । चाटुकारः । सूत्रकारः । मन्त्रकारः । पदकारः ॥

डुकृञ् । इत्येतस्मात् कर्मण्युपपदे टः स्यात् । हेतौ ताच्छील्य आनुलोम्ये च गम्ये ॥ हेतौ । शोककरी कन्या । यशस्करी विद्या ॥ ताच्छील्ये । श्राद्धकरः । अर्थकरः ॥ आनुलोम्ये । वचनकरः ॥ एतेषु किं । कुम्भकारः ॥

## दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु ॥ २१ ॥

अहेत्वाद्यर्थमिदं ॥ दिवा । इत्येवमादिषूपपदेषु डुकृञष्टः स्यात् ॥ कर्मणि नुपोति द्वयमप्यनुवर्तते ॥ दिवा करोतीति । दिवाकरः ॥ विभाकरः ॥ निशाकरः ॥ प्रभाकरः ॥ भास्करः । सकारस्य निपातनाद्विसर्जनीयजिह्वामूलीयौ न भवतः ॥ कारकरः । कर एव कारः स्वार्थिकः प्रज्ञाद्यण् ॥ अन्तकरः ॥ अनन्तकरः ॥ आदिकरः ॥ बहुकरः ॥ नान्दीकरः ॥ किंकरः ॥ लिपिकरः ॥ लिबिकरः ॥ बलिकरः ॥ भक्तिकरः ॥ कर्तृकरः ॥ चित्रकरः ॥ क्षेत्रकरः ॥ संख्या । एककरः । द्विकरः ॥ जङ्घाकरः ॥ बाहुकरः ॥ अहस्करः ॥ यत्करः ॥ तत्करः ॥ धनुष्करः ॥ अरुष्करः ॥

## कर्मणि भृतौ ॥ २२ ॥

कर्मशब्द उपपदे करोतेष्टः स्यात् । वेतने गम्ये ॥ कर्म करोतीति । कर्मकरो भृतकः ॥ भृतौ किं । कर्मकारः ॥

## न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ॥ २३ ॥

शब्द । इत्येवमादिषूपपदेषु डुकृञष्टप्रत्ययो न भवति ॥ शब्दकारः । श्लोककारः । कलहकारः । गाथाकारः । वैरकारः । चाटुकारः । सूत्रकारः । मन्त्रकारः । पदकारः ॥

## स्तम्बशकृतोरिन् ॥ २४ ॥

स्तम्ब । शकृत् । इत्येतयोः कर्मणोरुपपदयोर्डुकृञ इन्प्रत्ययः स्यात् ॥ स्तम्बकरिर्व्रीहिः । शकृत्करिर्वत्सः ॥

## हरतेर्दृतिनाथयोः पशौ ॥ २५ ॥

हृञ् । इत्येतस्माद्दृतिनाथयोः कर्मणोरुपपदयोरिन् स्यात् । पशौ कर्तरि ॥ दृतिहरिः । नाथहरिः पशुः ॥ पशौ किं । दृतिहारः । नाथहारः ॥

## फलेग्रहिरात्मंभरिश्च ॥ २६ ॥

फलेग्रहिः । आत्मंभरिः । इत्येतौ निपात्येते ॥ ग्रह । फलानि गृह्णातीति । फलेग्रहिर्वृक्षः । उपपदस्य एकारान्तत्वमिन्प्रत्ययश्च ॥ डुभृञ् । आत्मंभरिः । आत्मनो मुमागम इन्प्रत्ययश्च ॥ अनुक्तसमुच्चयार्थश्चकारः । तेन उदरंभरिः ॥

## छन्दसि वनसनरक्षिमथां ॥ २७ ॥

वन षन संभक्तौ । षणु दाने । रक्ष । मन्थ । इत्येतेभ्यः कर्मण्युपपद इन् स्याद्वेदे ॥ ब्रह्मवनिं त्वा क्षत्रवनिं त्वा ॥ तस्मादेतद्गोसनिं ॥ चतुरक्षौ पथिरक्षी श्वानौ ॥ हविर्मथीनां ॥

## एजेः खश् ॥ २८ ॥

एजृ । इत्येतस्माद्धातोर्ण्यन्तात् कर्मण्युपपदे खश्प्रत्ययः स्यात् ॥ जनमेजयतीति । जनमेजयः ॥ खकारो मुमर्थः । शकारः सार्वधातुकसंज्ञार्थः ॥

## नासिकास्तनयोर्ध्माधेटोः ॥ २९ ॥

ध्मा । धेट् । इत्येताभ्यां नासिकास्तनयोः कर्मणोरुपपदयोः खश् स्यात् ॥ नासिकंधमः ॥ नासिकंधयः ॥ स्तनंधयः ॥ धेटष्टित्त्वान्ङीप् । स्तनंधयी ॥

## नाडीमुष्ट्योश्च ॥ ३० ॥

ध्मा । धेट् । इत्येताभ्यां नाडीमुष्ट्योः कर्मणोरुपपदयोः खश् भवति ॥ नाडिंधमः । मुष्टिंधमः ॥ नाडिंधयः । मुष्टिंधयः ॥

## उदि कूले रुजिवहोः ॥ ३१ ॥

रुजो । वह । इत्येताभ्यामुत्पूर्वाभ्यां कूले कर्मण्युपपदे खश् भवति ॥ कूलमुद्रुजः ॥ कूलमुद्वहः ॥

## वहाभ्रे लिहः ॥ ३२ ॥

लिह । इत्येतस्माद्धातोर्वहाभ्रयोः कर्मणोरुपपदयोः खश् भवति ॥ वहंलिहो गौः । अभ्रंलिहो वायुः ॥

## परिमाणे पचः ॥३३॥

डुपचष् । इत्येतस्मात् परिमाणवाचिनि कर्मण्युपपदे खश् भवति ॥ प्रस्थंपचा स्थाली । खारिंपचः कटाहः ॥

## मितनखे च ॥३४॥

डुपचष् । इत्येतस्मान्मितनखयोः कर्मणोरुपपदयोः खश् भवति ॥ मितंपचा ब्राह्मणी । नखंपचा यवागूः ॥

## विध्वरुषोस्तुदः ॥३५॥

तुद । इत्येतस्माद्धातोर्विध्वरुषोः कर्मणोरुपपदयोः खश् भवति ॥ विधुंतुदः ॥ अरुंतुदः ॥

## असूर्यललाटयोर्दृशितपोः ॥३६॥

दृशिर् । तप । इत्येताभ्यां । असूर्य । ललाट । इत्येतयोः कर्मणोरुपपदयोर्यथासंख्यं खश् भवति ॥ असूर्यपश्या राजदाराः ॥ ललाटंतपः सूर्यः ॥

## उग्रंपश्येरंमदपाणिंधमाश्च ॥३७॥

उग्रंपश्य । इरंमद । पाणिंधम । इत्येते खश्प्रत्ययान्ता निपात्यन्ते ॥ दृशिर् । उग्रंपश्यः ॥ मदी । इरंमदो मेघज्योतिः ॥ ध्मा । पाणिंधमो ऽध्वा ॥

## प्रियवशे वदः खच् ॥३८॥

वद् । इत्येतस्मात् प्रियवशयोः कर्मणोरुपपदयोः खच्प्रत्ययः स्यात् ॥ प्रियंवदः । वशंवदः ॥ खकारो मुमर्थः । चकारः खचि ह्रस्व इति विशेषणार्थः ॥

## द्विषत्परयोस्तापेः ॥३९॥

तप । इत्येतस्माण्ण्यन्ताद्द्विषत्परयोः कर्मणोरुपपदयोः खच् स्यात् ॥ द्विषंतपः । परंतपः ॥

## वाचि यमो व्रते ॥४०॥

यम । इत्येतस्माद्वाक्शब्दे कर्मण्युपपदे खच् स्यात् । व्रते गम्यमाने ॥ वाचंयमो मौनव्रती ॥ व्रते किं । वाग्यामः ॥

## पूःसर्वयोर्दारिसहोः ॥४१॥

दारि । पह । इत्येताभ्यां यथासंख्यं पुरू सर्वयोः कर्मणोरुपपदयोः खच् स्यात् ॥ पुरंदरः ॥ सर्वंसहः ॥

## सर्वकूलाभ्रकरीषेषु कषः ॥४२॥

कष । इत्येतस्माद्धातोः सर्व । कूल । अभ्र । करीष । इत्येतेषु कर्मसूपपदेषु खच् स्यात् ॥ सर्वंकषः खलः । कूलंकषा नदी । अभ्रंकषो वायुः । करीषंकषा वात्या ॥

## मेघर्तिभयेषु कृञः ॥४३॥

डुकृञ् । इत्येतस्मात् । मेघ । ऋति । भय । इत्येतेषु कर्मसूपपदेषु खच् स्यात् ॥ मेघंकरः । ऋतिंकरः । भयंकरः । भयशब्देन तदन्तविधिः । अभयंकरः ॥

## क्षेमप्रियमद्रे ऽण् च ॥४४॥

क्षेम । प्रिय । मद्र । इत्येतेषु कर्मसूपपदेषु डुकृञ् । इत्येतस्मादण् स्यात् । चकारात् खच् ॥ क्षेमकारः । क्षेमंकरः ॥ प्रियकारः । प्रियंकरः ॥ मद्रकारः । मद्रंकरः ॥ वेति वक्तव्ये पुनरण्ग्रहणं हेत्वादिषु टं बाधितुं ॥

## आशिते भुवः करणभावयोः ॥४५॥

भू । इत्येतस्मादाशितशब्दे सुबन्त उपपदे खच् स्यात् । करणे भावे चार्थे ॥ आशितो भवत्यनेन । आशितंभव ओदनः ॥ भावे । आशितस्य भवनं । आशितंभवं ॥

## संज्ञायां भृतॄवृजिधारिसहितपिदमः ॥४६॥

डुभृञ् । तॄ । वृ । जि । धारि । षह । तप । दम । इत्येतेभ्यो धातुभ्यो यथासंभवं कर्मणि सुपि वोपपदे खच् स्यात् संज्ञायां ॥ विश्वं बिभर्ति । विश्वंभरा पृथ्वी ॥ रथेन तरति । रथंतरं साम ॥ पतिंवरा कन्या ॥ शत्रुंजयो हस्ती ॥ युगंधरः पर्वतः ॥ शत्रुंसहः ॥ शत्रुंतपः ॥ अरिंदमः ॥ संज्ञायां किं । कुटुम्बभारः ॥

## गमश्च ॥४७॥

गम्लृ । इत्येतस्माद्धातोः सुप्युपपदे खच् स्यात् संज्ञायां ॥ सुतंगमः । रमितंगमः ॥ योगविभाग उत्तरार्थः ॥

## अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ॥४८॥

अन्त । अत्यन्त । अध्वन् । दूर । पार । सर्व । अनन्त । इत्येतेषु कर्मसूपपदेषु गम्लृ । इत्येतस्माद्धातोर्डप्रत्ययः स्यात् ॥ अन्तं गच्छति । अन्तगः ॥ अत्यन्तगः । अध्वगः । दूरगः । पारगः । सर्वगः । अनन्तगः ॥ डित्त्वसामर्थ्यादभत्वे ऽपि टेर्लोपः ॥

## आशिषि हनः ॥४९॥

हन । इत्येतस्मात् कर्मण्युपपदे डः स्यादाशीर्वादे गम्ये ॥ शत्रुं वध्यात् । शत्रुहः ॥ आशिषि किं । शत्रुघः ॥

## अपे क्लेशतमसोः ॥५०॥

हन । इत्येतस्मादपपूर्वात् क्लेशतमसोः कर्मणोरुपपदयोर्डः स्यात् ॥ क्लेशापहः पुत्रः । तमोपहः सूर्यः ॥

## कुमारशीर्षयोर्णिनिः ॥५१॥

हन । इत्येतस्मात् कुमारशीर्षयोः कर्मणोरुपपदयोर्णिनिप्रत्ययः स्यात् ॥ कुमारघाती । शीर्षघाती ॥ शिरसः शीर्षादेशो निपातनात् ॥

## लक्षणे जायापत्योष्टक् ॥५२॥

हन । इत्येतस्माज्जायापत्योः कर्मणोरुपपदयोर्लक्षणवति कर्तरि टक्प्रत्ययः स्यात् ॥ जायाघ्नो ब्राह्मणः । पतिघ्नी वृषली ॥

## अमनुष्यकर्तृके च ॥५३॥

हन । इत्येतस्मादमनुष्यकर्तृके ऽर्थे वर्तमानात् कर्मण्युपपदे टक् स्यात् ॥ जायाघ्नस्तिलकालकः । पतिघ्नी पाणिलेखा । वातघ्नं तैलं । श्लेष्मघ्नं मधु । पित्तघ्नं घृतं । शशघ्नी शकुनी ॥

## शक्तौ हस्तिकवाटयोः ॥५४॥

हन । इत्येतस्माद्धातोर्हस्तिकवाटयोः कर्मणोरुपपदयोः शक्तौ गम्यमानायां टक् स्यात् ॥ हस्तिघ्नो मनुष्यः । कवाटघ्नश्चौरः ॥ शक्तौ किं । विषेण हस्तिनं हन्तीति । हस्तिघातः ॥

## पाणिघताडघौ शिल्पिनि ॥ ५५ ॥

पाणिघ । ताडघ । इत्येतौ निपात्येते शिल्पिनि कर्तरि ॥ हन । पाणिघः । ताडघः ॥ टक् टिलोपो घत्वं च निपातनात् ॥

## आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ॥ ५६ ॥

डुकृञ् । इत्येतस्मादाढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु कर्मसूपपदेषु करणेऽर्थे ख्युन्प्रत्ययः स्यात् ॥ आढ्यंकरणं । सुभगंकरणं । स्थूलंकरणं । पलितंकरणं । नग्नंकरणं । अन्धंकरणं । प्रियंकरणं ॥ च्व्यर्थेषु किं । आढ्यं कुर्वन्ति तैलेन ॥ अच्वौ किं । आढ्यीकरोत्यनेन ॥

## कर्तरि भुवः खिष्णुच्खुकञौ ॥ ५७ ॥

भू । इत्येतस्माद्धातोराढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु सुबन्तेषूपपदेषु कर्तरि खिष्णुच् । खुकञ् । इत्येतौ प्रत्ययौ भवतः ॥ आढ्यंभविष्णुः । आढ्यंभावुकः । सुभगंभविष्णुः । सुभगंभावुकः । स्थूलंभविष्णुः । स्थूलंभावुकः । पलितंभविष्णुः । पलितंभावुकः । नग्नंभविष्णुः । नग्नंभावुकः । अन्धंभविष्णुः । अन्धंभावुकः । प्रियंभविष्णुः । प्रियंभावुकः ॥ च्व्यर्थेष्वित्येव । आढ्यो भविता ॥ अच्वावित्येव । आढ्यीभविता ॥

## स्पृशोऽनुदके क्विन् ॥ ५८ ॥

स्पृश । इत्येतस्माद्धातोरनुदके सुबन्त उपपदे क्विन्प्रत्ययः स्यात् ॥ घृतं स्पृशतीति । घृतस्पृक् । मन्त्रेण स्पृशतीति । मन्त्रस्पृक् ॥ अनुदके किं । उदकस्पर्शः ॥ क्विन्प्रत्ययस्य कुरिति विशेषणार्थो नकारो न कार्यः । तदनुबन्धकपरिभाषयैव क्विपो ऽग्रहणसिद्धेः ॥

## ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ॥ ५९ ॥

ऋत्विक् । दधृक् । स्रक् । दिक् । उष्णिक् । इत्येते क्विन्नन्ता निपात्यन्ते । अञ्चु । युजिर् । क्रुञ्च । इत्येतेभ्यः क्विन् भवति ॥ यज । ऋतौ यजतीति । ऋत्विक् ॥ धृष । धृष्णोतीति । दधृक् । धृषेर्द्वित्वमन्तोदात्तत्वं च ॥ सृज । सृज्यत इति । स्रक् । कर्मणि क्विन्नागमत्र ॥ दिश । दिश्यतेऽसौ ।

दिक् । दिशेः कर्मणि क्विन् ॥ स्निह । उष्णिक् । उत्पूर्वात् स्निहेः क्वि-न्नुपसर्गान्तलोपः षत्वं च ॥ निपातनैः सह पाठादञ्चतेः सुबन्तमात्र उपपदे क्विन् । प्राङ् । प्रत्यङ् । उदङ् ॥ युजिर् । युङ् । युञ्जौ । युञ्जः ॥ क्रुञ्च । क्रुङ् । क्रुञ्चौ । क्रुञ्चः । निपातनैः सह पाठादत्र नलोपो न ॥

## त्यदादिषु दृशोऽनालोचने कञ् च ॥६०॥

दृशिर् । इत्येतस्मादज्ञाने ऽर्थे वर्तमानात् त्यदादिषूपपदेषु कञ्प्रत्ययः स्यात् । चकारात् क्विन् ॥ तादृशः । तादृशौ । तादृशाः । यादृशः । यादृशौ । यादृशाः ॥ क्विन् । तादृक् । तादृशौ । तादृशः ॥ अनालोचने किं । तत् पश्यतीति । तद्दर्शः ॥ तादृशादयो रूढा इति न दर्शनक्रियापेक्षास्ति ॥

## सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गे ऽपि क्विप् ॥६१॥

सद् । सू । द्विष । द्रुह । दुह । युज । विद । भिद । छिद । जि । नी । राज् । इत्येतेभ्यो धातुभ्य उपसर्गे ऽनुपसर्गे च सुबन्त उपपदे क्विप्प्रत्ययः स्यात् ॥ षद्लृ । संसत् । शुचिषत् ॥ षू । अदादिर्गृह्यते । न तुदादिः । द्विषसाहचर्यात् । प्रसूः । शतसूः ॥ द्विष । प्रद्विट् । मित्रद्विट् ॥ द्रुह । प्रध्रुक् । मित्रध्रुक् ॥ दुह । प्रधुक् । गोधुक् ॥ युज । युजिर् । प्रयुक् । अश्वयुक् ॥ विद । अदादिर्दिवादी रुधादिश्च गृह्यते । न तु विद्लृ लाभ इति । अकारस्य विवक्षितत्वात् । प्रवित् । ब्रह्मवित् ॥ भिदिर् । प्रभित् । काष्ठभित् ॥ छिदिर् । प्रच्छित् । रज्जुच्छित् ॥ जि । प्रजित् । शत्रुजित् ॥ णीञ् । प्रणीः । सेनानीः ॥ राजृ । विराट् । स्वराट् ॥

## भजो ण्विः ॥६२॥

भज । इत्येतस्माद्धातोरुपसर्गे ऽनुपसर्गे च सुबन्त उपपदे ण्विप्रत्ययः स्यात् ॥ प्रभाक् । अर्धभाक ॥

## छन्दसि सहः ॥६३॥

षह । इत्येतस्माद्धातोरुपसर्गे ऽनुपसर्गे च सुबन्त उपपदे ण्विप्रत्ययो भवति वेदे ॥ अलाषाट् । तुराषाट् ॥ अन्येषामपीति पूर्वपदे दीर्घः । सहेः साड इति षत्वं ॥ छन्दसि किं । अलासाहः ॥

## वहश्च ॥ ६४ ॥

वह । इत्येतस्माद्धातोः सुबन्त उपपदे छन्दसि ण्विः स्यात् ॥ प्रष्ठवाट् । दित्यवाट् ॥ योगविभाग उत्तरार्थः ॥

## कव्यपुरीषपुरीष्येषु ञ्युट् ॥ ६५ ॥

वह । इत्येतस्माद्धातोः कव्य । पुरीष । पुरीष्य । इत्येतेषूपपदेषु वेदे ञ्युट्प्रत्ययः स्यात् ॥ कव्यवाहनः पितॄणां । पुरीषवाहनः । पुरीष्यवाहनः ॥

## हव्ये ऽनन्तःपादं ॥ ६६ ॥

वह । इत्येतस्माच्छन्दसि हव्यशब्द उपपदे ञ्युट् स्यात् । अनन्तःपादं चेद्ध-विर्वर्तते ॥ अग्निश्च हव्यवाहनः ॥ अनन्तःपादं किं । हव्यवालग्निरजरः पिता नः । पादमध्ये ण्विरेव ॥

## जनसनखनक्रमगमो विट् ॥ ६७ ॥

जन । सन । खन । क्रम । गम । इत्येतेभ्यः सुबन्त उपपदे छन्दसि विट्-प्रत्ययः स्यात् ॥ जन । जनी । अब्जाः । गोजाः ॥ षन । गोषा इन्द्रो नृषा असि ॥ खन । बिसखाः । कूपखाः ॥ क्रमु । दधिक्राः ॥ गम्लृ । अग्राः ॥ विड्वनोरित्यात्वं । अत्र टकारो विशेषणार्थः ॥

## अदो ऽनन्ने ॥ ६८ ॥

अद । इत्येतस्माद्धातोरनन्नभिन्ने सुबन्त उपपदे विट् स्यात् ॥ आममत्ति । आमात् ॥ मृगात् । शस्यात् ॥ अनन्ने किं । अन्नादः ॥

## क्रव्ये च ॥ ६९ ॥

अद । इत्येतस्मात् क्रव्यशब्द उपपदे विट् स्यात् ॥ क्रव्यात् ॥ पूर्वसूत्रेणैव सिद्धे वचनमणो बाधार्थं ॥ कथं क्रव्याद इति । पक्वमांसशब्द उपपदे ऽण् । पृषोदरादित्वादुपपदस्य क्रव्यादेशः ॥

## दुहः कब्घश्च ॥ ७० ॥

दुह । इत्येतस्माद्धातोः सुबन्त उपपदे कप्प्रत्ययः स्यात् । घकारश्चान्तादेशः ॥ कामदुघा धेनुः । धर्मदुघा ॥

## मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ॥७१॥

श्वेतवह । उक्थशस् । पुरोडाश । इत्येतेभ्यो ण्विन्प्रत्ययो भवति मन्त्रविषये ॥ वह । श्वेतवाहौ । श्वेतवाहः ॥ शंसु । उक्थशासौ । उक्थशासः । निपातनान्नलोपः ॥ दाश् । पुरोडाशौ । पुरोडाशः । निपातनाद्दकारस्य डकारः ॥

## अवे यजः ॥७२॥

यज । इत्येतस्माद्धातोरवशब्द उपपदे ण्विन् स्यान्मन्त्रे ॥ अवयाजौ । अवयाजः ॥ योगविभाग उत्तरार्थः ॥

## विजुपे छन्दसि ॥७३॥

यज । इत्येतस्माद्धातोरुपशब्द उपपदे छन्दस्येव विच्प्रत्ययो भवति ॥ उपयट् ॥ विच्ग्रहणं नान्यग्रहणाविघातार्थं । वेरपृक्तस्येति ॥ छन्दोग्रहणं ब्राह्मणार्थं ॥

## आतो मनिन्क्वनिब्वनिपश्च ॥७४॥

आकारान्ताद्धातोः सुबन्त उपसर्गे ऽनुपसर्गे चोपपदे मनिन् । क्वनिप् । वनिप् । इत्येते प्रत्ययाश्छन्दसि भवन्ति । चकाराद्विच् ॥ सुदामा । अश्वत्थामा ॥ क्वनिप् । सुधीवा । सुपीवा ॥ वनिप् । सुदावा । घृतपावा ॥ विच् । कीलालपाः ॥

## अन्येभ्यो ऽपि दृश्यन्ते ॥७५॥

छन्दसीति निवृत्तं ॥ आकारान्तभिन्नेभ्यो ऽपि धातुभ्यो मनिन् । क्वनिप् । वनिप् । इत्येते प्रत्यया भवन्ति ॥ शॄ । सुशर्मा । मनिन् ॥ इण् । प्रातरित्वा । क्वनिप् ॥ जन । विजावा । वनिप् ॥ रेट् । रोट् । सुगण् । विच् ॥ दृशिग्रहणान्निरुपपदादपि भवति । धीवा । पीवा ॥

## सुप्यजातौ णिनिस्ताच्छील्ये ॥ ७८ ॥

अजात्यर्थे सुबन्त उपपदे धातोर्णिनिप्रत्ययः स्यात् । ताच्छील्ये गम्ये ॥ उष्णभोजी । शीतभोजी । सुपीति वर्तमाने पुनः सुब्ग्रहणमनुपसर्गनिवृत्त्यर्थं । अनुयायी । अनुजीवी । विनायी ॥ अजातौ किं । ब्राह्मणानामन्त्रयिता ॥ ताच्छील्ये किं । उष्णं भुङ्क्ते कदाचित् ॥

## कर्तर्युपमाने ॥ ७९ ॥

कर्तृवाचिन्युपमान उपपदे धातोर्णिनिः स्यात् ॥ उष्ट्र इव क्रोशति । उष्ट्रक्रोशी । ध्वाङ्क्षरावी ॥ उपपदार्थः कर्ता प्रत्ययार्थकर्तुरुपमानं ॥ अताच्छील्यार्थं जात्यर्थं च सूत्रं ॥ कर्तरि किं । अपूपानिव भक्षयति माषान् ॥ उपमाने किं । उष्ट्रः क्रोशति ॥

## व्रते ॥ ८० ॥

सुबन्त उपपदे धातोर्णिनिः स्यात् । व्रते गम्यमाने ॥ शास्त्रविहितो नियमो व्रतं ॥ स्थण्डिलशायी । अश्राद्धभोजी ॥ अताच्छील्यार्थं जात्यर्थं च सूत्रं ॥

## बहुलमाभीक्ष्ण्ये ॥ ८१ ॥

पौनःपुन्ये द्योत्ये सुबन्त उपपदे धातोर्बहुलं णिनिः स्यात् ॥ क्षीरपायिण उशीनराः ॥ बहुलग्रहणादिह न भवति । कुल्माषादः ॥

## मनः ॥ ८२ ॥

मन । इत्येतस्माद्धातोः सुबन्त उपपदे णिनिः स्यात् ॥ दर्शनीयमानी ॥

## आत्ममाने खश् च ॥ ८३ ॥

मन । इत्येतस्मादात्मकर्मकमनने वर्तमानात् सुबन्त उपपदे खश्प्रत्ययः स्यात् । चकाराण्णिनिः ॥ पण्डितमात्मानं मन्यते । पण्डितंमन्यः । पण्डितमानी ॥ आत्ममाने किं । दर्शनीयमानी चैत्रो मैत्रस्य ॥

## भूते ॥ ८४ ॥

अधिकारोऽयं वर्तमाने लडिति यावत् ॥ इत ऊर्ध्वं वक्ष्यमाणाः प्रत्यया भूतकालिके धात्वर्थे विज्ञेयाः ॥ वक्ष्यति करणे यजः । अग्निष्टोमेनेष्टवान् । अग्निष्टोमयाजी ॥ भूते किं । अग्निष्टोमेन यजते ॥

## करणे यजः ॥ ८५ ॥

यज । इत्येतस्माद्धातोर्भूते ऽर्थे वर्तमानात् करण उपपदे णिनिः स्यात् ॥ अग्निष्टोमयाजी ॥ अग्निष्टोमः फलभावनायां करणं ॥

## कर्मणि हनः ॥ ८६ ॥

हन । इत्येतस्माद्भूतार्थात् कर्मण्युपपदे णिनिः स्यात् ॥ पितृव्यघाती ॥

## ब्रह्मभ्रूणवृत्रेषु क्विप् ॥ ८७ ॥

हन । इत्येतस्माद्भूतार्थात् । ब्रह्म । भ्रूण । वृत्र । इत्येतेषूपपदेषु क्विप्प्रत्ययः स्यात् ॥ ब्रह्महा । भ्रूणहा । वृत्रहा ॥

## बहुलं छन्दसि ॥ ८८ ॥

हन । इत्येतस्मादुपपदान्तरे ऽपिच्छन्दसि क्विप् स्यात् ॥ यो मातृहा । पितृहा ॥ न च भवति । अमित्रघातः ॥

## सुकर्मपापमन्त्रपुण्येषु कृञः ॥ ८९ ॥

डुकृञ् । इत्येतस्मात् सुशब्दे । कर्म । पाप । मन्त्र । पुण्य । इत्येतेषु च कर्मसूपपदेषु क्विप् स्यात् ॥ सुकृत् । कर्मकृत् । पापकृत् । मन्त्रकृत् । पुण्यकृत् ॥

## सोमे सुञः ॥ ९० ॥

षुञ् । इत्येतस्मात् सोमशब्दे कर्मण्युपपदे क्विप् स्यात् ॥ सोमसुत् । सोमसुतौ ॥

## अग्नौ चेः ॥ ९१ ॥

चिञ् । इत्येतस्माद्धातोरग्नौ कर्मण्युपपदे क्विप् स्यात् ॥ अग्निचित् । अग्निचितौ । अग्निचितः ॥

## कर्मण्यग्न्याख्यायां ॥ ९२ ॥

चिञ् । इत्येतस्मात् कर्मण्युपपदे कर्मण्येव कारके क्विप् स्यात् । अग्न्याधारस्थलविशेषस्याख्यायां ॥ श्येन इव चितः । श्येनचित् ॥

## कर्मणीनिर्विक्रियः ॥ ९३ ॥

कर्मण्युपपदे विपूर्वात् क्रीणातेरिनिप्रत्ययः स्यात् ॥ डुक्रीञ् । घृतविक्रयी । तैलविक्रयी ॥

## दृशेः क्वनिप् ॥ ९४ ॥

दृशिर् । इत्येतस्माद्धातोः कर्मण्युपपदे क्वनिप्प्रत्ययः स्यात् ॥ मेरुदृश्वा । पारदृश्वा ॥

## राजनि युधिकृञः ॥ ९५ ॥

युध । डुकृञ् । इत्येताभ्यां कर्मवाचिनि राजन्शब्द उपपदे क्वनिप् स्यात् ॥ राजानं योधितवान् । राजयुध्वा । युधिरन्तर्भावितण्यर्थः ॥ राजकृत्वा ॥

## सहे च ॥ ९६ ॥

कर्मणीति निवृत्तं ॥ युध । डुकृञ् । इत्येताभ्यां सहशब्द उपपदे क्वनिप् स्यात् ॥ सहयुध्वा ॥ सहकृत्वा ॥

## सप्तम्यां जनेर्डः ॥ ९७ ॥

जन । जनी । इत्येतस्मात् सप्तम्यन्त उपपदे डप्रत्ययः स्यात् ॥ सरसिजं । मन्दुरजः ॥

## पञ्चम्यामजातौ ॥ ९८ ॥

अजात्यर्थे पञ्चम्यन्त उपपदे जनधातोर्डः स्यात् ॥ बुद्धेर्जातः । बुद्धिजः । संस्काराज्जातः । संस्कारजः । खेदजः । सुखजः ॥ अजातौ किं । अश्वाज्जातः ॥

## उपसर्गे च संज्ञायां ॥ ९९ ॥

उपसर्गे चोपपदे जनधातोर्डः स्यात् । संज्ञाविषये ॥ प्रजाः ॥

## अनौ कर्मणि ॥ १०० ॥

अनुपूर्वाज्जनधातोः कर्मण्युपपदे डः स्यात् ॥ पुमांसमनुरुध्य जाता । पुमनुजा ॥ स्त्र्यनुजः ॥

## अन्येष्वपि दृश्यते ॥ १०१ ॥

उक्तादन्येष्वप्युपपदेषु जनधात्तोर्डः स्यात् ॥ अनपुन्यामपि । अजः । द्विजः ॥

पञ्चम्यां ज्ञातावपि । ब्राह्मणात्त्रः ॥ उपसर्गे ऽसंज्ञायामपि । अधिज्ञः ॥ अना-
वकर्मण्यपि । अनुजः ॥

## निष्ठा ॥१०२॥

भूतार्थाद्धातोर्निष्ठासंज्ञौ क्त । क्तवतु । इत्येतौ प्रत्ययौ भवतः ॥ कृतः ।
भुक्तः । कृतवान् । भुक्तवान् ॥

## सुयजोर्ङ्वनिप् ॥१०३॥

षुञ् । यज । इत्येताभ्यां ङ्वनिप्प्रत्ययः स्यात् ॥ सुत्वा । सुत्वानौ । सुत्वानः ॥
यज्वा । यज्वानौ । यज्वानः ॥

## जीर्यतेरतृन् ॥१०४॥

जीर्यतेर्धातोरतृन्प्रत्ययः स्यात् ॥ जॄष् । जरन् । जरन्तौ । जरन्तः ॥ वास-
रूपेण निष्ठापि । जीर्णः । जीर्णवान् ॥

## छन्दसि लिट् ॥१०५॥

भूतार्थवृत्तेर्धातोश्छन्दसि लिट् स्यात् ॥ अहं सूर्यमुभयतो ददर्श । अहं द्यावा-
पृथिवी आततान ॥

## लिटः कानज्वा ॥१०६॥

लिटः कानजित्ययमादेशो वा स्यात् । छन्दसि विषये ॥ यो ऽग्निं चि-
क्यानः । वरुणं सुषुवाणः ॥ लिडिति वर्तमाने पुनर्लिङ्ग्रहणं परोक्षे लिटो
ऽप्यादेशार्थं ॥

## क्वसुश्च ॥१०७॥

लिटः क्वसु । इत्ययमादेशः स्याच्छन्दसि ॥ जक्षिवान् । पपिवान् ॥ योगविभाग
उत्तरार्थः ॥

## भाषायां सदवसश्रुवः ॥१०८॥

षद्लृ । वस । श्रु । इत्येतेभ्यः परस्य लिटो लोके ऽपि क्वसुरादेशः स्यात् ॥
सेदिवान् । सेदिवांसौ । सेदिवांसः ॥ वस । अध्यूषिवान् ॥ श्रु । शुश्रुवान् ॥

## उपेयिवाननाश्वाननूचानश्च ॥१०९॥

उपेयिवान् । अनाश्वान् । अनूचानः । इत्येते शब्दा वा निपात्यन्ते ॥ इण् । उपेयिवान् । लिटः क्वसुर्द्वित्वमभ्यासदीर्घत्वं वसोरिट् च । उप इत्यविवक्षितं । ईयिवान् । समीयिवान् ॥ अश । अनाश्वान् । अश्नातेर्नञ्पूर्वात् क्वसुरिटो ऽभावश्च ॥ वच । अनूचानः । लिटः कानच् ॥

## लुङ् ॥११०॥

भूतकालिकक्रियावृत्तेर्धातोर्लुङ् स्यात् ॥ अकार्षीत् । अपाक्षीत् ॥

## अनद्यतने लङ् ॥१११॥

भूतानद्यतनकालिकक्रियावृत्तेर्धातोर्लङ् स्यात् ॥ अकरोत् । अपचत् ॥

## अभिज्ञावचने लृट् ॥११२॥

स्मृतिवचन उपपदे भूतानद्यतनकालिकक्रियावृत्तेर्धातोर्लृट् स्यात् ॥ अभिजानासि देवदत्त काश्मीरेषु वत्स्यामः ॥ वचनग्रहणं पर्यायपरिग्रहार्थं । स्मरसि कृष्ण काश्मीरेषु वत्स्यामः ॥

## न यदि ॥११३॥

यद् । इत्येतस्य शब्दस्य प्रयोगे पूर्वसूत्रविहितो लृड्न स्यात् ॥ अभिजानासि देवदत्त यत् काश्मीरेष्ववसाम । अत्र लङेव ॥

## विभाषा साकाङ्क्षे ॥११४॥

अभिज्ञावचन उपपदे यच्छब्दयोगे केवले च वा लृट् स्यात् । लक्ष्यलक्षण-भावेन साकाङ्क्षश्चेद्धात्वर्थः ॥ अभिजानासि देवदत्त काश्मीरेषु वत्स्यामस्तत्रौदनं भोक्ष्यामहे । स्मरसि देवदत्त यत् काश्मीरेषु वत्स्यामस्तत्रौदनं भोक्ष्यामहे ॥ वासो लक्षणं भोजनं लक्ष्यं ॥ पक्षे लङ् । अवसाम । अभुञ्ज्महि ॥

## परोक्षे लिट् ॥११५॥

भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात् ॥ चकार । पपाच ॥

## हशश्वतोर्लङ् च ॥११६॥

ह । शश्वत् । इत्येतयोरुपपदयोर्भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लङ् स्यात् । चका-राल्लिट् ॥ इति हाकरोत् । इति ह चकार ॥ शश्वदकरोत् । शश्वच्चकार ॥

## प्रश्ने चासन्नकाले ॥११७॥

आसन्नकाले पृच्छ्यमाने भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लङ्लिटौ भवतः ॥ अगच्छत् किं । जगाम किं ॥ आसन्नकाले किं । कंसं जघान किं । अत्र लिडेव । न तु लङ् ॥

## लट् स्मे ॥११८॥

स्म । इत्येतस्मिन्नुपपदे भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लट् स्यात् ॥ यजति स्म युधिष्ठिरः ॥

## अपरोक्षे च ॥११९॥

स्म उपपदे भूतानद्यतने ऽपरोक्षे ऽर्थे वर्तमानाद्धातोर्लट् स्यात् ॥ एवं स्म पिता ब्रवीति ॥

## ननौ पृष्टप्रतिवचने ॥१२०॥

अनद्यतनपरोक्ष इति निवृत्तं ॥ ननुशब्द उपपदे प्रश्नपूर्वकप्रतिवचने गम्ये भूते धातोर्लट् स्यात् ॥ अकार्षीः किं । ननु करोमि भोः ॥ पृष्टप्रतिवचने किं । नन्वकार्षीन्माणवकः ॥

## नन्वोर्विभाषा ॥१२१॥

न । नु । इत्येतयोरुपपदयोः पृष्टप्रतिवचने गम्ये भूतार्थवृत्तेर्धातोर्वा लट् स्यात् । पक्षे लुङ् ॥ कटमकार्षीः किं । न करोमि । नाकार्षं ॥ अहं नु करोमि । अहं न्वकार्षं ॥

## पुरि लुङ् चास्मे ॥१२२॥

अनद्यतन इति मण्डूकप्लुत्यानुवर्तते ॥ पुराशब्दयोगे स्मवर्जिते भूतानद्यतने वा लुङ् स्यात् । चकाराल्लट् ॥ अवात्सुरिह पुरा छात्राः । वसन्तीह पुरा छात्राः ॥ पक्षे स्वविषये लङ्लिटौ । अवसन् । ऊषुः ॥ अस्मे किं । यजति स्म पुरा ॥

## वर्तमाने लट् ॥१२३॥

वर्तमानार्थवृत्तेर्धातोर्लट् स्यात् ॥ भवति । पचति ॥

## लटः शतृशानचावप्रथमासमानाधिकरणे ॥ १२४ ॥

लटः स्थाने शतृ । शानच् । इत्येतावादेशौ भवतः । अप्रथमान्तेन सामानाधिकरण्ये सति ॥ पचन्तं देवदत्तं पश्य ॥ पचमानं देवदत्तं पश्य ॥ अप्रथमासमानाधिकरणे किं । देवदत्तः पचति ॥ लडिति वर्तमाने पुनर्लड्ग्रहणात् प्रथमासामानाधिकरण्ये ऽपि क्वचित् । सन् ब्राह्मणः ॥

## संबोधने च ॥ १२५ ॥

संबोधनविषये लटः शतृशानचौ भवतः ॥ हे पचन् ॥ हे पचमान ॥ प्रथमासमानाधिकरणार्थमिदं ॥

## लक्षणहेत्वोः क्रियायाः ॥ १२६ ॥

क्रियाचिह्ने क्रियाजनके चार्थे वर्तमानाद्धातोः परस्य लटः शतृशानचौ भवतः ॥ शयाना भुञ्जते यवनाः ॥ हेतौ । अर्जयन् वसति ॥ लक्षणहेत्वोः किं । पचति तिष्ठति ॥ क्रियायाः किं । यः कम्पते सो ऽश्वत्थः । यदुपप्लवते तल्लघु ॥

## तौ सत् ॥ १२७ ॥

शतृ । शानच् । इत्येतौ सत्संज्ञकौ भवतः ॥ ब्राह्मणस्य कुर्वन् ॥ ब्राह्मणस्य कुर्वाणः ॥

## पूङ्यजोः शानन् ॥ १२८ ॥

पूङ् । यज । इत्येताभ्यां शानन्प्रत्ययः स्यात् ॥ पवमानः । यजमानः ॥

## ताच्छील्यवयोवचनशक्तिषु चानश् ॥ १२९ ॥

ताच्छील्य । वयोवचन । शक्ति । इत्येतेषु गम्यमानेषु धातोश्चानश्प्रत्ययः स्यात् ॥ ताच्छील्ये । कतीह मण्डयमानाः ॥ वयोवचने । कतीह कवचं वहमानाः ॥ शक्तौ । कतीह निघ्नानाः ॥

## इङ्धार्योः शत्रकृच्छ्रिणि ॥ १३० ॥

इङ् । धारि । इत्येताभ्यां शतृप्रत्ययः स्यात् । अकृच्छ्रिणि कर्तरि ॥ अधीयन् पारायणं ॥ धारयन्नुपनिषदं ॥ अकृच्छ्रिणीति किं । कृच्छ्रेणाधीते । कृच्छ्रेण धारयति ॥

## द्विषोऽमित्रे ॥१३१॥

द्विष । इत्येतस्माच्छत्रौ कर्तरि शतृप्रत्ययः स्यात् ॥ द्विषन् । द्विषन्तौ ॥ अमित्रे किं । द्वेष्टि पतिं स्त्री ॥

## सुञो यज्ञसंयोगे ॥१३२॥

सुनोतेः शतृप्रत्ययः स्यात् । यज्ञेन संबन्धे ॥ षुञ् । सर्वे सुन्वन्तः । सर्वे यजमानाः सत्रिण इत्यर्थः ॥ यज्ञसंयोगे किं । सुनोति सुरां ॥

## अर्हः प्रशंसायां ॥१३३॥

अर्ह । इत्येतस्मात् प्रशंसाविषये शतृप्रत्ययः स्यात् ॥ अर्हन्निह भवान् विद्यां ॥ प्रशंसायां किं । अर्हति शत्रुर्वधं ॥

## आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ॥१३४॥

भ्राजभासेति क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छील । तद्धर्मन् । तत्साधुकारिन् । इत्येतेषु कर्तृषु वेद्याः ॥ वक्ष्यति तृन् । वदिता जनापवादान् । यः स्वभावतः फलनिरपेक्षस्तत्र प्रवर्तते स तच्छीलः ॥ अन्नमपहर्तारः । विनापि शीलेन स्वधर्मोऽयमिति यः प्रवर्तते स तद्धर्मा ॥ कर्ता कटं । धात्वर्थं साधु यः करोति स तत्साधुकारी ॥

## तृन् ॥१३५॥

धातोस्तृन्प्रत्ययः स्यात् तच्छीलादिषु कर्तृषु ॥ तच्छीले । वदिता जनापवादान् ॥ तद्धर्मणि । अन्नमपहर्तार आद्गरका भवन्ति श्राद्धे सिद्धे ॥ तत्साधुकारिणि । कर्ता कटं ॥ नकारः स्वरार्थः ॥

## अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् ॥१३६॥

अलंकृञ् । निराकृञ् । प्रजन । उत्पच । उत्पत । उन्मद । रुचि । अपत्रप । वृतु । वृधु । सह । चर । इत्येभ्यो धातुभ्यस्तच्छीलादिषु कर्तृष्विष्णुच्प्रत्ययः स्यात् ॥ डुकृञ् । अलंकरिष्णुः । निराकरिष्णुः ॥ जन । प्रजनिष्णुः ॥ डुपचष् । उत्पचिष्णुः ॥ पत्लृ । उत्पतिष्णुः ॥ मद । उन्मदिष्णुः ॥

रुच । रोचिष्णुः ॥ अपूञ् । अपत्रपिष्णुः ॥ वृतु । वर्तिष्णुः ॥ वृधु । वर्धिष्णुः ॥ षह । सहिष्णुः ॥ चर । चरिष्णुः ॥

## णेश्छन्दसि ॥१३७॥

एयन्ताद्धातोर्वेदे तच्छीलादिषु कर्तृष्विष्णुच् स्यात् ॥ दृषदं धारयिष्णवः । वीरुधं पारयिष्णवः ॥

## भुवश्च ॥१३८॥

भू । इत्येतस्माद्धातोर्वेदे तच्छीलादिषु कर्तृष्विष्णुच् स्यात् ॥ भविष्णुः ॥ योगविभाग उत्तरार्थः ॥ चकारोऽनुक्तसमुच्चयार्थः । भ्राजिष्णुना लोहित-चन्दनेन ॥

## ग्लाजिस्थश्च ग्स्नुः ॥१३९॥

छन्दसीति निवृत्तं ॥ ग्लै । जि । ष्ठा । इत्येतेभ्यस्तच्छीलादिषु कर्तृषु ग्स्नु-प्रत्ययः स्यात् ॥ ग्लास्नुः । जिष्णुः । स्थास्नुः ॥

## त्रसिगृधिधृषिक्षिपेः क्नुः ॥१४०॥

त्रसी । गृधि । धृष । क्षिप । इत्येतेभ्यस्तच्छीलादिषु क्नुप्रत्ययः स्यात् ॥ त्रस्नुः ॥ गृध्नुः ॥ धृष्णुः ॥ क्षिप्नुः ॥

## शमित्यष्टाभ्यो घिनुण् ॥१४१॥

इतिशब्द आद्यर्थः ॥ शम । इत्येवमादिभ्योऽष्टाभ्यो धातुभ्यस्तच्छीलादिषु घिनुण्प्रत्ययः स्यात् ॥ शमी । तमी । दमी । श्रमी । भ्रमी । क्षमी । क्लमी । प्रमादी ॥ अष्टाभ्यः किं । असिता ॥ घकार उत्तरत्र कुत्वार्थः ॥ उकार उच्चारणार्थः ॥

## संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरि-क्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च ॥१४२॥

संपृचादिभ्यस्तच्छीलादिषु घिनुण् स्यात् ॥ पृची । भ्वादिर्गृह्यते न त्वदादिर्लुग्विकरणत्वात् । संपर्की ॥ रुधिर् । अनुरोधी ॥ यम । आयामी ॥ यसु । आयासी ॥ सृ । परिसारी ॥ सृज । संसर्गी ॥ देवृ भ्वादिः । परिदेवी ॥ ज्वर । संज्वारी ॥ क्षिप । दिवादिस्तुदादिश्च । परिक्षेपी ॥ रट । परिराटी ॥ वद । परिवादी ॥ दह । परिदाही ॥ मुह । परिमोही ॥ दुष । दोषी ॥ द्विष । द्वेषी ॥ द्रुह । द्रोही ॥ दुह । दोही ॥ युजिर् । युज । योगी ॥ क्रीडृ । आक्रीडी ॥ विचिर् । विवेकी ॥ त्यज । त्यागी ॥ रञ्ज । रागी ॥ भज । भागी ॥ चर । अतिचारी । अपचारी ॥ मुष । आमोषी ॥ हन । अभ्याघाती ॥

## वौ कषलसकत्थस्रम्भः ॥ १४३ ॥

कष हिंसार्थः । लस । कत्थ । स्रम्भु । इत्येतेभ्यो विशब्द उपपदे तच्छीलादिषु घिनुण् स्यात् ॥ विकाषी ॥ विलासी । विकत्थी । विस्रम्भी ॥

## अपे च लषः ॥ १४४ ॥

लष । इत्येतस्मादपशब्द उपपदे तच्छीलादिषु घिनुण् स्यात् । चकाराद्विशब्देऽपि ॥ अपलाषी । विलाषी ॥

## प्रे लपसृद्रुमथवदवसः ॥ १४५ ॥

लप । सृ । द्रु । मथे । वद । वस । इत्येतेभ्यः प्रशब्द उपपदे तच्छीलादिषु घिनुण् स्यात् ॥ प्रलापी ॥ प्रसारी ॥ प्रद्रावी ॥ प्रमाथी ॥ प्रवादी ॥ प्रवासी । वस निवासार्थः । न त्वाच्छादनार्थः । लुग्विकरणत्वात् ॥

## निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ् ॥ १४६ ॥

निन्दादिभ्यस्तच्छीलादिषु वुञ् स्यात् ॥ णिदि । निन्दकः ॥ हिसि । हिंसकः ॥ क्लिशू । क्लेशकः ॥ खादृ । खादकः ॥ णश णयन्तः । विनाशकः ॥ क्षिप । परिक्षेपकः ॥ रट । परिराटकः ॥ वद णयन्तः । परिवादकः ॥ भाष । व्याभाषकः ॥ असूयतिः कण्ड्वादिः । अनूसूयकः ॥

## देविक्रुशोश्चोपसर्गे ॥ १४७ ॥

देवि । क्रुश । इत्येताभ्यामुपसर्ग उपपदे तच्छीलादिषु वुञ् स्यात् ॥ दिवु । दिवादिश्चुरादिश्च । परिदेवकः ॥ क्रुश । व्याक्रोशकः ॥ उपसर्गे किं । देवयिता । क्रोटा ॥

## चलनशब्दार्थादकर्मकाद्युच् ॥ १४८ ॥

चलनार्थेभ्यः शब्दार्थेभ्यश्चाकर्मकेभ्यस्तच्छीलादिषु युच्प्रत्ययः स्यात् ॥ चलनः । चोपनः ॥ शब्दार्थात् । शब्दनः । रवणः ॥ अकर्मकात् किं । पठिता विद्यां ॥

## अनुदात्तेतश्च हलादेः ॥ १४९ ॥

अनुदात्तेतो हलादेर्धातोस्तच्छीलादिषु युच् स्यात् ॥ वृतु । वर्तनः । वृधु । वर्धनः ॥ अनुदात्तेतः किं । भविता ॥ हलादेः किं । एधिता ॥ आदिग्रहणं किमर्थं । इह यथा स्यात् । जुगुप्सनः । मीमांसनः ॥ अकर्मकात् किं । वसिता वस्त्रं ॥

## जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः ॥ १५० ॥

जुप्रभृतिभ्यो धातुभ्यस्तच्छीलादिषु युच् स्यात् ॥ जु इति सौत्रो धातुः । जवनः ॥ क्रमु । चङ्क्रमणः । यङन्ताद्युच् ॥ द्रम । दन्द्रमणः । यङन्ताद्युच् ॥ सृ । सरणः ॥ गृधु । गर्धनः ॥ ज्वल । ज्वलनः ॥ शुच । शोचनः ॥ लष इच्छायां । लषणः ॥ पतॢ । पतनः ॥ पद । पदनः ॥

## क्रुधमण्डार्थेभ्यश्च ॥ १५१ ॥

क्रोधार्थेभ्यो भूषार्थेभ्यश्च धातुभ्यस्तच्छीलादिषु युच् स्यात् ॥ क्रोधनः । रोषणः ॥ मण्डार्थेभ्यः । मण्डनः । भूषणः ॥

## न यः ॥ १५२ ॥

यकारान्तेभ्यो धातुभ्यस्तच्छीलादिषु युन्न स्यात् ॥ क्नूयिता । क्ष्मायिता ॥

## सूददीपदीक्षश्च ॥ १५३ ॥

सूद । दीपी । दीक्ष । इत्येतेभ्यस्तच्छीलादिषु युन्न ॥ सूदिता ॥ दीपिता ॥ दीक्षिता ॥ नमिकम्पीति रप्रत्ययेन युचो बाधे सिद्धे दीपग्रहणं ज्ञापयति ।

ताच्छीलिकेषु वासरूपविधिर्नास्तीति प्रायिकं । तेन कम्रा कमना युवतिः । कम्प्रा कम्पना शाखेति सिद्धं ॥

## लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ् ॥१५४॥

लष । पतॢ । पद । ष्ठा । भू । वृष । हन । कमु । गम्ॡ । शॄ । इत्येतेभ्यस्ताच्छीलादिषु उकञ्प्रत्ययः स्यात् ॥ लाषुकः ॥ पातुकः ॥ पादुकः ॥ स्थायुकः ॥ भावुकः ॥ वर्षुकः ॥ घातुकः ॥ कामुकः ॥ आगामुकः ॥ शारुकः ॥

## जल्पभिक्षकुट्टलुण्टवृङः षाकन् ॥१५५॥

जल्प । भिक्ष । कुट्ट । लुण्ट । वृङ् । इत्येतेभ्यस्ताच्छीलादिषु षाकन् स्यात् ॥ जल्पाकः ॥ भिक्षाकः ॥ कुट्टाकः ॥ लुण्टाकः ॥ वराकः ॥ षित्त्वान्ङीष् । वराकी ॥

## प्रजोरिनिः ॥१५६॥

जु । इत्येतस्मात् प्रपूर्वात् ताच्छीलादिष्विनिप्रत्ययः स्यात् ॥ प्रजवी । प्रजविनौ ॥

## जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च ॥१५७॥

जिप्रभृतिभ्यस्ताच्छीलादिष्विनिः स्यात् ॥ जि । जयी ॥ दृङ् । दरी ॥ क्षि । क्षयी ॥ विपूर्वः श्रिञ् । विश्रयी ॥ इण् । अत्ययी ॥ टुवम् । वमी ॥ व्यथ नञ्पूर्वः । अव्यथी ॥ अम अभिपूर्वः । अभ्यमी ॥ भू परिपूर्वः । परिभवी ॥ षू प्रपूर्वः प्रेरणार्थः । प्रसवी ॥

## स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ॥१५८॥

स्पृहादिभ्यस्ताच्छीलादिष्वालुच्प्रत्ययः स्यात् ॥ स्पृह चुरादिः । स्पृहयालुः ॥ गृह चुरादिः । गृहयालुः ॥ पत चुरादिः । पतयालुः ॥ दय । दयालुः ॥ द्रा निपूर्वः । निद्रालुः ॥ द्रा तत्पूर्वः । तन्द्रालुः । तच्छब्दस्य नान्तत्वमपि निपात्यते ॥ डुधाञ् श्रत्पूर्वः । श्रद्धालुः ॥ लुचा सिद्ध आलुचूकरणमन्यतो विधानार्थं । शयालुः ॥

## दाधेट्सिशदसदो रुः ॥१५९॥

दा । धेट् । षिञ् । शद्लृ । षद्लृ । इत्येतेभ्यस्तच्छीलादिषु रुप्रत्ययः स्यात् ॥ डुदाञ् । दो । देङ् । दारुः ॥ धारुः ॥ सेरुः ॥ शद्रुः ॥ सद्रुः ॥

## सृघस्यदः क्मरच् ॥ १६० ॥

सृ । घस्लृ । अद । इत्येतेभ्यस्तच्छीलादिषु क्मरच्प्रत्ययः स्यात् ॥ सृमरः ॥ घस्मरः ॥ अद्मरः ॥

## भञ्जभासमिदो घुरच् ॥ १६१ ॥

भञ्जो । भासृ । ञिमिदा । इत्येतेभ्यस्तच्छीलादिषु घुरच्प्रत्ययः स्यात् ॥ भङ्गुरं काष्ठं । भञ्जेः कर्मकर्तरि प्रत्ययः । घित्वात् कुत्वं ॥ भासुरं ज्योतिः ॥ मेदुरः पशुः ॥

## विदिभिदिच्छिदेः कुरच् ॥ १६२ ॥

विद ज्ञानार्थः । भिदिर् । छिदिर् । इत्येतेभ्यस्तच्छीलादिषु कुरच्प्रत्ययः स्यात् ॥ विदुरः पण्डितः ॥ भिदुरं काष्ठं ॥ छिदुरा रज्जुः ॥ भिदिच्छिदोः कर्मकर्तरि प्रत्ययः ॥

## इण्नशजिसर्तिभ्यः क्वरप् ॥ १६३ ॥

इण् । णश । जि । सृ । इत्येतेभ्यः क्वरप् स्यात् ॥ इत्वरः ॥ नश्वरः ॥ जित्वरः ॥ सृत्वरः ॥

## गत्वरश्च ॥ १६४ ॥

गत्वर । इति निपात्यते तच्छीलादिषु ॥ गम्लृ । गत्वरः । गमेरनुनासिकलोपः । क्वरप्प्रत्ययश्च ॥

## जागरूकः ॥ १६५ ॥

जागृ । इत्येतस्मात् तच्छीलादिषु ऊकप्रत्ययो निपात्यते ॥ जागरूकः ॥

## यजजपदशां यङः ॥ १६६ ॥

यज । जप । दंश । इत्येतेभ्यो यङन्तेभ्यस्तच्छीलादिषु ऊकः स्यात् ॥ यायजूकः ॥ जञ्जपूकः ॥ दन्दशूकः ॥

## नमिकम्पिस्म्यजसकमहिंसदीपो रः ॥१६७॥

नमि । कम्पि । स्मि । अजस । कम । हिंस । दीप । इत्येतेभ्यस्तच्छी-लादिषु रप्रत्ययः स्यात् ॥ णम । नम्रं काष्ठं ॥ कपि । कम्प्रा शाखा ॥ ष्मिङ् । स्मेरं मुखं ॥ जसु नञ्पूर्वः । अजस्रं सततं ॥ कमु । कम्रा युवतिः ॥ हिंसि । हिंस्रः ॥ दीपी । दीप्रः ॥

## सनाशंसभिक्ष उः ॥१६८॥

सन्प्रत्ययान्तात् । आशंस । भिक्ष । इत्येताभ्यां च तच्छीलादिषु उप्रत्ययः स्यात् ॥ सन् । चिकीर्षुः ॥ आङः शासु इच्छायामिति गृह्यते । न स्तुत्यर्थः । आशंसुः ॥ भिक्ष । भिक्षुः ॥

## विन्दुरिच्छुः ॥१६९॥

विन्दुः । इच्छुः । इत्येतावुप्रत्ययान्तौ निपात्येते तच्छीलादिषु ॥ विद ज्ञा-नार्थः । न त्वन्ये ऽनभिधानात् । विन्दुः । निपातनान्नुम् ॥ इषु इच्छार्थः । इच्छुः । छत्वं निपातनात् ॥

## क्याच्छन्दसि ॥१७०॥

क्यच् । क्यष् । क्यङ् । इत्येतदन्तात् तच्छीलादिषु वेदे उप्रत्ययः स्यात् ॥ मित्रयुः । संस्वेदयुः । सुम्नयुः ॥ छन्दसि किं । पुत्रीयिता ॥

## आदृगमहनजनः किकिनौ लिट् च ॥१७१॥

आ । ऋ । इत्येतदन्तात् । गम्लृ । हन । जनी । इत्येतेभ्यश्च तच्छीलादिषु वेदे किकिनौ प्रत्ययौ भवतः । तौ च लिड्वत्तः ॥ आदन्तात् । पा । पपिः सोमं ॥ ऋदन्तात् । तॄ । ततुरिः ॥ गम्लृ । जग्मिर्वायुः ॥ हन । जघ्निर्वृत्रं ॥ जन । जज्ञिर्हि वीजं ॥

## स्वपितृषोर्नजिङ् ॥१७२॥

ञिष्वप् । ञितृष् । इत्येताभ्यां तच्छीलादिषु नजिङ् स्यात् ॥ स्वप्नक् ॥ तृष्णाक् । तृष्णाजौ । तृष्णाजः ॥

## शॄवन्द्योरारुः ॥१७३॥

शॄ । वदि । इत्येताभ्यां तच्छीलादिषु आरुप्रत्ययः स्यात् ॥ शरारुः ॥ वन्दारुः ॥

## भियः क्रुक्लुकनौ ॥ १७४ ॥

ञिभी । इत्येतस्मात् तच्छीलादिषु क्रु । क्लुकन् । इत्येतौ प्रत्ययौ भवतः ॥ भीरुः । भीलुकः ॥

## स्थेशभासपिसकसो वरच् ॥ १७५ ॥

ष्ठा । ईश । भास । पिस । कस । इत्येतेभ्यस्तच्छीलादिषु वरच्प्रत्ययः स्यात् ॥ स्थावरः ॥ ईश्वरः ॥ भास्वरः ॥ पेस्वरः ॥ कस्वरः ॥

## यश्च यङः ॥ १७६ ॥

या । इत्येतस्माद्यङन्तात् तच्छीलादिषु वरच् स्यात् ॥ यायावरः ॥

## भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ॥ १७७ ॥

भ्राजादिभ्यस्तच्छीलादिषु क्विप्प्रत्ययः स्यात् ॥ भ्राजृ । विभ्राट् । विभ्राजौ ॥ भासृ । भाः । भासौ ॥ धुर्वी । धूः । धुरौ ॥ द्युत विपूर्वः । विद्युत् । विद्युतौ ॥ ऊर्ज । ऊर्क् । ऊर्जौ ॥ पॄ । पूः । पुरौ ॥ जु इति सौत्रः । जूः । निपातनाद्दीर्घः । जुवौ ॥ ष्टुञ ग्रावपूर्वः । ग्रावस्तुत् । ग्रावस्तुतौ ॥ अन्येभ्यो ऽपीत्यस्यैवायं प्रपञ्चः ॥

## अन्येभ्यो ऽपि दृश्यते ॥ १७८ ॥

भ्राजादिव्यतिरिक्तेभ्यो ऽपि धातुभ्यस्तच्छीलादिषु क्विप् स्यात् ॥ भित् । छित् ॥

## भुवः संज्ञान्तरयोः ॥ १७९ ॥

भू । इत्येतस्मात् संज्ञायामन्तरे च गम्यमाने क्विप् स्यात् ॥ मित्रभूर्नाम कश्चित् ॥ अन्तरे । प्रतिभूर्धनिकाधमर्णयोर्मध्यस्थः ॥ इत आरभ्य तच्छीलादिष्विति निवृत्तं ॥

## विप्रसंभ्यो ड्वसंज्ञायां ॥ १८० ॥

वि । प्र । सं । इत्येवंपूर्वाद्भुवो डुप्रत्ययः स्यान्न तु संज्ञायां ॥ विभुः सर्वगः ॥ प्रभुः स्वामी ॥ संभुर्जनिता ॥ असंज्ञायां किं । विभूर्नाम कश्चित् ॥

## धः कर्मणि ष्ट्रन् ॥१८१॥

धेट् । डुधाञ । इत्येताभ्यां कर्मणि ष्ट्रन्प्रत्ययः स्यात् ॥ धात्री स्तनदायिनी ॥ धात्री आमलकी ॥

## दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ॥१८२॥

दाबादिभ्यः ष्ट्रन् स्यात् करणे ऽर्थे ॥ दाप् । दात्रं ॥ णीञ । नेत्रं ॥ शसु । शंसु । शस्त्रं ॥ यु । योत्रं ॥ युजिर् । योक्त्रं ॥ ष्टुञ । स्तोत्रं ॥ तुद । तोत्त्रं ॥ षिञ । सेत्रं ॥ षिच । सेक्त्रं ॥ मिह । मेढ्रं ॥ पत्लृ । पत्त्रं ॥ दंश । दंष्ट्रा । अजादित्वाट्टाप् । दंशेरनुनासिकलोपेन निर्देशः क्ङित्तो ऽन्यत्रापि लोपज्ञापनार्थः । तेन दशनमिति सिद्धं ॥ णह । नद्ध्री ॥

## हलसूकरयोः पुवः ॥१८३॥

पूङ् । पूञ । इत्येताभ्यां ष्ट्रन् स्यात् करणे ऽर्थे । तच्चेत् करणं हलसूकरयोरवयवो भवति ॥ पोत्रं हलसूकरयोर्मुखं ॥

## अर्तिलूधूसूखनसहचर इत्रः ॥१८४॥

ऋ । लूञ् । धू । षू । खन । षह । चर । इत्येतेभ्य इत्रप्रत्ययः स्यात् ॥ अरित्रं ॥ लवित्रं ॥ धवित्रं ॥ सवित्रं ॥ खनित्रं ॥ सहित्रं ॥ चरित्रं ॥

## पुवः संज्ञायां ॥१८५॥

पूङ् । पूञ् । इत्येताभ्यां करण इत्रः स्यात् । समुदायेन संज्ञा चेद्गम्यते ॥ पवित्रं दर्भः ॥

## कर्तरि चर्षिदेवतयोः ॥१८६॥

पूङ् । पूञ् । इत्येताभ्यां करणे कर्तरि च इत्रः स्यात् क्रमेण । ऋषिदेवतयोर्वाच्ययोः ॥ पुनाते ऽनेनेति । पवित्रो ऽयमृषिः ॥ देवतायां करणे । अग्निः पवित्रं ॥

## ञीतः क्तः ॥१८७॥

ञिशब्द इत्संज्ञको यस्य तस्माद्धातोर्वर्तमाने क्तप्रत्ययः स्यात् ॥ ञिक्ष्विदा । क्ष्विण्णः ॥

## मतिबुद्धिपूजार्थेभ्यश्च ॥ १८८ ॥

इच्छार्थ । बुद्ध्यर्थ । पूजार्थेभ्यो वर्तमाने क्तः स्यात् ॥ मन । राज्ञां मतः ॥ बुध । राज्ञां बुद्धः ॥ पूज । राज्ञां पूजितः ॥

॥ इति सूत्रपाठे तृतीयाध्यायस्य द्वितीयः पादः ॥

---

## उणादयो बहुलं ॥ १ ॥

उण् । इत्येवमादयो व्याकरणान्तरप्रसिद्धाः प्रत्यया वर्तमाने काले संज्ञायां विषये बहुलं बोध्याः ॥ कृवापाजिमिस्वदिसाध्यशूभ्य उण् । कारुः । वायुः । पायुः । जायुः । मायुः । स्वादुः । साधुः । आशुः ॥ उणादीन् विस्तरतो ऽग्रे वक्ष्यामः ॥

## भूते ऽपि दृश्यन्ते ॥ २ ॥

उणादयः प्रत्यया भूते ऽपि दृश्यन्ते ॥ वृत्तं । वर्त्म ॥ चरितं । चर्म ॥ भसितं । भस्म ॥

## भविष्यति गम्यादयः ॥ ३ ॥

भविष्यति काले गम्यादयो णिनिप्रत्ययान्ताः शब्दाः साधवो भवन्ति ॥ ग्रामं गमी ॥

## यावत्पुरानिपातयोर्लट् ॥ ४ ॥

यावत् । पुरा । इत्येतयोरुपपदयोर्भविष्यत्यर्थे धातोर्लट् स्यात् ॥ यावद्भुङ्क्ते ॥ पुरा भुङ्क्ते ॥ निपातयोः किं । यावद्दास्यते तावद्भोक्ष्यते । करणभूतया पुरा यास्यति ॥

## विभाषा कदाकर्ह्योः ॥ ५ ॥

कदा । कर्हि । इत्येतयोरुपपदयोर्भविष्यति काले धातोर्वा लट् स्यात् ॥ कदा भुङ्क्ते । कदा भोक्ष्यते ॥ कर्हि भुङ्क्ते । कर्हि भोक्ष्यते ॥

## किंवृत्ते लिप्सायां ॥ ६ ॥

किंशब्देन वृत्तं यत् तस्मिन्नुपपदे लाभेच्छायां गम्यमानायां भविष्यति धातोर्वा लट् स्यात् । पक्षे लृट्लुटौ ॥ कं भोजयति । भोजयिष्यति । भोजयिता वा । कतरो भिक्षां ददाति । दास्यति । दाता वा । कतमः स्वर्लोकं याति । यास्यति । याता वा ॥ लिप्सायां किं । कः काशीं गमिष्यति ॥

## लिप्स्यमानसिद्धौ च ॥ ७ ॥

अकिंवृत्तार्थमिदं ॥ लिप्स्यमानेनान्नादिना स्वर्गादेः सिद्धौ गम्यमानायां भविष्यति धातोर्वा लट् स्यात् । पक्षे लृट्लुटौ ॥ यो ऽन्नं ददाति । दास्यति । दाता वा । स स्वर्गलोकं याति । यास्यति । याता वा ॥

## लोडर्थलक्षणे च ॥ ८ ॥

लोडर्थः प्रैषादिर्लक्ष्यते येन । तत्र वर्तमानाद्धातोर्भविष्यति वा लट् स्यात् । पक्षे लृट्लुटौ ॥ उपाध्यायश्चेदागच्छति । आगमिष्यति । आगन्ता वा । अथ त्वं छन्दो ऽधीष्व ॥ उपाध्यायागमनमध्ययनप्रैषस्य लक्षणं ॥

## लिङ् चोर्ध्वमौहूर्तिके ॥ ९ ॥

ऊर्ध्वं मुहूर्ताद्व ऊर्ध्वमौहूर्तिकः । तादृशे भविष्यति लोडर्थलक्षणे वर्तमानाद्धातोर्लिङ् स्यात् । चकाराल्लट् च वा । पक्षे लृट्लुटौ ॥ मुहूर्तादुपर्युपाध्यायश्चेदागच्छेत् । आगच्छति । आगमिष्यति । आगन्ता वा । अथ त्वं छन्दो ऽधीष्व ॥

## तुमुन्ण्वुलौ क्रियायां क्रियार्थायां ॥ १० ॥

क्रियार्थायां क्रियायामुपपदे धातोर्भविष्यति तुमुन्ण्वुलौ प्रत्ययौ भवतः ॥ भोक्तुं व्रजति ॥ भोजको व्रजति ॥ क्रियायां किं । भिक्षिष्य इत्यस्य जटाः ॥ क्रियार्थायां किं । धावतस्ते पतिष्यति दण्डः ॥

## अण् कर्मणि च ॥१२॥

कर्मण्युपपदे क्रियार्थायां क्रियायां सत्यां धातोरण्प्रत्ययः स्यात् ॥ काण्डलावो व्रजति । गोदायो व्रजति ॥

## लृट् शेषे च ॥१३॥

भविष्यति धातोर्लृट् स्यात् । क्रियार्थायां क्रियायां सत्यामसत्यां च ॥ करिष्यामीति व्रजति ॥ शेषे । करिष्यति ॥

## लृटः सद्वा ॥१४॥

भविष्यति लृटः स्थाने सत्संज्ञकौ शतृशानचावादेशौ वा भवतः ॥ स करिष्यति । स करिष्यन् । स करिष्यते । स करिष्यमाणः ॥ इह तु नित्यं । करिष्यन्तं देवदत्तं पश्य । करिष्यमाणं देवदत्तं पश्य ॥

## अनद्यतने लुट् ॥१५॥

भविष्यत्यनद्यतने धातोर्लुट् स्यात् ॥ श्वः कर्ता ॥ अनद्यतन इति बहुव्रीहिः । तेन व्यामिश्रे न भवति । अद्य श्वो वा गमिष्यति ॥

## पदरुजविशस्पृशो घञ् ॥१६॥

पद । रुज । विश । स्पृश । इत्येतेभ्यो घञ्प्रत्ययः स्यात् ॥ पद्यतेऽसौ । पादः ॥ रुजत्यसौ । रोगः ॥ विशत्यसौ । वेशः ॥ स्पृशतीति । स्पर्शः ॥

## सृ स्थिरे ॥१७॥

सृ । इत्येतस्मात् स्थिरे कर्तरि घञ् स्यात् ॥ चिरं तिष्ठन् कालान्तरं सरतीति । खदिरसारः ॥ स्थिरे किं । सर्ता । सारकः ॥

## भावे ॥१८॥

भावे वाच्ये धातोर्घञ् स्यात् ॥ पाकः । पाकौ ॥ त्यागः । रागः ॥ धातुना साध्यरूपा क्रियोच्यते । घञादिना तु सैव क्रिया सिद्धरूपोच्यते । अत एवात्र लिङ्गसंख्यायोगः ॥

## अकर्तरि च कारके संज्ञायां ॥१९॥

कर्तृभिन्ने कारके धातोर्घञ् स्यात् । संज्ञाविषये ॥ प्रास्यत इति । प्रासः

कुन्तः । आहरन्ति रसमस्मादिति । आहारः ॥ अकर्तरि किं । मिषत्यसौ मेषः । पचाद्यच् । स्वरे भेदः ॥ संज्ञायां किं । कर्तव्यः कटः ॥ चकारः संज्ञाव्यभिचारार्थः । दीयते ऽसौ । दायः ॥

## परिमाणाख्यायां सर्वेभ्यः ॥२०॥

परिच्छित्तेरुक्तौ सत्यां सर्वधातुभ्यो घञ् स्यात् ॥ एकस्तण्डुलनिचायः । द्वौ शूर्पनिष्पावौ । द्वौ कारौ ॥ सर्वग्रहणमपो ऽपि बाधनार्थं । अन्यथा पुरस्तादपवादन्यायादेरचमेव बाधेत ॥ परिमाणाख्यायां किं । निश्चयः ॥ आख्याग्रहणं रूढिनिरासार्थं । तेन संख्यापि गृह्यते ॥ सर्वेभ्य इति पञ्चमीनिर्देशात् प्रकृत्याश्रय एवापवादो बाध्यते । न त्वर्थाश्रयाः स्त्रीप्रत्ययाः । द्वे प्रसृती ॥

## इङश्च ॥२१॥

एरचो ऽपवादः ॥ इङ् । इत्येतस्माद्धातोर्घञ् स्यात् ॥ अधीयते ऽसौ । अध्यायः । उपेत्याधीयते यस्मात् सः । उपाध्यायः ॥

## उपसर्गे रुवः ॥२२॥

अपो ऽपवादः ॥ रु । इत्येतस्मादुपसर्ग उपपदे घञ् स्यात् ॥ संरावः । उपरावः ॥ उपसर्गे किं । रवः ॥

## समि युद्रुदुवः ॥२३॥

यु । द्रु । दु । इत्येतेभ्यः संशब्द उपपदे घञ् स्यात् ॥ संयावः ॥ संद्रावः ॥ संदावः ॥ समि किं । यवः ॥

## श्रिणीभुवो ऽनुपसर्गे ॥२४॥

अपो ऽपवादः ॥ श्रिञ । णीञ । भू । इत्येतेभ्यो ऽनुपसर्गेभ्यो घञ् स्यात् ॥ श्रायः ॥ नायः ॥ भावः ॥ अनुपसर्गे किं । प्रश्रयः । प्रणयः । प्रभवः ॥ कथं राज्ञो नय इति । कृत्यल्युटो बहुलवचनादच् ॥

## वौ क्षुश्रुवः ॥२५॥

अपो ऽपवादः ॥ क्षु । श्रु । इत्येताभ्यां विशब्द उपपदे घञ् स्यात् ॥ विक्षावः ॥ विश्रावः ॥

## अवोदोर्नियः ॥२६॥

णीञ् । इत्येतस्मादव । उद् । इत्येतयोरुपपदयोर्घञ्स्यात् ॥ अवनायः । उन्नायः ॥ कथमुन्नयः पदार्थानामिति । कृत्यल्युटो बहुलमिति भविष्यति ॥

## प्रे द्रुस्तुस्रुवः ॥२७॥

द्रु । ष्टुञ् । स्रु । इत्येतेभ्यः प्रशब्द उपपदे घञ्स्यात् ॥ प्रद्रावः ॥ प्रस्तावः ॥ प्रस्रावः ॥ प्रे किं । द्रवः । स्तवः । स्रवः ॥

## निरभ्योः पूल्वोः ॥२८॥

पू । लू । इत्येताभ्यां क्रमेण निस् । अभि । इत्येतयोरुपपदयोर्घञ्स्यात् ॥ पूञ् । पूङ् । निष्पावः ॥ लूञ् । अभिलावः ॥ निरभ्योः किं । पवः । लवः ॥

## उन्न्योर्ग्रः ॥२९॥

गॄ । इत्येतस्मादुद् । नि । इत्येतयोरुपपदयोर्घञ्स्यात् ॥ उद्गारः समुद्रस्य । निगारो देवदत्तस्य ॥ उन्न्योः किं । गरः ॥

## कॄ धान्ये ॥३०॥

कॄ । इत्येतस्माद्धातोरुद् । नि । इत्येतयोरुपपदयोर्घञ्स्यात् । धान्ये वाच्ये ॥ उत्कारो धान्यस्य । निकारो धान्यस्य ॥ धान्ये किं । भिक्षोत्करः । पुष्पनिकरः ॥

## यज्ञे समि स्तुवः ॥३१॥

ष्टुञ् । इत्येतस्माद्धातोः संशब्द उपपदे यज्ञविषये घञ्स्यात् ॥ समेत्य स्तुवन्ति यत्र सः । संस्तावो देशः ॥ यज्ञे किं । संस्तवश्छात्रयोः । परिचय इत्यर्थः ॥

## प्रे स्त्रोऽयज्ञे ॥३२॥

स्तॄञ् । इत्येतस्मात् प्रशब्द उपपदे यज्ञविषयादन्यत्र घञ्स्यात् ॥ शङ्खप्रस्तारः । मणिप्रस्तारः ॥ अयज्ञे किं । बर्हिःप्रस्तरः ॥

## प्रथने वावशब्दे ॥३३॥

स्तॄञ् । इत्येतस्माद्विशब्द उपपदेऽशब्दविषयके विस्तारे गम्ये घञ्स्यात् ॥

पटस्य विस्तारः ॥ प्रथने किं । तृणविस्तरः ॥ अशब्दे किं । विस्तरो वचसां ॥

## छन्दोनाम्नि च ॥३४॥

स्तृञ् । इत्येतस्माद्विशब्द उपपदे छन्दोनाम्नि घञ्स्यात् ॥ विस्तीर्यन्ते ऽस्मिन्नक्षराणीति । विष्टारपङ्क्तिश्छन्दः ॥ छन्दःशब्देनात्र वृत्तमुच्यते । न तु वेदः । नामग्रहणात् ॥

## उदि ग्रहः ॥३५॥

ग्रहवृदृनिश्चिगमश्चेत्यपो ऽपवादः ॥ ग्रह । इत्येतस्माद्धातोरुद् । इत्येतस्मिन्नुपपदे घञ्स्यात् ॥ उद्ग्राहः ॥

## समि मुष्टौ ॥३६॥

ग्रह । इत्येतस्मात् संशब्द उपपदे मुष्टिविषयके धात्वर्थे घञ्स्यात् ॥ अङ्गुलिसंनिवेशो मुष्टिः ॥ अहो मल्लस्य संग्राहः । दृढमुष्टिताख्यायते ॥ मुष्टौ किं । संग्रहो धान्यस्य ॥

## परिन्योर्नीणोर्द्यूताभ्रेषयोः ॥३७॥

णीञ् । इत्येतस्मात् परिपूर्वात् । इण् । इत्येतस्मान्निपूर्वाच्च घञ्स्यात् । क्रमेण द्यूते ऽभ्रेषे च विषये ॥ परिणायेन शारान् हन्ति । समन्तान्नयनेनेत्यर्थः ॥ एषो ऽत्र न्यायः । उचितमित्यर्थः ॥ द्यूताभ्रेषयोः किं । परिणयो विवाहः । न्ययो नाशः ॥

## परावनुपात्यय इणः ॥३८॥

इण् । इत्येतस्मात् परिशब्द उपपदे घञ्स्यात् । क्रमप्राप्तस्यानतिपाते गम्ये ॥ तव पर्यायः ॥ अनुपात्यये किं । कालस्य पर्ययः । अतिपात इत्यर्थः ॥

## व्युपयोः शेतेः पर्याये ॥३९॥

शीङ् । इत्येतस्माद्वि । उप । इत्येतत्पूर्वात् पर्याये गम्ये घञ्स्यात् ॥ तव विशायः । मम राजोपशायः ॥ पर्याये किं । विशयः संशयः । उपशयः समीपशयनं ॥

## हस्तादाने चेरस्तेये ॥४०॥

चिञ । इत्येतस्मात् प्रत्यासत्तौ गम्यमानायां घञ्स्यात् । चौर्यं चेन्न भवति ॥ पुष्पप्रचायः ॥ हस्तादाने किं । वृक्षाग्रस्थानां फलानां यष्ट्या प्रचयं करोति ॥ अस्तेये किं । पुष्पप्रचयश्चौर्येण ॥

## निवासचितिशरीरोपसमाधानेष्वादेश्च कः ॥४१॥

चिञ । इत्येतस्मान्निवासादिष्वर्थेषु घञ्स्यात् । आदेश्च ककारः स्यात् ॥ निवासो वासस्थानं । काशीनिकायः ॥ चीयते ऽसौ चितिः । आकायमग्निं चिन्वीत ॥ पादादि शिरोन्तं शरीरं । अनित्यः कायः ॥ राशीकरणमुपसमाधानं । महान् गोमयनिकायः ॥ निवासादिषु किं । चयः ॥

## संघे चानौत्तराधर्ये ॥४२॥

चिञ । इत्येतस्मात् प्राणिसमूहे ऽनौत्तराधर्यविषयके गम्ये घञ्स्यात् । आदेश्च ककारादेशः ॥ भिक्षुकनिकायः ॥ अनौत्तराधर्ये किं । सूकरनिचयः ॥ संघे किं । ज्ञानकर्मसमुच्चयः ॥

## कर्मव्यतिहारे णच् स्त्रियां ॥४३॥

क्रियाविनिमये गम्यमाने स्त्रीलिङ्गे भावे धातोर्णच् स्यात् ॥ व्यावक्रोशी । व्यावहासी ॥ चकारो णचः स्त्रियामञिति विशेषणार्थः ॥

## अभिविधौ भाव इनुण् ॥४४॥

क्रियायाः कार्त्स्न्येन संबन्धे गम्यमामे धातोर्भाव इनुण् स्यात् ॥ सांकूटिनं । सांराविणं । सांद्राविणं ॥ अभिविधौ किं । संरावः ॥

## आक्रोशे ऽवन्योर्ग्रहः ॥४५॥

ग्रह । इत्येतस्मात् । अव । नि । इत्येतयोरुपपदयोर्घञ्स्यात् । शापे गम्यमाने ॥ अवग्राहस्ते भूयात् । अभिभव इत्यर्थः ॥ निग्राहस्ते भूयात् । वध इत्यर्थः ॥ आक्रोशे किं । अवग्रहः पदस्य । निग्रहश्चोरस्य ॥

## प्रे लिप्सायां ॥४६॥

ग्रह । इत्येतस्मात् प्रशब्द उपपदे घञ्स्यात् । लाभेच्छायां गम्यमानायां ॥ पात्रप्रग्राहेण चरति भिक्षुः ॥ लिप्सायां किं । प्रग्रहो देवदत्तस्य ॥

पटस्य विस्तारः ॥ प्रथने किं । तृणविस्तरः ॥ अशब्दे किं । विस्तरो वचसां ॥

## छन्दोनाम्नि च ॥३४॥

स्तृञ् । इत्येतस्माद्विशब्द उपपदे छन्दोनाम्नि घञ्स्यात् ॥ विस्तीर्यन्ते ऽस्मिन्नक्षराणीति । विष्टारपङ्क्तिश्छन्दः ॥ छन्दःशब्देनात्र वृत्तमुच्यते । न तु वेदः । नामग्रहणात् ॥

## उदि ग्रहः ॥३५॥

ग्रहवृदृनिश्चिगमश्चेत्यपो ऽपवादः ॥ ग्रह । इत्येतस्माद्धातोरुद् । इत्येतस्मिन्नुपपदे घञ्स्यात् ॥ उद्ग्राहः ॥

## समि मुष्टौ ॥३६॥

ग्रह । इत्येतस्मात् संशब्द उपपदे मुष्टिविषयके धात्वर्थे घञ्स्यात् ॥ अङ्गुलिसंनिवेशो मुष्टिः ॥ अहो मल्लस्य संग्राहः । दृढमुष्टिताख्यायते ॥ मुष्टौ किं । संग्रहो धान्यस्य ॥

## परिन्योर्नीणोर्द्यूताभ्रेषयोः ॥३७॥

णीञ् । इत्येतस्मात् परिपूर्वात् । इण् । इत्येतस्मान्निपूर्वाच्च घञ्स्यात् । क्रमेण द्यूते ऽभ्रेषे च विषये । परिणायेन शारान् हन्ति । समन्तान्नयनेनेत्यर्थः ॥ एषो ऽत्र न्यायः । उचितमित्यर्थः ॥ द्यूताभ्रेषयोः किं । परिणयो विवाहः । न्ययो नाशः ॥

## परावनुपात्यय इणः ॥३८॥

इण् । इत्येतस्मात् परिशब्द उपपदे घञ्स्यात् । क्रमप्राप्तस्यानतिपाते गम्ये ॥ तव पर्यायः ॥ अनुपात्यये किं । कालस्य पर्ययः । अतिपात इत्यर्थः ॥

## व्युपयोः शेतेः पर्याये ॥३९॥

शीङ् । इत्येतस्माद्वि । उप । इत्येतत्पूर्वात् पर्याये गम्ये घञ्स्यात् ॥ तव विशायः । मम राजोपशायः ॥ पर्याये किं । विशयः संशयः । उपशयः समीपशयनं ॥

## हस्तादाने चेरस्तेये ॥४०॥

चिञ् । इत्येतस्मात् प्रत्याराप्तौ गम्यमानायां घञ्स्यात् । चौर्यं चेन्न भवति ॥ पुष्पप्रचायः ॥ हस्तादाने किं । वृक्षाग्रस्थानां फलानां यष्ट्या प्रचयं करोति ॥ अस्तेये किं । पुष्पप्रचयश्चौर्येण ॥

## निवासचितिशरीरोपसमाधानेष्वादेश्च कः ॥४१॥

चिञ् । इत्येतस्मान्निवासादिष्वर्थेषु घञ्स्यात् । आदेश्च ककारः स्यात् ॥ निवासो वासस्थानं । काशीनिकायः ॥ चीयते ऽसौ चितिः । आकायमग्निं चिन्वीत ॥ पादादि शिरोन्तं शरीरं । अनित्यः कायः ॥ राशीकरणमुपरामाधानं । महान् गोमयनिकायः ॥ निवासादिषु किं । चयः ॥

## संघे चानौत्तराधर्ये ॥४२॥

चिञ् । इत्येतस्मात् प्राणिसमूहे ऽनौत्तराधर्यविषयके गम्ये घञ्स्यात् । आदेश्च ककारादेशः ॥ भिक्षुकनिकायः ॥ अनौत्तराधर्ये किं । सूकरनिचयः ॥ संघे किं । ज्ञानकर्मसमुच्चयः ॥

## कर्मव्यतिहारे णच् स्त्रियां ॥४३॥

क्रियाविनिमये गम्यमाने स्त्रीलिङ्गे भावे धातोर्णच् स्यात् ॥ व्यावक्रोशी । व्यावहासी ॥ चकारो णचः स्त्रियामजिति विशेषणार्थः ॥

## अभिविधौ भाव इनुण् ॥४४॥

क्रियायाः कार्त्स्न्येन संबन्धे गम्यमामे धातोर्भाव इनुण् स्यात् ॥ सांकूटिनं । सांराविणं । सांद्राविणं ॥ अभिविधौ किं । संरावः ॥

## आक्रोशे ऽवन्योर्ग्रहः ॥४५॥

ग्रह । इत्येतस्मात् । अव । नि । इत्येतयोरुपपदयोर्घञ्स्यात् । शापे गम्यमाने ॥ अवग्राहस्ते भूयात् । अभिभव इत्यर्थः ॥ निग्राहस्ते भूयात् । बध इत्यर्थः ॥ आक्रोशे किं । अवग्रहः पदस्य । निग्रहश्चोरस्य ॥

## प्रे लिप्सायां ॥४६॥

ग्रह । इत्येतस्मात् प्रशब्द उपपदे घञ्स्यात् । लाभेच्छायां गम्यमानायां ॥ पात्रप्रग्राहेण चरति भिक्षुः ॥ लिप्सायां किं । प्रग्रहो देवदत्तस्य ॥

## परौ यज्ञे ॥४७॥

ग्रह । इत्येतस्मात् परिशब्द उपपदे घञ्स्यात् । प्रत्ययान्तवाच्यं यज्ञविषयं चेत् ॥ उत्तरपरिग्राहः । स्फ्येन वेदिस्वीकरणं ॥ यज्ञे किं । परिग्रहो देवदत्तस्य ॥

## नौ वृ धान्ये ॥४८॥

वृङ् । वृञ । इत्येताभ्यां निशब्द उपपदे घञ्स्यात् । धान्यविषये ॥ नीवारा व्रीहयः ॥ धान्ये किं । निवरा कन्या ॥

## उदि श्रयतियौतिपूद्रुवः ॥४९॥

अपोरपवादः ॥ उच्छब्द उपपदे श्रयत्यादिभ्यो घञ्स्यात् ॥ श्रिञ । उच्छ्रायः ॥ यु । उद्यावः ॥ पूङ् । पूञ । उत्पावः ॥ द्रु । उद्द्रावः ॥ कथं समुच्छ्रय इति । बाहुलकात् ॥

## विभाषाङि रुप्लुवोः ॥५०॥

रु । प्लु । इत्येताभ्यामाङ्युपपदे वा घञ् स्यात् ॥ आरावः । आरवः ॥ आप्लावः । आप्लवः ॥

## अवे ग्रहो वर्षप्रतिबन्धे ॥५१॥

ग्रह । इत्येतस्मादवशब्द उपपदे घञ्वा स्यात् । वर्षप्रतिबन्धे ऽभिधेये ॥ अवग्राहः । अवग्रहो देवस्य ॥ वर्षप्रतिबन्धे किं । अवग्रहः पदस्य ॥

## प्रे वणिजां ॥५२॥

ग्रह । इत्येतस्मात् प्रशब्द उपपदे वा घञ्स्यात् । तुलासूत्रं चेत् प्रत्ययार्थः ॥ तुलाप्रग्राहेण चरति । तुलाप्रग्रहेण ॥ वणिजां किं । प्रग्रहो देवदत्तस्य ॥

## रश्मौ च ॥५३॥

ग्रह । इत्येतस्मात् प्रशब्द उपपदे घञ्वा स्यात् । रश्मौ वाच्ये ॥ प्रग्राहः । प्रग्रहः ॥ रथादियुक्ताश्वादीनां संयमनरज्जुरित्यर्थः ॥

## वृणोतेराच्छादने ॥५४॥

वृञ् । इत्येतस्मात् प्रशब्द उपपदे घञ्वा स्यात् । प्रत्ययान्तेनाच्छादनविषये ऽभिधेये ॥ प्रवारः । प्रवरः ॥ आच्छादने किं । प्रवरो गौः ॥

## परौ भुवोऽवज्ञाने ॥५५॥

भू । इत्येतस्मात् परिशब्द उपपदे तिरस्कारे गम्यमाने वा घञ् स्यात् ॥ परिभावः । परिभवः ॥ अवज्ञाने किं । परिभवः ॥

## एरच् ॥५६॥

घञोऽपवादः ॥ इवर्णान्ताद्धातोर्भावे ऽकर्त्तरि च कारके संज्ञाविषये ऽच् स्यात् ॥ चयः । जयः । क्षयः ॥ चकारो विशेषणार्थः । क्षाजचित्रकाणामिति ॥

## ऋदोरप् ॥५७॥

ऋवर्णान्तेभ्य उवर्णान्तेभ्यश्च धातुभ्यो ऽप्प्रत्ययः स्यात् ॥ कृ । करः ॥ गृ । गरः ॥ शृ । शरः ॥ पृ । परः ॥ यु । यवः ॥ ष्टुञ् । स्तवः ॥ दकारस्तकारो वा मुखसुखार्थः ॥

## ग्रहवृदृनिश्चिगमश्च ॥५८॥

घञचोरपवादः ॥ ग्रहादिभ्यो धातुभ्यो ऽप् स्यात् ॥ ग्रह । ग्रहः ॥ वृङ् । वृञ । वरः ॥ दृङ् । दरः ॥ चिञ निस्पूर्वः । निश्चयः । अचा ह्यपसिद्धे-र्निश्चिग्रहणं कृत्स्वरेण मध्योदात्तार्थं ॥ गम्लृ । गमः ॥

## उपसर्गेऽदः ॥५९॥

अद । इत्येतस्मादुपसर्ग उपपदे ऽप् स्यात् ॥ प्रघसः । विघसः ॥ उपसर्गे किं । घासः ॥

## नौ ण च ॥६०॥

अद । इत्येतस्मान्निशब्द उपपदे णप्रत्ययः स्यात् । चकारादप् ॥ न्यादः । निघसः ॥

## व्यधजपोरनुपसर्गे ॥६१॥

व्यध । जप । इत्येताभ्यामनुपसर्गाभ्यामप् स्यात् ॥ व्यधः ॥ जपः ॥ अनुपसर्गे किं । आव्याधः । उपजापः ॥

## स्वनहसोर्वा ॥६२॥

स्वन । हसे । इत्येताभ्यामनुपसर्गाभ्यां वा अप् स्यात् ॥ स्वनः । स्वानः ॥ हसः । हासः ॥ अनुपसर्ग इत्येव । प्रस्वानः । प्रहासः ॥

## यमः समुपनिविषु च ॥ ६३ ॥

यम । इत्येतस्माद्धातोः सं । उप । नि । वि । इत्येतेषूपपदेष्वनुपसर्गे च वा अप् स्यात् ॥ संयमः । संयामः ॥ उपयमः । उपयामः ॥ नियमः । नियामः ॥ वियमः । वियामः ॥ अनुपसर्गे । यमः । यामः ॥

## नौ गदनदपठस्वनः ॥ ६४ ॥

गद । णद । पठ । स्वन । इत्येतेभ्यो निशब्द उपपदे वा अप् स्यात् ॥ निगदः । निगादः ॥ निनदः । निनादः ॥ निपठः । निपाठः ॥ निस्वनः । निस्वानः ॥

## क्वणो वीणायां च ॥ ६५ ॥

क्वण । इत्येतस्मान्निपूर्वादनुपसर्गाद्वीणाविषयाच्च वा अप् स्यात् ॥ निक्वणः । निक्वाणः ॥ अनुपसर्गात् । क्वणः । क्वाणः ॥ वीणाग्रहणं सोपसर्गार्थं । कल्याणप्रक्वणा वीणा ॥ एतेषु किं । प्रक्वणः ॥

## नित्यं पणः परिमाणे ॥ ६६ ॥

पण । इत्येतस्मात् परिमाणे गम्ये नित्यमप् स्यात् ॥ मूलकपणः । शाकपणः ॥ विक्रयाय मूलकादीनां परिमितो मुष्टिबन्धो ऽभिधीयते ॥ परिमाणे किं । पाणः ॥

## मदो ऽनुपसर्गे ॥ ६७ ॥

मद । इत्येतस्मादनुपसर्गादप् स्यात् ॥ मदो । धनमदः ॥ अनुपसर्गे किं । उन्मादः ॥

## प्रमदसंमदौ हर्षे ॥ ६८ ॥

प्रमद । संमद । इत्येतौ निपात्येते हर्षे वाच्ये ॥ प्रमदः । संमदः ॥ हर्षे किं । प्रमादः । संमादः ॥

## समुदोरजः पशुषु ॥ ६९ ॥

अज । इत्येतस्मात् सं । उद् । इत्येवंपूर्वात् पशुविषयके धात्वर्थे ऽप् स्यात् ॥ संपूर्वो ऽजिः समूहे । समजः पशूनां समूहः ॥ उत्पूर्वो ऽजिः प्रेरणे । उदजः पशूनां प्रेरणं ॥ पशुषु किं । समाजो ब्राह्मणानां । उदाजः क्षत्रियाणां ॥

## अक्षेषु ग्लहः ॥ ७० ॥

ग्लह । इत्येतन्निपात्यते देवनविषये पणरूपेण ग्राह्ये वस्तुनि ॥ ग्रह । अक्षस्य ग्लहः ॥ अक्षेषु किं । पादस्य ग्रहः ॥

## प्रजने सर्तेः ॥ ७१ ॥

सृ । इत्येतस्मादप् स्यात् । प्रथमगर्भग्रहणविषये ॥ गवामुपसरः ॥ स्त्रीगवीषु पुंगवानां गर्भाधानाय प्रथमगमनमित्यर्थः ॥

## ह्वः संप्रसारणं च न्यभ्युपविषु ॥ ७२ ॥

ह्वेञ । इत्येतस्य नि । अभि । उप । वि । इत्येवंपूर्वस्य संप्रसारणमप्प्रत्ययश्च स्यात् ॥ निहवः । अभिहवः । उपहवः । विहवः ॥ एषु किं । प्रह्वायः ॥ जुहोतेरपि सिद्धं निहव इत्यादि । सूत्रं तु घञो निवृत्त्यर्थं ॥

## आङि युद्धे ॥ ७३ ॥

ह्वेञ । इत्येतस्याङ्युपपदे संप्रसारणमप् च स्यात् । युद्धे ऽभिधेये ॥ आहूयन्ते ऽस्मिन्निति । आहवः ॥ युद्धे किं । आह्वायः ॥

## निपानमाहावः ॥ ७४ ॥

आहाव । इत्येतन्निपात्यते । निपानं चेद्वाच्यं ॥ निपानं कूपादिसमीपे पशूनां जलपानार्थमुदकाधारः ॥ ह्वेञ । आहावः ॥ संप्रसारणमप्प्रत्ययश्च निपातनाद्भवति ॥ निपानं किं । आह्वायः ॥

## भावे ऽनुपसर्गस्य ॥ ७५ ॥

ह्वेञ । इत्येतस्यानुपसर्गस्य संप्रसारणं भावे ऽप् च स्यात् ॥ हवः ॥ अनुपसर्गस्य किं । आह्वायः ॥

## हनश्च वधः ॥ ७६ ॥

हन । इत्येतस्यानुपसर्गस्यान्तोदात्तो वधादेशो भावे ऽप् च स्यात् ॥ वधश्चौ-

रार्णा ॥ चकाराद्घञपि । घातः ॥ भाव इत्येव । घातः ॥ अनुपसर्ग इत्येव । आघातः ॥

## मूर्तौ घनः ॥७७॥

घन । इत्येतन्निपात्यते काठिन्ये वाच्ये ॥ हन । दधिघनः । घनादेशो ऽप् च निपातनाद्भवति ॥ घनं दधीति तु धर्मशब्देन धर्मी भण्यते ॥

## अन्तर्घनो देशे ॥७८॥

अन्तर्घन । इत्येतन्निपात्यते देशे वाच्ये ॥ हन । अन्तर्घनः । घनादेशो ऽप् च निपातनात् । वाहीकग्रामविशेषस्य संज्ञेयं ॥ देशे किं । अन्तर्घातः ॥

## अगारैकदेशे प्रघणः प्रघाणश्च ॥७९॥

प्रघण । प्रघाण । इत्येतौ निपात्येते गृहावयवे वाच्ये ॥ हन । प्रविशद्भिः पादैर्हन्यत इति । प्रघणः । प्रघाणः । भावे ऽप् पाक्षिकी वृद्धिः । द्वारदेशे द्वौ प्रकोष्ठौ तत्र वाह्यप्रकोष्ठ एतन्निपातनं ॥ अगारैकदेशे किं । प्रघातो ऽन्यः ॥

## उद्घनो ऽत्याधानं ॥८०॥

उद्घन । इत्येतन्निपात्यत उपरिस्थापनं चेद्भवति ॥ हन । उद्घनः । अधिकरणे ऽप् । यस्मिन् काष्ठे ऽन्यानि काष्ठानि तक्ष्यन्ते तदुच्यते ॥ अत्याधानं किं । उद्घातो ऽन्यः ॥

## अपघनो ऽङ्गं ॥८१॥

अपघन । इत्येतन्निपात्यते पाणौ पादे च वाच्ये ॥ हन । अपघनः । करणे ऽप्घनादेशश्च ॥ अङ्गं किं । अपघातो ऽन्यः ॥

## करणे ऽयोविद्रुषु ॥८२॥

हन । इत्येतस्माद्ययम् । वि । द्रु । इत्येतेपूपपदेषु करणे ऽप् स्याद्घनादेशश्च ॥ अयोघनः । विघनः । द्रुघनः ॥ संज्ञायां तु पूर्वपदात् संज्ञायामिति णत्वं । द्रुघणः कुठारविशेषः ॥

## स्तम्बे क च ॥८३॥

हन । इत्येतस्मात् स्तम्बशब्द उपपदे करणे कप्रत्ययः स्यात् । चकारादप्

तत्संनियोगेन घनादेशश्च ॥ स्तम्बघ्नः । अपि तु । स्तम्बघनः ॥ करण इत्येव । स्तम्बघातः ॥

## परौ घः ॥ ८४ ॥

हन । इत्येतस्मात् परिशब्द उपपदे करणे ऽप् स्यात् । तत्संनियोगेन घशब्दश्चादेशः ॥ परिहन्यते ऽनेनेति । परिघः ॥

## उपघ्न आश्रये ॥ ८५ ॥

उपघ्न । इत्येतन्निपात्यते सामीप्ये वाच्ये ॥ हन । पर्वतेनोपहन्यत इति । पर्वतोपघ्नः । उपधालोपो ऽप् च निपातनात् ॥ आश्रये किं । उपघातो ऽन्यः ॥

## संघोद्घौ गणप्रशंसयोः ॥ ८६ ॥

संघ । उद्घ । इत्येतौ निपात्येते क्रमेण गणप्रशंसयोरर्थयोः ॥ हन । संघः समूहः । उद्घः प्रशंसा ॥ टिलोपो ऽप्प्रत्ययो घत्वं च निपातनात् ॥ गणप्रशंसयोः किं । संघातः । उद्घातः ॥

## निघो निमितं ॥ ८७ ॥

निघ । इत्येतन्निपात्यते समन्तान्मितं चेद्गम्यते ॥ निर्विशेषेण हन्यन्ते ज्ञायन्त इति । निघा वृक्षाः । समारोहपरिणाहा इत्यर्थः ॥ निमितं किं । निघातः ॥

## ड्वितः क्त्रिः ॥ ८८ ॥

डु इत् यस्य तस्माद्धातोः क्त्रिप्रत्ययः स्यात् । भावे ऽकर्तरि च कारके ॥ त्रेर्मम्नित्यमिति केवलो न प्रयुज्यते ॥ डुपचष् । पाकेन निर्वृत्तं । पक्त्रिमं ॥ डुवप् । उप्त्रिमं ॥ डुकृञ् । कृत्रिमं ॥

## ट्वितो ऽथुच् ॥ ८९ ॥

टु इत् यस्य तस्माद्धातोरथुच्प्रत्ययः स्यात् । भावे ऽकर्तरि च कारके ॥ टुवेपृ । वेपथुः ॥ टुओश्वि । श्वयथुः ॥ टुक्षु । क्षवथुः ॥ टुदु । दवथुः ॥

## यजयाचयतविच्छप्रच्छरक्षो नङ् ॥ ९० ॥

यज । डुयाचृ । यती । विच्छ । प्रच्छ । रक्ष । इत्येतेभ्यो नङ्प्रत्ययः स्यात् । भावे ऽकर्तरि च कारके ॥ यज्ञः ॥ याच्ञा ॥ यत्नः ॥ विश्नः ॥ प्रश्नः ॥ रक्ष्णः ॥

## स्वपो नन् ॥९१॥

ञिष्वप् । इत्येतस्मान्नन्प्रत्ययः स्यात् । भावे ऽकर्तरि च कारके ॥ स्वप्नः ॥ नकारः स्वरार्थः ॥

## उपसर्गे घोः किः ॥९२॥

उपसर्गे उपपदे घुसंज्ञकेभ्यः किप्रत्ययः स्यात् । भावे ऽकर्तरि च कारके ॥ प्रदिः । प्रधिः । विधिः । निधिः ॥ कित्त्वादाकारलोपः ॥

## कर्मण्यधिकरणे च ॥९३॥

कर्मण्युपपदे घुसंज्ञकेभ्यो ऽधिकरणे किः स्यात् ॥ जलानि धीयन्ते ऽस्मिन्निति । जलधिः ॥ शरधिः ॥

## स्त्रियां क्तिन् ॥९४॥

स्त्रीलिङ्गे भावादौ धातोः क्तिन्प्रत्ययः स्यात् ॥ घञजपामपवादः ॥ कृतिः । मतिः ॥

## स्थागापापचो भावे ॥९५॥

ष्ठा । गा । पा । डुपचष् । इत्येतेभ्यः स्त्रीलिङ्गे भावे क्तिन् स्यात् ॥ अङो ऽपवादः ॥ प्रस्थितिः । उपस्थितिः ॥ संगीतिः । उपगीतिः ॥ संपीतिः । निपीतिः ॥ पक्तिः ॥ व्यवस्थायामिति निर्देशादङपि । व्यवस्था । संस्था ॥

## मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः ॥९६॥

वृषु । इषु । डुपचष् । मन । विद । भू । वी । रा । इत्येतेभ्यः क्तिन् स्यान्मन्त्रविषये । स चोदात्तः ॥ वृष्टिः ॥ इष्टिः ॥ पक्तिः ॥ मन मनु इति द्वयमपि गृह्यते । मतिः ॥ वित्तिः ॥ भूतिः ॥ वीतिः ॥ रातिः ॥ क्तिन् नित्त्वादुदात्तत्वमात्रं विधीयते ॥

## ऊतियूतिजूतिसातिहेतिकीर्तयश्च ॥९७॥

ऊति । यूति । जूति । साति । हेति । कीर्ति । इत्येते स्त्रियां भावक्तिन्नन्ता उदात्ता निपात्यन्ते मन्त्रविषये ॥ अव । ऊतिः । ज्वरत्वरेत्यादिना ऊठ् ॥ यु । यूतिः ॥ जु इति सौत्रः । जूतिः ॥ निपातनाद्द्वयोरपि दीर्घः ॥ षो । सातिः । इत्वाभावो निपातनात् । सनोतेर्वा जनसनेत्यात्वं ॥ हि । हेतिः । हन । इत्यस्य वा नकारस्य इत्त्वं निपात्यते ॥ कृत । कीर्तिः ॥

## व्रजयजोर्भावे क्यप् ॥ ९८ ॥

व्रज । यज । इत्येताभ्यां स्त्रीलिङ्गे भावे क्यप् स्यात् । स चोदात्तः ॥ व्रज्या ॥ इज्या ॥ पित्त्वमुत्तरत्र तुगर्थं ॥

## संज्ञायां समजनिषदनिपतमनविदसुञ्शीङ्भृञिणः ॥ ९९ ॥

समज । इत्येवमादिभ्यः स्त्रीलिङ्गे भावेऽकर्तरि च कारके क्यप् स्यात् संज्ञायां स चोदात्तः ॥ अज । समजन्त्यस्यामिति । समज्या सभा ॥ षद्लृ । निषीदन्त्यस्यामिति । निषद्या आपणः ॥ पत्लृ । निपत्या पिच्छिला भूमिः ॥ मन । मन्यन्तेऽनयेति । मन्या गलपार्श्वशिरा ॥ विद । विदन्त्यनया अस्यामिति वा । विद्या ॥ पुञ् । अभिपूयते सोमोऽस्यामिति । सुत्या अभिषवदिनं ॥ शीङ् । शेतेऽस्यामिति । शय्या खट्वादिः ॥ डुभृञ् । भृत्या जीविका । भावे क्यप् ॥ इण् । ईयतेऽनयेति । इत्या शिविका ॥

## कृञः श च ॥ १०० ॥

डुकृञ् । इत्येतस्मात् स्त्रीलिङ्गे भावे शप्रत्ययः स्यात् । चकारात् क्यप् ॥ क्रिया ॥ क्यपि तु । कृत्या ॥

## इच्छा ॥ १०१ ॥

इच्छा । इत्येतन्निपात्यते स्त्रियां ॥ इषु । इच्छा । भावे शप्रत्ययः । यगभावो निपातनात् ॥

## अ प्रत्ययात् ॥ १०२ ॥

प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारप्रत्ययः स्यात् ॥ कर्तुमिच्छा । चिकीर्षा ॥ जिहीर्षा । पुत्रीया । पुत्रकाम्या । लोलूया । कण्डूया ॥

## गुरोश्च हलः ॥१०३॥

गुरुमान् यो धातुर्हलन्तस्तस्मात् स्त्रियामकारप्रत्ययः स्यात् ॥ ईहा । ऊहा । कुण्डा । हुण्डा ॥ गुरोः किं । भक्तिः ॥ हलः किं । नीतिः ॥

## षिद्भिदादिभ्यो ऽङ् ॥१०४॥

षकार इत् यस्य धातोस्ततो भिदादिभ्यश्चाङ्प्रत्ययः स्यात् स्त्रियां ॥ त्रपूष् । त्रपा ॥ जृष् । जरा । ऋदृशो ऽङीति गुणः ॥ भिदादिभ्यः । भिदा । छिदा ॥

## चिन्तिपूजिकथिकुम्बिचर्चश्च ॥१०५॥

चिति । पूज । कथ । कुबि । चर्च । इत्येतेभ्यो णिजन्तेभ्यः स्त्रियामङ् स्यात् ॥ चिन्ता ॥ पूजा ॥ कथा ॥ कुम्बा ॥ चर्चा ॥

## आतश्चोपसर्गे ॥१०६॥

आकारान्तेभ्यो धातुभ्य उपसर्ग उपपदे स्त्रियामङ् स्यात् ॥ उपदा । उपधा । अन्तर्धा ॥

## ण्यासश्रन्थो युच् ॥१०७॥

णिजन्तेभ्यः । आस । श्रन्थ । इत्येताभ्यां च युच् स्यात् ॥ अकारस्यापवादः ॥ णि । कारणा । हारणा ॥ आस । आसना ॥ श्रन्थ विमोचने क्र्यादिः । श्रन्थना । संदर्भार्थस्य चुरादेस्तु ण्यन्तत्वादेव सिद्धं ॥

## रोगाख्यायां ण्वुल् बहुलं ॥१०८॥

धातोः स्त्रियां ण्वुल्प्रत्ययः स्यात् । रोगसंज्ञायां ॥ क्तिन्नादीनामपवादः ॥ प्रच्छर्दिका । प्रवाहिका ॥ बहुलग्रहणात् क्वचिन्न भवति । शिरोर्तिः ॥

## संज्ञायां ॥१०९॥

धातोर्ण्वुल् स्यात् संज्ञायां ॥ उद्दालकपुष्पाणि भज्यन्ते ऽस्यामिति । उद्दालकपुष्पभञ्जिका ॥ शालभञ्जिका ॥

## विभाषाख्यानपरिप्रश्नयोरिञ् च ॥११०॥

परिप्रश्न आख्याने च गम्यमाने धातोरिञ्प्रत्ययः स्यात् । चकारात्ण्वुल् ॥

कां कारिमकार्षीः । सर्वां कारिमकार्षं ॥ कां कारिकामकार्षीः । सर्वां कारिकामकार्षं ॥ विभाषाग्रहणात् पक्षे यथाप्राप्तं प्रत्यया भवन्ति । कां क्रियां । कां कृत्यां । कां कृतिं वाकार्षीः । सर्वां क्रियां । सर्वां कृत्यां । सर्वां कृतिमकार्षं ॥ एवं कां याजिं कां याजिकां कां यष्टिमित्यादि ॥

## पर्यायार्हर्णोत्पत्तिषु एवुच् ॥ १११ ॥

पर्यायादिष्वर्थेषु स्त्रियां धातोर्एवुच्प्रत्ययो वा स्यात् ॥ क्तिन्नादीनामपवादः ॥ पर्यायः परिपाटी क्रमः । भवत आसिका । भवतः शायिका ॥ अर्हो योग्यता । अर्हति भवानिक्षुभक्षिकां ॥ ऋणं यत् परस्य धार्यते । इक्षुभक्षिकां मे धारयति ॥ उत्पत्तिर्जन्म । इक्षुभक्षिकोदपादि ॥

## आक्रोशे नञ्यनिः ॥ ११२ ॥

नञ्युपपद आक्रोशे गम्यमाने धातोरनिप्रत्ययः स्यात् स्त्रियां ॥ अजीवनिस्ते शठ भूयात् ॥ अप्रयाणिः ॥ आक्रोशे किं । अकृतिस्तस्य घटस्य ॥ नञि किं । मृतिः ॥

## कृत्यल्युटो बहुलं ॥ ११३ ॥

भावे ऽकर्तरि च कारके स्त्रियामिति च निवृत्तं ॥ कृत्यसंज्ञकाः प्रत्यया ल्युट् च यत्रार्थ उक्तास्ततो ऽन्यत्रापि भवन्ति ॥ भावकर्मणोः कृत्या उक्ताः कारकान्तरे ऽपि भवन्ति । स्नात्यनेन । स्नानीयं चूर्णं । दीयते ऽस्मै । दानीयो विप्रः ॥ ल्युट् करणाधिकरणभावेभ्यो ऽन्यत्रापि भवति । राज्ञा भुज्यन्ते । राजभोजनाः शालयः ॥ बहुलग्रहणादन्ये ऽपि कृतो ऽभिधेयं व्यभिचरन्ति । पादहारकः । गलेचोपकः ॥

## नपुंसके भावे क्तः ॥ ११४ ॥

नपुंसकत्वविशिष्टे भावे धातोः क्तप्रत्ययः स्यात् ॥ हसितं । जल्पितं छात्रस्य ॥

## ल्युट् च ॥ ११५ ॥

नपुंसकत्वविशिष्टे भावे धातोर्ल्युट्प्रत्ययः स्यात् ॥ हसनं । जल्पनं छात्रस्य ॥

## कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखं ॥ ११६ ॥

येन कर्मणा स्पृश्यमानस्य कर्तुः शरीरसुखमुत्पद्यते तस्मिन् कर्मण्युपपदे नपुंसके

भावे धातोर्ल्युट् स्यात् ॥ पूर्वेण सिद्धे नित्यसमासार्थं सूत्रं ॥ पयःपानं सुखं । ओदनभोजनं सुखं ॥ कर्मणि किं । तूलिकाया उत्थानं सुखं ॥ संस्पर्शात् किं । अग्निकुण्डस्योपासनं सुखं ॥ कर्तुः किं । गुरोः स्नापनं सुखं । इह गुरुः कर्म न तु कर्ता ॥ शरीरग्रहणं किं । पुत्रस्य परिष्वञ्जनं सुखं । मानसी प्रीतिरत्र ॥ सुखं किं । कण्टकानां मर्दनं दुःखं ॥

## करणाधिकरणयोश्च ॥११७॥

धातोः करणे ऽधिकरणे च ल्युट् स्यात् ॥ इध्मप्रव्रश्चनः । पलाशशातनः ॥ अधिकरणे । गोदोहनी स्थाली ॥

## पुंसि संज्ञायां घः प्रायेण ॥११८॥

पुंसि ये करणाधिकरणे तयोर्वाच्ययोर्धातोर्घप्रत्ययः स्यात् । समुदायेन यदि संज्ञा गम्यते ॥ दन्ताश्छाद्यन्ते ऽनेन । दन्तच्छदः ॥ आकुर्वन्त्यस्मिन् । आकरः ॥ पुंसि किं । प्रसाधनं ॥ संज्ञायां किं । प्रहरणः ॥ घकारश्छादेर्घे ऽद्व्युपसर्गस्येति विशेषणार्थः ॥ प्रायग्रहणमकार्त्स्न्यार्थं ॥

## गोचरसंचरवहव्रजव्यजापणनिगमाश्च ॥११९॥

गोचर । संचर । वह । व्रज । व्यज । आपण । निगम । इत्येते घप्रत्ययान्ता निपात्यन्ते करणाधिकरणयोः संज्ञायां ॥ चर । गावश्चरन्त्यस्मिन्निति । गोचरो देशः ॥ चर । संचरत्यनेनेति । संचरः ॥ वह । वहः ॥ व्रज । व्रजः ॥ अज । व्यजः ॥ पण । आपणः ॥ गम्लृ । निगमः ॥ चकारो ऽनुक्तसमुच्चयार्थः । कषः । निकषः ॥

## अवे तॄस्त्रोर्घञ् ॥१२०॥

तॄ । स्तॄ । इत्येताभ्यामवशब्द उपपदे करणाधिकरणयोः संज्ञायां घञ्प्रत्ययः स्यात् ॥ अवतारः ॥ अवस्तारः ॥ प्रायग्रहणानुवृत्तेरसंज्ञायामपि भवति । अवतारो नद्याः ॥ घकारः कुत्वार्थः । ञकारो वृद्ध्यर्थः ॥

## हलश्च ॥१२१॥

हलन्ताद्धातोर्घञ् भवति करणाधिकरणयोः पुंसि संज्ञायां ॥ वेदः । अपामार्गः ॥

## अध्यायन्यायोद्यावसंहाराश्च ॥ १२२ ॥

अध्याय । न्याय । उद्याव । संहार । इत्येते घञन्ता निपात्यन्ते ॥ इङ् । अधीयते ऽस्मिन्निति । अध्यायः ॥ णीञ् । नीयन्ते ऽनेनेति । न्यायः ॥ यु । उद्युवन्त्यनेनेति । उद्यावः ॥ हृञ् । संह्रियते ऽनेनेति । संहारः ॥

## उदङ्को ऽनुदके ॥ १२३ ॥

उदङ्क । इत्येतद्घञन्तं निपात्यते ऽनुदकविषयके धात्वर्थे ॥ अञ्चु उत्पूर्वः । तैलोदङ्कः ॥ अनुदके किं । उदकोदञ्चनः ॥

## जालमानायः ॥ १२४ ॥

आनाय । इति निपात्यते जालं चेद्भवति ॥ णीञ् । आनायो मत्स्यानां । करणे घञ् ॥ जालं किं । आनयः ॥

## खनो घ च ॥ १२५ ॥

खन । इत्येतस्मात् करणे ऽधिकरणे च घप्रत्ययो भवति । चकाराद्घञ् ॥ आखनः । आखानः ॥

## ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥ १२६ ॥

ईषत् । दुस् । सु । इत्येतेषु सुखदुःखार्थेपूपपदेषु धातोः खल्प्रत्ययः स्यात् ॥ ईषत्करः कटो भवता ॥ दुष्करः ॥ सुकरः ॥ ईषद्दुःसुषु किं । कृच्छ्रेण कार्यः ॥ कृच्छ्राकृच्छ्रार्थेषु किं । ईषत्कार्यः ॥ खकार उत्तरत्र मुमर्थः । लकारः स्वरार्थः ॥

## कर्तृकर्मणोश्च भूकृञोः ॥ १२७ ॥

भू । डुकृञ् । इत्येताभ्यां यथासंभवं कर्तृकर्मणोरुपपदयोरीषदादिषु चोपपदेषु खल् स्यात् ॥ अनाढ्येन भवता ईषदाढ्येन शक्यं भवितुं । ईषदाढ्यंभवं भवता ॥ दुराढ्यंभवं । स्वाढ्यंभवं ॥ ईषदाढ्यंकरो देवदत्तो भवता । दुराढ्यंकरः । स्वाढ्यंकरः ॥

## आतो युच् ॥ १२८ ॥

आकारान्ताद्धातोरीषदादिषूपपदेषु युच्प्रत्ययः स्यात् ॥ पा । ईषत्पानः सोमो भवता । दुष्पानः । सुपानः ॥

## छन्दसि गत्यर्थेभ्यः ॥१२९॥

गत्यर्थेभ्यो धातुभ्यो वेदे ईषदादिषूपपदेषु युच् स्यात् ॥ षद्लृ । सूपसदनो ऽग्निः । सूपसदनमन्तरिक्षं ॥

## अन्येभ्यो ऽपि दृश्यते ॥१३०॥

गत्यर्थादन्येभ्यो ऽपि धातुभ्यो वेदे युच् स्यात् ॥ विद । सुवेदनामकृणोद्ब्रह्मणो गां ॥ दुह । सुदोहनामकृणोद्ब्रह्मणो गां ॥

## वर्तमानसामीप्ये वर्तमानवद्वा ॥१३१॥

वर्तमानसमीपे भूते भविष्यति च वर्तमानकालोक्ताः प्रत्यया वा भवन्ति ॥ कदागतो ऽसि । अयमागच्छामि । भूते लट् ॥ कदा गमिष्यसि । एष गच्छामि । भविष्यति लट् ॥

## आशंसायां भूतवच्च ॥१३२॥

अप्राप्तप्राप्तीच्छायां भविष्यति काले भूतवद्वर्तमानवच्च प्रत्यया वा भवन्ति ॥ देवश्चेदवर्षीत् । वर्षति । वर्षिष्यति । तर्हि धान्यमवाप्स्म । वपामः । वप्स्यामः ॥ आशंसायां किं । आगमिष्यति ॥

## क्षिप्रवचने लृट् ॥१३३॥

पूर्वसूत्रापवादः ॥ क्षिप्रवाचक उपपद आशंसायां लृट् स्यात् ॥ देवश्चेत् क्षिप्रं वर्षिष्यति । शीघ्रं वप्स्यामः । आशु वप्स्यामः । त्वरितं वप्स्यामः ॥ नेति वक्तव्ये लृड्ग्रहणं लुटो ऽपि विषये यथा स्यात् । श्वः शीघ्रं वप्स्यामः ॥

## आशंसावचने लिङ् ॥१३४॥

भूतवच्चेत्यस्यापवादः ॥ आशंसावाचक उपपदे भविष्यति लिङ् स्यात् ॥ उपाध्यायश्चेदागच्छेदाशंसे ऽधीयीय ॥ क्षिप्रवचने ऽपि परत्वाल्लिङेव । आशंसे क्षिप्रमधीयीय ॥

## नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः ॥१३५॥

क्रियायाः सातत्ये सामीप्ये च लङ्लुटौ न भवतः ॥ यावज्जीवमन्नमदात् । यावज्जीवमन्नं दास्यति ॥ सामीप्यं तुल्यजातीयेनाव्यवधानं । येयं पौर्णमास्यति-

क्रान्ता तस्यामग्नीनाधित । सोमेनायष्ट । येयममावास्यागामिनी तस्यामग्नीनाधास्यते । सोमेन यक्ष्यते ॥ सर्वत्र लुङ्लृटौ भवतः ॥

## भविष्यति मर्यादावचनेऽवरस्मिन् ॥ १३६ ॥

भविष्यति काले मर्यादोक्ताववरस्मिन् प्रविभागेऽनद्यतनवत् प्रत्ययो न भवति ॥ योऽयमध्वा गन्तव्य आ पाटलिपुत्रात् तस्य यदवरं कौशाम्ब्यास्तत्र द्विरोदनं भोक्ष्यामहे । अत्र लुटो निषेधाल्लृड्भवति ॥ भविष्यति किं । तत्र द्विरोदनमभुञ्ज्महि । अत्र लङो निषेधो न भवति ॥ मर्यादावचने किं । योऽयमध्वा गन्तव्यस्तस्य यदवरं कौशाम्ब्यास्तत्र द्विरोदनं भोक्तास्महे ॥ अवरस्मिन् किं । तस्य यत् परं कौशाम्ब्यास्तत्र द्विरोदनं भोक्तास्महे ॥

## कालविभागे चानहोरात्राणां ॥ १३७ ॥

भविष्यति काले मर्यादोक्ताववरस्मिन् कालविभागे सत्यनद्यतनवत् प्रत्ययो न भवति । स विभागोऽहोरात्रसंबन्धी यदि न भवति ॥ योऽयं संवत्सर आगामी तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे ॥ अनहोरात्राणां किं । योऽयं मास आगामी तस्य योऽवरः पञ्चदशरात्रस्तत्राध्येतास्महे ॥ योगविभाग उत्तरार्थः ॥

## परस्मिन् विभाषा ॥ १३८ ॥

अप्राप्तविभाषेयं ॥ भविष्यति काले मर्यादोक्तौ परस्मिन् कालविभागे सत्यनद्यतनवत् प्रत्ययो वा न भवति । न चेदहोरात्रसंबन्धी प्रविभागः ॥ योऽयं संवत्सर आगामी तस्य यत् परमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे । अध्येतास्महे ॥

## लिङ्निमित्ते लृङ् क्रियातिपत्तौ ॥ १३९ ॥

लिङो निमित्तं हेतुहेतुमद्भावादिः । तत्र भविष्यति काले लृङ्प्रत्ययः स्यात् । क्रियाया अनिष्पत्तौ सत्यां ॥ सुवृष्टिश्चेदभविष्यत् तदा सुभिक्षमभविष्यत् । अत्र भविष्यत्सुवृष्टिभवनक्रिया भविष्यत्सुभिक्षभवनक्रियाया हेतुः ॥

## भूते च ॥ १४० ॥

लिङ्निमित्ते सति भूतकालेऽपि लृङ् स्यात् । क्रियाया अनिष्पत्तौ सत्यां ॥

दृष्टो भवतः पुत्रो ऽन्नार्थी दृष्ट एवापरो द्विजो ब्राह्मणार्थी यदि स तेन दृष्टो ऽभविष्यत् । ततो ऽभोक्ष्यत । ननु भुक्तवान् । अन्येन पथा स गतः ॥

## वोताप्योः ॥१४१॥

वा । आ । उताप्योः । इति त्रीणि पदानि ॥ उताप्योः समर्थयोर्लिङिति सूत्रात् प्राग्भूते लिङ्निमित्ते लृङ् वा इत्येतदधिकृतं वेदितव्यं ॥ वक्ष्यति विभाषा कथमि लिङ् चेति । कथं नाम तत्र भवान् वृषलमयाजयिष्यत् ॥ पक्षे यथाप्राप्तं ॥

## गर्हायां लडपिजात्वोः ॥१४२॥

अपि । जातु । इत्येतयोः प्रयोगे कालसामान्ये धातोर्लट् स्यात् । निन्दायां गम्यमानायां ॥ अपि जायां त्यजति । जातु तत्र भवान् वृषलं याजयति । गर्हितमेतत् ॥

## विभाषा कथमि लिङ् च ॥१४३॥

कथं । इत्येतस्य प्रयोगे निन्दायां कालसामान्ये लिङ् वा स्यात् । चकारा-ल्लडपि ॥ तत्र भवान् कथं धर्मं त्यजेत् । तत्र भवान् कथं धर्मं त्यजति ॥ पक्षे कालत्रयोक्ता लकारा भवन्ति । अत्र लिङ्निमित्ते भविष्यति नित्यो लृङ् भूते वा । कथं नाम तत्र भवान् धर्ममत्यक्ष्यत् ॥

## किंवृत्ते लिङ्लृटौ ॥१४४॥

सर्वलकारापवादः ॥ किंवृत्त उपपदे निन्दायां गम्यमानायां धातोर्लिङ्लृटौ भवतः ॥ को हरिं निन्देत् । कतरो हरिं निन्देत् । कतमो हरिं निन्देत् ॥ को हरिं निन्दिष्यति । कतरो हरिं निन्दिष्यति । कतमो हरिं निन्दि-ष्यति ॥ अत्र लिङ्निमित्ते क्रियातिपत्तौ भविष्यति नित्यो लृङ् भूते वा ॥

## अनवक्लृप्त्यमर्षयोरकिंवृत्ते ऽपि ॥१४५॥

सर्वलकारापवादः ॥ अकिंवृत्ते किंवृत्ते चोपपदे ऽसंभावनामर्षयोर्गम्यमानयो-र्लिङ्लृटौ भवतः ॥ न संभावयामि भवान् हरिं निन्देत् । निन्दिष्यति । को हरिं निन्देत् । को हरिं निन्दिष्यति ॥ अमर्षो ऽक्षमा । न मर्षयामि तत्र भवान् वृषलं याजयेत् । याजयिष्यति । कं वृषलं भवान् याजयेत् । याजयिष्यति ॥ अत्र भविष्यति नित्यं लृङ् भूते वा ॥

## किंकिलास्त्यर्थेषु लृट् ॥ १४६ ॥

लिङो ऽपवादः ॥ किंकिल । इत्येतस्मिन्नुपपदे ऽस्त्यर्थेषु चोपपदेष्वसंभावनामर्षयोर्गम्यमानयोर्धातोर्लृट् स्यात् ॥ न संभावयामि न मर्षयामि तत्र भवान् किंकिल वृषलं याजयिष्यति ॥ अस्त्यर्था अस्तिभवतिविद्यतयः । अस्ति तत्र भवान् वृषलं याजयिष्यति । भवति तत्र भवान् वृषलं याजयिष्यति । विद्यते तत्र भवान् वृषलं याजयिष्यति ॥

## जातुयदोर्लिङ् ॥ १४७ ॥

लृटो ऽपवादः ॥ जातु । यद् । इत्येतयोः प्रयोगे ऽसंभावनामर्षयोर्लिङ् स्यात् ॥ जातु तत्र भवान् वृषलं याजयेन्नावकल्पयामि न मर्षयामि । यत् तत्र भवान् वृषलं याजयेन्नावकल्पयामि न मर्षयामि ॥ अत्र भविष्यति नित्यं लृङ् भूते वा ॥

## यच्चयत्रयोः ॥ १४८ ॥

यच्च । यत्र । इत्येतयोः प्रयोगे ऽसंभावनामर्षयोर्लिङ् स्यात् ॥ न श्रद्दधे न मर्षये यच्च तत्र भवान् वृषलं याजयेत् । न श्रद्दधे न मर्षये यत्र तत्र भवान् वृषलं याजयेत् ॥ अत्र भविष्यति नित्यं लृङ् भूते वा ॥

## गर्हायां च ॥ १४९ ॥

सर्वलकारापवादः ॥ यच्च । यत्र । इत्येतयोः प्रयोगे निन्दायां गम्यमानायां धातोर्लिङ् स्यात् ॥ यच्च तत्र भवान् वृषलं याजयेद्गर्हामहे । यत्र तत्र भवान् वृद्धः सन् वृषलं याजयेद्गर्हामहे ॥ अत्र भविष्यति क्रियातिपत्तौ नित्यो लृङ् भूते वा ॥

## चित्रीकरणे च ॥ १५० ॥

सर्वलकारापवादः ॥ यच्च । यत्र । इत्येतयोः प्रयोग आश्चर्ये गम्ये धातोर्लिङ् स्यात् ॥ यच्च तत्र भवान् वृषलं याजयेत् । यत्र तत्र भवान् वृषलं याजयेदाश्चर्यमेतत् ॥ अत्र भविष्यति नित्यं लृङ् भूते वा ॥

## शेषे लृडयदौ ॥ १५१ ॥

सर्वलकारापवादः ॥ यच्चयत्रयोरन्यस्मिन् प्रयुज्यमाने चित्रीकरणे गम्ये लृट्

स्यात् । यदिशब्दप्रयोगे तु न भवति ॥ आश्चर्यमन्धो नाम पुत्रं द्रक्ष्यति । चित्रं बधिरो नाम व्याकरणमध्येष्यते ॥ अयदौ किं । आश्चर्यं यदि सो ऽधीयीत ॥ लिङ्निमित्ताभावादिह लृङ् नास्ति ॥

## उताप्योः समर्थयोर्लिङ् ॥१५२॥

उत । अपि । इत्येतयोः समानार्थकयोः प्रयोगे धातोर्लिङ् स्यात् ॥ उताधीयीत । अप्यधीयीत । बाढमध्येष्यत इत्यर्थः ॥ बाढमित्यर्थे तुल्यार्थावेतौ ॥ समर्थयोः किं । उत दण्डः पतिष्यति । अपिधास्यति द्वारं । प्रश्नः प्रच्छादनं च गम्यते ॥ इतः प्रभृति क्रियातिपत्तौ नित्यो लृङ् ॥

## कामप्रवेदने ऽकच्चिति ॥१५३॥

सर्वलकारापवादः ॥ स्वाभिप्रायप्रकाशने गम्यमाने धातोर्लिङ् स्यात् । कच्चित् । इत्येतत्प्रयोगे तु न भवति ॥ कामो मे भुञ्जीत भवान् ॥ अकच्चिति किं । कच्चिज्जीवति मे माता ॥

## संभावने ऽलमिति चेत् सिद्धाप्रयोगे ॥१५४॥

सर्वलकारापवादः ॥ अलमर्थः प्रौढिः । तद्विषयके संभावने गम्यमाने धातोर्लिङ् स्यात् । सिद्धस्यार्थस्यानुपन्यासे सति ॥ अपि गिरिं शिरसा भिन्द्यात् ॥ संभावने किं । पर्याप्तं भुङ्क्ते ॥ अलमिति किं । विदेशस्थायी देवदत्तः प्रायेण ग्रामं गमिष्यति ॥ सिद्धाप्रयोगे किं । अलं देवदत्तो हस्तिनं हनिष्यति ॥ अत्र क्रियातिपत्तौ भूते भविष्यति च नित्यो लृङ् ॥

## विभाषा धातौ संभावनवचने ऽयदि ॥१५५॥

संभावनार्थे धातावुपपदे धातोर्लिङ् वा स्यात् पूर्वसूत्रविषये । न तु यच्छब्दप्रयोगे ॥ संभावयामि भुञ्जीत भवान् । संभावयामि भोक्ष्यते भवान् ॥ अयदि किं । संभावयामि यद्भुञ्जीत भवान् ॥

## हेतुहेतुमतोर्लिङ् ॥१५६॥

हेतुः कारणं । हेतुमत् फलं ॥ एतौ [illegible] वर्तमानाद्धातोर्लिङ् वा स्यात् ॥ कृष्णं नमेच्चेत् सुखं यायात् । कृष्णं नंस्यति चेत् सुखं यास्यति । अत्र नमनं हेतुः सुखयानं हेतुमत् ॥ अत्र क्रियातिपत्तौ नित्यो लृङ् ॥

## इच्छार्थेषु लिङ्लोटौ ॥ १५७ ॥

सर्वलकारापवादः ॥ इच्छार्थेषु धातुषूपपदेषु धातोर्लिङ्लोटौ भवतः ॥ इच्छामि भुञ्जीत भवान् । इच्छामि भुङ्क्तां भवान् ॥ कामये भुञ्जीत । कामये भुङ्क्तां ॥

## समानकर्तृकेषु तुमुन् ॥ १५८ ॥

समानकर्तृकेष्विच्छार्थेषु धातुषूपपदेषु धातोस्तुमुन्प्रत्ययः स्यात् ॥ इच्छति भोक्तुं । कामये भोक्तुं ॥ समानकर्तृकेषु किं । देवदत्तं भुञ्जानमिच्छति ॥

## लिङ् च ॥ १५९ ॥

समानकर्तृकेष्विच्छार्थेषु धातुषूपपदेषु धातोर्लिङ् स्यात् ॥ भुञ्जीयेतीच्छति ॥ क्रियातिपत्तौ लृङ् ॥

## इच्छार्थेभ्यो विभाषा वर्तमाने ॥ १६० ॥

लटो ऽपवादः ॥ इच्छार्थेभ्यो धातुभ्यो वर्तमाने लिङ् वा स्यात् ॥ इच्छति । इच्छेत् ॥ कामयते । कामयेत ॥

## विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ॥ १६१ ॥

विध्यादिष्वर्थेषु धातोर्लिङ् स्यात् ॥ विधिः प्रेरणं । भवान् ग्रामं गच्छेत् ॥ निमन्त्रणं नियोगकरणं । इह भवान् भुञ्जीत ॥ आमन्त्रणं कामचारकरणं । भवानिहासीत ॥ अधीष्टः सत्कारपूर्वको व्यापारः । भवान् पुत्रमध्यापयेत् ॥ संप्रश्नः संप्रधारणं । किं भो वेदमधीयीय । उत तर्कमधीयीय ॥ प्रार्थनं याच्ञा । भो भोजनं लभेय ॥

## लोट् च ॥ १६२ ॥

विध्यादिष्वर्थेषु धातोर्लोट् स्यात् ॥ विधौ । कटं करोतु भवान् ॥ निमन्त्रणे । इह भुङ्क्तां भवान् ॥ आमन्त्रणे । इहास्तां भवान् ॥ अधीष्टे । पुत्रमध्यापयतु भवान् ॥ संप्रश्ने । किं भो वेदमध्ययै । उत तर्कमध्ययै ॥ प्रार्थने । भो भोजनं लभै ॥

## प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ॥ १६३ ॥

प्रैषः प्रेरणं । अतिसर्गः कामचारानुज्ञा । प्राप्तकालः प्राप्तावसरः । एतेष्वर्थेषु गम्यमानेषु धातोः कृत्यसंज्ञकाः प्रत्यया भवन्ति । चकाराल्लोट् ॥ भवतः कटः कर्तव्यः । करणीयः । कार्यः ॥ करोतु कटं भवान् ॥ लोटा बाधो मा भूदिति पुनर्विधानं ॥

## लिङ् चोर्ध्वमौहूर्तिके ॥१६४॥

प्रैषादिष्वर्थेषु गम्यमानेषूर्ध्वमौहूर्तिके ऽर्थे वर्तमानाद्धातोर्लिङ् भवति । चकाराद्यथाप्राप्तमपि भवति ॥ प्रेषितो ऽतिसृष्टः प्राप्तकालो वा भवान् कटं कुर्यात् । कटं करोतु । कटः कर्तव्यो भवता ॥

## स्मे लोट् ॥१६५॥

लिङः कृत्यानां चापवादः ॥ प्रैषादिष्वर्थेषु गम्यमानेषु स्मशब्द उपपद ऊर्ध्वमौहूर्तिके ऽर्थे वर्तमानाद्धातोर्लोट् स्यात् ॥ प्रेषितो ऽतिसृष्टः प्राप्तसमयो वा भवान् कटं करोतु स्म ॥

## अधीष्टे च ॥१६६॥

लिङो ऽपवादः ॥ सत्कारपूर्वकव्यापारे गम्यमाने स्मशब्द उपपदे लोट् स्यात् ॥ राजन् माणवकमध्यापय स्म ॥

## कालसमयवेलासु तुमुन् ॥१६७॥

कालः । समयः । वेला । इत्येतेषूपपदेषु धातोस्तुमुन्प्रत्ययः स्यात् ॥ कालो भोक्तुं । समयो भोक्तुं । वेला भोक्तुं ॥

## लिङ् यदि ॥१६८॥

यच्छब्दप्रयोगे कालसमयवेलासूपपदेषु धातोर्लिङ् स्यात् ॥ कालो यद्भुञ्जीत भवान् । समयो यद्भुञ्जीत भवान् । वेला यद्भुञ्जीत भवान् ॥

## अर्हे कृत्यतृचश्च ॥१६९॥

योग्ये गम्यमाने धातोः कृत्यतृच्प्रत्ययाः स्यात् । चकाराल्लिङ् ॥ कन्या वोढव्या । वहनीया । वाह्या ॥ भवान् कन्यां वोढा ॥ भवान् कन्यां वहेत् ॥

## आवश्यकाधमर्ण्ययोर्णिनिः ॥ १७० ॥

आवश्यक आधमर्ण्ये च गम्यमाने धातोर्णिनिः स्यात् ॥ अवश्यं कारी ॥ आधमर्ण्ये । शतं दायी ॥

## कृत्याश्च ॥ १७१ ॥

आवश्यकाधमर्ण्ययोर्गम्यमानयोर्धातोः कृत्यसंज्ञकाः प्रत्यया भवन्ति ॥ अवश्यं कटः कर्तव्यः । करणीयः । कार्यः ॥ आधमर्ण्ये । शतं दातव्यं ॥

## शकि लिङ् च ॥ १७२ ॥

शक्तौ गम्यमानायां धातोर्लिङ् स्यात् । चकारात् कृत्याः ॥ भवान् भारं वहेत् ॥ भवता भारो वोढव्यः । वहनीयः ॥ लिङा बाधो मा भूदिति पुनर्विधिः ॥

## आशिषि लिङ्लोटौ ॥ १७३ ॥

आशीर्वादे ऽर्थे धातोर्लिङ्लोटौ भवतः ॥ चिरं जीव्याद्भवान् ॥ चिरं जीवतु भवान् ॥

## क्तिच्क्तौ च संज्ञायां ॥ १७४ ॥

आशीर्विषये धातोः क्तिच् । क्त । इत्येतौ प्रत्ययौ भवतः । समुदायेन चेत् संज्ञा गम्यते ॥ भवतात् । भूतिः । सनुतात् । सातिः । तनुतात् । तन्तिः ॥ देवा एनं देयासुः । देवदत्तः ॥ क्तिचा बाधो मा भूदिति पुनः क्तविधिः ॥

## माङि लुङ् ॥ १७५ ॥

माङ्युपपदे धातोर्लुङ् स्यात् ॥ मा भवान् कार्षीत् । मा भूत् ॥ कथं मा भवत्विति । निषेधार्थो माशब्दो ऽयं । न तु माङ् ॥

## स्मोत्तरे लङ् च ॥ १७६ ॥

स्मोत्तरे माङ्युपपदे धातोर्लङ् स्यात् । चकाराल्लुङ् ॥ मास्म करोत् । मास्म भवत् ॥ मास्म कार्षीत् । मास्म भूत् ॥

॥ इति सूत्रपाठे तृतीयाध्यायस्य तृतीयः पादः ॥

---

## धातुसंबन्धे प्रत्ययाः ॥१॥

धात्वर्थानां संबन्धे यत्र काले प्रत्यया उक्तास्ततो ऽन्यत्रापि भवन्ति ॥ तिङ्-न्तवाच्यक्रियायाः प्राधान्यात् तदनुरोधेन गुणभूतक्रियावाचिभ्यः प्रत्ययाः । वसन् ददर्श । भूते लट् ॥ अग्निष्टोमयाज्यस्य पुत्रो जनिता ॥ पुनः प्रत्यय-ग्रहणमधातुप्रत्ययसंग्रहार्थं । गोमानासीत् । गोमान् भविता । प्रकृत्यर्थस्य भूतत्वे भविष्यत्त्वे च मतुप् ॥

## क्रियासमभिहारे लोट् । लोटो हिस्वौ वा च तध्वमोः ॥२॥

पौनःपुन्ये भृशार्थे च द्योत्ये धातोर्लोट् स्यात् । तस्य च लोटस्तिङामप-वादौ तिङ्संज्ञौ क्रमेण परस्मैपदात्मनेपदसंज्ञौ हि । स्व । इत्येतावादेशौ भवतः । तध्वमोर्विषये तु हिस्वौ वा भवतः ॥ पुरुषसंज्ञैकवचनसंज्ञा च ना-नयोर्भवति हिस्वादेशविधानसामर्थ्यात् । तेन सर्वपुरुषवचनविषये परस्मैपदिभ्यो धातुभ्यो हिः कर्तरि । आत्मनेपदिभ्यः स्वो भावकर्मकर्तृषु ॥ लुनीहि लुनी-हीत्येवायं लुनाति । इमौ लुनीतः । इमे लुनन्ति । त्वं लुनासि । युवां लुनीथः । यूयं लुनीथ । पक्षे लुनीत लुनीतेत्येव यूयं लुनीथ । लुनीहि लुनीहीत्येवाहं लुनामि । आवां लुनीवः । वयं लुनीमः ॥ भूते । लुनीहि लुनीहीत्येवायमलावीत् । इत्यादि ॥ भविष्यति । लुनीहि लुनीहीत्येवायं लविष्यति । इत्यादि ॥ अधीष्वाधीष्वेत्येवायमधीते । इमावधीयाते । इमे ऽधीयते । अधीष्वाधीष्वेत्येव त्वमधीषे । युवामधीयाथे । यूयमधीध्वे । पक्षे ऽधीध्वमधीध्वमिति यूयमधीध्वे । अधीष्वाधीष्वेत्येवाहमधीये । आवामधीवहे । वय-मधीमहे ॥ एवं सर्वकालेषूदाहार्यं ॥

## समुच्चये ऽन्यतरस्यां ॥३॥

अनेकक्रियासमुच्चये द्योत्ये समुच्चीयमानक्रियावचनाद्धातोर्वा लोट् स्यात् । तस्य च हिस्वावादेशौ भवतः । तध्वमोर्विषये तु वा भवतः ॥ ओदनं भुङ्क्ष्व सक्तून् पिबेत्येवायमभ्यवहरति । सक्तून् पिब धानाः खादेत्येवायमभ्यवहरति । अन्नं भुङ्क्ष्व दाधिकमास्वादस्वेत्यभ्यवहरते ॥ तध्वमोस्तु पक्षे । पिबत खादतेत्येव यूयमभ्यवहरत । भुङ्ग्ध्वमास्वादध्वमित्येव यूयमभ्यवहरध्वे ॥ लोटो ऽभावे सक्तून् पिबति । धानाः खादति । अन्नं भुङ्क्ते । दाधिकमास्वादते ॥

## यथाविध्यनुप्रयोगः पूर्वस्मिन् ॥ ४ ॥

प्रथमे लोटो विधाने लोट्प्रकृतिभूत एव धातुरनुप्रयोक्तव्यः । न त्वन्यः ॥ लुनीहि लुनीहीत्येवायं लुनाति । छिनत्तीति नानुप्रयुज्यते । अधीष्वाधीष्वेत्येवायमधीते । पठतीति नानुप्रयुज्यते ॥

## समुच्चये सामान्यवचनस्य ॥ ५ ॥

द्वितीये लोटो विधाने सामान्यार्थस्य धातोरनुप्रयोगः कर्तव्यः ॥ सक्तून् पिव धानाः खादेत्येवायमभ्यवहरति ॥

## छन्दसि लुङ्लङ्लिटः ॥ ६ ॥

धात्वर्थानां संबन्धे वेदे लुङ् । लङ् । लिट् । इत्येते प्रत्यया वा भवन्ति ॥ लुङ् । शकलाङ्गुष्ठको ऽकरत् ॥ लङ् । अग्निमद्य होतारमवृणीतायं यजमानः ॥ लिट् । अद्य ममार । अद्य म्रियते ॥

## लिङर्थे लेट् ॥ ७ ॥

लिङो ये ऽर्थास्तेष्वर्थेषु वेदे लेड्वा स्यात् ॥ जोषिषत् । तारिषत् । मन्दिषत् । नेता नेषत् । कवयस्तक्षिषत् । यत् पताति विद्युत् । उदधिं च्यावयाति ॥

## उपसंवादाशङ्कयोश्च ॥ ८ ॥

उपसंवादः परिभाषणं कर्तव्ये पणबन्धः । आशङ्का तर्कः । एतयोरर्थयोर्गम्यमानयोर्वेदे लेट् स्यात् ॥ उपसंवादे । अहमेव पशूनामीशै । मदग्ना एव वो ग्रहा गृह्यान्तै ॥ आशङ्कायां । नेज्जिह्मायन्तो नरकं पताम ॥

## तुमर्थे सेसेनसेऽसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः ॥ ९ ॥

तुमर्थो भावः । तत्रार्थे छन्दसि से । इत्येवमादयः प्रत्यया धातोर्भवन्ति ॥ से । सेन् । वक्षे रायस्ता वा नेषे रयीनां । स्वरे भेदः ॥ असे । असेन् । क्रत्वे दक्षाय जीवसे । स्वरे भेदः ॥ क्से । कसेन् । प्रेषे भगाय । श्रियसे ॥ अध्यै । अध्यैन् । काममुपचरध्यै । स्वरे विशेषः ॥ कध्यै । कध्यैन् । इन्द्राग्नी आहुवध्यै । श्रियध्यै ॥ शध्यै । शध्यैन् । पिबध्यै । सह मादयध्यै ॥ तवै ।

सोममिन्द्राय यातवै ॥ तवेङ् । दशमे मासि सूतवे ॥ तवेन् । सुवद्देवेषु गन्तवे । कर्तवे । हर्तवे ॥

## प्रयै रोहिष्यै अव्यथिष्यै ॥१०॥

एते शब्दास्तुमर्थे छन्दसि निपात्यन्ते ॥ या प्रपूर्वः । प्रयै देवेभ्यो हविः । कैप्रत्ययः ॥ रुह । प्रयातुं रोहिष्यै । इष्यैप्रत्ययः ॥ व्यथ नञ्पूर्वः । अव्यथिष्यै । इष्यैप्रत्ययः ॥

## दृशे विख्ये च ॥११॥

दृशे । विख्ये । इत्येतौ तुमर्थे छन्दसि निपात्येते ॥ दृशिर् । दृशे विश्वाय सूर्यं ॥ ख्या । विख्ये ऽन्वाहरामि ॥

## शकि णमुल्कमुलौ ॥१२॥

शक्नोतावुपपदे छन्दसि तुमर्थे धातोर्णमुल् । कमुल् । इत्येतौ प्रत्ययौ भवतः ॥ अग्निं वै देवा विभाजं नाशक्नुवन् । विभक्तुमित्यर्थः ॥ अपलुपं नाशक्नुवन् । अपलोप्तुमित्यर्थः ॥

## ईश्वरे तोसुन्कसुनौ ॥१३॥

ईश्वरशब्द उपपदे छन्दसि तुमर्थे धातोस्तोसुन् । कसुन् । इत्येतौ प्रत्ययौ भवतः ॥ ईश्वरो ऽभिचरितोः । अभिचरितुमित्यर्थः ॥ ईश्वरो विलिखः । विलेखितुमित्यर्थः ॥

## कृत्यार्थे तवैकेन्केन्यत्वनः ॥१४॥

तवै । केन् । केन्य । त्वन् । इत्येते प्रत्यया धातोश्छन्दसि भावे कर्मणि चार्थे भवन्ति ॥ अन्वेतवै ॥ अवगाहे ॥ दिदृक्षेण्यः ॥ कर्त्वं हविः ॥

## अवचक्षे च ॥१५॥

अवचक्षे । इत्येतच्छन्दसि कृत्यार्थ एशप्रत्ययान्तं निपात्यते ॥ चक्षिङ् अवपूर्वः । नावचक्षे । नावख्यातव्यमित्यर्थः ॥

## भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् ॥१६॥

ष्ठा । इण् । डुकृञ् । वद । चर । हु । तमु । जनी । इत्येतेभ्यो भावलक्षणे वर्तमानेभ्यश्छन्दसि तुमर्थे तोसुन् भवति ॥ आ संस्थातोरन्तर्वेद्यां सीदन्ति । आ समाप्तेः सीदन्तीत्यर्थः ॥ पुरा सूर्यस्योदेतोराधेयः ॥ पुरा वत्सानामपाकर्तोरास्ते ॥ पुरा प्रवदितोरग्नौ होतव्यं ॥ पुरा प्रचरितोराग्नीध्रीये होतव्यं ॥ आ होतोरप्रमत्तस्तिष्ठति ॥ आ तमितोस्तिष्ठति ॥ आ जनितोः संभवामः ॥

## सृपितृदोः कसुन् ॥ १७ ॥

सृप्लृ । उतृदिर् । इत्येताभ्यां भावलक्षणे वर्तमानाभ्यां छन्दसि तुमर्थे कसुन् भवति ॥ पुरा क्रूरस्य विसृपो विरप्शिन् ॥ पुरा जत्रुभ्य आतृदः ॥

## अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ॥ १८ ॥

अलं । खलु । इत्येतयोः प्रतिषेधवाचिनोरुपपदयोर्धातोः क्त्वाप्रत्ययः स्यात् ॥ अलं कृत्वा ॥ खलु कृत्वा ॥ अलंखल्वोः किं । मा कार्षीत् ॥ प्रतिषेधयोः किं । अलंकारः ॥ प्राचां ग्रहणं पूजार्थं ॥

## उदीचां माङो व्यतीहारे ॥ १९ ॥

मेङ् । इत्येतस्माद्धातोर्व्यतिहारे ऽर्थे वर्तमानात् क्त्वा वा स्यात् ॥ अपमित्य याचते ॥ उदीचां ग्रहणाद्यथाप्राप्तमपि । याचित्वापमयते ॥

## परावरयोगे च ॥ २० ॥

परेण पूर्वस्य योगे ऽवरेण च परस्य योगे गम्यमाने धातोः क्त्वा स्यात् ॥ अप्राप्य नदीं पर्वतः । परनदीयोगो ऽत्र पर्वतस्य ॥ अतिक्रम्य पर्वतं नदी । अवरपर्वतयोगो ऽत्र नद्याः ॥

## समानकर्तृकयोः पूर्वकाले ॥ २१ ॥

एककर्तृकयोर्धात्वर्थयोः सतोः पूर्वकालिकक्रियावृत्तेर्धातोः क्त्वा स्यात् ॥ भुक्त्वा व्रजति । पीत्वा व्रजति ॥ द्विवचनमविवक्षितं । स्नात्वा भुक्त्वा पीत्वा व्रजति ॥ समानकर्तृकयोः किं । भुक्तवति ब्राह्मणे व्रजति देवदत्तः ॥ पूर्वकाले किं । व्रजति च जल्पति च ॥

## आभीक्ष्ण्ये णमुल् च ॥ २२ ॥

क्रियायाः पौनःपुन्ये द्योत्ये धातोर्णमुल् स्यात् । चकारात् क्त्वापि ॥ भोजं भोजं व्रजति । भुक्त्वा भुक्त्वा व्रजति । पायं पायं व्रजति । पीत्वा पीत्वा व्रजति ॥

## न यद्यनाकाङ्क्षे ॥२३॥

यच्छब्द उपपदे पूर्वकाले क्त्वाणमुलौ न भवतः । यत्र पूर्वोत्तरे क्रिये तद्वाक्यं नापरमाकाङ्क्षते चेत् ॥ यदयं भुङ्क्ते ततः पठति ॥ अनाकाङ्क्षे किं । यदयं भुक्त्वा व्रजति ततो ऽधीते ॥

## विभाषाग्रेप्रथमपूर्वेषु ॥२४॥

अग्रे । प्रथम । पूर्व । इत्येतेषूपपदेष्वेककर्तृकयोर्धात्वर्थयोः पूर्वकाले क्त्वाणमुलौ वा भवतः ॥ अग्रे भोजं व्रजति । अग्रे भुक्त्वा व्रजति ॥ प्रथमं भोजं व्रजति । प्रथमं भुक्त्वा व्रजति ॥ पूर्वं भोजं व्रजति । पूर्वं भुक्त्वा व्रजति ॥ पक्षे लडादयः । अग्रे भुङ्क्ते ततो व्रजति ॥ आभीक्ष्ण्ये तु पूर्वविप्रतिषेधान्नित्यमेव । अग्रे भोजं भोजं व्रजति । अग्रे भुक्त्वा भुक्त्वा व्रजति ॥

## कर्मण्याक्रोशे कृञः खमुञ् ॥२५॥

डुकृञ् । इत्येतस्मात् कर्मण्युपपदे खमुञ् स्यात् । आक्रोशे गम्यमाने ॥ चौरंकारमाक्रोशति । चौरो ऽसीत्याक्रोशनमात्रं न त्वसौ चौरः ॥

## स्वादुमि णमुल् ॥२६॥

डुकृञ् । इत्येतस्मात् स्वाद्वर्थेषूपपदेषु समानकर्तृकयोः पूर्वकाले णमुल् स्यात् ॥ स्वादुंकारं भुङ्क्ते । अस्वादीं स्वादीं कृत्वा भुङ्क्ते स्वादुंकारं भुङ्क्ते । संपन्नंकारं भुङ्क्ते ॥ वाग्रहणात् क्त्वापि । स्वादुं कृत्वा भुङ्क्ते । स्वादीं कृत्वा भुङ्क्ते ॥

स्यात् । सिद्धाप्रयोगश्चेत् करोतिः ॥ यथाकारमहं भोक्ष्ये । तथाकारमहं भोक्ष्ये किं तवानेन ॥ असूयाप्रतिवचने किं । यथा कृत्वाहं भोक्ष्ये । तथा कृत्वा द्रक्ष्यसि ॥

## कर्मणि दृशिविदोः साकल्ये ॥ २९ ॥

दृशिर् । विद ज्ञाने । इत्येताभ्यां कर्मण्युपपदे साकल्ये गम्यमाने णमुल् स्यात् ॥ कन्यादर्शं वरयति । सर्वाः कन्या वरयतीत्यर्थः ॥ ब्राह्मणवेदं भोजयति । यं यं ब्राह्मणं जानाति तं सर्वं भोजयतीत्यर्थः ॥ साकल्ये किं । ब्राह्मणं दृष्ट्वा भोजयति ॥

## यावति विन्दजीवोः ॥ ३० ॥

विद्लृ । जीव । इत्येताभ्यां यावच्छब्द उपपदे णमुल् स्यात् ॥ यावद्वेदं भुङ्क्ते । यावल्लभते तावदित्यर्थः ॥ यावज्जीवमधीते विप्रः ॥

## चर्मोदरयोः पूरेः ॥ ३१ ॥

पूरी । इत्येतस्माण्ण्यन्ताच्चर्मोदरयोः कर्मणोरुपपदयोर्णमुल् स्यात् ॥ चर्मपूरं स्तृणाति । उदरपूरं भुङ्क्ते ॥

## वर्षप्रमाण ऊलोपश्चास्यान्यतरस्यां ॥ ३२ ॥

पूरी । इत्येतस्माद्वृष्टिप्रमाणे गम्यमाने णमुल् स्यात् । पूरी । इत्येतस्योकारलोपश्च वा भवति ॥ गोष्पदपूरं वृष्टो देवः । गोष्पदप्रं वृष्टो देवः ॥ अस्येति किं । उपपदस्य मा भूत् । मूषिकाविलप्रं वृष्टो देवः ॥

## चेले क्नोपेः ॥ ३३ ॥

क्नूयी । इत्येतस्माण्ण्यन्ताच्चेलार्थेषु कर्मसूपपदेषु वृष्टिप्रमाणे गम्ये णमुल् स्यात् ॥ चेलक्नोपं वृष्टो देवः । वस्त्रक्नोपं ॥

## निमूलसमूलयोः कषः ॥ ३४ ॥

कषे । इत्येतस्मान्निमूलसमूलयोः कर्मणोरुपपदयोर्णमुल् स्यात् ॥ निमूलकाषं कषति । समूलकाषं कषति । निमूलं समूलं कषतीत्यर्थः ॥ इतः प्रभृति णमुल्विधौ यथाविध्यनुप्रयोगः कषादीनां बोध्यः ॥

## शुष्कचूर्णरूक्षेषु पिषः ॥ ३५ ॥

पिष्लृ । इत्येतस्माच्छुष्क । चूर्ण । रूक्ष । इत्येतेषु कर्मसूपपदेषु णमुल् स्यात् ॥ शुष्कपेषं पिनष्टि । चूर्णपेषं पिनष्टि । रूक्षपेषं पिनष्टि ।

## समूलाकृतजीवेषु हनकृञ्ग्रहः ॥३६॥

हन । डुकृञ् । ग्रह । इत्येतेभ्यो धातुभ्यः क्रमेण समूल । अकृत । जीव । इत्येतेषु कर्मसूपपदेषु णमुल् स्यात् ॥ समूलघातं हन्ति । अकृतकारं करोति । जीवग्राहं गृह्णाति ॥

## करणे हनः ॥३७॥

हन । इत्येतस्मात् करण उपपदे णमुल् स्यात् ॥ पाणिघातं हन्ति भूमिं । पद्घातं । पाणिपद्भ्यां हन्तीत्यर्थः ॥

## स्नेहने पिषः ॥३८॥

पिष्लृ । इत्येतस्मात् स्नेहवाचिनि करण उपपदे णमुल् स्यात् ॥ उदपेषं पिनष्टि । तैलपेषं पिनष्टि ॥

## हस्ते वर्तिग्रहोः ॥३९॥

वृतु । ग्रह । इत्येताभ्यां हस्तवाचिनि करण उपपदे णमुल् स्यात् ॥ वृतु । णिच् । एतेन वर्तयति । हस्तवर्तं वर्तयति ॥ करवर्तं वर्तयति ॥ हस्तग्राहं गृह्णाति । करग्राहं ॥

## स्वे पुषः ॥४०॥

पुष । इत्येतस्मात् स्ववाचिनि करण उपपदे णमुल् स्यात् ॥ स्वपोषं पुष्णाति । गोपोषं । धनपोषं । मातृपोषं पुष्यति ॥

## अधिकरणे बन्धः ॥४१॥

बन्ध । इत्येतस्मादधिकरण उपपदे णमुल् स्यात् ॥ चक्रबन्धं बध्नाति । कूटबन्धं । मुष्टिबन्धं ॥

## संज्ञायां ॥४२॥

बन्ध । इत्येतस्मात् संज्ञायां विषये णमुल् स्यात् ॥ क्रौञ्चबन्धं बद्धः । चण्डालिकाबन्धं । मयूरिकाबन्धं । अट्टालिकाबन्धं ॥ बन्धविशेषाणां संज्ञा एताः ॥

## कर्त्रोर्जीवपुरुषयोर्नशिवहोः ॥ ४३ ॥

णश । वह । इत्येताभ्यां क्रमेण जीवपुरुषयोः कर्तृवाचिनोरुपपदयोर्णमुल् स्यात् ॥ जीवनाशं नश्यति ॥ पुरुषवाहं वहति ॥ कर्त्रोः किं । जीवेन नष्टः । पुरुषेण वोढः ॥

## ऊर्ध्वे शुषिपूरोः ॥ ४४ ॥

शुष । पूरी । इत्येताभ्यामूर्ध्वशब्दे कर्तृवाचिन्युपपदे णमुल् स्यात् ॥ ऊर्ध्वशोषं शुष्यति ॥ ऊर्ध्वपूरं पूर्यते ॥

## उपमाने कर्मणि च ॥ ४५ ॥

उपमानवाचिनि कर्मणि कर्तरि चोपपदे धातोर्णमुल् स्यात् ॥ घृतनिधायं निहितः । घृतमिव निहित इत्यर्थः ॥ कर्तरि । अजनाशं नष्टः । अज इव नष्ट इत्यर्थः ॥

## कषादिषु यथाविध्यनुप्रयोगः ॥ ४६ ॥

निमूलसमूलयोः कषः । इत्यादिनात्र ये पूर्वमुक्तास्ते कषादयः । तत्र यस्माद्धातोर्णमुलुक्तः स एव धातुरनुप्रयोक्तव्यः ॥ निमूलकाषं कषति । इत्याद्युदाहृतं ॥

## उपदंशस्तृतीयायां ॥ ४७ ॥

दंश । इत्येतस्मादुपपूर्वात् तृतीयान्त उपपदे णमुल् स्यात् ॥ मूलकेनोपदंशं भुङ्क्ते । मूलकोपदंशं भुङ्क्ते । तृतीयाप्रभृतीनीति समासविकल्पः ॥ वासरूपेण क्त्वापि । मूलकेनोपदश्य भुङ्क्ते ॥ मूलकं चोपदशेः कर्म । भुजेस्तु करणं ॥

## हिंसार्थानां च समानकर्मकाणां ॥ ४८ ॥

अनुप्रयुज्यमानधातुना तुल्यकर्मकेभ्यो हिंसार्थेभ्यो धातुभ्यस्तृतीयान्त उपपदे णमुल् स्यात् ॥ दण्डोपघातं गाः कलयति । दण्डेनोपघातं ॥ समानकर्मकाणां किं । दण्डेनाहत्य चौरं गोपालो गाः कलयति ॥

## सप्तम्यां चोपपीडरुधकर्षः ॥ ४९ ॥

पीड । रुधिर् । कृष । इत्येतेभ्य उपपूर्वकेभ्यः सप्तम्यन्ते तृतीयान्ते चोपपदे णमुल् स्यात् ॥ पार्श्वोपपीडं शेते । पार्श्वयोरुपपीडं । पार्श्वाभ्यामुपपीडं ॥ व्रजोपरोधं गाः स्थापयति । व्रज उपरोधं । व्रजेनोपरोधं ॥ पाण्युपकर्षं धानाः संगृह्णाति । पाणावुपकर्षं । पाणिनोपकर्षं ॥

## समासत्तौ ॥५०॥

संनिकर्षे गम्यमाने सप्तम्यन्ते तृतीयान्ते चोपपदे धातोर्णमुल् स्यात् ॥ केशग्राहं युध्यन्ते । केशेषु ग्राहं । केशैर्ग्राहं ॥

## प्रमाणे च ॥५१॥

दैर्घ्ये गम्यमाने सप्तम्यन्ते तृतीयान्ते चोपपदे धातोर्णमुल् स्यात् ॥ द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति । द्व्यङ्गुल उत्कर्षं । द्व्यङ्गुलेनोत्कर्षं ॥ एवं त्र्यङ्गुलोत्कर्षमित्यादि ॥

## अपादाने परीप्सायां ॥५२॥

त्वरायां गम्यमानायामपादान उपपदे धातोर्णमुल् स्यात् ॥ शय्योत्थायं धावति । शय्याया उत्थायं ॥ शीघ्रतावशादवश्यकर्तव्यमपि किंचिन्नापेक्षते । उत्थानमात्रमादियत इत्यर्थः ॥

## द्वितीयायां च ॥५३॥

त्वरायां गम्यमानायां द्वितीयान्ते चोपपदे धातोर्णमुल् स्यात् ॥ यष्टिग्राहं युध्यन्ते । यष्टिं ग्राहं ॥ युद्धोपयोगिखड्गादीननपेक्ष्य शीघ्रतावशाद्यष्ट्यादिना युध्यन्त इत्यर्थः ॥

## स्वाङ्गेऽध्रुवे ॥५४॥

अध्रुवस्वाङ्गवाचिनि द्वितीयान्त उपपदे धातोर्णमुल् स्यात् ॥ अक्षिनिकाणं जल्पति । निकाणमक्षि जल्पति । भ्रूविक्षेपं कथयति । भ्रुवं विक्षेपं कथयति ॥ अध्रुवं किं । शिर उत्क्षिप्य कथयति ॥ यस्मिन्नङ्गे छिन्ने प्राणी न म्रियते तदध्रुवं ॥

## परिक्लिश्यमाने च ॥५५॥

पीडितस्वाङ्गवाचिनि द्वितीयान्त उपपदे धातोर्णमुल् स्यात् ॥ उरःप्रतिपेषं

युध्यन्ते । कृत्स्नमुरः पीडयन्तो युध्यन्त इत्यर्थः ॥ ध्रुवत्वात् पूर्वसूत्रेण न सिध्यति ॥

## विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ॥ ५६ ॥

विश । पत्लृ । पद । स्कन्दिर् । इत्येतेभ्यो द्वितीयान्त उपपदे णमुल् स्यात् । व्याप्यमान आसेव्यमाने चार्थे गम्ये ॥ गेहादिद्रव्याणां विश्यादिक्रियाभिः साकल्येन संबन्धो व्याप्तिः । क्रियायाः पौनःपुन्यमासेवा ॥ गेहानुप्रवेशमास्ते । गेहं गेहमनुप्रवेशं । गेहमनुप्रवेशमनुप्रवेशं ॥ गेहानुप्रपातं । गेहं गेहमनुप्रपातं । गेहमनुप्रपातमनुप्रपातं ॥ गेहानुप्रपादं । गेहं गेहमनुप्रपादं । गेहमनुप्रपादमनुप्रपादं ॥ गेहानुस्कन्दं । गेहं गेहमनुस्कन्दं । गेहमनुस्कन्दमनुस्कन्दं ॥ नित्यवीप्सयोरिति द्वित्वं न भवति । समासेन स्वभावतस्तयोरुक्तत्वात् । असमासे तु गेहस्य णमुलन्तस्य च पर्यायेण द्वित्वं ॥

## अस्यतितृषोः क्रियान्तरे कालेषु ॥ ५७ ॥

असु । ञितृष् । इत्येताभ्यां क्रियाव्यवधायके ऽर्थे वर्तमानाभ्यां कालवाचिषु द्वितीयान्तेषूपपदेषु णमुल् स्यात् ॥ द्व्यहात्यासं गाः पाययति । द्व्यहमत्यासं ॥ द्व्यहतर्षं गाः पाययति । द्व्यहं तर्षं ॥ अद्य पाययित्वा द्व्यहमतिक्रम्य पाययतीत्यर्थः ॥ अस्यतितृषोः किं । द्व्यहमुपोष्य भुङ्क्ते ॥ क्रियान्तरे किं । अहरत्यस्येषून् गतः ॥ कालेषु किं । योजनमत्यस्य गाः पाययति ॥

## नाम्न्यादिशिग्रहोः ॥ ५८ ॥

आदिश । ग्रह । इत्येताभ्यां नामन् । इत्येतस्मिन् द्वितीयान्त उपपदे णमुल् स्यात् ॥ दिश आङ्पूर्वः । नामादेशमाचष्टे ॥ नामग्राहमाह्वयति ॥

## अव्यये ऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ॥ ५९ ॥

डुकृञ् । इत्येतस्मादव्यय उपपदे ऽयथाभिलषितार्थाख्याने गम्ये क्त्वाणमुलौ भवतः ॥ ब्राह्मण पुत्रस्ते जातः । किं तर्हि वृषल नीचैःकृत्याचक्षे । नीचैः कृत्वा । नीचैःकारं । उच्चैर्नाम प्रियमाख्येयं ॥ कन्या ते जाता । किं तर्ह्युच्चैःकृत्याचक्षे । उच्चैः कृत्वा । उच्चैःकारं । नीचैर्नामाप्रियमाख्येयं ॥ अयथाभिप्रेताख्याने किं । उच्चैःकृत्याचक्षे पुत्रस्ते जातः ॥

## तिर्यच्यपवर्गे ॥ ६० ॥

डुकृञ् । इत्येतस्मात् तिर्यक्शब्द उपपदे क्त्वाणमुलौ भवतः । समाप्तौ गम्यमानायां ॥ तिर्यक्कृत्य गतः । तिर्यक्कारं । समाप्य गत इत्यर्थः ॥ अपवर्गे किं । तिर्यक् कृत्वा काष्ठं गतः ॥

## स्वाङ्गे तस्प्रत्यये कृभ्वोः ॥ ६१ ॥

डुकृञ् । भू । इत्येताभ्यां तस्प्रत्ययान्ते स्वाङ्गवाचक उपपदे क्त्वाणमुलौ भवतः ॥ मुखतःकृत्य गतः । मुखतः कृत्वा गतः । मुखतःकारं ॥ पृष्ठतोभूय तिष्ठति । पृष्ठतो भूत्वा । पृष्ठतोभावं ॥ स्वाङ्गे किं । सर्वतः कृत्वा गतः ॥ तसिति किं । मुखीभूय गतः ॥ प्रत्यये किं । मुखे तस्यतीति मुखतः । मुखतः कृत्वा गतः ॥

## नाधार्थप्रत्यये च्व्यर्थे ॥ ६२ ॥

डुकृञ् । भू । इत्येताभ्यां नार्थप्रत्ययान्ते धार्थप्रत्ययान्ते च च्व्यर्थक उपपदे क्त्वाणमुलौ भवतः ॥ अनाना नाना कृत्वा गतः । नानाकृत्य गतः । नानाकारं ॥ विनाभूय । विना भूत्वा । विनाभावं ॥ धार्थे । द्विधाकृत्य । द्विधा कृत्वा । द्विधाकारं । द्वैधंकृत्य । द्वैधं कृत्वा । द्वैधंकारं ॥ द्विधाभूय । द्विधा भूत्वा । द्विधाभावं ॥ प्रत्ययग्रहणं किं । हिरुक् कृत्वा । पृथग्भूत्वा ॥ च्व्यर्थ इति किं । नाना कृत्वा ॥

## तूष्णीमि भुवः ॥ ६३ ॥

भू । इत्येतस्मात् तूष्णींशब्द उपपदे क्त्वाणमुलौ भवतः ॥ तूष्णींभूय तिष्ठति । तूष्णीं भूत्वा । तूष्णींभावं ॥ भूग्रहणं कृञो निवृत्त्यर्थं ॥

## अन्वच्यानुलोम्ये ॥ ६४ ॥

भू । इत्येतस्मादन्वगित्येतस्मिन्नुपपदे क्त्वाणमुलौ भवतः । अनुकूलत्वे गम्यमाने ॥ अन्वग्भूयास्ते । अन्वग्भूत्वा । अन्वग्भावं ॥ आनुलोम्ये किं । अन्वग्भूत्वा तिष्ठति ॥

## शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ॥ ६५ ॥

शक्लृ । ञिधृषा । ज्ञा । ग्लै । घट । रभ । डुलभष् । क्रमु । षह । अर्ह । अस । भू । विद । इत्येतेषु धातुषूपपदेषु धातोस्तुमुन् स्यात् ॥ शक्नोति भोक्तुं । धृष्णोति भोक्तुं । जानाति भोक्तुं । ग्लायति भोक्तुं । घटते भोक्तुं । आरभते भोक्तुं । लभते भोक्तुं । प्रक्रमते भोक्तुं । उत्सहते भोक्तुं । अर्हति भोक्तुं ॥ अस्त्यर्थेषु । अस्ति भोक्तुं । भवति भोक्तुं । विद्यते भोक्तुं ॥

## पर्याप्तिवचनेष्वलमर्थेषु ॥ ६६ ॥

पर्याप्तिवचनेष्वलमर्थविशिष्टेषूपपदेषु धातोस्तुमुन् स्यात् ॥ पर्याप्तो भोक्तुं । अलं भोक्तुं । पारयति भोक्तुं ॥ पर्याप्तिवचनेषु किं । अलं भुक्त्वा ॥ अलमर्थेषु किं । पर्याप्तं भुङ्क्ते ॥

## कर्तरि कृत् ॥ ६७ ॥

सर्वः कृत्प्रत्ययः कर्तरि कारके भवति ॥ कारकः । कर्ता । नन्दनः । ग्राही ॥

## भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ॥ ६८ ॥

भव्यादयः शब्दाः कर्तरि कारके वा निपात्यन्ते । पक्षे तयोरेवेति भावकर्मणोः ॥ भू । यत् । भवतीति । भव्यः । भव्यमनेनेति वा ॥ गै । यत् । गेयो माणवकः साम्नां । गेयानि सामानि माणवकेन ॥ वच । अनीयर् । प्रवचनीयो गुरुः । प्रवचनीयो गुरुणा ॥ स्था । उपस्थानीयः शिष्यो गुरोः । उपस्थानीयः शिष्येण गुरुः ॥ जनी । ण्यत् । जन्यः । जन्यमनेन ॥ प्लुङ् । ण्यत् । आप्लाव्यः । आप्लाव्यमनेन ॥ पत्लृ । ण्यत् । आपात्यः । आपात्यमनेन ॥

## लः कर्मणि च भावे चाकर्मकेभ्यः ॥ ६९ ॥

लकाराः सकर्मकेभ्यो धातुभ्यः कर्मणि कर्तरि च भवन्ति । अकर्मकेभ्यो भावे कर्तरि च ॥ कर्मणि । गम्यते ग्रामो देवदत्तेन ॥ कर्तरि । गच्छति ग्रामं देवदत्तः ॥ अकर्मकेभ्यो भावे । आस्यते देवदत्तेन ॥ कर्तरि । आस्ते देवदत्तः ॥

## तयोरेव कृत्यक्तखलर्थाः ॥ ७० ॥

कृत्यसंज्ञकाः प्रत्ययाः क्तप्रत्ययः खलर्थकाश्च प्रत्ययाः सकर्मकेभ्यः कर्मणि । अकर्मकेभ्यो भावे भवन्ति ॥ कृत्या भावे । आसितव्यं भवता । शयितव्यं ॥ कृत्याः कर्मणि । कर्तव्यः कटो भवता । भोक्तव्य ओदनो भवता ॥ क्तो भावे । आसितं भवता । शयितं भवता ॥ क्तः कर्मणि । कृतः कटो भवता । भुक्त ओदनः ॥ खलर्था भावे । ईषदाढ्यंभवं भवता । दुराढ्यंभवं ॥ खलर्थाः कर्मणि । ईषत्करः कटो भवता । दुष्करः कटः ॥

# आदिकर्मणि क्तः कर्तरि च ॥७१॥

आदिकर्मण्युक्तो यः क्तः स कर्तरि भवति । चकाराद्भावकर्मणोरपि भवति ॥ प्रकृतः कटं देवदत्तः । प्रकृतं देवदत्तेन । प्रकृतः कटो देवदत्तेन ॥

# गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ॥७२॥

गत्यर्थेभ्यो धातुभ्यः । अकर्मकेभ्यः । श्लिषादिभ्यश्च यः क्तः स कर्तरि भवति । चकाराद्भावकर्मणोः ॥ गतो ग्रामं देवदत्तः । गतं देवदत्तेन । गतो ग्रामो देवदत्तेन ॥ अकर्मकेभ्यः । ग्लानो भवान् । ग्लानं भवता । आसितो भवान् । आसितं भवता ॥ श्लिष । श्लिष्टो गुरुं भवान् । श्लिष्टो गुरुर्भवता । उपश्लिष्टं भवता ॥ शीङ् । अतिशयितो गुरुं भवान् । अतिशयितो गुरुर्भवता । अतिशयितं भवता ॥ स्था । उपस्थितो गुरुं भवान् । उपस्थितो गुरुर्भवता । उपस्थितं भवता ॥ आस । उपासितो गुरुं भवान् । उपासितो गुरुर्भवता । उपासितं भवता ॥ वस । अनूषितो गुरुं भवान् । अनूषितो गुरुर्भवता । अनूषितं भवता ॥ जन । अनुजातो माणवको माणविकां । अनुजाता माणविका माणवकेन । अनुजातं माणवकेन ॥ रुह । आरूढो वृक्षं भवान् । आरूढो वृक्षो भवता । आरूढं भवता ॥ जॄ । अनुजीर्णो वृषलीं देवदत्तः । अनुजीर्णा वृषली देवदत्तेन । अनुजीर्णं देवदत्तेन ॥

# दाशगोघ्नौ संप्रदाने ॥७३॥

दाश । गोघ्न । इत्येतौ संप्रदाने कारके निपात्येते ॥ दाशृ । दाशन्ति तस्मै । दाशः । अन्नलाभः ॥ आगताय तस्मै दातुं गां घ्नन्ति । गोघ्नो ऽतिथिः । गृहागतः ॥

## भीमादयो ऽपादाने ॥ ७४ ॥

मगादिप्रत्ययान्ता भीमादयः शब्दा अपादाने साधवो वेद्याः ॥ भीमः । भीष्मः ॥ अग्रिमसूत्रेण पर्युदासे प्राप्ते वचनं ।

## ताभ्यामन्यत्रोणादयः ॥ ७५ ॥

उणादयः प्रत्ययाः संप्रदानापादानाभ्यामन्यस्मिन् कारके भवन्ति ॥ कृषितो ऽसौ भवति । कृषिः ॥ ततो ऽसौ भवति । तन्तुः ॥ वृत्तं तदिति । वर्त्म ॥ चरितं तदिति । चर्म ॥

## क्तो ऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ॥ ७६ ॥

अकर्मकेभ्यः । गत्यर्थेभ्यः । भक्षणार्थेभ्यश्च धातुभ्यो यः क्तः सो ऽधिकरणे भवति । चकारादकर्मकेभ्यः कर्तृभावयोरपि । गत्यर्थेभ्यः कर्तृकर्मभावेष्वपि । भक्षणार्थेभ्यः कर्मभावयोरपि ॥ ध्रौव्यार्थेभ्यः । आसितमिदं तस्य । आसितः सः । आसितं तेन ॥ गत्यर्थेभ्यः । गतमिदं तस्य । गतो ग्रामं सः । गतो ग्रामस्तेन । गतं तेन ॥ प्रत्यवसानार्थेभ्यः । भुक्तमिदं तस्य । भुक्त ओदनस्तेन । भुक्तं तेन ॥

## लस्य ॥ ७७ ॥

अधिकारो ऽयं ॥ इत ऊर्ध्वमनुक्रमिष्यमाणं लकारस्य स्थाने बोध्यं ॥ लट् । लिट् । लुट् । लृट् । लेट् । लोट् । लङ् । लिङ् । लुङ् । लृङ् । इत्येतेषु दशसु लकारेषु षण्णां टितां चतुर्णां ङितामनुबन्धविनिर्मुक्तानां सामान्यग्रहणं ल इति ॥ दशसु लकारव्यतिरिक्ता वर्णा इत्संज्ञकाः ॥ वक्ष्यति तिप् तस् झीत्यादि । पचति । पचतः । पचन्ति । इत्यादि ॥

## तिप् तस् झि सिप् थस् थ मिब्वस् मस् तातां झ थासाथां ध्वमिड्वहि महिङ् ॥ ७८ ॥

तिप् । तस् । झि । सिप् । थस् । थ । मिप् । वस् । मस् । त । आतां । झ । थास् । आथां । ध्वम् । इट् । वहि । महिङ् । इत्येते ऽष्टादशादेशा लस्य स्थाने भवन्ति ॥ तिप्सिप्मिपां पकार इत्कार्यार्थः । इटष्टकार इटो ऽदिति विशेषणार्थः । महिङो ङकारस्तिङिति प्रत्याहारार्थः ॥ पचति ।

पचतः । पचन्ति । पचसि । पचथः । पचथ । पचामि । पचावः । पचामः । पचते । पचेते । पचन्ते । पचसे । पचेथे । पचध्वे । पचे । पचावहे । पचामहे ॥ एवमन्येषु लकारेषूदाहार्यं ॥

## टित आत्मनेपदानां टेरे ॥७९॥

लट् । लिट् । लुट् । लृट् । लेट् । लोट् । इत्येतेषां टितां लकाराणां स्थाने यान्यात्मनेपदानि तेषां टेः स्थान एकारादेशः स्यात् ॥ पचते । पेचाते । पक्तासाथे । पक्ष्यते । मन्त्रयैते । पचै ॥

## थासः से ॥८०॥

थास् । इत्येतस्य टितो लकारस्य स्थाने ज्ञातस्य से । इत्यादेशः स्यात् ॥ पचसे । पेचिषे । पक्तासे । पक्ष्यसे ॥

## लिटस्तकयोरेशिरेच् ॥८१॥

त । क । इत्येतयोर्लिडादेशयोः क्रमेण । एश् । इरेच् । इत्येतावादेशौ भवतः ॥ पेचे । पेचिरे ॥

## परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ॥८२॥

लिडादेशानां तिबादीनां नवानां णल् । अतुस् । उस् । थल् । अथुस् । अ । णल् । व । म । इत्येत आदेशाः क्रमेण भवन्ति ॥ पपाच । पेचतुः । पेचुः । पपक्थ । पेचथुः । पेच । पपाच पपच । पेचिव । पेचिम ॥

## विदो लटो वा ॥८३॥

विद् । इत्येतस्माज्ज्ञानार्थात् परेषां लडादेशानां परस्मैपदानां णल् । इत्येवमादयो नवादेशाः क्रमेण वा भवन्ति ॥ वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म ॥ न च भवति । वेत्ति । वित्तः । विदन्ति । वेत्सि । वित्थः । वित्थ । वेद्मि । विद्वः । विद्मः ॥

## ब्रुवः पञ्चानामादित आहो ब्रुवः ॥८४॥

ब्रूञ् । इत्येतस्मात् परेषां लडादेशानां परस्मैपदानामादितः पञ्चानां णल् । इत्येवमादयः पञ्चादेशाः क्रमेण वा भवन्ति । तत्संनियोगेन ब्रूञ् । इत्येतस्य

आह । इत्ययमादेशो भवति ॥ आह । आहतुः । आहुः । आत्थ । आहथुः ॥ न च भवति । ब्रवीति । ब्रूतः । ब्रुवन्ति । ब्रवीषि । ब्रूथः ॥ पञ्चाना-मिति किं । ब्रूथ । ब्रवीमि । ब्रूवः । ब्रूमः ॥ आदितः किं । परेषां मा भूत् ॥ पुनर्ब्रुव इति परस्मैपदानामादेशो मा भूदिति ॥

## लोटो लङ्वत् ॥८५॥

लोट् । इत्येतस्य लङ इव कार्यं भवति । तेन तामादय आदेशाः सलो-पश्च ॥ पचतां । पचतं । पचाव । पचाम ॥

## एरुः ॥८६॥

लोट् । इत्येतस्य य आदेशास्तेषामिकारस्य उकारादेशः स्यात् ॥ पचतु । पचन्तु ॥

## सेर्ह्यपिच्च ॥८७॥

लोट् । इत्येतस्य यः सि । इत्यादेशस्तस्य हि । इत्ययमादेशो भवति । स च अपिद्भवति ॥ स्थानिवद्भावात् प्राप्तं पित्त्वं प्रतिषिध्यते ॥ लुनीहि । पुनीहि । तक्ष्णुहि । राध्नुहि ॥

## वा छन्दसि ॥८८॥

वेदे ह्यादेशो ऽपिद्वा स्यात् ॥ युयोध्यस्मज्जुहुराणमेनः । युयुधि ॥ जुहोधि । जुहुधि ॥ प्रीणीहि । प्रीणाहि ॥

## मेर्निः ॥८९॥

उत्वलोपयोरपवादः ॥ मि । इत्येतस्य लोडादेशस्य नि । इत्ययमादेशः स्यात् ॥ पचानि । पठानि ॥

## आमेतः ॥९०॥

ए । इत्येतस्य लोट्संबन्धिन आम् । इत्ययमादेशः स्यात् ॥ पचतां । पचे-तां । पचन्तां ॥

## सवाभ्यां वामौ ॥९१॥

आमो ऽपवादः ॥ सकारवकाराभ्यामुत्तरस्य लोट्संबन्धिन एकारस्य यथासंख्यं व । अम् । इत्येतावादेशौ भवतः ॥ पचस्व । पचध्वं ॥

## आडुत्तमस्य पिच्च ॥ ९२ ॥

लोट्संबन्धिन उत्तमपुरुषस्य । आट् । इत्ययमागमो भवति । स चोत्तमपुरुषः पिद्भवति ॥ करवाणि । करवाव । करवाम । करवै । करवावहै । करवामहै ॥

## एत ऐ ॥ ९३ ॥

आमो ऽपवादः ॥ लोट्संबन्धिन उत्तमस्य एकारस्य ऐकारादेशः स्यात् ॥ करवै । करवावहै । करवामहै ॥

## लेटो ऽडाटौ ॥ ९४ ॥

लेट् । इत्येतस्य अट् । आट् । इत्येतावागमौ पर्यायेण भवतः ॥ जोषिषत् । तारिषत् । मन्दिषत् ॥ पताति विद्युत् । उदधिं च्यावयाति ॥

## आत ऐ ॥ ९५ ॥

लेट्संबन्धिन आकारस्य ऐकारादेशो भवति । प्रथममध्यमपुरुषात्मनेपदद्विवचनयोः ॥ मन्त्रयैते । मन्त्रयैथे । करवैते । करवैथे ॥ आटस्तु न भवति विधानसामर्थ्यात् ॥

## वैतो ऽन्यत्र ॥ ९६ ॥

आत ऐ । इत्येतद्विषयादन्यत्र लेट्संबन्धिन एकारस्य ऐकारादेशो वा स्यात् ॥ अहमेव पशूनामीशै । सप्ताहानि शयै । गृह्णान्तै । पात्राण्युच्यान्तै ॥ न च भवति । दक्षं दधन उत्तरं ॥ अन्यत्रेति किं । मन्त्रयैते । मन्त्रयैथे ॥

## इतश्च लोपः परस्मैपदेषु ॥ ९७ ॥

इ । इत्येतस्य लेट्संबन्धिनः परस्मैपदविषयस्य वा लोपः स्यात् ॥ जोषिषत् । तारिषत् । मन्दिषत् ॥ न च भवति । पताति विद्युत् । उदधिं च्यावयाति ॥ परस्मैपदेषु किं । इन्द्रवह्निनिरिडां मा भूत् ॥

## स उत्तमस्य ॥ ९८ ॥

स् । इत्येतस्य लेट्संबन्धिन उत्तमपुरुषान्त्यस्य वा लोपः स्यात् ॥ करवाव । करवाम ॥ न च भवति । करवावः । करवामः ॥

## नित्यं ङितः ॥ ९९ ॥

स् । इत्येतस्य ङकारेत्संज्ञकलकारसंबन्धिनः परस्मैपदविषयस्योत्तमपुरुषान्त्यस्य नित्यं लोपः स्यात् ॥ अपचाव । अपचाम ॥

## इतश्च ॥ १०० ॥

इ । इत्येतस्य ङिल्लकारसंबन्धिनः परस्मैपदविषयस्य लोपः स्यात् ॥ अपचत् । पचेत् । अपाक्षीत् । अपक्ष्यत् ॥ परस्मैपदग्रहणं किं । अपचावहि । अपचामहि ॥

## तस्थस्थमिपां तान्तन्तामः ॥ १०१ ॥

तस् । थस् । थ । मिप् । इत्येतेषां ङिल्लकारसंबन्धिनां क्रमात् ताम् । तम् । त । अम् । इत्येत आदेशा भवन्ति ॥ अपचतां । अपचतं । अपचत । अपचं । पचेतां । पचेतं । पचेत । पचेयं । अपाक्तां । अपाक्तं । अपाक्त । अपाक्षं । अपक्ष्यतां । अपक्ष्यतं । अपक्ष्यत । अपक्ष्यं ॥

## लिङः सीयुट् ॥ १०२ ॥

लिङादेशानां सीयुट् । इत्ययमागमो भवति ॥ पचेत् । पचेयातां । पचेरन् । पक्षीष्ट । पक्षीयास्तां । पक्षीरन् ॥

## यासुट् परस्मैपदेषूदात्तो ङिच्च ॥ १०३ ॥

सीयुटो ऽपवादः ॥ लिङः परस्मैपदानां यासुट् । इत्ययमागमो भवति । स चोदात्तो भवति । लिङादेशानां ङित्त्वं च भवति ॥ कुर्यात् । कुर्यातां । कुर्युः ॥

## किदाशिषि ॥ १०४ ॥

आशिषि यो लिङ् तस्य यो यासुट् स कित् स्यात् ॥ पूर्वसूत्रेण ङित्त्वे प्राप्ते ऽनेन प्रत्ययस्यैव कित्त्वं क्रियते । न त्वागमस्य फलाभावात् ॥ इज्यात् ।

इज्यास्तां । इज्यासुः । कित्वात् संप्रसारणं ॥ जागर्यात् । जागर्यास्तां । जागर्यासुः । अत्र कित्वेन ङित्वबाधे गुणो भवति ॥ आशिषि किं । जागृ-यात् । वच्यात् ॥

## झस्य रन् ॥१०५॥

झो ऽन्तापवादः ॥ झकारस्य लिङादेशावयवस्य रन् । इत्ययमादेशः स्यात् । स चोदात्तः ॥ पचेरन् । कृषीरन् ॥

## इटो ऽत् ॥१०६॥

इट् । इत्येतस्य लिङादेशस्य अत् । इत्ययमादेशः स्यात् ॥ पचेय । यजेय । कृषीय । हृषीय ॥ तकारो मुखसुखार्थः ॥

## सुट् तिथोः ॥१०७॥

लिङस्तकारथकारयोः सुट् । इत्ययमागमः स्यात् ॥ कृषीष्ट । कृषीयास्तां । कृषीष्ठाः । कृषीयास्थां ॥ सुटा यासुटो बाधो न भवति । लिङो यासुट् तकारथकारयोः सुडिति विषयभेदात् ॥ तकार इकार उच्चारणार्थः ॥

## झेर्जुस् ॥१०८॥

झो ऽन्तापवादः ॥ झि । इत्येतस्य लिङादेशस्य जुस् । इत्ययमादेशः स्यात् ॥ पचेयुः । यजेयुः ॥

## सिजभ्यस्तविदिभ्यश्च ॥१०९॥

सिजादेशात् । अभ्यस्तसंज्ञकात् । धातोर्विदेश्च परस्य ङित्संबन्धिनो झेः । इत्येतस्य जुस् । इत्ययमादेशः स्यात् ॥ अकार्षुः । अहार्षुः ॥ अभ्यस्तात् । अबिभयुः । अजिह्रयुः । अजागरुः ॥ विद । अविदुः ॥

## आतः ॥११०॥

पूर्वसूत्रेण सिचि नियमो ऽयं ॥ सिचो लुगन्तादाकारान्तादेव झेः । इत्येतस्य जुस् । इत्ययमादेशः स्यात् ॥ अदुः । अधुः ॥

## लङः शाकटायनस्यैव ॥१११॥

आकारान्तात् परस्य लङादेशस्य झेर्जुस् स्यात् । शाकटायनस्याचार्यस्य मतेन ॥ अयुः । अवुः ॥ अन्येषां मतेन । अयान् । अवान् ॥ ननु ङित इत्यनुवर्तते । तत्र लङेवाकारान्तादनन्तरः संभवति । नान्यस्तत्र किं लङ्ग्रहणेन । एवं तर्हि लङेव यो लङ् तस्य यथा स्यात् । लङ्भावेन यो लङ् तस्य जुस् मा भूदिति । यान्तु । वान्तु । बिभ्यतु । जाग्रतु । विन्दतु ॥ एवकार उत्तरार्थः ॥

## द्विषश्च ॥ ११२ ॥

द्विष । इत्येतस्मात् परस्य लङादेशस्य झेर्जुस् स्यात् । शाकटायनस्य मतेन ॥ अद्विषुः ॥ अन्येषां मतेन । अद्विषन् ॥

## तिङ्शित् सार्वधातुकं ॥ ११३ ॥

तिङः । शकारेत्संज्ञकाश्च प्रत्ययाः सार्वधातुकसंज्ञका भवन्ति ॥ नयति । रोदिति ॥ स्वपिति । पवमानः । यजमानः ॥

## आर्धधातुकं शेषः ॥ ११४ ॥

तिङः शितश्चान्ये प्रत्यया धातोरित्युच्चार्य विहिता आर्धधातुकसंज्ञका भवन्ति ॥ लविता । लवितुं । लवितव्यं ॥ धातोरिति किं । वृक्षत्वं । वृक्षता ॥

## लिट् च ॥ ११५ ॥

लिडादेशस्तिङार्धधातुकसंज्ञक एव भवति । न तु सार्वधातुकसंज्ञकः ॥ पेचिय । पेचिव । जग्ले । मम्ले ॥

## लिङाशिषि ॥ ११६ ॥

आशिषि यो लिङ् तदादेशस्तिङार्धधातुकसंज्ञक एव भवति । न तु सार्वधातुकसंज्ञकः ॥ लविषीष्ट । लविषीष्टाः । पविषीष्ट । पविषीष्टाः ॥ आशिषि किं । लुनीयात् ॥

## छन्दस्युभयथा ॥ ११७ ॥

तिङः । शितः । अन्ये च प्रत्यया धात्वधिकारोक्ताश्छन्दसि सार्वधातुकार्धधा–

॥ अथ चतुर्थो ऽध्यायः ॥

# ङ्याप्प्रातिपदिकात् ॥ १ ॥

अधिकारो ऽयमा पञ्चमाध्यायपरिसमाप्तेः ॥ इत ऊर्ध्वं यदनुक्रमिष्यामस्तन्ङ्यन्तादाबन्तात् प्रातिपदिकाच्च बोध्यं ॥ ङीप् । ङीष् । ङीन् । इत्येतेषां सामान्येन ग्रहणं ङी इति ॥ टाप् । डाप् । चाप् । इत्येतेषां सामान्येन ग्रहणमाबिति ॥ वक्ष्यति स्वौ जसित्यादि । गौरी । कुमारी । शार्ङ्गरवी ॥ अजा । बहुराजा । कारीषगन्ध्या ॥ दृषत् । दृषद् ॥

# स्वौ जसमौट्छष्टा भ्याम् भिस् ङे भ्याम् भ्यस् ङसि भ्याम् भ्यस् ङसोसाम् ङ्योस् सुप् ॥ २ ॥

ङ्यन्तात् । आबन्तात् । प्रातिपदिकाच्च सु । इत्येवमादयः प्रत्यया भवन्ति ॥ सु । उकार इत् । गौरी ॥ औ । गौर्यौ ॥ जस् । जकार इत् । गौर्यः ॥ अम् । गौरीं ॥ औट् । टकार इत् सुट्प्रत्याहारार्थः । गौर्यौ ॥ शस् । शकार इत् । गौरीः ॥ टा । टकार इत् । गौर्या ॥ भ्याम् । गौरीभ्यां ॥ भिस् । गौरीभिः ॥ ङे । ङकार इत् । गौर्यै ॥ भ्याम् । गौरीभ्यां ॥ भ्यस् । गौरीभ्यः ॥ ङसि । इकारङकारावितौ । गौर्याः ॥ भ्याम् । गौरीभ्यां ॥ भ्यस् । गौरीभ्यः ॥ ङस् । ङकार इत् । गौर्याः ॥ ओस् । गौर्योः ॥ आम् । गौरीणां ॥ ङि । ङकार इत् । गौर्यां ॥ ओस् । गौर्योः ॥ सुप् । पकारः सुप्प्रत्याहारार्थः । गौरीषु ॥

एवं कुमारी । कुमार्यौ । शार्ङ्गरवी । शार्ङ्गरव्यौ । इत्यादि ॥ खट्वा । खट्वे । खट्वाः । खट्वां । खट्वे । खट्वाः । खट्वया । खट्वाभ्यां । खट्वाभिः । खट्वायै । खट्वाभ्यां । खट्वाभ्यः । खट्वायाः । खट्वाभ्यां । खट्वाभ्यः । खट्वायाः । खट्वयोः । खट्वानां । खट्वायां । खट्वयोः । खट्वासु ॥ एवं बहुराजा । कारीषगन्ध्या । इत्यादि ॥ दृषत् । दृषद् । दृषदौ । दृषदः । इत्यादि ॥ इत्संज्ञका विशेषणार्थाः ॥

## स्त्रियां ॥ ३ ॥

अधिकारोऽयं ॥ इत ऊर्ध्वं यदनुक्रमिष्यामः स्त्रीलिङ्गे तद्बोध्यं ॥ वक्ष्यति अजाद्यतष्टाबिति । अजा ॥

## अजाद्यतष्टाप् ॥ ४ ॥

अज । इत्येवमादिभ्यः । अकारान्तेभ्यश्च प्रातिपदिकेभ्यः स्त्रियां टाप्प्रत्ययः स्यात् ॥ अजा । एडका ॥ पाचिका । पाठिका ॥ अजादिग्रहणं ङीपो ङीषश्च बाधनार्थं ॥ तपरकरणं किं । कीलालपाः ॥

## ऋन्नेभ्यो ङीप् ॥ ५ ॥

ऋकारान्तेभ्यः । नकारान्तेभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीप्प्रत्ययः स्यात् ॥ कर्त्री । हर्त्री ॥ दण्डिनी । वेदवादिनी ॥

## उगितश्च ॥ ६ ॥

उ । ऋ । लृ । इत्येतदित्संज्ञकेभ्यः प्रातिपदिकेभ्यः स्त्रियां ङीप् स्यात् ॥ भवती । महती । पचन्ती ॥

## वनो र च ॥ ७ ॥

ङ्वनिप् । क्वनिप् । वनिप् । इत्येतदन्तेभ्यः प्रातिपदिकेभ्यः स्त्रियां ङीप् स्यात् । रेफश्चान्तादेशः ॥ सुत्वरी । धीवरी । शर्वरी ॥ ऋन्नेभ्य इति ङीप् सिद्धः । रादेशमात्रं तत्संनियोगेन विधीयते ॥

## पादोऽन्यतरस्यां ॥ ८ ॥

पाद । इत्येतदन्तात् प्रातिपदिकात् स्त्रियां वा ङीप् स्यात् ॥ द्विपदी । द्विपात् । त्रिपदी । त्रिपात् ॥

## टाबृचि ॥ ९ ॥

पाद् । इत्येतदन्तात् प्रातिपदिकादृचि वाच्यायां स्त्रियां टाप् स्यात् ॥ द्विपदा ऋक् । त्रिपदा ऋक् ॥ ऋचि किं । द्विपदी स्त्री ॥

## न षट्स्वस्रादिभ्यः ॥ १० ॥

षट्संज्ञकेभ्यः । स्वसृ । इत्येवमादिभ्यश्च स्त्रीप्रत्ययो न स्यात् ॥ पञ्च । सप्त । नव । दश ॥ स्वसा । स्वसारौ । दुहिता । दुहितारौ ॥

## मनः ॥ ११ ॥

मन् । इत्येतदन्तात् प्रातिपदिकात् । अन्नेभ्य इति प्राप्तो ङीन्न स्यात् ॥ दामा । दामानौ । दामानः । सीमा । सीमानौ । सीमानः । अतिमहिमा । अतिमहिमानौ । अतिमहिमानः ॥

## अनो बहुव्रीहेः ॥ १२ ॥

अन् । इत्येतदन्ताद्बहुव्रीहेः समासात् स्त्रियां ङीन्न स्यात् ॥ सुपर्वा । सुपर्वाणौ । सुपर्वाणः । सुचर्मा । सुचर्माणौ । सुचर्माणः ॥ बहुव्रीहेः किं । अतिक्रान्ता राजानं । अतिराज्ञी ॥

## डाबुभाभ्यामन्यतरस्यां ॥ १३ ॥

मन्नन्तात् प्रातिपदिकात् । अन्नन्ताच्च बहुव्रीहेः स्त्रियां वा डाप् स्यात् ॥ सीमा । सीमे । सीमाः । न च भवति । सीमा । सीमानौ । सीमानः ॥ बहुराजा । बहुराजे । बहुराजाः । न च भवति । बहुराजा । बहुराजानौ ॥ अन्यतरस्यांग्रहणाद्वनो र चेत्यस्यापि बहुव्रीहौ विकल्पः । बहुधीवरी । बहुधीवा ॥

## अनुपसर्जनात् ॥ १४ ॥

अधिकारोऽयं ॥ इत उत्तरं यदनुक्रमिष्यामोऽनुपसर्जनात् तद्बोध्यं ॥ वक्ष्यति टिड्ढाणञित्यादि । कुरुचरी । कुक्कुटी । सूकरी ॥ अनुपसर्जनात् किं । बहुकुरुचरा । बहुकुक्कुटा । बहुसूकरा ॥

## टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ॥ १५ ॥

अनुपसर्जनं यट्टिदादि तदन्तादकारान्तात् प्रातिपदिकात् स्त्रियां ङीप् स्यात् ॥

टित् । कुरुचरी । देवी ॥ यत्र टित्त्वस्यान्यत् प्रयोजनमस्ति तत्र न ङीप् । ट्युट्युलौ तुट् चेति लिङ्गात् । पचमाना ब्राह्मणी । पठिता विद्या ॥ ढ । सौपर्णेयी । वैनतेयी ॥ अण् । औपगवी । कुम्भकारी ॥ अञ् । औत्सी । वैदी ॥ द्वयसच् । ऊरुद्वयसी ॥ दघ्नच् । ऊरुदघ्नी ॥ मात्रच् । ऊरुमात्री ॥ तयप् । पञ्चतयी ॥ ठक् । लाक्षिकी ॥ ठञ् । लावणिकी ॥ कञ् । यादृशी ॥ क्वरप् । इत्वरी ॥

## यञश्च ॥१६॥

यञ् । इत्येतदन्तात् प्रातिपदिकात् स्त्रियां ङीप् स्यात् ॥ गार्गी । वात्सी ॥

## प्राचां ष्फस्तद्धितः ॥१७॥

प्राचामाचार्याणां मतेन यञन्तात् प्रातिपदिकात् स्त्रियां ष्फप्रत्ययः स्यात् । स च तद्धितसंज्ञकः स्यात् ॥ गार्ग्यायणी ॥ अन्येषां मतेन । गार्गी ॥ षकारो ङीषर्थः ॥ अग्रिमसूत्रस्थं सर्वत्रग्रहणमिहापकृष्यते । तेन आवट्याच्चेति परमपि चापं बाधित्वा प्राचां मतेन ष्फो भवति । आवट्यायनी ॥

## सर्वत्र लोहितादिकतन्तेभ्यः ॥१८॥

लोहितादिभ्यः कतशब्दपर्यन्तेभ्यो नित्यं स्त्रियां ष्फः स्यात् ॥ लौहित्यायनी । शांसित्यायनी ॥ कतन्तेभ्य इति बहुव्रीहितत्पुरुषयोरेकशेषः । तेन शाकल्यायनीति सिद्धं ॥

## कौरव्यमाण्डूकाभ्यां च ॥१९॥

अनेन टाब्ङीपोरपवादः ॥ कौरव्य । माण्डूक । इत्येताभ्यां स्त्रियां ष्फः स्यात् ॥ कौरव्यायणी । माण्डूकायनी ॥

## वयसि प्रथमे ॥२०॥

प्रथमवयोवाचकात् स्त्रियां ङीप् स्यात् ॥ कुमारी । किशोरी ॥ प्रथमे किं । वृद्धा ॥ गत इत्येव । शिशुः ॥ कथं कन्या । कन्यायाः कनीन चेति गुणनिर्देशात् भवति ॥

## द्विगोः ॥२१॥

अदन्ताद्द्विगुसमासात् स्त्रियां ङीप् स्यात् ॥ पञ्चमूली । दशकुमारी ॥ कथं त्रिफला । अजादिषु पठ्यते ॥

## अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि ॥ २२ ॥

अपरिमाणान्ताद्द्विगोः । बिस्त । आचित । कम्बल्य । इत्येतदन्ताच्च द्विगोस्तद्धितलुकि सति स्त्रियां ङीन्न स्यात् ॥ सर्वतो मानं परिमाणं । कालः संख्या च न परिमाणं ॥ द्विवर्षा । पञ्चभिरश्वैः क्रीता । पञ्चाश्वा । तेन क्रीतमिति ठञ् । अध्यर्धपूर्वद्विगोर्लुगसंज्ञायामिति तस्य लुक् ॥ द्विबिस्ता । द्व्याचिता । द्विकम्बल्या ॥ अपरिमाणान्तात् किं । द्व्याढकी ॥ तद्धितलुकीति किं । समाहारे मा भूत् । पञ्चाश्वी ॥

## काण्डान्तात् क्षेत्रे ॥ २३ ॥

काण्डशब्दान्ताद्द्विगोस्तद्धितलुकि सति क्षेत्रे वाच्ये न ङीप् स्यात् ॥ द्वे काण्डे प्रमाणमस्याः । द्विकाण्डा क्षेत्रभक्तिः ॥ क्षेत्रे किं । द्विकाण्डी रज्जुः ॥

## पुरुषात् प्रमाणेऽन्यतरस्यां ॥ २४ ॥

प्रमाणे यः पुरुषशब्दस्तदन्ताद्द्विगोस्तद्धितलुकि सति ङीब्वा न स्यात् ॥ द्वौ पुरुषौ प्रमाणमस्याः । द्विपुरुषी । द्विपुरुषा ॥ प्रमाणे किं । द्वाभ्यां पुरुषाभ्यां क्रीता । द्विपुरुषा । अपरिमाणान्तत्वान्नित्यो निषेधः ॥

## बहुव्रीहेरूधसो ङीष् ॥ २५ ॥

ऊधस् । इत्येतदन्ताद्बहुव्रीहेः स्त्रियां ङीष्प्रत्ययः स्यात् ॥ घटोध्नी । ऊधसोऽनङिति समासान्ते कृते ऽनो बहुव्रीहेरिति ङीपो निषेधे डाबुभाभ्यामिति डापि च प्राप्ते ऽनेन ङीष् ॥ बहुव्रीहेः किं । प्राप्ता ऊधः । प्राप्तोधाः ॥

## संख्याव्ययादेर्ङीप् ॥ २६ ॥

ऊधस् । इत्येतदन्तात् संख्यादेरव्ययादेश्च बहुव्रीहेः स्त्रियां ङीप् स्यात् ॥ द्व्यूध्नी । अत्यूध्नी ॥ आदिग्रहणं किं । द्विविधोध्नी । अत्रापि यथा स्यात् ॥

## दामहायनान्ताच्च ॥ २७ ॥

दामन् । हायन । इत्येतदन्तात् संख्यादेर्बहुव्रीहेः स्त्रियां ङीप् स्यात् ॥ द्विदाम्नी । डाब्विकल्पे ङीप्निषेधे च प्राप्ते ऽनेन ङीप् ॥ त्रिहायणी । चतुर्हायनी बाला । टापि प्राप्ते ऽनेन ङीप् ॥

## अन उपधालोपिनो ऽन्यतरस्यां ॥२८॥

अन् । इत्येतदन्ताद्बहुव्रीहेरुपधालोपिनः स्त्रियां वा ङीप् स्यात् ॥ बहुराज्ञी । बहुराज्ञ्यौ ॥ पक्षे डाप्ङीप्निषेधौ । बहुराजा । बहुराजे । बहुराजानौ ॥ अन इति किं । बहुमत्स्या ॥ उपधालोपिनः किं । सुपर्वा । सुपर्वाणौ । सुपर्वा । सुपर्वे ॥

## नित्यं संज्ञाछन्दसोः ॥२९॥

अन् । इत्येतदन्ताद्बहुव्रीहेः संज्ञायां छन्दसि च नित्यं ङीप् स्यात् ॥ सुराज्ञी नाम ग्रामः ॥ छन्दसि । पञ्चदाम्नी ॥ संज्ञाछन्दसोः किं । अवमूर्धा ॥

## केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च ॥३०॥

केवल । इत्येवमादिभ्यः संज्ञायां छन्दसि च ङीप् स्यात् ॥ केवली । केवला इति लोके ॥ मामकी । मामका इति लोके ॥ भागधेयी । भागधेया इति लोके ॥ पापी । पापा इति लोके ॥ अपरी । अपरा इति लोके ॥ समानी । समाना इति लोके ॥ आर्यकृती । आर्यकृता इति लोके ॥ सुमङ्गली । सुमङ्गला इति लोके ॥ भेषजी । भेषजा इति लोके ॥

## रात्रेश्चाजसौ ॥३१॥

जस्विषयादन्यत्र संज्ञायां छन्दसि च रात्रिशब्दान्ङीप् स्यात् ॥ या रात्री सृष्टा रात्रीभिः ॥ अजसौ किं । यास्ता रात्रयः ॥

## अन्तर्वत्पतिवतोर्नुक् ॥३२॥

अन्तर्वत् । पतिवत् । इत्येतौ निपात्येते । तयोश्च स्त्रियां नुगागमः स्यात् ॥ अन्तर्वत्नी । पतिवत्नी ॥ ऋन्नेभ्य इति ङीप् ॥

## पत्युर्नो यज्ञसंयोगे ॥३३॥

पति । इत्येतस्य स्त्रियां नकारो ऽन्तादेशः स्यात् । यज्ञेन संबन्धे सति ॥ ऋन्नेभ्यो ङीप् । वसिष्ठस्य पत्नी । वसिष्ठकर्तृकयज्ञफलभोक्त्रीत्यर्थः ॥ यज्ञसंयोगे किं । ग्रामस्य पतिरियं ॥

## विभाषा सपूर्वस्य ॥ ३४ ॥

पति । इत्येतदन्तस्य विद्यमानपूर्वस्यानुपसर्जनस्य स्त्रियां वा नकारादेशः स्यात् ॥ ऋन्नेभ्यो ङीप् । वृद्धपतिः । वृद्धपत्नी ॥ सपूर्वस्य किं । पतिरियं ग्रामस्य ॥

## नित्यं सपत्न्यादिषु ॥ ३५ ॥

सपत्नी । इत्येवमादिषु नित्यं नकारादेशः स्यात् ॥ समानः पतिरस्याः । सपत्नी । निपातनात् समानस्य सादेशः ॥ एकपत्नी ॥

## पूतक्रतोरै च ॥ ३६ ॥

पूतक्रतु । इत्येतस्य स्त्रियामैकारादेशः स्यात् । ङीप् च ॥ पूतक्रतोः स्त्री । पूतक्रतायी ॥

## वृषाकप्यग्निकुसितकुसिदानामुदात्तः ॥ ३७ ॥

वृषाकपि । अग्नि । कुसित । कुसिद । इत्येतेषां स्त्रियामुदात्त ऐकारादेशो ङीप् च स्यात् ॥ वृषाकपेः स्त्री । वृषाकपायी ॥ अग्नायी ॥ कुसितायी ॥ कुसिदायी ॥ पुंयोग एव । नेह । वृषाकपिः स्त्री ॥

## मनोरौ वा ॥ ३८ ॥

मनु । इत्येतस्य औकारादेश उदात्तैकारादेशश्च वा स्यात् । ङीप् च ॥ मनोः स्त्री । मनावी । मनायी । मनुः ॥

## वर्णादनुदात्तात् तोपधात् तो नः ॥ ३९ ॥

वर्णवाची यो ऽनुदात्तान्तस्तकारोपधस्ततो वा ङीप् स्यात् । तकारस्य च नकारादेशः स्यात् ॥ एता । एनी । श्येता । श्येनी । हरिता । हरिणी । रोहिता । रोहिणी ॥ वर्णानां तणतिनितान्तानामित्यनेनाद्युदात्ता एते ॥ वर्णात् किं । प्रकृता ॥ अनुदात्तात् किं । श्वेता । घृतादिरन्तोदात्तः ॥ तोपधात् किं । अन्यतो ङीपं वक्ष्यति ॥ अत इत्येव । शितिः ॥

## अन्यतो ङीष् ॥ ४० ॥

वर्णवाची यो ऽनुदात्तान्तस्तकारोपधादन्यस्ततः स्त्रियां ङीप् स्यात् ॥ सारङ्गी । कल्माषी ॥ वर्णादित्येव । खट्वा ॥ अनुदात्तादित्येव । कृष्णा ॥

## षिद्गौरादिभ्यश्च ॥४१॥

षकारेत्संज्ञकेभ्यः । गौरादिभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीष् स्यात् ॥ नर्तकी । खनकी ॥ गौरी । मत्सी ॥

## जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ॥४२॥

जानपदादिभ्य एकादशभ्यः प्रातिपदिकेभ्यः क्रमाद्वृत्त्यादिष्वेकादशस्वर्थेषु स्त्रियां ङीष् स्यात् ॥ जानपदी वृत्तिश्चेत् । अन्या जानपदी । उत्सादिपाठादञि ङीप्याद्युदात्तं । इति स्वरे विशेषः ॥ कुण्डी अमत्रं चेत् । अन्या कुण्डा ॥ गोणी आवपनं चेत् । अन्या गोणा ॥ स्थली अकृत्रिमा चेत् । अन्या स्थला ॥ भाजी श्राणा चेत् । अन्या भाजा ॥ नागी स्थूला चेत् । अन्या नागा । गुणवचनो ऽयं । जातिवचनात् तु सामान्यतो ङीष् भवति ॥ काली वर्णश्चेत् । अन्या काला ॥ नीली अनाच्छादनं चेत् । अन्या नीला ॥ कुशी अयोविकारश्चेत् । अन्या कुशा ॥ कामुकी मैथुनेच्छा चेत् । अन्या कामुका ॥ कबरी केशवेशश्चेत् । अन्या कबरा ॥

## शोणात् प्राचां ॥४३॥

शोण । इत्येतस्मात् प्राचां मतेन स्त्रियां ङीष् स्यात् ॥ शोणी ॥ अन्येषां मतेन । शोणा ॥

## वोतो गुणवचनात् ॥४४॥

उकारान्ताद्गुणवचनात् स्त्रियां वा ङीष् स्यात् ॥ पट्वी । पटुः । मृद्वी । मृदुः ॥ उतः किं । शुचिः ॥ गुणवचनात् किं । आखुः ॥

## बह्वादिभ्यश्च ॥४५॥

बहु । इत्येवमादिभ्यः स्त्रियां वा ङीष् स्यात् ॥ बह्वी । बहुः । पद्धती । पद्धतिः ॥

## नित्यं छन्दसि ॥४६॥

बह्वादिभ्यश्छन्दसि स्त्रियां नित्यं ङीष् स्यात् ॥ बह्वीनामोषधीनां ॥ नित्यग्रहणमुत्तरार्थं ॥

## भुवश्च ॥४७॥

भु । इत्येतदन्ताच्छन्दसि स्त्रियां नित्यं ङीप् स्यात् ॥ विभ्वी च । प्रभ्वी च ॥ उत इत्यनुवर्त्तते । नेह भवति । स्वयंभूः । भुव इत्युवङादेशः सौत्रः ॥

## पुंयोगादाख्यायां ॥४८॥

या पुमाख्या पुंयोगाद्धेतोः स्त्रियां वर्त्तते ततो ङीप् स्यात् ॥ गोपस्य स्त्री । गोपी ॥ गणकी ॥ पुंयोगात् किं । देवदत्ता ॥ आख्याग्रहणं किं । परिशिष्टा ॥

## इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ॥४९॥

इन्द्रादीनामानुगागमः स्यात् । ङीष् च ॥ इन्द्राणी ॥ वरुणानी ॥ भवानी ॥ शर्वाणी ॥ रुद्राणी ॥ मृडानी ॥ महद्धिमं । हिमानी ॥ महदरण्यं । अरण्याणी ॥ दुष्टो यवः । यवानी ॥ यवनानां लिपिः । यवनानी ॥ मातुलानी ॥ आचार्यानी ॥ पुंयोगे ङीप् पूर्वेण सिद्ध आगममात्रं विधीयते । पुंयोगो यत्र नास्ति तत्र तूभयं ॥

## क्रीतात् करणपूर्वात् ॥५०॥

क्रीत । इत्येतदन्तादनुपसर्ज्जनात् करणपूर्वात् प्रातिपदिकात् स्त्रियां ङीप् स्यात् ॥ वस्त्रक्रीती ॥ अत्र सुबुत्पत्तेः प्राक् समासः ॥ करणपूर्वात् किं । सुक्रीता ॥ अत इत्येव । धनेन क्रीता । धनक्रीती । कर्तृकरणे कृता बहुलमिति बहुलग्रहणात् सुबुत्पत्त्यनन्तरं समासः ॥

## क्तादल्पाख्यायां ॥५१॥

क्त । इत्येतदन्तात् करणपूर्वात् प्रातिपदिकात् स्त्रियां ङीप् स्यात् । समुदायेनाल्पत्वं द्योत्यं ॥ अभ्रलिप्ती द्यौः ॥ अल्पाख्यायां किं । चन्दनानुलिप्ता ब्राह्मणी ॥

## बहुव्रीहेश्चान्तोदात्तात् ॥५२॥

क्त । इत्येतदन्तादन्तोदात्ताद्बहुव्रीहेः स्त्रियां ङीप् स्यात् ॥ शङ्खभिन्नी । ऊरुभिन्नी ॥ बहुव्रीहेः किं । पादपतिता ॥ अन्तोदात्तात् किं । वस्त्रच्छन्ना ॥

## अस्वाङ्गपूर्वपदाद्वा ॥५३॥

क्त । इत्येतदन्तादन्तोदात्तादस्वाङ्गपूर्वपदाद्बहुव्रीहेः स्त्रियां वा ङीष् स्यात् ॥ शाकजग्धी । शाकजग्धा । पलाण्डुभक्षिती । पलाण्डुभक्षिता । सुरापीती । सुरापीता ॥

## स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ॥५४॥

असंयोगोपधमुपसर्जनं यत् स्वाङ्गं तदन्तात् प्रातिपदिकात् स्त्रियां वा ङीष् स्यात् ॥ चन्द्रमुखी । चन्द्रमुखा कान्ता ॥ सुकेशी । सुकेशा रथ्या ॥ सुस्तनी । सुस्तना प्रतिमा ॥ स्वाङ्गात् किं । बहुयवा ॥ उपसर्जनात् किं । बहुशिखा ॥ असंयोगोपधात् किं । सुगुल्फा ॥

## नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ॥५५॥

नासिका । उदर । ओष्ठ । जङ्घा । दन्त । कर्ण । शृङ्ग । इत्येतद्यत् स्वाङ्गमुपसर्जनं तदन्तात् प्रातिपदिकात् स्त्रियां वा ङीष् स्यात् ॥ तुङ्गनासिकी । तुङ्गनासिका ॥ तलोदरी । तलोदरा ॥ बिम्बोष्ठी । बिम्बोष्ठा ॥ दीर्घजङ्घी । दीर्घजङ्घा ॥ समदन्ती । समदन्ता ॥ चारुकर्णी । चारुकर्णा ॥ तीक्ष्णशृङ्गी । तीक्ष्णशृङ्गा ॥

## न क्रोडादिबह्वचः ॥५६॥

क्रोड । इत्येवमादि यत् स्वाङ्गं बह्वच्कं च यत् स्वाङ्गं तदन्तात् प्रातिपदिकान्ङीष् न स्यात् ॥ कल्याणक्रोडा । कल्याणनखा ॥ बह्वचः । पृथुजघना ॥

## सहनञ्विद्यमानपूर्वाच्च ॥५७॥

सह । नञ् । विद्यमान । इत्येवंपूर्वकं यत् स्वाङ्गं तदन्तात् प्रातिपदिकान्ङीष् न स्यात् ॥ सकेशा । अकेशा । विद्यमानकेशा ॥

## नखमुखात् संज्ञायां ॥५८॥

नख । मुख । इत्येते ये स्वाङ्गे तदन्तात् प्रातिपदिकात् संज्ञाविषये ङीप् न स्यात् ॥ शूर्पणखा । वज्रणखा ॥ गौरमुखा । कालमुखा ॥ संज्ञायां किं । ताम्रनखी । चन्द्रमुखी ॥

## दीर्घजिह्वी च च्छन्दसि ॥ ५९ ॥

दीर्घजिह्वी । इत्येतन्ङीपन्तं वेदे निपात्यते ॥ दीर्घजिह्वी वै देवानां हव्यमलेट् ॥ संज्ञायामित्येव । दीर्घजिह्वान्या ॥

## दिक्पूर्वपदान्ङीप् ॥ ६० ॥

दिग्वाचकपूर्वपदकं यत् स्वाङ्गं तदन्तात् प्रातिपदिकान्ङीपो विषये वा ङीप् स्यात् ॥ प्राङ्मुखी । प्राङ्मुखा । प्राङ्नासिकी । प्राङ्नासिका ॥ ङीपो निषेधविषयत्वादिह न भवति । प्राग्गुल्फा । प्राक्क्रोडा । प्राग्जघना ॥

## वाहः ॥ ६१ ॥

वाह् । इत्येतदन्तात् प्रातिपदिकात् स्त्रियां ङीप् स्यात् ॥ ङीपोऽनुवृत्तिः । न तु ङीपः ॥ प्रष्ठौही ॥

## सख्यशिश्वीति भाषायां ॥ ६२ ॥

सखी । अशिश्वी । इत्येतौ ङीपन्तौ निपात्येते भाषायां विषये ॥ सखी ब्राह्मणी ॥ अशिश्वी । नास्याः शिशुरस्तीत्यर्थः ॥ इतिशब्दाद्वेदेऽपि क्वचित् । धुनयन्तामशिश्वी ॥ भाषायां किं । सखा सप्तपदी भव । अशिशुमिव मामयं शिशुरभिमन्ये ॥

## जातेरस्त्रीविषयादयोपधात् ॥ ६३ ॥

जातिवाचिनो नित्यस्त्रीलिङ्गभिन्नाद्यकारोपधवर्जितात् स्त्रियां ङीष् स्यात् ॥ कुक्कुटी । सूकरी ॥ वृषली ॥ नारायणी । चारायणी ॥ कठी । कलापी ॥ जातेः किं । मुण्डा ॥ अस्त्रीविषयात् किं । मक्षिका ॥ अयोपधात् किं । क्षत्रिया ॥

## पाककर्णपर्णपुष्पफलमूलबालोत्तरपदाच्च ॥ ६४ ॥

पाकाद्युत्तरपदाज्जातिवाचिनो नित्यस्त्रीलिङ्गात् स्त्रियां ङीष् स्यात् ॥ पाक ।

ओदनपाकी ॥ कर्ण । शुककर्णी ॥ पर्ण । शरपर्णी ॥ पुष्प । शङ्खपुष्पी ॥ फल । दाशफली ॥ मूल । दर्भमूली ॥ वाल । गोवाली ॥

## इतो मनुष्यजातेः ॥६५॥

इ । इत्येतदन्तान्मनुष्यजातिवाचिनः स्त्रियां ङीष् स्यात् ॥ अवन्ती । कुन्ती । दाक्षी । प्लाक्षी ॥ इतः किं । विट् ॥ मनुष्यजातेः किं । तित्तिरिः ॥ पुनर्जातिग्रहणाद्यकारोपधादपि भवति । औदमेयी ॥

## ऊङुतः ॥६६॥

उ । इत्येतदन्तान्मनुष्यजातिवाचिनोऽयकारोपधात् स्त्रियामूङ्प्रत्ययः स्यात् ॥ कुरूः । ब्रह्मबन्धूः ॥ उकारो नोङ्धात्वोरिति विशेषणार्थः ॥ दीर्घोच्चारणं कयो बाधनार्थं ॥ अयोपधात् किं । अध्वर्युर्ब्राह्मणी ॥

## बाह्वन्तात् संज्ञायां ॥६७॥

बाहु । इत्येतदन्तात् प्रातिपदिकात् संज्ञायां विषये स्त्रियामूङ् स्यात् ॥ भद्रबाहूः । स्थूलबाहूः ॥ संज्ञायां किं । वृत्तबाहुः ॥

## पङ्गोश्च ॥६८॥

पङ्गु । इत्येतस्मात् प्रातिपदिकात् स्त्रियामूङ् स्यात् ॥ पङ्गूः ॥

## ऊरूत्तरपदादौपम्ये ॥६९॥

ऊरु । इत्येतदुत्तरपदात् प्रातिपदिकादौपम्ये गम्यमाने स्त्रियामूङ् स्यात् ॥ करभोरूः ॥ औपम्ये किं । वृत्तोरुः स्त्री ॥

## संहितशफलक्षणवामादेश्च ॥७०॥

संहित । शफ । लक्षण । वाम । इत्येतदादिभ्य ऊरूत्तरपदेभ्यः प्रातिपदिकेभ्यः स्त्रियामूङ् स्यात् ॥ संहितोरूः । शफोरूः । लक्षणोरूः । वामोरूः ॥

## कद्रुकमण्डल्वोश्छन्दसि ॥७१॥

कद्रु । कमण्डलु । इत्येताभ्यां वेदे स्त्रियामूङ् स्यात् ॥ कद्रूश्च वै सुपर्णी च ॥ मास्म कमण्डलूं शूद्राय वै दद्यात् ॥ छन्दसि किं । कद्रुः । कमण्डलुः ॥

## संज्ञायां ॥ ७२ ॥

कद्रु । कमण्डलु । इत्येताभ्यां संज्ञाविषये स्त्रियामूङ् स्यात् ॥ कद्रूः । कमण्डलूः ॥ संज्ञायां किं । कद्रुः । कमण्डलुः ॥

## शार्ङ्गरवाद्यञो ङीन् ॥ ७३ ॥

शार्ङ्गरव । इत्येवमादिभ्यो ऽञो यो ऽकारस्तदन्ताच्च प्रातिपदिकात् स्त्रियां ङीन्प्रत्ययः स्यात् ॥ शार्ङ्गरवी । कापटवी ॥ अञन्तात् । बैदी । और्वी ॥ जातिग्रहणानुवृत्तेः पुंयोगे ऽयं न भवति । बैदस्य स्त्री । बैदी । पुंयोगे ङीप् ॥

## यङश्चाप् ॥ ७४ ॥

ञ्यङ् । ष्यङ् । इत्येतदन्तात् प्रातिपदिकात् स्त्रियां चाप् स्यात् ॥ आम्बष्ठ्या । कारीषगन्ध्या ॥

## आवट्याच्च ॥ ७५ ॥

आवट्य । इत्येतस्माद्गर्गादियञन्तात् स्त्रियां चाप् स्यात् ॥ आवट्या ॥ प्राचां तु ष्फो भवति सर्वत्रग्रहणात् । आवट्यायनी ॥

## तद्धिताः ॥ ७६ ॥

अधिकारो ऽयमा पञ्चमाध्यायपरिसमाप्तेः । इत ऊर्ध्वं याननुक्रमिष्यामस्तद्धितसंज्ञकास्ते वेदितव्याः ॥ वक्ष्यति यूनस्तिः । युवतिः ॥ बहुवचनमनुक्ततद्धितपरिग्रहार्थं । पृथिव्या ञाञावित्यादि ॥

## यूनस्तिः ॥ ७७ ॥

युवन् । इत्येतस्मात् प्रातिपदिकात् स्त्रियां तिप्रत्ययः स्यात् । स च तद्धितसंज्ञः ॥ युवतिः ॥

## अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ॥ ७८ ॥

अण् । इञ् । इत्येतौ यौ गोत्रे विहितावनार्षौ तदन्तयोः प्रातिपदिकयोर्गुरूपोत्तमयोः स्त्रियां ष्यङादेशः स्यात् ॥ करीषगन्धेरपत्यं स्त्री । कारीषगन्ध्या । तस्यापत्यमित्यण् ॥ वराहस्यापत्यं स्त्री । वाराह्या । अत इञ् ॥ अणिञोः किं । ऋतभागस्यापत्यं स्त्री । आर्तभागी । विदादित्वादञ् ॥ अनार्षयोः किं ।

वासिष्ठी । वैश्वामित्री ॥ गुरूपोत्तमयोः किं । औपगवी । कापटवी ॥ गोत्रे किं । आहिच्छत्री । कान्यकुब्जी ॥

## गोत्रावयवात् ॥७९॥

गोत्रावयवाद्विहितयोरणिञोः स्त्रियां ष्यङादेशः स्यात् ॥ पौणिक्या । हौणिक्या । मौखर्या ॥

## क्रौड्यादिभ्यश्च ॥८०॥

क्रौडि । इत्येवमादिभ्यः स्त्रियां ष्यङादेशः स्यात् ॥ क्रौड्या । लाड्या ॥

## दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्यो ऽन्यतरस्यां ॥८१॥

दैवयज्ञि । शौचिवृक्षि । सात्यमुग्रि । काण्ठेविद्धि । इत्येतेषां स्त्रियां ष्यङादेशो वा स्यात् । पक्ष इतो मनुष्यजातेरिति ङीष् भवति ॥ दैवयज्ञ्या । दैवयज्ञी ॥ शौचिवृक्ष्या । शौचिवृक्षी ॥ सात्यमुग्र्या । सात्यमुग्री ॥ काण्ठेविद्ध्या । काण्ठेविद्धी ॥

## समर्थानां प्रथमाद्वा ॥८२॥

पदत्रयाधिकारो ऽयं । प्राग्दिशो विभक्तिरिति यावत् ॥ कृतसन्धिकार्याणां मध्ये प्रथमोच्चारितशब्दबोध्यादेव प्रत्ययो वेदितव्यः ॥ वक्ष्यति तस्यापत्यमिति । औपगवः ॥ समर्थानां किं । सौत्थितिः ॥ प्रथमादिति किं । अपत्यवाचकात् षष्ठ्यर्थे मा भूत् ॥ वाग्रहणं किं । वाक्यमपि यथा स्यात् । उपगोरपत्यं ॥ समर्थः पदविधिरिति परिभाषेह न भवति । वस्त्रमुपगोरपत्यं चैत्रस्य ॥ पूर्वसूत्रादन्यतरस्यांग्रहणमनुवर्तते । तेन पक्षे समासो ऽपि । उपग्वपत्यं ॥

## प्राग्दीव्यतो ऽण् ॥८३॥

अण् । इत्ययमधिकारस्तेन दीव्यतीत्यतः प्राग्वेदितव्यः ॥ वक्ष्यति तस्यापत्यमिति । औपगवः । कापटवः ॥

## अश्वपत्यादिभ्यश्च ॥८४॥

अश्वपति । इत्येवमादिभ्यः प्रातिपदिकेभ्यः प्राग्दीव्यतो ये ऽर्थास्तेष्वर्थेष्वण् स्यात् ॥ अश्वपतेरपत्यादि । आश्वपतं । शातपतं ॥

## दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ॥ ८५ ॥

दिति । अदिति । आदित्य । इत्येतेभ्यः पत्युत्तरपदाच्च प्रातिपदिकात् प्राग्दीव्यतो ये ऽर्थास्तेषु ण्यप्रत्ययः स्यात् ॥ दैत्यः ॥ आदित्यः ॥ आदित्यः ॥ पत्युत्तरपदात् । प्राजापत्यं । सैनापत्यं ॥

## उत्सादिभ्यो ऽञ् ॥ ८६ ॥

उत्स । इत्येवमादिभ्यः प्रातिपदिकेभ्यः प्राग्दीव्यतो ये ऽर्थास्तेष्वञ्प्रत्ययः स्यात् ॥ औत्सः । औदपानः ॥

## स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ॥ ८७ ॥

स्त्री । पुंस् । इत्येताभ्यां क्रमान्नञ् । स्नञ् । इत्येतौ प्रत्ययौ भवतः । धान्यानां भवने क्षेत्रे खञित्यतः प्राग्ये ऽर्थास्तेष्वर्थेषु ॥ स्त्रीषु भवः । स्त्रैणः । स्त्रीभ्य आगतं । स्त्रैणं ॥ पुंसु भवः । पौंस्नः । पुंस आगतं । पौंस्नं ॥

## द्विगोर्लुगनपत्ये ॥ ८८ ॥

दीव्यतः प्रागर्थेषु द्विगोर्निमित्तं यस्तद्धितो ऽनपत्यार्थस्तस्य लुक् स्यात् ॥ पञ्चसु कपालेषु संस्कृतः पुरोडाशः । पञ्चकपालः ॥ द्विवेदः ॥ अनपत्ये किं । दैवदत्तिः ॥ प्राग्दीव्यतः किं । द्वैपारायणिकः ॥ द्विगुनिमित्तमिति किं । पञ्चकपालस्येदं खण्डं । पाञ्चकपालं ॥

## गोत्रे ऽलुगचि ॥ ८९ ॥

अजादौ प्राग्दीव्यतीये विवक्षिते यस्कादिभ्यो गोत्र इति प्रकरणविहितो लुग्न स्यात् ॥ गर्गाणां छात्राः । गार्गीयाः ॥ वात्सीयाः । आत्रेयीयाः । चारायणीयाः ॥

## यूनि लुक् ॥ ९० ॥

अजादौ प्राग्दीव्यतीये विवक्षिते यून्यपत्ये जातस्य प्रत्ययस्य लुक् स्यात् ॥ फाण्टाहृतस्यापत्यं । फाण्टाहृतिः । तस्यापत्यं युवा । फाण्टाहृतः । तस्यच्छात्रा इति छप्रत्यये विवक्षिते यूनि जातस्य णप्रत्ययस्य लुकि इञश्चेत्यण् भवति । फाण्टाहृताः ॥ भागवित्तस्यापत्यं । भागवित्तिः । तस्यापत्यं युवा । भागवित्तिकः । तस्यच्छात्रा इति छप्रत्यये विवक्षिते ठको लुकि इञश्चेत्यण् ।

भागवित्ताः ॥ तिकस्यापत्यं । तैकायनिः । तस्यापत्यं युवा । तैकायनीयः । तस्यच्छात्रा इति छप्रत्यये विवक्षिते यूनि ञातस्य छप्रत्ययस्य लुकि इञश्चोत्य-स्याप्राप्तेर्वृद्धाच्छो भवति । तैकायनीयः ॥ अञादौ किं । फाण्टाहृतश्प्यं ॥ प्राग्दीव्यतीये किं । भागवित्ताय हितं । भागवित्तिकीयं ॥

## फक्फिञोरन्यतरस्यां ॥ ९१ ॥

फक् । फिञ् । इत्येतयोर्यूनि ञातयोरञादौ प्राग्दीव्यतीये विवक्षिते वा लुक् स्यात् ॥ गार्ग्यायणस्यच्छात्राः । गार्गीयाः । गार्ग्यायणीयाः ॥ फिञः । यास्कायनेश्छात्राः । यास्कीयाः । यास्कायनीयाः ॥

## तस्यापत्यं ॥ ९२ ॥

षष्ठ्यन्तादपत्यमित्येतस्मिन्नर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया भवन्ति ॥ उपगोरपत्यं । औपगवः ॥ मानवः । आश्वपतः । दैत्यः । स्त्रैणः । पौंस्नः ॥

## एको गोत्रे ॥ ९३ ॥

गोत्र एक एवापत्यप्रत्ययो भवति ॥ औपगवः । गार्ग्यः । नाडायनः ॥ एकेनैव गोत्रप्रत्ययेन सर्वेषां गोत्राणां पर्यायेणाभिधानं भवति । प्रत्ययान्तरं नोत्पद्यते ॥

## गोत्राद्यून्यस्त्रियां ॥ ९४ ॥

यून्यपत्ये विवक्षिते गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात् । न तु परमप्रकृत्यनन्तरयु-वभ्यः ॥ गर्गस्यापत्यं युवा । गार्ग्यायणः ॥ वात्स्यायनः । दाक्षायणः । औ-पगविः ॥ अस्त्रियामिति भिन्नं वाक्यं । स्त्रियां तु युवसंज्ञा न स्यात् । किमर्थमिदं । दाक्षी । युवसंज्ञानिषेधात् स्त्रीगोत्रप्रत्ययेनाभिधीयते ॥

## अत इञ् ॥ ९५ ॥

अ । इत्येतदन्तात् प्रातिपदिकात् षष्ठ्यन्तादपत्ये ऽर्थ इञ् स्यात् ॥ दाक्षिः । प्लाक्षिः ॥

## बाह्वादिभ्यश्च ॥ ९६ ॥

बाहु । इत्येवमादिभ्यः षष्ठ्यन्तेभ्यो ऽपत्ये ऽर्थ इञ् स्यात् ॥ बाहविः । औपबाहविः ॥

## सुधातुरकङ् च ॥ ९७ ॥

सुधातृ । इत्येतस्मादपत्य इञ् स्यात् । अकङ् । इत्ययमादेशश्च तत्संनियोगेन ॥
सुधातुरपत्यं । सौधातकिः ॥

## गोत्रे कुञ्जादिभ्यश्च्फञ् ॥ ९८ ॥

कुञ्ज । इत्येवमादिभ्यः षष्ठ्यन्तेभ्यो गोत्रे ऽपत्ये च्फञ्प्रत्ययः स्यात् ॥ कौञ्जा-
यन्यः । कौञ्जायन्यौ । कुञ्जायनाः ॥ गोत्रे किं । कौञ्जिः ॥ चकारो विशे-
षणार्थः । ञकारो वृद्ध्यर्थः । स्वरविधौ योगविभागात् परमपि ञित्स्वरं
बाधित्वा चित्स्वरः ॥

## नडादिभ्यः फक् ॥ ९९ ॥

नड । इत्येवमादिभ्यः षष्ठ्यन्तेभ्यो गोत्रे ऽपत्ये फक् स्यात् ॥ नाडायनः ।
चारायणः ॥

## हरितादिभ्यो ऽञः ॥ १०० ॥

हरित । इत्येवमादिभ्यो ऽञन्तेभ्यो ऽपत्ये फक् स्यात् ॥ हरितस्यापत्यं ।
हारितायनः ॥ इह गोत्राधिकारे ऽपि सामर्थ्याद्युवापत्ये प्रत्ययः । न हि गो-
त्रादपरो गोत्रप्रत्ययः । एको गोत्र इति नियमात् ॥ हरितादिर्बिदाद्यन्तर्गणः ॥

## यञिञोश्च ॥ १०१ ॥

यञ् । इञ् । इत्येतौ गोत्रे यौ ज्ञातौ तदन्ताद्युवापत्ये फक् स्यात् ॥ गा-
र्ग्यायणः ॥ दाक्षायणः ॥ गोत्रे किं । द्वैप्यं । सौतंगमिः ॥

## शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु ॥ १०२ ॥

शरद्वत् । शुनक । दर्भ । इत्येतेभ्यः क्रमेण भृगु । वत्स । आग्रायण । इत्येतेषु
वाच्येषु गोत्रे ऽपत्ये फक् स्यात् ॥ शारद्वतायनो भार्गवश्चेत् । शारद्वतो ऽन्यः ॥
शौनकायनो वात्स्यश्चेत् । शौनको ऽन्यः ॥ दार्भायण आग्रायणश्चेत् । दार्भि-
रन्यः ॥

## द्रोणपर्वतजीवन्तादन्यतरस्यां ॥ १०३ ॥

द्रोण । पर्वत । जीवन्त । इत्येतेभ्यो गोत्रे ऽपत्ये वा फक् स्यात् ॥ द्रौ-
णायनः । द्रौणिः । अनादिरिह द्रोणः । भारतप्रसिद्धे ऽनन्तरापत्ये ऽश्व-

त्याम्नि द्रौणायन इति प्रयोगस्तूपचारात् ॥ पार्वतायनः । पार्वतिः ॥ जैवन्तायनः । जैवन्तिः ॥

## अनृष्यानन्तर्ये विदादिभ्यो ऽञ् ॥१०४॥

विद । इत्येवमादिभ्यो गोत्रे ऽपत्ये ऽञ् स्यात् । ये तु विदादावृषिभिन्नाः शब्दास्तेभ्यो ऽनन्तरापत्ये ऽञ् स्यात् ॥ वैदः । और्वः ॥ अनृषिभ्यः । पुत्रस्यापत्यं । पौत्रः । दुहितुरपत्यं । दौहित्रः ॥ गोत्रे किं । वैदिः । बाह्वादित्वादनन्तरापत्य इञ् ॥

## गर्गादिभ्यो यञ् ॥१०५॥

गर्ग । इत्येवमादिभ्यो गोत्रे ऽपत्ये यञ् स्यात् ॥ गार्ग्यः । वात्स्यः ॥

## मधुबभ्र्वोर्ब्राह्मणकौशिकयोः ॥१०६॥

मधु । बभ्रु । इत्येताभ्यां क्रमेण ब्राह्मणे कौशिके च वाच्ये गोत्रे ऽपत्ये यञ् स्यात् ॥ माधव्यो ब्राह्मणश्चेत् । माधवो ऽन्यः ॥ बाभ्रव्यः कौशिकश्चेत् । बाभ्रवो ऽन्यः ॥ गर्गादिपाठफलं तु लोहितादित्वात् ष्फः । बाभ्रव्यायणी ॥

## कपिबोधादाङ्गिरसे ॥१०७॥

कपि । बोध । इत्येताभ्यामाङ्गिरसे वाच्ये गोत्रे ऽपत्ये यञ् स्यात् ॥ काप्यः । बौध्यः ॥ आङ्गिरसे किं । कापेयः । बौधिः ॥ कपिशब्दस्य गर्गादिपाठफलं तु लोहितादित्वात् ष्फः । काप्यायनी ॥

## वतण्डाच्च ॥१०८॥

वतण्ड । इत्येतस्मादाङ्गिरसे वाच्ये गोत्रे ऽपत्ये यञ् स्यात् ॥ वातण्ड्यः ॥ अनाङ्गिरसे तु गर्गादौ पाठाद्यञ् । वातण्ड्यः । शिवादौ च पाठादण् । वातण्डः ॥

## लुक् स्त्रियां ॥१०९॥

वतण्ड । इत्येतस्माद्यञो लुक् स्यात् । आङ्गिरस्यां स्त्रियां वाच्यायां ॥ वतण्डी । शार्ङ्गरवादित्वान्ङीन् ॥ आङ्गिरस इत्येव । वातण्ड्यायनी । वातण्डी ॥

## अश्वादिभ्यः फञ् ॥११०॥

अभ्र । इत्येवमादिभ्यो गोत्रे ऽपत्ये फञ् स्यात् ॥ आभ्रायनः । आग्रमायनः ॥ ये ऽत्र गोत्रप्रत्ययान्ताः पठ्यन्ते तेभ्यः सामर्थ्याद्यूनि भवति ॥

## भर्गात् त्रैगर्ते ॥१११॥

भर्ग । इत्येतस्माद्गोत्रे ऽपत्ये त्रैगर्ते वाच्ये फञ् स्यात् ॥ भार्गायणस्त्रैगर्तश्चेत् । भार्गिरन्यः ॥ इत उत्तरं गोत्राधिकारो निवृत्तः ॥

## शिवादिभ्यो ऽण् ॥११२॥

शिव । इत्येवमादिभ्यो ऽपत्ये ऽण् स्यात् ॥ शैवः । प्रौष्ठः ॥ उदीचामिञं बाधित्वा पुनरण्ग्रहणादणेव । आर्ष्टिषेणः ॥

## अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः ॥११३॥

नदी । मानुषी । इत्येतन्नामधेयेभ्यो ऽवृद्धसंज्ञकेभ्यो ऽपत्ये ऽण् स्यात् ॥ यमुनाया अपत्यं । यामुनः ॥ नार्मदः ॥ मानुषीभ्यः । चिन्तिताया अपत्यं । चैन्तितः ॥ शैक्षितः ॥ अवृद्धाभ्यः किं । चान्द्रभागेयः । वासवदत्तेयः ॥ नदीमानुषीभ्यः किं । सौपर्णेयः । वैनतेयः ॥ तन्नामिकाभ्यः किं । शोभनेयः ॥

## ऋष्यन्धकवृष्णिकुरुभ्यश्च ॥११४॥

ऋषि । अन्धक । वृष्णि । कुरु । इत्येतद्वाचकेभ्यः प्रातिपदिकेभ्यो ऽपत्ये ऽण् स्यात् ॥ ऋषयो मन्त्रद्रष्टारो वसिष्ठादयः । वासिष्ठः । वैश्वामित्रः ॥ अन्धका वंशाख्याः । श्वाफल्कः । रान्धसः ॥ वृष्णयो वंशाख्याः । वासुदेवः । आनिरुद्धः ॥ कुरवो वंशाख्याः । नाकुलः । साहदेवः ॥

## मातुरुत् संख्यासंभद्रपूर्वायाः ॥११५॥

मातृ । इत्येतस्मात् संख्यापूर्वात् संपूर्वाद्भद्रपूर्वाच्चापत्ये ऽण् स्यात् । उकारश्चान्तादेशो मातृशब्दस्य ॥ संख्या । द्वयोर्मात्रोरपत्यं । द्वैमातुरः । षाण्मातुरः ॥ सांमातुरः । भाद्रमातुरः ॥ संख्येत्यादि किं । सौमात्रः ॥ स्त्रीलिङ्गनिर्देशो ऽर्थापेक्षः । तेन धान्यमतुर्ग्रहणं न भवति । सौमात्रः ॥

## कन्यायाः कनीन च ॥११६॥

कन्या । इत्येतस्मादपत्ये ऽण् स्यात् । तत्संनियोगेन कन्या । इत्येतस्य कनीन । इत्ययमादेशश्च ॥ कन्याया अपत्यं । कानीनो व्यासः कर्णश्च ॥

## विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु ॥११७॥

विकर्ण । शुङ्ग । छगल । इत्येतेभ्यः क्रमेण वत्स । भरद्वाज । अत्रिषु वाच्येष्वपत्ये ऽण् स्यात् ॥ वैकर्णो वात्स्यश्चेत् । वैकर्णिरन्यः ॥ शौङ्गो भारद्वाजश्चेत् । शौङ्गिरन्यः ॥ छागल आत्रेयश्चेत् । छागलिरन्यः ॥

## पीलाया वा ॥११८॥

पीला । इत्येतस्मादपत्ये ऽण् वा स्यात् ॥ पैलः । पैलेयः ॥

## ढक् च मण्डूकात् ॥११९॥

मण्डूक । इत्येतस्मादपत्ये ढक् स्यात् । चकारादण् च वा स्यात् ॥ माण्डूकेयः । माण्डूकः । माण्डूकिः ॥

## स्त्रीभ्यो ढक् ॥१२०॥

स्त्रीप्रत्ययान्तेभ्यः प्रातिपदिकेभ्यो ऽपत्ये ढक् स्यात् ॥ सौपर्णेयः । वैनतेयः ॥

## द्व्यचः ॥१२१॥

द्वावचौ यस्मिन् ततः स्त्रीप्रत्ययान्तादपत्ये ढक् स्यात् ॥ दत्ताया अपत्यं । दात्तेयः ॥ गौप्तेयः ॥ द्व्यचः किं । यामुनः ॥

## इतश्चानिञः ॥१२२॥

इ । इत्येतदन्तादिजन्तभिन्नाद्द्व्यचः प्रातिपदिकादपत्ये ढक् स्यात् ॥ आत्रेयः । नैधेयः ॥ इतः किं । दाक्षिः ॥ अनिञः किं । दाक्षायणः ॥ द्व्यचः किं । मारीचः ॥

## शुभ्रादिभ्यश्च ॥१२३॥

शुभ्र । इत्येवमादिभ्यो ऽपत्ये ढक् स्यात् ॥ शौभ्रेयः । वैष्टपुरेयः ॥

## विकर्णकुषीतकात् काश्यपे ॥१२४॥

विकर्ण । कुषीतक । इत्येताभ्यां काश्यपे वाच्ये ऽपत्ये ढक् स्यात् ॥ वैकर्णेयः काश्यपश्चेत् । वैकर्णिरन्यः ॥ कौषीतकेयः काश्यपश्चेत् । कौषीतकिरन्यः ॥

## श्रुवो वुक् च ॥ १२५ ॥

श्रू । इत्येतस्मादपत्ये ढक् स्यात् । तत्संनियोगेन वुगागमश्च ॥ श्रौवेयः ॥

## कल्याण्यादीनामिनङ् च ॥ १२६ ॥

कल्याणी । इत्येवमादिभ्यो ऽपत्ये ढक् स्यात् । तत्संनियोगेन तेषामिनङ्ङा-देशश्च ॥ काल्याणिनेयः । सौभागिनेयः ॥

## कुलटाया वा ॥ १२७ ॥

कुलटा । इत्येतस्मादपत्ये ढक् स्यात् । तत्संनियोगेनेनङ्ङादेशश्च वा ॥ कौ-लटिनेयः । कौलटेयः ॥ सती भिक्षुक्यत्र कुलटा । या तु व्यभिचारार्थं कुलान्यटति तत्र क्षुद्राभ्यो वेति ढ्रक् । कौलटेरः ॥

## चटकाया ऐरक् ॥ १२८ ॥

चटका । इत्येतस्मादपत्य ऐरक्प्रत्ययः स्यात् ॥ चाटकैरः ॥

## गोधाया ढ्रक् ॥ १२९ ॥

गोधा । इत्येतस्मादपत्ये ढ्रक् स्यात् ॥ गौधेरः ॥ शुभ्रादिष्वयं पठ्यते । तेन ढक् । गौधेयः ॥

## आरगुदीचां ॥ १३० ॥

गोधा । इत्येतस्मादपत्य आरक् स्यात् ॥ गौधारः ॥ उदीचां ग्रहणं पूजार्थं । वचनसामर्थ्यादेव ढ्रका समावेशो भविष्यति ॥

## क्षुद्राभ्यो वा ॥ १३१ ॥

क्षुद्राभ्यो ऽपत्ये वा ढ्रक् स्यात् ॥ काणेरः । दासेरः ॥ पक्षे ढक् । का-णेयः । दासेयः ॥ काः क्षुद्रा नाम । अनियतपुंस्का अङ्गहीना वा ॥ इति भाष्यं ॥

## पितृष्वसुश्छण् ॥ १३२ ॥

पितृष्वसृ । इत्येतस्मादपत्ये छण् स्यात् ॥ पैतृष्वस्रीयः ॥

## ढकि लोपः ॥ १३३ ॥

पितृष्वसृ । इत्येतस्यापत्ये ढकि परे लोपः स्यात् ॥ पैतृष्वसेयः ॥

## मातृष्वसुश्च ॥१३४॥

मातृष्वसृ । इत्येतस्मादपि पितृष्वसृशब्दस्य यदुक्तं तद्भवति ॥ मातृष्वसीयः । मातृष्वसेयः ॥

## चतुष्पाद्भ्यो ढञ् ॥१३५॥

चतुष्पाज्जातिवाचिभ्यो ऽपत्ये ढञ् स्यात् ॥ कामण्डलेयः । शैतिवाहेयः ॥

## गृष्ट्यादिभ्यश्च ॥१३६॥

गृष्टि । इत्येवमादिभ्यो ऽपत्ये ढञ् स्यात् ॥ गार्ष्टेयः । हार्ष्टेयः ॥

## राजश्वशुराद्यत् ॥१३७॥

राजन् । श्वशुर । इत्येताभ्यामपत्ये यत् स्यात् ॥ राजन्यः । श्वशुर्यः ॥

## क्षत्राद्घः ॥१३८॥

क्षत्र । इत्येतस्मादपत्ये घः स्यात् ॥ क्षत्रियो जातिश्चेत् । क्षात्रिरन्यः ॥

## कुलात् खः ॥१३९॥

कुल । इत्येतस्मादपत्ये खः स्यात् ॥ कुलीनः ॥ उत्तरसूत्रे ऽपूर्वपदादिति निषेधादत्र कुलान्तादपि खः । आढ्यकुलीनः ॥

## अपूर्वपदादन्यतरस्यां यड्ढकञौ ॥१४०॥

कुल । इत्येतस्मादविद्यमानपूर्वपदादपत्ये ऽर्थे यत् । ढकञ् । इत्येतौ प्रत्ययौ वा भवतः ॥ कुल्यः । कौलेयकः ॥ पक्षे खः । कुलीनः ॥ पदग्रहणं किं । बहुच्पूर्वादपि यथा स्यात् । बहुकुल्यः । बाहुकुलेयकः । बहुकुलीनः ॥

## महाकुलादञ्खञौ ॥१४१॥

महाकुल । इत्येतस्मादपत्ये ऽञ् । खञ् । इत्येतौ प्रत्ययौ भवतः ॥ माहाकुलः । माहाकुलीनः ॥ पक्षे खः । महाकुलीनः ॥

## दुष्कुलाड्ढक् ॥१४२॥

दुष्कुल । इत्येतस्मादपत्ये वा ढक् स्यात् ॥ दौष्कुलेयः ॥ पक्षे खः । दुष्कुलीनः ॥

## स्वसुश्छः ॥१४३॥

स्वसृ । इत्येतस्मादपत्ये छः स्यात् ॥ स्वस्रीयः ॥

## भ्रातुर्व्यच्च ॥१४४॥

भ्रातृ । इत्येतस्मादपत्ये व्यत् स्यात् । चकाराच्छश्च ॥ भ्रातृव्यः । भ्रात्रीयः ॥ तकारः स्वरार्थः ॥

## व्यन् सपत्ने ॥१४५॥

भ्रातृ । इत्येतस्मात् शत्रौ वाच्ये ऽपत्ये व्यन् स्यात् ॥ भ्रातृव्यः कण्टकः ॥

## रेवत्यादिभ्यष्ठक् ॥१४६॥

रेवती । इत्येवमादिभ्यो ऽपत्ये ठक् स्यात् ॥ रैवतिकः । आश्वपालिकः ॥

## गोत्रस्त्रियाः कुत्सने ण च ॥१४७॥

गोत्रं या स्त्री तद्वाचिनः शब्दादपत्ये ऽर्थे कुत्सने गम्यमाने णः स्यात् ॥ चकाराट्ठक् ॥ गार्ग्या अपत्यं । गार्गो जाल्मः । गार्गिकः ॥ स्त्रियाः किं । औपगविः ॥ कुत्सने किं । गार्गेयो माणवकः ॥

## वृद्धाट्ठक् सौवीरेषु बहुलं ॥१४८॥

वृद्धसंज्ञकात् सौवीरगोत्राद्भूयपत्ये कुत्सायां बहुलं ठक् स्यात् ॥ भागवित्तेरपत्यं । भागवित्तिकः ॥ पक्षे फक् । भागवित्तायनः ॥ सौवीरेषु किं । औपगविर्जाल्मः ॥ कुत्सन इत्येव । भागवित्तायनो माणवकः ॥

## फेश्छ च ॥१४९॥

फिञ । इत्येतदन्तात् सौवीरगोत्रादपत्ये छः स्यात् । चकाराट्ठक् च कुत्सने गम्ये ॥ यमुन्दस्यापत्यं । यामुन्दायनिः । तिकादिभ्यः फिञ । तस्यापत्यं युवा । यामुन्दायनीयः । यामुन्दायनिकः ॥ कुत्सने किं । यामुन्दायनिः । ण्यक्षत्रियार्ष इत्यादिनाणो लुक् ॥

## फाण्टाहृतिमिमताभ्यां णफिञौ ॥१५०॥

फाण्टाहृति । मिमत । इत्येताभ्यां सौवीरगोत्रे वर्तमानाभ्यामपत्ये ऽर्थे ण ।

फिञ् । इत्येतौ प्रत्ययौ भवतः ॥ फाण्टाहृतः । फाण्टाहृतायनिः ॥ मैमतः । मैमतायनिः ॥

## कुर्वादिभ्यो ण्यः ॥१५१॥

कुरु । इत्येवमादिभ्यो ऽपत्ये ऽर्थे ण्यः स्यात् ॥ कौरव्यः । कौरव्यौ । कौरव्याः ब्राह्मणाः ॥

## सेनान्तलक्षणकारिभ्यश्च ॥१५२॥

सेन । इत्येतदन्तात् । लक्षण । इत्येतस्मात् कारिवाचकेभ्यश्चापत्ये ऽर्थे ण्यः स्यात् ॥ हारिषेण्यः ॥ लाक्षण्यः ॥ कारिः शिल्पी । तान्तुवाय्यः । नापित्यः ॥

## उदीचामिञ् ॥१५३॥

सेन । इत्येतदन्तात् । लक्षण । इत्येतस्मात् कारिवाचकेभ्यश्चापत्ये ऽर्थे इञ् स्यात् । उदीचामाचार्याणां मते ॥ हारिषेणिः । लाक्षणिः । कौम्भकारिः ॥ अन्येषां मते । हारिषेण्यः । लाक्षण्यः । कौम्भकार्यः ॥

## तिकादिभ्यः फिञ् ॥१५४॥

तिक । इत्येवमादिभ्यो ऽपत्ये ऽर्थे फिञ् स्यात् ॥ तैकायनिः । कैतवायनिः ॥

## कौशल्यकार्मार्याभ्यां च ॥१५५॥

कौशल्य । कार्मार्य । इत्येताभ्यामपत्ये ऽर्थे फिञ् स्यात् ॥ कोशलस्यापत्यं । कौशल्यायनिः ॥ कर्मारस्यापत्यं । कार्मार्यायणिः ॥ परमप्रकृतेरपत्ये प्रत्ययः । प्रत्ययसंनियोगेन च कौशल्यकार्मार्य इति प्रकृतिरूपं निपात्यते ॥

## अणो द्व्यचः ॥१५६॥

अण् । इत्येतदन्ताद्द्व्यचकात् प्रातिपदिकादपत्ये ऽर्थे फिञ् स्यात् ॥ कार्त्रायणिः ॥ अणः किं । दाक्षायणः ॥ द्व्यचः किं । औपगविः ॥

## उदीचां वृद्धादगोत्रात् ॥१५७॥

वृद्धसंज्ञकं यत् प्रातिपदिकमगोत्रं तस्मादपत्ये ऽर्थे फिञ् स्यात् । उदीचां मते ॥ आम्रगुप्तायनिः ॥ अन्येषां मते । आम्रगुप्तिः ॥ वृद्धात् किं । याज्ञदत्तिः ॥ अगोत्रात् किं । औपगविः ॥

## वाकिनादीनां कुक् च ॥ १५८ ॥

वाकिन । इत्येवमादिभ्यो ऽपत्ये ऽर्थे फिञ् वा स्यात् । तत्संनियोगेन तेषां कुगागमश्च ॥ वाकिनकायनिः । वाकिनिः ॥

## पुत्रान्तादन्यतरस्यां ॥ १५९ ॥

पुत्र । इत्येतदन्तं वृद्धं यत् प्रातिपदिकमगोत्रं ततः फिञि परे पुत्रान्तस्य कुगागमो वा स्यात् ॥ गार्गीपुत्रकायणिः । गार्गीपुत्रायणिः । गार्गीपुत्रिः ॥

## प्राचामवृद्धात् फिन् बहुलं ॥ १६० ॥

वृद्धसंज्ञकभिन्नात् प्रातिपदिकादपत्ये ऽर्थे फिन् वा स्यात् ॥ ग्लुचुकायनिः ॥ प्राचां ग्रहणं पूजार्थं ॥ अवृद्धात् किं । राजदन्तिः ॥

## मनोर्जातावञ्यतौ षुक् च ॥ १६१ ॥

मनु । इत्येतस्मादपत्ये ऽर्थे ऽञ् । यत् । इत्येतौ प्रत्ययौ भवतः । षुगागमश्च भवति समुदायेन चेज्जातिर्गम्यते ॥ मानुषः । मनुष्यः ॥

## अपत्यं पौत्रप्रभृति गोत्रं ॥ १६२ ॥

पौत्रादि यदपत्यं तद्गोत्रसंज्ञं स्यात् ॥ गर्गस्य पौत्रप्रभृत्यपत्यं । गार्ग्यः ॥

## जीवति तु वंश्ये युवा ॥ १६३ ॥

वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं तद्युवसंज्ञमेव स्यात् । न तु गोत्रसंज्ञं ॥ गार्ग्यायणः । वात्स्यायनः ॥

## भ्रातरि च ज्यायसि ॥ १६४ ॥

वंश्ये पित्रादौ मृते ऽपि ज्येष्ठे भ्रातरि जीवति सति पौत्रादेः कनिष्ठमपत्यं युवसंज्ञं स्यात् ॥ गार्ग्यायणः । वात्स्यायनः ॥

## वान्यस्मिन् सपिण्डे स्थविरतरे जीवति ॥ १६५ ॥

सप्तमपुरुषावधयः सपिण्डाः ॥ भ्रातुरन्यस्मिन् सपिण्डे स्थविरतरे जीवति सति पौत्रादेरपत्यं जीवदेव युवसंज्ञं वा स्यात् ॥ गर्गस्यापत्यं युवा । गार्ग्यायणः । गार्ग्यः ॥ स्थविरतर इति तरपो निर्देशः स्थानवयसोरुत्कर्षार्थः । तेन स्थानेन

वयसा च न्यूने गार्ग्य इत्येव भवति ॥ जीवतीति किं । मृते मृतो वा गार्ग्य एव

## वृद्धस्य च पूजायां ॥१६६॥

गोत्रस्य युवसंज्ञा वा स्यात् पूजायां गम्यमानायां ॥ तत्र भवान् गार्ग्यायणः । गार्ग्यो वा ॥ पूजायां किं । गार्ग्यः ॥

## यूनश्च कुत्सायां ॥१६७॥

कुत्सायां गम्यमानायां यूनो युवसंज्ञा वा स्यात् । पक्षे युवसंज्ञानिषेधाद्गोत्रसंज्ञैव भवति ॥ गार्ग्यो जाल्मः । गार्ग्यायणो जाल्मः ॥ कुत्सायां किं । गार्ग्यायणः ॥

## जनपदशब्दात् क्षत्रियादञ् ॥१६८॥

जनपदवाचकः सन् यः क्षत्रियवाचकः शब्दस्तस्मादपत्ये ऽर्थे ऽञ् स्यात् ॥ पाञ्चालः । ऐक्ष्वाकः ॥ जनपदशब्दात् किं । द्रुह्योरपत्यं । द्रौह्यवः ॥ क्षत्रियात् किं । ब्राह्मणस्य पञ्चालस्यापत्यं । पाञ्चालिः ॥

## साल्वेयगान्धारिभ्यां च ॥१६९॥

साल्वेय । गान्धारि । इत्येताभ्यां जनपदक्षत्रियोभयवाचिभ्यामपत्ये ऽर्थे ऽञ् स्यात् ॥ साल्वेयः । गान्धारः ॥ तस्य राजनीत्येव । साल्वेयो राजा । गान्धारो राजा ॥ वृद्धेदिति ञ्यङो बाधनार्थं सूत्रं ॥

## द्व्यञ्मगधकलिङ्गसूरमसादण् ॥१७०॥

जनपदक्षत्रियवाचिभ्यो द्व्यच्केभ्यः । मगध । कलिङ्ग । सूरमस । इत्येतेभ्यश्चापत्ये ऽण् स्यात् ॥ द्व्यच् । आङ्गः । वाङ्गः । सौह्मः ॥ मागधः । कालिङ्गः । सौरमसः ॥ तस्य राजन्यप्येवं ॥

## वृद्धेत्कोसलाजादाञ्ञ्यङ् ॥१७१॥

जनपदक्षत्रियवाचिभ्यो वृद्धसंज्ञकेभ्यः । इकारान्तेभ्यः । कोसल । अजाद । इत्येताभ्यां चापत्ये ऽर्थे ञ्यङ् स्यात् ॥ वृद्ध । आम्बष्ठ्यः ॥ इत् । आवन्त्यः ॥ कौसल्यः । आजाद्यः ॥ इदिति तपरकरणं किं । कौमारः ॥

## कुरुनादिभ्यो ण्यः ॥ १७२ ॥

कुरु । इत्येतस्मान्नकारादिभ्यश्च जनपदक्षत्रियवाचिभ्यो ऽपत्ये ण्यः स्यात् ॥ कौरव्यः ॥ नादिभ्यः । नैषध्यः । नैचित्यः ॥ तस्य राजन्यप्येवं ॥

## साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ॥ १७३ ॥

जनपदावयववाचिभ्यः । प्रत्यग्रथ । कलकूट । अश्मक । इत्येतेभ्यश्चापत्य इञ् स्यात् ॥ साल्वावयव । औदुम्बरिः । यौगन्धरिः । भौलिङ्गिः ॥ प्रात्यग्रथिः । कालकूटिः । आश्मकिः ॥ तस्य राजन्यप्येवं ॥

## ते तद्राजाः ॥ १७४ ॥

अञ् । इत्येवमादयः प्रत्ययास्तद्राजसंज्ञका भवन्ति ॥ पञ्चालाः । इक्ष्वाकवः । अङ्गाः । वङ्गाः ॥

## कम्बोजाल्लुक् ॥ १७५ ॥

कम्बोज । इत्येतस्मात् परस्य तद्राजसंज्ञकस्य लुक् स्यात् ॥ कम्बोजः । कम्बोजौ ॥

## स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ॥ १७६ ॥

अवन्ति । कुन्ति । कुरु । इत्येतेभ्यः स्त्रियां तद्राजस्य लुक् स्यात् ॥ अवन्ती । कुन्ती । उभयत्र ञ्यङो लुक् ॥ कुरूः । ण्यस्य लुक् ॥ स्त्रियां किं । आवन्त्यः । कौन्त्यः । कौरव्यः ॥

## अतश्च ॥ १७७ ॥

अ । इत्येतस्य तद्राजस्य स्त्रियां लुक् स्यात् ॥ शूरसेनी । मद्री ॥

## न प्राच्यभर्गादियौधेयादिभ्यः ॥ १७८ ॥

प्राच्येभ्यः । भर्गादिभ्यः । यौधेयादिभ्यश्चोत्पन्नस्य तद्राजस्य लुग्न स्यात् ॥ पाञ्चाली । वैदेही । आङ्गी ॥ भार्गी । कारूशी ॥ यौधेयी । शौभ्रेयी ॥

॥ इति सूत्रपाठे चतुर्थाध्यायस्य प्रथमः पादः ॥

## तेन रक्तं रागात् ॥१॥

तृतीयान्ताद्रागद्रव्यवाचिनो रक्तमित्येतस्मिन्नर्थे ऽणादयो वक्ष्यमाणाः प्रत्यया भवन्ति ॥ कषायेण रक्तं वस्त्रं । काषायं ॥ कौसुम्भं ॥ रागात् किं । देवदत्तेन रक्तं वस्त्रं ॥

## लाक्षारोचनाट्ठक् ॥२॥

लाक्षा । रोचना । इत्येताभ्यां रक्ते ऽर्थे ठक् स्यात् ॥ लाक्षिकं । रोचनिकं ॥

## नक्षत्रेण युक्तः कालः ॥३॥

तृतीयान्तान्नक्षत्रवाचिनो युक्त इत्येतस्मिन्नर्थे ऽणादयः प्रत्यया भवन्ति ॥ पुष्येण युक्तं । पौषमहः । पौषी रात्रिः ॥ नक्षत्रेण किं । चन्द्रमसा युक्ता रात्रिः ॥ कालः किं । पुष्येण युक्तश्चन्द्रमाः ॥

## लुबविशेषे ॥४॥

पूर्वसूत्रविहितस्य प्रत्ययस्य लुप् स्यात् । नक्षत्रयुक्तस्य कालस्य विशेषो यदि न गम्यते ॥ अद्य पुष्यः ॥ अविशेषे किं । पौषमहः । पौषी रात्रिः ॥

## संज्ञायां श्रवणाश्वत्थाभ्यां ॥५॥

श्रवण । अश्वत्थ । इत्येताभ्यामुत्पन्नस्य प्रत्ययस्य संज्ञायां विषये नक्षत्रयुक्तकालस्य विशेषे ऽविशेषे च लुप् स्यात् ॥ श्रवणा रात्रिः । विभाषा फाल्गुनीति सूत्रे श्रवणा इति निर्देशाल्लुपि युक्तवद्भावो न भवति ॥ अश्वत्थो मुहूर्तः ॥ संज्ञायां किं । श्रावणी रात्रिः । आश्वत्थो मुहूर्तः ॥

## द्वन्द्वाच्छः ॥६॥

तृतीयान्तान्नक्षत्रद्वन्द्वात् तद्युक्ते काले छः स्यात् । विशेषे सति । असति च ॥ राधानुराधीया रात्रिः । तिष्यपुनर्वसवीयमहः ॥ अविशेषे । अद्य राधानुराधीयं । अद्य तिष्यपुनर्वसवीयं ॥ लुपं परत्वाच्छो बाधते ॥

## दृष्टं साम ॥७॥

तृतीयान्ताद्दृष्टमित्येतस्मिन्नर्थे ऽणादयः प्रत्यया भवन्ति । यद्दृष्टं साम चेत् तद्भवति ॥ वसिष्ठेन दृष्टं । वासिष्ठं साम ॥

## कलेर्ढक् ॥ ८ ॥

कलि । इत्येतस्मात् तृतीयान्ताड्ढक् स्यात् ॥ कलिना दृष्टं । कालेयं साम ॥

## वामदेवाड्ड्यड्ड्यौ ॥ ९ ॥

वामदेव । इत्येतस्मात् । ड्यत् । ड्य । इत्येतौ प्रत्ययौ भवतः ॥ वामदेवेन दृष्टं । वामदेव्यं । वामदेव्यं साम । स्वरे विशेषः ॥

## परिवृतो रथः ॥ १० ॥

तृतीयान्तात् परिवृत इत्येतस्मिन्नर्थे ऽणादयो वक्ष्यमाणाः प्रत्यया भवन्ति । यः परिवृतो रथश्चेत् स भवति ॥ वस्त्रेण परिवृतः । वास्त्रो रथः ॥ रथः किं । वस्त्रेण परिवृतः कायः ॥ समन्ताद्वेष्टितः परिवृत उच्यते । तेनेह न । छात्रैः परिवृतः ॥

## पाण्डुकम्बलादिनिः ॥ ११ ॥

पाण्डुकम्बल । इत्येतस्मात् तृतीयान्तात् परिवृत इत्येतस्मिन्नर्थ इनिप्रत्ययः स्यात् ॥ पाण्डुकम्बली । पाण्डुकम्बलिनौ ॥ पाण्डुकम्बलो राजास्तरणकम्बलः ॥

## द्वैपवैयाघ्रादञ् ॥ १२ ॥

द्वैप । वैयाघ्र । इत्येताभ्यां तृतीयान्ताभ्यां परिवृत इत्येतस्मिन्नर्थे ऽञ् स्यात् ॥ द्वैपो रथः । वैयाघ्रो रथः ॥

## कौमारापूर्ववचने ॥ १३ ॥

कौमार । इत्येतदण्प्रत्ययान्तं निपात्यते ऽपूर्वत्वे ॥ अपूर्वपतिं कुमारीं पतिरुपपन्नः । कौमारः पतिः । द्वितीयान्तादुपयमनकर्तरि प्रत्ययः ॥ अपूर्वपतिः कुमारी पतिमुपपन्ना । कौमारी भार्या । प्रथमान्तात् स्वार्थे प्रत्ययः ॥

## तत्रोद्धृतममत्रेभ्यः ॥ १४ ॥

सप्तम्यन्तेभ्यः पात्रवाचिभ्य उद्धृतमित्येतस्मिन्नर्थे यथाविहितमणादयः प्रत्यया भवन्ति ॥ शराव उद्धृतः । शारावो भुक्तोच्छिष्ट ओदनः ॥ अमत्रेभ्यः किं । पाणावुद्धृतः ॥

## स्थण्डिलाच्छयितरि व्रते ॥१५॥

स्थण्डिल । इत्येतस्मात् सप्तम्यन्ताच्छयनकर्तर्यण् स्यात् । समुदायेन चेद्व्रतं गम्यते ॥ स्थण्डिले शयितुं नियमो ऽस्य । स्थाण्डिलो भिक्षुः ॥ व्रते किं । स्थण्डिले शेते ॥

## संस्कृतं भक्षाः ॥१६॥

सप्तम्यन्तात् संस्कृतमित्येतस्मिन्नर्थे ऽणादयः प्रत्यया भवन्ति । यत् संस्कृतं भक्षाश्चेत् ते भवन्ति ॥ खरविशदमभ्यवहार्यं भक्षं ॥ भ्राष्ट्रे संस्कृताः । भ्राष्ट्रा यवाः ॥ भक्षाः किं । पुष्पपुटे संस्कृतो मालागुणः ॥

## शूलोखाद्यत् ॥१७॥

शूल । उखा । इत्येताभ्यां यत् स्यात् ॥ शूले संस्कृतं । शूल्यं मांसं ॥ उखा पात्रविशेषः । उख्यं ॥

## दध्नष्ठक् ॥१८॥

दधि । इत्येतस्माट्ठक् स्यात् ॥ दध्नि संस्कृतं । दाधिकं ॥

## उदश्वितो ऽन्यतरस्यां ॥१९॥

उदश्वित् । इत्येतस्माद्वा ठक् स्यात् ॥ उदश्विति तक्रे संस्कृतं । औदश्वित्कं ॥ पक्षे ऽण् । औदश्वितं ॥

## क्षीराड्ढञ् ॥२०॥

क्षीर । इत्येतस्माड्ढञ् स्यात् ॥ क्षीरे संस्कृता । क्षैरेयी यवागूः ॥

## सास्मिन् पौर्णमासीति संज्ञायां ॥२१॥

प्रथमान्तात् पौर्णमासीवाचकादस्मिन्निति सप्तम्यर्थे ऽणादयो वक्ष्यमाणाः प्रत्यया भवन्ति ॥ पौषी पौर्णमास्यस्मिन् । पौषः ॥

## आग्रहायण्यश्वत्थाट्ठक् ॥२२॥

आग्रहायणी । अश्वत्थ । इत्येताभ्यां ठक् स्यात् ॥ आग्रहायणी पौर्णमास्य-स्मिन् । आग्रहायणिको मासादिः ॥ आश्वत्थिको मासादिः ॥

## विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः ॥ २३ ॥

फाल्गुनी । श्रवणा । कार्तिकी । चैत्री । इत्येतेभ्यो वा ठक् स्यात् ॥ फाल्गुणी पौर्णमास्यस्मिन् । फाल्गुनिकः । फाल्गुनो मासादिः ॥ श्राव-णिकः । श्रावणः ॥ कार्तिकिकः । कार्तिकः ॥ चैत्रिकः । चैत्रः ॥

## सास्य देवता ॥ २४ ॥

प्रथमान्ताद्देवतोपाधिकादस्येति षष्ठ्यर्थे ऽणादयो वक्ष्यमाणाः प्रत्यया भवन्ति ॥ इन्द्रो देवतास्य । ऐन्द्रं हविः ॥ सेति प्रकृते संज्ञानिवृत्त्यर्थं पुनः सेति ॥

## कस्येत् ॥ २५ ॥

क । इत्येतस्य । इ । इत्ययमादेशो भवति । अणप्रत्ययसंनियोगेन ॥ को ब्रह्मा देवतास्य । कायं हविः ॥

## शुक्राद्घन् ॥ २६ ॥

शुक्र । इत्येतस्माद्घन् स्यात् ॥ शुक्रो देवतास्य । शुक्रियं हविः ॥

## अपोनप्त्रपांनप्तृभ्यां घः ॥ २७ ॥

अपोनप्तृ । अपांनप्तृ । इत्येताभ्यां घः स्यात् ॥ अपोनपाद्देवतास्य । अपो-नप्त्रियं ॥ अपांनपाद्देवतास्य । अपांनप्त्रियं ॥

## छ च ॥ २८ ॥

अपोनप्तृ । अपांनप्तृ । इत्येताभ्यां छः स्यात् ॥ अपोनपाद्देवतास्य । अपोन-प्त्रीयं हविः ॥ अपांनप्त्रीयं ॥ योगविभागो यथासंख्यनिवृत्त्यर्थः ॥

## महेन्द्राद्घाणौ च ॥ २९ ॥

महेन्द्र । इत्येतस्मात् । घ । अण् । इत्येतौ प्रत्ययौ भवतः । चकाराच्छः ॥ महेन्द्रो देवतास्य । महेन्द्रियं । माहेन्द्रं । महेन्द्रीयं हविः ॥

## सोमाट्ट्यण् ॥ ३० ॥

सोम । इत्येतस्माट्ट्यण् स्यात् ॥ सोमो देवतास्य । सौम्यं हविः ॥ टकारो ङीबर्थः । सौमी ऋक् ॥

## वाय्वृतुपित्रुषसो यत् ॥३१॥

वायु । ऋतु । पितृ । उषस् । इत्येतेभ्यो यत् स्यात् ॥ वायुर्देवतास्य । वायव्यं हविः ॥ ऋतव्यं । पित्र्यं । उषस्यं ॥

## द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृह- मेधाच्छ च ॥३२॥

द्यावापृथिवी । शुनासीर । मरुत्वत् । अग्नीषोम । वास्तोष्पति । गृहमेध । इत्येतेभ्यश्छः स्यात् । चकाराद्यत् ॥ द्यावापृथिव्यौ देवते अस्य । द्यावापृथिवीयं हविः । द्यावापृथिव्यं ॥ शुनासीरीयं । शुनासीर्यं ॥ मरुत्वतीयं । मरुत्वत्यं ॥ अग्नीषोमीयं । अग्नीषोम्यं ॥ वास्तोष्पतीयं । वास्तोष्पत्यं ॥ गृहमेधीयं । गृहमेध्यं ॥

## अग्नेर्ढक् ॥३३॥

अग्नि । इत्येतस्माड्ढक् स्यात् ॥ अग्निर्देवतास्य । आग्नेयं हविः ॥

## कालेभ्यो भववत् ॥३४॥

कालविशेषवाचिभ्यः सास्य देवता । इत्येतस्मिन् विषये भववत् प्रत्ययो भवति ॥ मासिकं । प्रावृषेण्यं ॥

## महाराजप्रोष्ठपदाभ्यां ठञ् ॥३५॥

महाराज । प्रोष्ठपद । इत्येताभ्यां ठञ् स्यात् ॥ महाराजो देवतास्य । माहाराजिकं ॥ प्रौष्ठपदिकं ॥

## पितृव्यमातुलमातामहपितामहाः ॥३६॥

पितृव्य । मातुल । मातामह । पितामह । इत्येते शब्दा निपात्यन्ते ॥ पितुर्भ्राता । पितृव्यः । व्यत् ॥ मातुर्भ्राता । मातुलः । डुलच् ॥ मातुः पिता । मातामहः । डामहच् ॥ पितुः पिता । पितामहः । डामहच् ॥

## तस्य समूहः ॥३७॥

षष्ठ्यन्तात् समूह इत्येतस्मिन्नर्थे ऽणादयो वक्ष्यमाणाः प्रत्यया भवन्ति ॥ काकानां समूहः । काकं ॥ वाकं । वाकनं ॥

## भिक्षादिभ्यो ऽण् ॥ ३८ ॥

भिक्षा । इत्येवमादिभ्यो ऽण् स्यात् ॥ भिक्षाणां समूहः । भैक्षं ॥ गार्भिणं ॥ युवतीनां समूहः । यौवतं । गणपाठसामर्थ्यान्न पुंवत् ॥ अणग्रहणं बाधकबाधनार्थं ॥

## गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् ॥ ३९ ॥

गोत्र । उक्षन् । उष्ट्र । उरभ्र । राजन् । राजन्य । राजपुत्र । वत्स । मनुष्य । अज । इत्येतेभ्यो वुञ् स्यात् ॥ अपत्याधिकारादन्यत्र लौकिकमपत्यमात्रं गोत्रं । औपगवानां समूहः । औपगवकं ॥ औक्षकं । औष्ट्रकं । औरभ्रकं । राजकं । राजन्यकं । राजपुत्रकं । वात्सकं । मानुष्यकं । आजकं ॥

## केदाराद्यञ् च ॥ ४० ॥

केदार । इत्येतस्माद्यञ् स्यात् । चकाराद्वुञ् ॥ केदाराणां समूहः । कैदार्यं । कैदारकं ॥

## ठञ् कवचिनश्च ॥ ४१ ॥

कवचिन् । इत्येतस्मात् समूहे ऽर्थे ठञ् स्यात् ॥ कवचिनां समूहः । कावचिकं ॥ चकारात् केदारादपि । कैदारिकं ॥

## ब्राह्मणमाणववाडवाद्यन् ॥ ४२ ॥

ब्राह्मण । माणव । वाडव । इत्येतेभ्यो यन् स्यात् ॥ ब्राह्मणानां समूहः । ब्राह्मण्यं ॥ माणव्यं ॥ वाडव्यं ॥

## ग्रामजनबन्धुभ्यस्तल् ॥ ४३ ॥

ग्राम । जन । बन्धु । इत्येतेभ्यस्तल् स्यात् ॥ ग्रामाणां समूहः । ग्रामता ॥ जनता । बन्धुता ॥

## अनुदात्तादेरञ् ॥ ४४ ॥

अनुदात्तादेः प्रातिपदिकादञ् स्यात् ॥ कपोतानां समूहः । कापोतं ॥ मायूरं ॥

## खण्डिकादिभ्यश्च ॥ ४५ ॥

खण्डिक । इत्येवमादिभ्यो ऽञ् स्यात् ॥ खण्डिकानां समूहः । खाण्डिकं ॥

## चरणेभ्यो धर्मवत् ॥४६॥

शाखावाचिभ्यः षष्ठ्यन्तेभ्यः समूहे ऽर्थे धर्मवत् प्रत्यया भवन्ति ॥ काठकं । कालापकं ॥

## अचित्तहस्तिधेनोष्ठक् ॥४७॥

अचित्तार्थेभ्यः । हस्तिन् । धेनु । इत्येताभ्यां च समूहे ऽर्थे ठक् स्यात् ॥ अचित्त । आपूपिकं । शाष्कुलिकं ॥ हस्तिन् । हास्तिकं ॥ धेनु । धैनुकं ॥

## केशाश्वाभ्यां यञ्छावन्यतरस्यां ॥४८॥

केश । अश्व । इत्येताभ्यां क्रमेण यञ् । छ । इत्येतौ प्रत्ययौ वा भवतः ॥ केशानां समूहः । कैश्यं । कैशिकं ॥ अश्वीयं । आश्वं ॥

## पाशादिभ्यो यः ॥४९॥

पाश । इत्येवमादिभ्यो यः स्यात् ॥ पाशानां समूहः । पाश्या ॥

## खलगोरथात् ॥५०॥

खल । गो । रथ । इत्येतेभ्यो यः स्यात् ॥ खलानां समूहः । खल्या ॥ गव्या । रथ्या ॥

## इनित्रकट्यचश्च ॥५१॥

खल । गो । रथ । इत्येतेभ्यः क्रमेण । इनि । त्र । कट्यच् । इत्येते प्रत्यया भवन्ति ॥ खलानां समूहः । खलिनी ॥ गोत्रा । रथकट्या ॥

## विषयो देशे ॥५२॥

षष्ठ्यन्ताद्विषय इत्येतस्मिन्नर्थे देशे वाच्ये ऽणादयो वक्ष्यमाणाः प्रत्यया भवन्ति ॥ शिबीनां विषयो देशः । शैबः ॥ विषयः परिशीलित उच्यते ॥

## राजन्यादिभ्यो वुञ् ॥५३॥

राजन्य । इत्येवमादिभ्यो वुञ् स्यात् ॥ राजन्यानां विषयो देशः । राजन्यकः ॥

## भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ ॥५४॥

भौरिकि । इत्येवमादिभ्यः । ऐषुकारि । इत्येवमादिभ्यश्च क्रमेण विधल् । भक्तल् । इत्येतौ प्रत्ययौ भवतः ॥ भौरिकीणां विषयो देशः । भौरिकिविधं ॥ ऐषुकारिभक्तं । सारसायनभक्तं ॥

## सो ऽस्यादिरितिच्छन्दसः प्रगाथेषु ॥५५॥

प्रथमान्तादस्येति षष्ठ्यर्थे ऽण् स्यात् । यत् प्रथमान्तं छन्दश्चेत् तदादिर्भवति । यो ऽसौ षष्ठ्यर्थः प्रगाथश्चेत् स भवति ॥ पङ्क्तिरादिरस्य । पाङ्क्तः प्रगाथः ॥ जागतः ॥ आदिः किं । अनुष्टुम्मध्यमस्य प्रगाथस्य ॥ छन्दसः किं । उदुत्यशब्द आदिरस्य प्रगाथस्य ॥ प्रगाथेषु किं । पङ्क्तिरादिरस्यानुवाकस्य ॥

## संग्रामे प्रयोजनयोद्धृभ्यः ॥५६॥

प्रथमान्तेभ्यः प्रयोजनवाचिभ्यः । योद्धृवाचिभ्यश्चास्येति षष्ठ्यर्थे संग्रामे ऽभिधेये ऽण् स्यात् ॥ सुभद्रा प्रयोजनमस्य । सौभद्रः संग्रामः ॥ भरता योद्धारो ऽस्य संग्रामस्य । भारतः संग्रामः ॥ संग्रामे किं । सुभद्रा प्रयोजनमस्य दानस्य ॥ प्रयोजनयोद्धृभ्यः किं । सुभद्रा प्रेक्षिकास्य ग्रामस्य ॥

## तदस्यां प्रहरणमिति क्रीडायां णः ॥५७॥

प्रथमान्तात् प्रहरणवाचकादस्यामिति सप्तम्यर्थे णप्रत्ययः स्यात् । क्रीडा चेत् सप्तम्यर्थः ॥ दण्डः प्रहरणमस्यां क्रीडायां । दाण्डा ॥ प्रहरणं किं । माला भूषणमस्यां ॥ क्रीडायां किं । खड्गः प्रहरणमस्यां सेनायां ॥

## घञः सास्यां क्रियेति ञः ॥५८॥

घञ्प्रत्ययान्तात् क्रियावाचकात् प्रथमान्तात् स्त्रीलिङ्गे सप्तम्यर्थे ञप्रत्ययः स्यात् ॥ श्येनपातो ऽस्यां वर्तते । श्यैनंपाता मृगया ॥ तैलंपाता स्वधा ॥ घञः किं । श्येनपतनमस्यां ॥ क्रियेति किं । प्राकारो ऽस्यां ॥ सास्यांग्रहणं क्रीडायामित्येतन्निवृत्त्यर्थं । तेन दाण्डपाता तिथिरित्यादि सिध्यति ॥

## तदधीते तद्वेद ॥५९॥

द्वितीयान्तादधीते । इत्येतस्मिन्नर्थे द्वितीयान्ताद्वेद । इत्येतस्मिन्नर्थे चाणादयो वक्ष्यमाणाः प्रत्यया भवन्ति ॥ व्याकरणमधीते वेद वा । वैयाकरणः ॥

## क्रतूक्थादिसूत्रान्ताट्ठक् ॥६०॥

क्रतुविशेषवाचिभ्यः । उक्थादिभ्यः । सूत्र । इत्येतदन्तेभ्यश्च ठक् स्यात् ॥ अग्निष्टोममधीते वेद वा । आग्निष्टोमिकः ॥ औक्थिकः । लौकायतिकः ॥ सांग्रहसूत्रिकः ॥

## क्रमादिभ्यो वुन् ॥ ६१ ॥

क्रम । इत्येवमादिभ्यो वुन् स्यात् ॥ क्रममधीते वेद वा । क्रमकः ॥

## अनुब्राह्मणादिनिः ॥ ६२ ॥

अनुब्राह्मण । इत्येतस्मादिनिप्रत्ययः स्यात् ॥ अनुब्राह्मणमधीते वेद वा । अनुब्राह्मणी । अनुब्राह्मणिनौ ॥ मत्वर्थीयेन इनिना सिद्धे ऽणो निवृत्त्यर्थं सूत्रं ॥

## वसन्तादिभ्यष्ठक् ॥ ६३ ॥

वसन्त । इत्येवमादिभ्यष्ठक् स्यात् ॥ वसन्तमधीते वेद वा । वासन्तिकः ॥

## प्रोक्ताल्लुक् ॥ ६४ ॥

प्रोक्तप्रत्ययान्ताद्ध्येतृवेदित्रोरुत्पन्नस्य प्रत्ययस्य लुक् स्यात् ॥ पाणिनिना प्रोक्तं पाणिनीयं । तदधीते वेद वा । पाणिनीया ब्राह्मणाः । अणो लुकि ङीब्न भवति ॥

## सूत्राच्च कोपधात् ॥ ६५ ॥

सूत्रवाचिनः ककारोपधादध्येतृवेदित्रोरुत्पन्नस्य प्रत्ययस्य लुक् स्यात् ॥ अष्टकं पाणिनेः सूत्रं । तदधीयते विदुर्वा । अष्टकाश्छात्राः ॥ कोपधात् किं । चातुष्टयः ॥ अप्रोक्तार्थ आरम्भः ॥

## छन्दोब्राह्मणानि च तद्विषयाणि ॥ ६६ ॥

छन्दांसि । ब्राह्मणानि च प्रोक्तप्रत्ययान्तान्यध्येतृवेदितृप्रत्ययं विना न प्रयोक्तव्यानि ॥ कठेन प्रोक्तमधीयते विदुर्वा । कठाः ॥ मौदाः । पैप्पलादाः ॥ ब्राह्मणानि । ताण्डिनः । भाल्लविनः ॥ ब्राह्मणग्रहणं ब्राह्मणविशेषग्रहणार्थं । इह तद्विषयत्वं मा भूत् । याज्ञवल्क्यानि ब्राह्मणानि ॥ [illegible] । कल्पे । काश्यपिनः । कौशिकिनः ॥ सूत्रे । पाराशरिणो

भिक्षवः । शैलालिनो नटाः । कर्मन्दिनः । कृशाश्विनः ॥ छन्दोब्राह्मणानीति किं । पाणिनीयं व्याकरणं । पैङ्गीकल्पः ॥

## तदस्मिन्नस्तीति देशे तन्नाम्नि ॥ ६७ ॥

तदिति प्रथमान्तादस्त्युपाधिकादस्मिन्निति सप्तम्यर्थे ऽणादयो वक्ष्यमाणाः प्रत्यया भवन्ति । यो ऽसौ सप्तम्यर्थो देशश्चेत् तन्नामा भवति ॥ उदुम्बराः सन्त्यस्मिन् देशे । औदुम्बरः ॥ बैल्वः । पार्वतः ॥ मत्वर्थीयनिवृत्त्यर्थं सूत्रं ॥

## तेन निर्वृत्तं ॥ ६८ ॥

तृतीयान्तान्निर्वृत्त इत्येतस्मिन्नर्थे ऽणादयो वक्ष्यमाणाः प्रत्यया भवन्ति । देशश्चेत् तन्नामा भवति ॥ कुशाम्बेन निर्वृत्ता । कौशाम्बी नगरी ॥

## तस्य निवासः ॥ ६९ ॥

षष्ठ्यन्तान्निवास इत्येतस्मिन्नर्थे ऽणादयो वक्ष्यमाणाः प्रत्यया भवन्ति । देशश्चेत् तन्नामा भवति ॥ ऋज्वाणां निवासो देशः । आर्ज्वः ॥ शैवः ॥

## अदूरभवश्च ॥ ७० ॥

षष्ठ्यन्ताददूरभव इत्येतस्मिन्नर्थे ऽणादयो वक्ष्यमाणाः प्रत्यया भवन्ति । देशश्चेत् तन्नामा भवति ॥ विदिशाया अदूरभवं नगरं । वैदिशं ॥ अस्मिन् । निर्वृत्तं । निवासः । इत्येते त्रयो ऽर्थाश्चकारात् संबध्यन्ते । इत आरभ्याग्रिमेषु सूत्रेषु चत्वारो ऽर्थाः संबध्यन्ते ॥

## ओरञ् ॥ ७१ ॥

उ । इत्येतदन्तात् प्रातिपदिकादस्मिन्नित्यादिषु चतुर्ष्वर्थेष्वञ्प्रत्ययः स्यात् ॥ कक्षतु । काक्षतवं ॥ अरडु । आरडवं । कार्कटेलवं ॥

## मतोश्च बह्वजङ्गात् ॥ ७२ ॥

बह्वजङ्गं यस्य मतुपस्तदन्तादञ् स्यात् । चतुर्ष्वर्थेषु ॥ ऐष्टकावतं । सैध्रकावतं ॥ बह्वजङ्गात् किं । आहिमतं ॥ अङ्गग्रहणं बह्वजिति तद्विशेषणं यथा स्यात् । मत्वन्तविशेषणं मा भूत् । मालावतां निवासः । मालावतं ॥

## बह्वचः कूपेषु ॥७३॥

बह्वचः प्रातिपदिकात् कूपेषु वाच्येष्वञ् स्यात् । चतुर्ष्वर्थेषु ॥ दैर्घवरत्रः कूपः ॥

## उदक् च विपाशः ॥७४॥

विपाश उत्तरकूले ये कूपास्तेषु वाच्येषु प्रातिपदिकादञ् स्यात् । चतुर्ष्वर्थेषु ॥ दत्तेन निर्वृत्तः कूपः । दात्तः ॥ उदक् किं । दात्तः । दक्षिणतः कूपेष्व-णेव । अणञोः स्वरे भेदः ॥

## संकलादिभ्यश्च ॥७५॥

संकल । इत्येवमादिभ्यो ऽञ् स्यात् । चतुर्ष्वर्थेषु ॥ सांकलं । पौष्कलं ॥

## स्त्रीषु सौवीरसाल्वप्राक्षु ॥७६॥

सौवीर । साल्व । प्राच् । इत्येतेषु स्त्रीलिङ्गेषु वाच्येषु प्रातिपदिकादञ् स्यात् । चतुर्ष्वर्थेषु ॥ सौवीरे । दत्तामित्रेण निर्वृत्ता । दात्तामित्री नगरी ॥ साल्वे । वैधूमाग्नी ॥ प्राचि । काकन्दी ॥

## सुवास्त्वादिभ्यो ऽण् ॥७७॥

सुवास्तु । इत्येवमादिभ्यो ऽण् स्यात् । चतुर्ष्वर्थेषु ॥ सौवास्तवं । वार्णवं ॥ अणग्रहणं नद्यां मतुपो बाधनार्थं । सौवास्तवी नगरी ॥ ओरञः कूपलक्ष-णस्य चाञो बाधनार्थं सूत्रं ॥

## रोणी ॥७८॥

रोणी । इत्येतस्मादण् स्यात् । चतुर्ष्वर्थेषु ॥ रौणः । तदन्तादपि । आजक-रौणः ॥ कूपलक्षणस्याञो बाधनार्थं सूत्रं ॥

## कोपधाच्च ॥७९॥

क् । इत्येतदुपधात् प्रातिपदिकादण् स्यात् । चतुर्ष्वर्थेषु ॥ कर्णाच्छिद्रकेण निर्वृत्तः । कार्णाच्छिद्रकः कूपः ॥ कृकवाकुना निर्वृत्तं । कार्कवाकवं ॥ ओरञः कूपाञश्च बाधनार्थं सूत्रं ॥

## वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठको

## ऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाश-बलपक्षकर्णसुतंगमप्रगदिवराहकुमुदादिभ्यः ॥ ८० ॥

वुञ् । छण् । क । ठच् । इल । स । इनि । र । ढञ् । ण्य । य । फक् । फिञ् । इञ् । ञ्य । कक् । ठक् । इत्येते सप्तदश प्रत्यया अरीहण । कृशाश्व । ऋश्य । कुमुद । काश । तृण । प्रेक्षा । अश्मन् । सखि । संकाश । बल । पक्ष । कर्ण । सुतंगम । प्रगदिन् । वराह । कुमुद । इत्येतदादिकेभ्यः सप्तदशप्रातिपदिकगणेभ्यो भवन्ति चतुर्ष्वर्थेषु ॥ अरीहणा-दिभ्यो वुञ् । आरीहणकं ॥ कृशाश्वादिभ्यश्छण् । कार्शाश्वीयं ॥ ऋश्यादिभ्यः कः । ऋश्यकं ॥ कुमुदादिभ्यष्ठच् । कुमुदिकं ॥ काशादिभ्य इलः । काशिलः ॥ तृणादिभ्यः सः । तृणसं ॥ प्रेक्षादिभ्य इनिः । प्रेक्षी ॥ अश्मादिभ्यो रः । अश्मरं ॥ सख्यादिभ्यो ढञ् । साखेयं ॥ संकाशादिभ्यो ण्यः । सांकाश्यं ॥ बलादिभ्यो यः । बल्यं ॥ पक्षादिभ्यः फक् । पाक्षायणः ॥ कर्णादिभ्यः फिञ् । कर्णायनिः ॥ सुतंगमादिभ्य इञ् । सौतंगमिः ॥ प्रगद्यादिभ्यो ञ्यः । प्रागद्यः ॥ वराहादिभ्यः कक् । वाराहकः ॥ कुमुदादिभ्यष्ठक् । कौमुदिकं ॥

## जनपदे लुप् ॥ ८१ ॥

ग्रामसमूहो जनपदः । तस्मिन् वाच्ये चातुरर्थिकस्य प्रत्ययस्य लुप् स्यात् ॥ पञ्चालानां निवासो जनपदः । पञ्चालाः ॥ कुरवः । मत्स्याः । अङ्गाः । मगधाः । सुह्माः ॥

## वरणादिभ्यश्च ॥ ८२ ॥

वरणा । इत्येवमादिभ्यश्चातुरर्थिकस्य लुप् स्यात् ॥ वरणानामदूरभवं नगरं । वरणा ॥

## शर्कराया वा ॥ ८३ ॥

शर्करा । इत्येतस्माच्चातुरर्थिकस्य वा लुप् स्यात् ॥ कुमुदादौ वराहादौ च पाठसामर्थ्याट्ठच्ककोः पाक्षिकश्रवणे सिद्धे वाग्रहणात् पक्षे ऽणपि भवति ॥ शर्करा ॥ लुपो ऽभावे । शार्करं । शर्करिकं । शार्करकं । शार्करिकं । शर्करीयं ॥

## ठक्छौ च ॥८४॥

शर्करा । इत्येतस्माट्ठक् । छ । इत्येतौ प्रत्ययौ भवतः । चतुर्ष्वर्थेषु ॥ शार्करिकं । शर्करीयं ॥

## नद्यां मतुप् ॥८५॥

नद्यां वाच्यायां मतुप् स्यात् । चतुर्ष्वर्थेषु । देशश्चेत् तन्नामा भवति ॥ उदुम्बरावती । मशकावती ॥

## मध्वादिभ्यश्च ॥८६॥

मधु । इत्येवमादिभ्यो मतुप् स्यात् । चतुर्ष्वर्थेषु ॥ मधुमती । विसवती ॥

## कुमुदनडवेतसेभ्यो ड्मतुप् ॥८७॥

कुमुद । नड । वेतस । इत्येतेभ्यो ड्मतुप्प्रत्ययः स्यात् । चतुर्ष्वर्थेषु ॥ कुमुद्वान् । नड्वान् । वेतस्वान् ॥

## नडशादाड्ड्वलच् ॥८८॥

नड । शाद । इत्येताभ्यां ड्वलच्प्रत्ययः स्यात् । चतुर्ष्वर्थेषु ॥ नड्वलं । शाद्वलं ॥

## शिखाया वलच् ॥८९॥

शिखा । इत्येतस्माद्वलच् स्यात् । चतुर्ष्वर्थेषु ॥ शिखावलः ॥

## उत्करादिभ्यश्छः ॥९०॥

उत्कर । इत्येवमादिभ्यश्छः स्यात् । चतुर्ष्वर्थेषु ॥ उत्करीयः ॥

## नडादीनां कुक् च ॥९१॥

नड । इत्येवमादीनां कुगागमो भवति छप्रत्ययश्च । चतुर्ष्वर्थेषु ॥ नडकीयं ॥

## शेषे ॥९२॥

अपत्यादिचतुरर्थ्यन्तादन्यो ऽर्थः शेषः । तस्मिन्नर्थ इत ऊर्ध्वं वक्ष्यमाणा अणादयः प्रत्यया बोध्याः ॥ चक्षुषा गृह्यते । चाक्षुषं रूपं ॥ श्रावणः शब्दः । रासनो रसः । स्पार्शनः स्पर्शः ॥ दृषदि पिष्टाः । दार्षदाः सक्तवः ॥ उलूखले क्षुण्णाः ।

औलूखलो यावकः ॥ अश्वैरुह्यते । आश्वो रथः । चतुर्भिरुह्यते । चातुरं शकटं ॥ चतुर्दश्यां दृश्यते । चातुर्दशं रक्षः ॥ वक्ष्यति च राष्ट्रावारपाराद्घखाविति । राष्ट्रियः । अवारपारीणः ॥

## राष्ट्रावारपाराद्घखौ ॥ ९३ ॥

राष्ट्र । अवारपार । इत्येताभ्यां क्रमात् । घ । ख । इत्येतौ प्रत्ययौ भवतः ॥ राष्ट्रियः । अवारपारीणः ॥ प्रकृतिविशेषोपादानेन तावत् प्रत्यया विधीयन्ते । तेषां जातादयो ऽर्थविशेषाः समर्थविभक्तयश्चाग्रे वक्ष्यन्ते ॥

## ग्रामाद्यखञौ ॥ ९४ ॥

ग्राम । इत्येतस्मात् । य । खञ् । इत्येतौ प्रत्ययौ भवतः ॥ ग्राम्यः । ग्रामीणः ॥

## कत्र्यादिभ्यो ढकञ् ॥ ९५ ॥

कत्रि । इत्येवमादिभ्यो ढकञ् स्यात् ॥ कात्रेयकः ॥

## कुलकुक्षिग्रीवाभ्यः श्वास्यलंकारेषु ॥ ९६ ॥

कुल । कुक्षि । ग्रीवा । इत्येतेभ्यः क्रमात् श्वन् । असि । अलंकार । इत्येतेषु वाच्येषु ढकञ् स्यात् ॥ कौलेयकः कुक्कुरश्चेत् । कौलो ऽन्यः ॥ कौक्षेयको ऽसिश्चेत् । कौक्षो ऽन्यः ॥ ग्रैवेयको ऽलंकारश्चेत् । ग्रैवो ऽन्यः ॥

## नद्यादिभ्यो ढक् ॥ ९७ ॥

नदी । इत्येवमादिभ्यो ढक् स्यात् ॥ नादेयं ॥

## दक्षिणापश्चात्पुरसस्त्यक् ॥ ९८ ॥

दक्षिणा । पश्चात् । पुरस् । इत्येतेभ्यस्त्यक् स्यात् ॥ दाक्षिणात्यः । पाश्चात्यः ॥ पौरस्त्यः ॥

## कापिश्याः ष्फक् ॥ ९९ ॥

कापिशी । इत्येतस्मात् ष्फक् स्यात् ॥ कापिशायनं मधु ॥ षकारो ङीषर्थः । कापिशायनी द्राक्षा ॥

## रङ्कोरमनुष्ये ऽण् च ॥ १०० ॥

रङ्कु । इत्येतस्मान्मनुष्यभिन्ने वाच्ये ऽण् स्यात् । चकारात् ष्फक् ॥ राङ्कवो गौः । राङ्कवायनः ॥ अमनुष्ये किं । राङ्कवको मनुष्यः ॥

## द्युप्रागपागुदक्प्रतीचो यत् ॥१०१॥

दिव् । प्राच् । अपाच् । उदच् । प्रतीच् । इत्येतेभ्यो यत् स्यात् ॥ दिव्यं । प्राच्यं । अपाच्यं । उदीच्यं । प्रतीच्यं ॥

## कन्थायाष्ठक् ॥१०२॥

कन्था । इत्येतस्माट्ठक् स्यात् ॥ कान्थिकः ॥

## वर्णौ वुक् ॥१०३॥

कन्था । इत्येतस्माद्वर्णुनदसमीपदेशविषयार्थवाचिनो वुक् स्यात् ॥ यथा हि जातं हिमवत्सु कान्थकं ॥

## अव्ययात् त्यप् ॥१०४॥

अव्ययसंज्ञकात् त्यप् स्यात् ॥ अमात्यः । इहत्यः ॥

## ऐषमोह्यःश्वसो ऽन्यतरस्यां ॥१०५॥

ऐषमस् । ह्यस् । श्वस् । इत्येतेभ्यस्त्यब्वा स्यात् । पक्षे ट्युट्युलौ ॥ ऐषमस्त्यं । ऐषमस्तनं ॥ ह्यस्त्यं । ह्यस्तनं ॥ श्वस्त्यं । श्वस्तनं ॥

## तीररूप्योत्तरपदादञौ ॥१०६॥

तीर । रूप्य । इत्येतदुत्तरपदाभ्यां प्रातिपदिकाभ्यां क्रमादञ् । ञ । इत्येतौ प्रत्ययौ भवतः ॥ पाल्वलतीरं । शैवरूप्यं ॥

## दिक्पूर्वपदादसंज्ञायां ञः ॥१०७॥

असंज्ञाविषयाद्दिग्वाचिपूर्वपदात् प्रातिपदिकाञ्ञः स्यात् ॥ पौर्वशालं । दाक्षिणाशालः ॥ असंज्ञायां किं । पूर्वेषुकामशमः । दिक्संख्ये संज्ञायामिति समासः । प्राचां ग्रामनगराणामित्युत्तरपदवृद्धिः ॥ पदग्रहणं स्वरूपाग्रहणार्थं ॥

## मद्रेभ्यो ऽञ् ॥१०८॥

मद्र । इत्येतस्माद्दिक्पूर्वपदादञ् स्यात् ॥ पौर्वमद्रः ॥ दिशो ऽमद्राणामिति पर्युदासादुत्तरपदवृद्धिर्न । किं त्वादिवृद्धिरेव ॥

## उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् ॥१०९॥

उदीच्यग्रामवाचिनो बह्वच्कादन्तोदात्तात् प्रातिपदिकादञ् स्यात् ॥ शैवपुरं ॥ उदीच्यग्रामात् किं । माथुरं ॥ बह्वचः किं । धूर्जं ॥ अन्तोदात्तात् किं । शार्करीधानं । लित्स्वरेण धाशब्द उदात्तः ॥

## प्रस्थोत्तरपदपलद्यादिकोपधादण् ॥११०॥

प्रस्थोत्तरपदात् । पलद्यादेः । ककारोपधाच्चोदीच्यग्रामवाचिनोऽण् स्यात् ॥ माहिकीप्रस्थः । पालदः । पारिषदः ॥ कोपधात् । नैलीनकः ॥

## कण्वादिभ्यो गोत्रे ॥१११॥

गोत्रप्रत्ययान्तेभ्यः कण्वादिभ्योऽण् स्यात् ॥ काण्वाः । गौकक्षाः ॥ गोत्रे किं । कण्वो देवतास्य काण्वः । तस्येदं काण्वीयं ॥ कण्वादिर्गर्गाद्यन्तर्गणः ॥

## इञश्च ॥११२॥

गोत्रे य इञ् विहितस्तदन्तादण् स्यात् ॥ दाक्षाः । प्लाक्षाः ॥ गोत्रे किं । सौतंगमेरिदं । सौतंगमीयं ॥

## न द्व्यचः प्राच्यभरतेषु ॥११३॥

प्राच्यगोत्रात् । भरतगोत्राच्च द्व्यच्कादिञ्प्रत्ययान्तादण् न स्यात् ॥ वैङ्गीयाः । पौष्पीयाः ॥ भरतगोत्रे । काशीयाः ॥ द्व्यचः किं । पान्नागाराः ॥ प्राच्यभरतेषु किं । दाक्षाः ॥ भरतानां प्राच्यत्वेऽपि पृथगुपादानमन्यत्र प्राच्यग्रहणे भरतानामग्रहणार्थं ॥

## वृद्धाच्छः ॥११४॥

वृद्धसंज्ञकात् प्रातिपदिकाच्छः स्यात् ॥ गार्गीयः । शालीयः ॥

## भवतष्ठक्छसौ ॥११५॥

भवत् । इत्येतस्माद्वृद्धसंज्ञकाट्ठक् । छस् । इत्येतौ प्रत्ययौ भवतः ॥ भावत्कः । भवदीयः ॥ वृद्धादित्येव । भावतः । शतृप्रत्ययान्तादणेव ॥

## काश्यादिभ्यष्ठञ्ञिठौ ॥११६॥

काशि । इत्येवमादिभ्यष्ठञ् । ञिठ । इत्येतौ प्रत्ययौ भवतः ॥ ठञ् । काशिकी ॥ ञिठ । काशिका ॥ इकार उच्चारणार्थः ॥

## वाहीकग्रामेभ्यश्च ॥ ११७ ॥

वाहीकग्रामवाचिभ्यो वृद्धसंज्ञकेभ्यष्ठञ् । ञिठ । इत्येतौ प्रत्ययौ भवतः ॥ शाकलिकी । शाकलिका ॥

## विभाषोशीनरेषु ॥ ११८ ॥

उशीनरेषु ये वाहीकग्रामास्तद्वाचिभ्यो वृद्धेभ्यष्ठञ् । ञिठ । इत्येतौ प्रत्ययौ वा भवतः ॥ सौदर्शनिकी । सौदर्शनिका ॥ पक्षे छः । सौदर्शनीया ॥

## ओर्देशे ठञ् ॥ ११९ ॥

उ । इत्येतदन्ताद्देशवाचिनष्ठञ् स्यात् ॥ नैषादकर्षुकः । शावरजम्बुकः ॥ देशे किं । पटोश्छात्राः । पाटवाः ॥ ञिठनिवृत्त्यर्थं ठञ्ग्रहणं ॥

## वृद्धात् प्राचां ॥ १२० ॥

उ । इत्येतदन्तात् प्राग्देशवाचिनो वृद्धादेव ठञ् स्यात् ॥ आढकजम्बुकः । शाकजम्बुकः ॥ वृद्धादेवेति किं । मल्लवास्तु । माल्लवास्तवं ॥

## धन्वयोपधाद्वुञ् ॥ १२१ ॥

धन्ववाचिनः । य् । इत्येतदुपधाच्च वृद्धाद्देशवाचिनो वुञ् स्यात् ॥ ऐरावतकः ॥ योपधात् । सांकाश्यकः ॥

## प्रस्थपुरवहान्ताच्च ॥ १२२ ॥

प्रस्थ । पुर । वह । इत्येतदन्ताद्वृद्धाद्देशवाचिनो वुञ् स्यात् ॥ मालाप्रस्थकः । नान्दीपुरकः । पैलुवहकः ॥ पुरान्तग्रहणमप्रागर्थं । प्राग्देशे तूत्तरसूत्रेण सिद्धं ॥

## रोपधेतोः प्राचां ॥ १२३ ॥

र् । इत्येतदुपधात् । ई । इत्येतदन्ताच्च प्राग्देशवाचिनो वुञ् स्यात् ॥ पाटलिपुत्रकः ॥ ईतः । काकन्दी । काकन्दकः । माकन्दी । माकन्दकः ॥ प्राचां किं । दात्तामित्रीयः ॥ तपरत्वं स्पष्टार्थं ॥

## जनपदतदवध्योश्च ॥ १२४ ॥

जनपदवाचिनः । जनपदावधिवाचिनश्च वृद्धाद्वुञ् स्यात् ॥ आर्द्रकः ॥ जनपदावधेः । त्रैगर्तकः ॥

## अवृद्धादपि बहुवचनविषयात् ॥ १२५ ॥

अवृद्धाद्वृद्धाच्च जनपदतदवधिवाचिनो बहुवचनविषयाद्वुञ् स्यात् ॥ अवृद्धाज्जनपदात् । अङ्गाः । आङ्गकाः ॥ वृद्धाज्जनपदात् । दार्वकाः ॥ अवृद्धाज्जनपदावधेः । आजमीढकः ॥ वृद्धाज्जनपदावधेः । कालंजराः । कालंजरकाः ॥ विषयग्रहणं किं । एकशेषेण बहुत्वे मा भूत् । वर्तनीषु भवो वार्तनः ॥

## कच्छाग्निवक्त्रवर्तोत्तरपदात् ॥ १२६ ॥

कच्छ । अग्नि । वक्त्र । वर्त । इत्येतदुत्तरपदाद्देशवाचिनो वृद्धादवृद्धाच्च वुञ् स्यात् ॥ दारुकच्छकः ॥ कौण्डाग्नकः ॥ सैन्धुवक्त्रकः ॥ बाहुवर्तकः ॥

## धूमादिभ्यश्च ॥ १२७ ॥

धूम । इत्येवमादिभ्यो देशवाचिभ्यो वुञ् स्यात् ॥ धौमकः ॥

## नगरात् कुत्सनप्रावीण्ययोः ॥ १२८ ॥

नगर । इत्येतस्मात् कुत्सने प्रावीण्ये च गम्यमाने वुञ् स्यात् ॥ नागरकश्चौरः । नागरकश्चित्रलेखकः ॥ कुत्सनप्रावीण्ययोः किं । नागरो ब्राह्मणः ॥

## अरण्यान्मनुष्ये ॥ १२९ ॥

अरण्य । इत्येतस्मान्मनुष्ये ऽभिधेये वुञ् स्यात् ॥ आरण्यको मनुष्यः ॥ मनुष्ये किं । आरण्याः पशवः ॥

## विभाषा कुरुयुगंधराभ्यां ॥ १३० ॥

कुरु । युगंधर । इत्येताभ्यां वुञ् वा स्यात् ॥ कौरवकः । कौरवः ॥ यौगंधरकः । यौगंधरः ॥

## मद्रवृज्योः कन् ॥ १३१ ॥

मद्र । वृजि । इत्येताभ्यां कन् स्यात् ॥ मद्रकः । वृजिकः ॥

## कोपधादण् ॥ १३२ ॥

कू । इत्येतदुपधाद्देशवाचिनो ऽण् स्यात् ॥ ऐक्ष्वाकवः ॥ अणग्रहणादुवर्णान्तादपि भवति ॥

## कच्छादिभ्यश्च ॥१३३॥

कच्छ । इत्येवमादिभ्यो देशवाचिभ्यो ऽण् स्यात् ॥ काच्छः ॥

## मनुष्यतत्स्थयोर्वुञ् ॥१३४॥

कच्छ । इत्येवमादिभ्यो देशवाचिभ्यो मनुष्ये तत्स्थे च गम्यमाने वुञ् स्यात् ॥ काच्छको मनुष्यः । काच्छकं हसितं ॥ मनुष्यतत्स्थयोः किं । काच्छो गौः ॥

## अपदातौ साल्वात् ॥१३५॥

साल्व । इत्येतस्मान्मनुष्यतत्स्थयोर्वाच्ययोरपदातावेव वुञ् स्यात् ॥ साल्वको मनुष्यः । साल्वकं हसितं ॥ अपदातौ किं । साल्वः पदातिः ॥

## गोयवाग्वोश्च ॥१३६॥

साल्व । इत्येतस्माद्गवि यवाग्वां च विषये वुञ् स्यात् ॥ साल्वको गौः । साल्विका यवागूः । साल्वमन्यत् ॥

## गर्तोत्तरपदाच्छः ॥१३७॥

गर्त । इत्येतदुत्तरपदाद्देशवाचिनश्छः स्यात् ॥ वृकगर्तीयं । शृगालगर्तीयं ॥ उत्तरपदग्रहणं बहुच्पूर्वान्मा भूदिति । बाहुगर्तं ॥

## गहादिभ्यश्च ॥१३८॥

गह । इत्येवमादिभ्यश्छः स्यात् ॥ गहीयः । अन्तस्थीयः ॥

## प्राचां कटादेः ॥१३९॥

कट । इत्येतदादेः प्राग्देशवाचिनः प्रातिपदिकाच्छः स्यात् ॥ कटनगरीयं । कटघोषीयं । कटपल्वलीयं ॥

## राज्ञः क च ॥१४०॥

राजन् । इत्येतस्य क । इत्येष आदेशः स्यात् । छप्रत्ययश्च ॥ राजकीयं ॥

## वृद्धादकेकान्तखोपधात् ॥१४१॥

अक । इक । इत्येतदन्तात् खकारोपधाच्च वृद्धाद्देशवाचिनश्छः स्यात् ॥ अक । आरोहणकीयं ॥ इक । आश्वपत्थिकीयं ॥ खोपधात् । पारिखीयः ॥

## कन्थापलदनगरग्रामह्रदोत्तरपदात् ॥ १४२ ॥

कन्था । पलद । नगर । ग्राम । ह्रद । इत्येतदुत्तरपदाद्देशवाचिनो वृद्धाच्छः स्यात् ॥ दाक्षिकन्थीयं । दाक्षिपलदीयं । दाक्षिनगरीयं । दाक्षिग्रामीयं । दाक्षिह्रदीयं ॥

## पर्वताच्च ॥ १४३ ॥

पर्वत । इत्येतस्माच्छः स्यात् ॥ पर्वतीयो राजा । पर्वतीयो मनुष्यः ॥

## विभाषाऽमनुष्ये ॥ १४४ ॥

पर्वत । इत्येतस्मान्मनुष्यभिन्ने ऽभिधेये वा छः स्यात् ॥ पर्वतीयानि । पार्वतानि फलानि ॥ अमनुष्ये किं । पर्वतीयो मनुष्यः ॥

## कृकणपर्णाद्भरद्वाजे ॥ १४५ ॥

कृकण । पर्ण । इत्येताभ्यां भरद्वाजदेशवाचिभ्यां छः स्यात् ॥ कृकणीयं । पर्णीयं ॥ भरद्वाजे किं । कार्कणं । पार्णं ॥

॥ इति सूत्रपाठे चतुर्थाध्यायस्य द्वितीयः पादः ॥

---

## युष्मदस्मदोरन्यतरस्यां खञ् च ॥ १ ॥

युष्मद् । अस्मद् । इत्येताभ्यां खञ् । छ । इत्येतौ प्रत्ययौ वा भवतः ॥ यौष्माकीणः । युष्मदीयः ॥ आस्माकीनः । अस्मदीयः ॥ औत्सर्गिके ऽणि । यौष्माकः । आस्माकः ॥

## तस्मिन्नणि च युष्माकास्माकौ ॥ २ ॥

युष्मद् । अस्मद् । इत्येतयोः खञि । अणि च परे युष्माक । अस्माक । इत्येतावादेशौ क्रमाद्भवतः ॥ यौष्माकीणः । आस्माकीनः ॥ अणि । यौष्माकः । आस्माकः ॥ तस्मिन्नणि चेति किं । युष्मदीयः । अस्मदीयः ॥

## तवकममकावेकवचने ॥ ३ ॥

युष्मद् । अस्मद् । इत्येतयोरेकार्थवाचिनोः खञि । अणि च परे तवक । ममक । इत्येतावादेशौ क्रमाद्भवतः ॥ तावकीनः । तावकः ॥ मामकीनः । मामकः ॥

## अर्धाद्यत् ॥ ४ ॥

अर्ध । इत्येतस्माद्यत् स्यात् ॥ अर्ध्य ॥

## परावराधमोत्तमपूर्वाच्च ॥ ५ ॥

पर । अवर । अधम । उत्तम । इत्येवंपूर्वादर्धाद्यत् स्यात् ॥ परार्ध्य । अवरार्ध्य । अधमार्ध्य । उत्तमार्ध्य ॥

## दिक्पूर्वपदाट्ठञ् च ॥ ६ ॥

दिक्पूर्वपदादर्धाट्ठञ् स्यात् । चकाराद्यत् ॥ पौर्वार्धिकं । पूर्वार्ध्य ॥ पदग्रहणं स्वरूपाग्रहणार्थं ॥

## ग्रामजनपदैकदेशादञ्ठञौ ॥ ७ ॥

ग्रामैकदेशवाचिनो जनपदैकदेशवाचिनश्च दिक्पूर्वपदादर्धान्तात् प्रातिपदिकादञ् । ठञ् । इत्येतौ प्रत्ययौ भवतः ॥ इमे ऽस्माकं ग्रामस्य पौर्वार्धाः । पौर्वार्धिकाः ॥ इमे ऽस्माकं जनपदस्य पौर्वार्धाः । पौर्वार्धिकाः ॥

## मध्यान्मः ॥ ८ ॥

मध्य । इत्येतस्मान्मः स्यात् ॥ मध्यमः ॥

## अ सांप्रतिके ॥ ९ ॥

मध्य । इत्येतस्मात् । अ । इत्येष आदेशः स्यात् । न्याय्ये ज्ञातादौ ॥ मध्यो मीमांसकः । उत्कर्षापकर्षहीन इत्यर्थः ॥

## द्वीपादनुसमुद्रं यञ् ॥ १० ॥

द्वीप । इत्येतस्मात् समुद्रसमीपद्वीपविषयाद्यञ् स्यात् ॥ द्वैप्यं ॥ अनुसमुद्रं किं । द्वैपमन्यत् ॥

## कालाट्ठञ् ॥ ११ ॥

कालविशेषवाचिनष्ठञ् स्यात् ॥ मासिकः । सांवत्सरिकः ॥

## श्राद्धे शरदः ॥ १२ ॥

शरद् । इत्येतस्मात् कालवाचिनष्ठञ् स्यात् । श्राद्धे ऽभिधेये ॥ शारदिकं श्राद्धं ॥ श्राद्धे किं । शारदमन्यत् । ऋत्वण् ॥

## विभाषा रोगातपयोः ॥ १३ ॥

शरद् । इत्येतस्माद्रोग आतपे च वा ठञ् स्यात् ॥ शारदिकः । शारदो वा रोगः ॥ शारदिकः । शारदो वातपः ॥ रोगातपयोः किं । अन्यच्छारदं ॥

## निशाप्रदोषाभ्यां च ॥ १४ ॥

निशा । प्रदोष । इत्येताभ्यां कालवाचिभ्यां वा ठञ् स्यात् ॥ नैशिकं । नैशं ॥ प्रादोषिकं । प्रादोषं ॥

## श्वसस्तुट् च ॥ १५ ॥

श्वस् । इत्येतस्मात् कालवाचिनष्ठञ् स्यात् । ठञश्च तुडागमः ॥ शौवस्तिकं ॥

## संधिवेलाद्यृतुनक्षत्रेभ्यो ऽण् ॥ १६ ॥

संधिवेलादिभ्यः । ऋतुवाचिभ्यः । नक्षत्रवाचिभ्यश्च कालवृत्तिभ्यो ऽण् स्यात् ॥ सांधिवेलं । सांध्यं ॥ ऋतुभ्यः । शैशिरं ॥ नक्षत्रेभ्यः । पौषं ॥ पुनरणग्रहणं वृद्धाच्छं बाधितुं ॥

## प्रावृष एण्यः ॥ १७ ॥

प्रावृष् । इत्येतस्मात् कालवाचिन एण्यः स्यात् ॥ प्रावृषेण्यो मेघः ॥

## वर्षाभ्यष्ठक् ॥ १८ ॥

वर्षा । इत्येतस्माट्ठक् स्यात् ॥ वार्षिकं वासः ॥

## छन्दसि ठञ् ॥ १९ ॥

वर्षा । इत्येतस्माद्वेदे ठञ् स्यात् ॥ नभश्च नभस्यश्च वार्षिकावृतू ॥ ठक्ठञोः स्वरे विशेषः ॥

## वसन्ताच्च ॥२०॥

वसन्त । इत्येतस्माच्छन्दसि ठञ् स्यात् ॥ मधुश्च माधवश्च वासन्तिकावृतू ॥

## हेमन्ताच्च ॥२१॥

हेमन्त । इत्येतस्माच्छन्दसि ठञ् स्यात् ॥ सहश्च सहस्यश्च हैमन्तिकावृतू ॥ योगविभाग उत्तरार्थः ॥

## सर्वत्राण् च तलोपश्च ॥२२॥

हेमन्त । इत्येतस्माल्लोके वेदे च अण् स्यात् । तत्संनियोगेन तकारलोपश्च ॥ हैमनं वासः । चकारादृत्वणि । हैमन्तं । इति लोके । वेदे तु । हैमनं । हैमन्तं । हैमन्तिकं ॥

## सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ॥२३॥

सायं । चिरं । प्राह्णे । प्रगे । इत्येतेभ्यो ऽव्ययेभ्यश्च कालवाचिभ्यष्ट्यु । ट्युल् । इत्येतौ प्रत्ययौ भवतः । तयोश्च तुडागमो भवति ॥ सायंतनं । चिरंतनं । प्राह्णेतनं । प्रगेतनं ॥ अव्ययेभ्यः । दोषातनं । दिवातनं ॥ ट्युट्युलोः स्वरे विशेषः ॥

## विभाषा पूर्वाह्णापराह्णाभ्यां ॥२४॥

पूर्वाह्ण । अपराह्ण । इत्येताभ्यां ट्युट्युलौ वा भवतः । तयोश्च तुट् ॥ पूर्वाह्णेतनं । अपराह्णेतनं ॥ पक्षे ठञ् । पौर्वाह्णिकं । आपराह्णिकं ॥

## तत्र जातः ॥२५॥

सप्तम्यन्ताज्जात इत्येतस्मिन्नर्थे ऽणादयः प्रत्यया भवन्ति ॥ स्रुघ्ने जातः । स्रौघ्नः ॥ माथुरः । औत्सः । राष्ट्रियः । अवारपारीणः । ग्राम्यः । ग्रामीणः ॥

## प्रावृषष्ठप् ॥२६॥

प्रावृष् । इत्येतस्माज्जाते ऽर्थे ठप् स्यात् ॥ प्रावृषि जातः । प्रावृषिकः ॥

## संज्ञायां शरदो वुञ् ॥२७॥

शरद् । इत्येतस्माज्जाते ऽर्थे संज्ञाविषये वुञ् स्यात् ॥ शरदि जाताः । शारद्का दर्भविशेषाः ॥ संज्ञायां किं । शारदं ॥

## पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन् ॥ २८ ॥

पूर्वाह्ण । अपराह्ण । आर्द्रा । मूल । प्रदोष । अवस्कर । इत्येतेभ्यो जाते ऽर्थे संज्ञायां वुन् स्यात् ॥ पूर्वाह्णकः । अपराह्णकः । आर्द्रकः । मूलकः । प्रदोषकः । अवस्करकः ॥ असंज्ञायां तु ठञादयो भवन्ति ॥

## पथः पन्थ च ॥ २९ ॥

पथिन् । इत्येतस्माज्जाते ऽर्थे वुन् स्यात् । पथिन् । इत्येतस्य पन्थ । इत्येष आदेशश्च ॥ पथि जातः । पन्थकः ॥

## अमावास्याया वा ॥ ३० ॥

अमावास्या । इत्येतस्माज्जाते ऽर्थे वुन् वा स्यात् ॥ अमावास्यायां जातः । अमावास्यकः ॥ पक्षे ऽण् । आमावास्यः ॥

## अ च ॥ ३१ ॥

अमावास्या । इत्येतस्माज्जाते ऽर्थे । अ । इत्येष प्रत्ययः स्यात् । चकाराद्वै-कल्पिको वुञ् ॥ अमावास्यः । अमावास्यकः । आमावास्यः ॥

## सिन्ध्वपकराभ्यां कन् ॥ ३२ ॥

सिन्धु । अपकर । इत्येताभ्यां जाते ऽर्थे कन् स्यात् ॥ सिन्धुकः । अपकरकः ॥

## अणञौ च ॥ ३३ ॥

सिन्धु । अपकर । इत्येताभ्यां जाते ऽर्थे क्रमादण् । अञ् । इत्येतौ प्रत्ययौ भवतः ॥ सैन्धवः । आपकरः ॥

## श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशा-खाषाढाबहुलाल्लुक् ॥ ३४ ॥

श्रविष्ठा । फल्गुनी । अनुराधा । स्वाति । तिष्य । पुनर्वसु । हस्त । विशाखा । अषाढा । बहुल । इत्येतेभ्यो जाते ऽर्थे ऽणो लुक् स्यात् ॥

अविष्ठासु जातः । अविष्ठः ॥ फल्गुनः । अनुराधः । स्वातिः । तिष्यः । पुनर्वसुः । हस्तः । विशाखः । अषाढः । बहुलः ॥

## स्थानान्तगोशालखरशालाच्च ॥३५॥

स्थानान्तात् । गोशाल । खरशाल । इत्येताभ्यां च जातार्थप्रत्ययस्य लुक् स्यात् ॥ अश्वस्थानः । उष्ट्रस्थानः ॥ गोशालः । खरशालः ॥

## वत्सशालाभिजिदश्वयुक्शतभिषजो वा ॥३६॥

वत्सशाला । अभिजित् । अश्वयुज् । शतभिषज् । इत्येतेभ्यो जातार्थप्रत्ययस्य वा लुक् स्यात् ॥ वत्सशालः । वात्सशालः ॥ अभिजित् । आभिजितः ॥ अश्वयुक् । आश्वयुजः ॥ शतभिषक् । शातभिषजः ॥ बहुलग्रहणप्रपञ्चो ऽयं ॥

## नक्षत्रेभ्यो बहुलं ॥३७॥

नक्षत्रवाचिभ्यो जातार्थप्रत्ययस्य बहुलं लुक् स्यात् ॥ रोहिणः । रौहिणः । मृगशिराः । मार्गशीर्षः ॥

## कृतलब्धक्रीतकुशलाः ॥३८॥

कृत । लब्ध । क्रीत । कुशल । इत्येतेष्वर्थेषु सप्तम्यन्ताद्यथाविहितमणादयः प्रत्ययाः भवन्ति ॥ स्रुघ्ने कृतः । स्रुघ्ने लब्धः । स्रुघ्ने क्रीतः । स्रुघ्ने कुशलो वा । स्रौघ्नः ॥ माथुरः । राष्ट्रियः ॥

## प्रायभवः ॥३९॥

सप्तम्यन्तात् प्रायभव इत्येतस्मिन्नर्थे ऽणादयः प्रत्यया भवन्ति ॥ स्रुघ्ने प्रायेण बाहुल्येन भवति । स्रौघ्नः ॥ माथुरः । राष्ट्रियः ॥

## उपजानूपकर्णोपनीवेष्ठक् ॥४०॥

उपजानु । उपकर्ण । उपनीवि । इत्येतेभ्यः सप्तम्यन्तेभ्यः प्रायभवे ऽर्थे ठक् स्यात् ॥ औपजानुकः । औपकर्णिकः । औपनीविकः ॥

## संभूते ॥४१॥

सप्तम्यन्तात् संभूत इत्येतस्मिन्नर्थे यथाविहितमणादयः प्रत्यया भवन्ति ॥ स्रुघ्ने संभवति । स्रौघ्नः ॥ माथुरः । राष्ट्रियः ॥

## कोशाड्ढञ् ॥ ४२ ॥

कोश । इत्येतस्मात् सप्तम्यन्तात् संभूते ऽर्थे ढञ् स्यात् ॥ कोशे संभूतं । कौशेयं वस्त्रं ॥

## कालात् साधुपुष्प्यत्पच्यमानेषु ॥ ४३ ॥

कालविशेषवाचिभ्यः सप्तम्यन्तेभ्यः । साधु । पुष्प्यत् । पच्यमान । इत्येतेष्वर्थेषु यथाविहितमणादयः प्रत्यया भवन्ति ॥ हेमन्ते साधुः । हैमनः ॥ वसन्तेषु पुष्प्यति । वासन्ती ॥ शरदि पच्यन्ते । शारदाः शालयः ॥

## उप्ते च ॥ ४४ ॥

कालवाचिभ्यः सप्तम्यन्तेभ्य उप्त इत्येतस्मिन्नर्थे यथाविहितमणादयः प्रत्यया भवन्ति ॥ हेमन्त उप्ताः । हैमन्ता यवाः ॥

## आश्वयुज्या वुञ् ॥ ४५ ॥

आश्वयुजी । इत्येतस्मादुप्ते ऽर्थे वुञ् स्यात् ॥ आश्वयुज्यामुप्ताः । आश्वयुजका माषाः ॥

## ग्रीष्मवसन्तादन्यतरस्यां ॥ ४६ ॥

ग्रीष्म । वसन्त । इत्येताभ्यां सप्तम्यन्ताभ्यामुप्ते ऽर्थे वुञ् वा स्यात् ॥ ग्रैष्मकं । ग्रैष्मं ॥ वासन्तकं । वासन्तं ॥

## देयमृणे ॥ ४७ ॥

सप्तम्यन्तात् कालवाचिनो देयमित्येतस्मिन्नर्थ उक्ता वक्ष्यमाणाश्च प्रत्यया भवन्ति । देयं चेदृणं भवति ॥ मासे देयमृणं । मासिकं ॥ ऋणे किं । मासे देया भिक्षा ॥

## कलाप्यश्वत्थयवबुसाद्वुन् ॥ ४८ ॥

कलापिन् । अश्वत्थ । यवबुस । इत्येतेभ्यः कालवाचिभ्यो वुन् स्यात् ॥ कलापिनि काले देयमृणं । कलापकं ॥ अश्वत्थफलोत्पत्तिकाले देयमृणं ॥ अश्वत्थकं ॥ यवबुसोत्पत्तिकाले देयमृणं । यवबुसकं ॥

## ग्रीष्मावरसमाद्वुञ् ॥४९॥

ग्रीष्म । अवरसम । इत्येताभ्यां सप्तम्यन्ताभ्यां वुञ् स्यात् ॥ ग्रीष्मे देयमृणं । ग्रैष्मकं ॥ आवरसमकं ॥

## संवत्सराग्रहायणीभ्यां ठञ् च ॥५०॥

संवत्सर । आग्रहायणी । इत्येताभ्यां ठञ् स्यात् । चकाराद्वुञ् ॥ संवत्सरे देयमृणं । सांवत्सरिकं । सांवत्सरकं ॥ आग्रहायणिकं । आग्रहायणकं ॥

## व्याहरति मृगः ॥५१॥

सप्तम्यन्तात् कालवाचिनो व्याहरतीत्येतस्मिन्नर्थे यथाविहितमणादयः प्रत्यया भवन्ति । यो व्याहरति स चेन्मृगः ॥ निशायां व्याहरति । नैशो मृगः । नैशिकः ॥ प्रादोषः । प्रादोषिकः ॥ मृगः किं । निशायां व्याहरत्युलूकः ॥

## तदस्य सोढं ॥५२॥

प्रथमान्तात् कालवाचिनो ऽस्येति षष्ठ्यर्थे यथाविहितमणादयः प्रत्यया भवन्ति । प्रथमान्तार्थः सोढं चेद्भवति ॥ निशासहचरितमध्ययनं निशा । तत् सोढं सह्यमस्य शिष्यस्य । नैशः । नैशिकः ॥ प्रादोषः । प्रादोषिकः ॥

## तत्र भवः ॥५३॥

सप्तम्यन्ताद्भव इत्येतस्मिन्नर्थे यथाविहितमणादयः प्रत्यया भवन्ति ॥ भवत्यर्थः सत्ता न तु जन्म ॥ स्रुघ्ने भवः । स्रौघ्नः ॥ माथुरः । राष्ट्रियः ॥

## दिगादिभ्यो यत् ॥५४॥

दिश् । इत्येवमादिभ्यो भवे ऽर्थे यत् स्यात् ॥ दिशि भवं । दिश्यं ॥ वर्ग्यं ॥

## शरीरावयवाच्च ॥५५॥

शरीरावयववाचिनो भवे ऽर्थे यत् स्यात् ॥ दन्तेषु भव । दन्त्यः ॥ कण्ठ्यः । ओष्ठ्यः ॥

## दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् ॥५६॥

दृति । कुक्षि । कलशि । वस्ति । अस्ति । अहि । इत्येतेभ्यो भवे ऽर्थे ढञ् स्यात् ॥ दार्तेयं । कौक्षेयं । कालशेयं । वास्तेयं । आस्तेयं । आहेयं ॥

## ग्रीवाभ्यो ऽण् च ॥५७॥

ग्रीवा । इत्येतस्माद्भवे ऽर्थे ऽण् स्यात् । चकाराड्ढञ् ॥ ग्रीवासु भवं । ग्रैवं । ग्रैवेयं ॥

## गम्भीराञ्ज्यः ॥५८॥

गम्भीर । इत्येतस्माद्भवे ऽर्थे ञ्यः स्यात् ॥ गम्भीरे भवं । गाम्भीर्यं ॥

## अव्ययीभावाच्च ॥५९॥

अव्ययीभावसमासाद्भवे ऽर्थे ञ्यः स्यात् ॥ परिमुखं भवं । पारिमुख्यं ॥

## अन्तःपूर्वपदाट्ठञ् ॥६०॥

अन्तर् । इत्येतत्पूर्वपदादव्ययीभावाद्भवे ऽर्थे ठञ् स्यात् ॥ आन्तर्वेश्मिकं । आन्तर्गेहिकं ॥

## ग्रामात् पर्यनुपूर्वात् ॥६१॥

परि । अनु । इत्येवंपूर्वाद्ग्राम । इत्येतदन्तादव्ययीभावाद्भवे ऽर्थे ठञ् स्यात् ॥ पारिग्रामिकः । आनुग्रामिकः ॥

## जिह्वामूलाङ्गुलेश्छः ॥६२॥

जिह्वामूल । अङ्गुलि । इत्येताभ्यां भवे ऽर्थे छः स्यात् ॥ जिह्वामूलीयं । अङ्गुलीयं ॥

## वर्गान्ताच्च ॥६३॥

वर्ग । इत्येतदन्तात् प्रातिपदिकाद्भवे ऽर्थे छः स्यात् ॥ कवर्गीयः । चवर्गीयः ॥

## अशब्दे यत्खावन्यतरस्यां ॥६४॥

वर्ग । इत्येतदन्तात् प्रातिपदिकाच्छब्दभिन्ने ऽभिधेये भवे ऽर्थे यत् । ख । इत्येतौ प्रत्ययौ भवतः ॥ अर्जुनवर्ग्यः । अर्जुनवर्गीणाः ॥ पक्षे छः । अर्जुनवर्गीयः ॥ अशब्दे किं । कवर्गीयो वर्णः ॥

## कर्णललाटात् कनलंकारे ॥६५॥

कर्ण । ललाट । इत्येताभ्यामलंकारे वाच्ये भवे ऽर्थे कन् स्यात् ॥ कर्णिका । ललाटिका ॥ अलंकारे किं । कर्ण्यं । ललाट्यं ॥

## तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ॥६६॥

षष्ठ्यन्ताद्व्याख्यातव्यनाम्नो व्याख्यान इत्येतस्मिन्नर्थे तत्र भव चार्थे यथाविहित-मणणादयः प्रत्यया भवन्ति ॥ सुपां व्याख्यानः । सौपो ग्रन्थः ॥ तैङः । कार्तः ॥ सुप्सु भवं । सौपं ॥ तैङं । कार्तं ॥ व्याख्यातव्यनाम्नः किं । पाटलिपुत्रस्य व्याख्यानो कोशला ॥

## बह्वचो ऽन्तोदात्ताट्ठञ् ॥६७॥

बह्वचो व्याख्यातव्यनाम्नो ऽन्तोदात्तात् प्रातिपदिकाद्भवे व्याख्याने च ठञ् स्यात् ॥ षात्वणात्विकं ॥ बह्वचः किं । सौपं ॥ अन्तोदात्तात् किं । सांहितं । गतिस्वरेणाद्युदात्तो ऽयं ॥

## क्रतुयज्ञेभ्यश्च ॥६८॥

क्रतुवाचिभ्यो यज्ञवाचिभ्यश्च भवे व्याख्याने च ठञ् स्यात् ॥ सोमसाध्यो यागः क्रतुः । आग्निष्टोमिकः । वाजपेयिकः ॥ यज्ञग्रहणमसोमसाध्ययागपरिग्रहार्थं । पाञ्चौदनिकः । दाशौदनिकः । पाकयज्ञिकः ॥

## अध्यायेष्वेवर्षेः ॥६९॥

ऋषिः प्रवरः । तन्नामधेयेभ्यो भवे व्याख्याने चार्थे ऽध्यायेषु वाच्येषु ठञ् स्यात् ॥ वासिष्ठिको ऽध्यायः । वैश्वामित्रिकः ॥ अध्यायेषु किं । वासिष्ठी ऋक् ॥

## पौरोडाशपुरोडाशात् ष्ठन् ॥७०॥

पौरोडाश । पुरोडाश । इत्येताभ्यां भवे व्याख्याने च ष्ठन् स्यात् ॥ पौराडाशो मन्त्रस्तस्य व्याख्यानस्तत्र भवो वा । पौरोडाशिकः । पौरोडाशिकी ॥ पुरोडाशः पिष्टपिण्डः । तत्सहचरितो ग्रन्थो लक्षणया पुरोडाशः । तस्य व्याख्यानस्तत्र भवो वा । पुरोडाशिकः । पुरोडाशिकी ॥

## छन्दसो यदणौ ॥७१॥

छन्दस् । इत्येतस्माद्भवे व्याख्याने च यत् । अण् । इत्येतौ प्रत्ययौ भवतः ॥ छन्दस्यः । छान्दसः ॥

## द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् ॥७२॥

द्व्यच् । ऋत् । ब्राह्मण । ऋच् । प्रथम । अध्वर । पुरश्चरण । नामन् । आख्यात । इत्येतेभ्यो भवे व्याख्याने च ठक् स्यात् ॥ द्व्यच् । ऐष्टिकः । पाशुकः ॥ ऋत् । चातुर्होतृकः ॥ ब्राह्मणिकः । आर्चिकः । प्राथमिकः । आध्वरिकः । पौरश्चरणिकः । नामिकः । आख्यातिकः ॥

## अणृगयनादिभ्यः ॥ ७३ ॥

ऋगयन । इत्येवमादिभ्यो भवे व्याख्याने च अण् स्यात् ॥ आर्गयनः ॥

## तत आगतः ॥ ७४ ॥

पञ्चम्यन्तादागत इत्येतस्मिन्नर्थे ऽणादयः प्रत्यया भवन्ति ॥ स्रुघ्नादागतः । स्रौघ्नः ॥ माथुरः । राष्ट्रियः ॥

## ठगायस्थानेभ्यः ॥ ७५ ॥

आयस्थानवाचिभ्य आगत इत्येतस्मिन्नर्थे ठक् स्यात् ॥ शुल्कशालाया आगतः । शौल्कशालिकः ॥ नागरिकं । आपणिकं ॥

## शुण्डिकादिभ्यो ऽण् ॥ ७६ ॥

शुण्डिक । इत्येवमादिभ्य आयस्थानेभ्य आगत इत्येतस्मिन्नर्थे ऽण् स्यात् ॥ शुण्डिकादागतः । शौण्डिकः ॥ अण्ग्रहणं बाधकबाधनार्थं । औदपानः

## विद्यायोनिसंबन्धेभ्यो वुञ् ॥ ७७ ॥

विद्यासंबन्धवाचिभ्यो योनिसंबन्धवाचिभ्यश्चागत इत्येतस्मिन्नर्थे वुञ् स्यात् ॥ उपाध्यायादागतं । औपाध्यायकं ॥ योनिसंबन्धेभ्यः । पैतामहकं ॥

## ऋतष्ठञ् ॥ ७८ ॥

ऋ । इत्येतदन्तेभ्यो विद्यायोनिसंबन्धवाचिभ्य आगत इत्येतस्मिन्नर्थे ठञ् स्यात् ॥ हौतृकं । पौतृकं ॥ योनिसंबन्धेभ्यः । मातृकं । भ्रातृकं ॥ विद्यायोनिसंबन्धेभ्यः किं । सावित्रं ॥

## पितुर्यच्च ॥ ७९ ॥

पितृ । इत्येतस्मादागत इत्येतस्मिन्नर्थे यत् स्यात् । चकाराट्ठञ् ॥ पित्र्यं । पैतृकं ॥

## गोत्रादङ्कवत् ॥ ८० ॥

अपत्यप्रत्ययान्तादागत इत्येतस्मिन्नर्थे ऽङ्कवत् प्रत्यया भवन्ति ॥ औपगवेभ्य आगतं । औपगवकं ॥ कापटवकं । नाडायनकं । चारायणकं ॥ अङ्कग्रहणेनेदमर्थसामान्यं लक्ष्यते । तस्माद्वुञप्यतिदिश्यते न त्वणेव ॥

## हेतुमनुष्येभ्यो ऽन्यतरस्यां रूप्यः ॥ ८१ ॥

हेतुवाचिभ्यो मनुष्यवाचिभ्यश्चागत इत्येतस्मिन्नर्थे रूप्यप्रत्ययो वा स्यात् ॥ समादागतं । समरूप्यं ॥ मनुष्येभ्यः । देवदत्तरूप्यं ॥

## मयट् च ॥ ८२ ॥

हेतुभ्यो मनुष्येभ्यश्चागत इत्येतस्मिन्नर्थे मयट् स्यात् ॥ सममयं । सममयी ॥ मनुष्येभ्यः । देवदत्तमयं । देवदत्तमयी ॥

## प्रभवति ॥ ८३ ॥

पञ्चम्यन्तात् प्रभवतीत्येतस्मिन्नर्थे यथाविहितमणादयः प्रत्यया भवन्ति ॥ हिमवतः प्रभवति । हैमवती गङ्गा । ततः प्रथमं प्रकाशत इत्यर्थः ॥

## विदूराञ्ञ्यः ॥ ८४ ॥

विदूर । इत्येतस्मात् प्रभवतीत्येतस्मिन्नर्थे ञ्यः स्यात् ॥ विदूरात् प्रभवति । वैदूर्यो मणिः ॥

## तद्गच्छति पथिदूतयोः ॥ ८५ ॥

द्वितीयान्ताद्गच्छतीत्येतस्मिन्नर्थे यथाविहितमणादयः प्रत्यया भवन्ति । यो गच्छति स चेत् पन्था दूतो वा ॥ स्रुघ्नं गच्छति । स्रौघ्नः पन्थाः । स्रौघ्नो दूतः ॥ माथुरः । राष्ट्रियः ॥ पथिदूतयोः किं । स्रुघ्नं गच्छति गार्ग्यः ॥

## अभिनिष्क्रामति द्वारं ॥ ८६ ॥

द्वितीयान्तादभिनिष्क्रामतीत्येतस्मिन्नर्थे यथाविहितमणादयः प्रत्यया भवन्ति । यदभिनिष्क्रामति द्वारं चेत् तद्भवति ॥ स्रुघ्नमभिनिष्क्रामति । स्रौघ्नं कान्यकुब्जद्वारं ॥ माथुरं । राष्ट्रियं ॥

## अधिकृत्य कृते ग्रन्थे ॥ ८७ ॥

द्वितीयान्तादधिकृत्य कृत इत्येतस्मिन्नर्थे यथाविहितमणादयः प्रत्यया भवन्ति । यो ऽसौ कृतो ग्रन्थश्चेत् स भवति ॥ सुभद्रामधिकृत्य कृतो ग्रन्थः । सौभद्रः ॥ माथुरः । राष्ट्रियः ॥ ग्रन्थे किं । सुभद्रामधिकृत्य कृतः प्रासादः ॥

## शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ॥ ८८ ॥

शिशुक्रन्द । यमसभ । द्वन्द्व । इन्द्रजननादि । इत्येतेभ्यो द्वितीयान्तेभ्यो ऽधिकृत्य कृत इत्येतस्मिन्नर्थे छः स्यात् ॥ शिशुक्रन्दीयः । यमसभीयः ॥ द्वन्द्वात् । अग्निकश्यपीयः । वाक्यपदीयं ॥ इन्द्रजननादिभ्यः । इन्द्रजननीयः । प्रद्युम्नागमनीयः ॥ इन्द्रजननादिराकृतिगण एव ॥

## सो ऽस्य निवासः ॥ ८९ ॥

प्रथमान्तादस्येति षष्ठ्यर्थे यथाविहितमणादयः प्रत्यया भवन्ति । यः प्रथमान्तार्थो निवासश्चेत् स भवति ॥ स्रुघ्नो निवासो ऽस्य । स्रौघ्नः ॥ माथुरः । राष्ट्रियः ॥

## अभिजनश्च ॥ ९० ॥

प्रथमान्तादस्येति षष्ठ्यर्थे ऽणादयः प्रत्यया भवन्ति । यः प्रथमान्तार्थो ऽभिजनश्चेत् स भवति ॥ स्रुघ्नो ऽभिजनो ऽस्य । स्रौघ्नः ॥ माथुरः । राष्ट्रियः ॥

## आयुधजीविभ्यश्छः पर्वते ॥ ९१ ॥

प्रथमान्तात् पर्वतवाचिनो ऽस्येति षष्ठ्यर्थ आयुधजीविनो ऽभिधातुं छः स्यात् ॥ हृद्गोलः पर्वतो ऽभिजन एषामायुधजीविनां । हृद्गोलीयाः ॥ अन्धकवर्तीयाः । रोहितगिरीयाः ॥ आयुधजीविभ्यः किं । ऋक्षोदः पर्वतो ऽभिजन एषां । आर्क्षोदा ब्राह्मणाः ॥ पर्वते किं । सांकाश्यका आयुधजीविनः ॥

## शण्डिकादिभ्यो ञ्यः ॥ ९२ ॥

शण्डिक । इत्येवमादिभ्यः प्रथमान्तेभ्यो ऽस्येति षष्ठ्यर्थे ञ्यः स्यात् । यः प्रथमान्तार्थः स चेदभिजनः ॥ शण्डिको ऽभिजनो ऽस्य । शाण्डिक्यः ॥

## सिन्धुतक्षशिलादिभ्यो ऽणञौ ॥ ९३ ॥

सिन्धु । इत्येवमादिभ्यः । तक्षशिला । इत्येवमादिभ्यश्च प्रथमान्तेभ्यो ऽस्येति

षष्ठ्यर्थे ऽण् । अञ् । इत्येतौ प्रत्ययौ क्रमाद्भवतः ॥ सिन्धुरभिजनो ऽस्य । सैन्धवः ॥ ताक्षशिलः । वात्सोद्धरणः ॥

## तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः ॥ ९४ ॥

तूदी । शलातुर । वर्मती । कूचवार । इत्येतेभ्यः प्रथमान्तेभ्यो ऽस्येति षष्ठ्यर्थे ढक् । छण् । ढञ् । यक् । इत्येते प्रत्यया क्रमाद्भवन्ति ॥ तूदी अभिजनो ऽस्य । तौदेयः ॥ शालातुरीयः ॥ वार्मतेयः ॥ कौचवार्यः ॥

## भक्तिः ॥ ९५ ॥

प्रथमान्तादस्येति षष्ठ्यर्थे ऽणादयः प्रत्यया भवन्ति । यः प्रथमान्तार्थो भक्तिश्चेत् स भवति ॥ भज्यते सेव्यत इति भक्तिः ॥ स्रुघ्नो भक्तिरस्य । स्रौघ्नः ॥ माथुरः । राष्ट्रियः ॥

## अचित्ताददेशकालाट्ठक् ॥ ९६ ॥

प्रथमान्ताद्देशकालभिन्नादचित्तवाचिनो ऽस्येति षष्ठ्यर्थे ठक् स्यात् । यः प्रथमान्तार्थः स चेद्भक्तिः ॥ अपूपा भक्तिरस्य । आपूपिकः ॥ शाष्कुलिकः ॥ अचित्तात् किं । दैवदत्तः ॥ अदेशात् किं । स्रौघ्नः ॥ अकालात् किं । ग्रैष्मः ॥

## महाराजाट्ठञ् ॥ ९७ ॥

महाराज । इत्येतस्मात् प्रथमान्तादस्येति षष्ठ्यर्थे ठञ् स्यात् । यः प्रथमान्तार्थः स चेद्भक्तिः ॥ महाराजो भक्तिरस्य । माहाराजिकः ॥

## वासुदेवार्जुनाभ्यां वुन् ॥ ९८ ॥

वासुदेव । अर्जुन । इत्येताभ्यां प्रथमान्ताभ्यामस्येति षष्ठ्यर्थे वुन् स्यात् । यः प्रथमान्तार्थः स चेद्भक्तिः ॥ वासुदेवो भक्तिरस्य । वासुदेवकः ॥ अर्जुनकः ॥

## गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् ॥ ९९ ॥

गोत्राख्येभ्यः क्षत्रियाख्येभ्यश्च प्रथमान्तेभ्यो ऽस्येति षष्ठ्यर्थे वुञ् स्यात् । यः प्रथमान्तार्थः स चेद्भक्तिः ॥ ग्लुचुकायनिर्भक्तिरस्य । ग्लौचुकायनकः । औपगवकः ॥ क्षत्रियाख्येभ्यः । नाकुलकः । साहदेवकः ॥ बाहुल्यग्रहणं अपरिग्रहार्थं ॥ बहुलग्रहणात् क्वचिन्न । पाणिनो भक्तिरस्य । पाणिनीयः ॥

## जनपदिनां जनपदवत् सर्वं जनपदेन समानशब्दानां बहुवचने ॥१००॥

जनपदस्वामिवाचिनां बहुवचने जनपदवाचिना समानश्रुतीनां जनपदवत् सर्वं प्रत्ययः प्रकृतिश्च भवति । सो ऽस्य भक्तिरित्येतस्मिन् विषये ॥ जनपदतद्वध्योश्चेत्यादिना विहिताः प्रत्यया अतिदिश्यन्ते ॥ अङ्गाः क्षत्रिया भक्तिरस्य । आङ्गकः ॥ वाङ्गकः ॥ जनपदिनां किं । पञ्चाला ब्राह्मणा भक्तिरस्य । पाञ्चालः ॥ सर्वं किं । माद्रो भक्तिरस्य । मद्रकः । वार्ज्यो भक्तिरस्य । वृजिकः ॥ जनपदेन समानशब्दानां किं । पौरवो राजा भक्तिरस्य । पौरवीयः ॥ बहुवचने किं । आङ्गो भक्तिरस्य आङ्गौ वा भक्तिरस्य । आङ्गकः । इहापि यथा स्यात् ॥

## तेन प्रोक्तं ॥१०१॥

तृतीयान्तात् प्रोक्तमित्येतस्मिन्नर्थे यथाविहितमणादयः प्रत्यया भवन्ति ॥ ऋषिणा प्रोक्तं । आर्षं ॥ पाणिनीयं । आपिशलं ॥

## तित्तिरिवरतन्तुखण्डिकोखाच्छण् ॥१०२॥

तित्तिरि । वरतन्तु । खण्डिक । उख । इत्येतेभ्यः प्रोक्ते ऽर्थे छण् स्यात् ॥ तित्तिरिणा प्रोक्तमधीयते । तैत्तिरीयाः ॥ वारतन्तवीयाः । खाण्डिकीयाः । औखीयाः ॥

## काश्यपकौशिकाभ्यामृषिभ्यां णिनिः ॥१०३॥

काश्यप । कौशिक । इत्येताभ्यां मुनिवाचिभ्यां प्रोक्ते ऽर्थे णिनिः स्यात् ॥ काश्यपेन प्रोक्तमधीयते । काश्यपिनः ॥ कौशिकिनः ॥ ऋषिभ्यां किं । काश्यपगोत्रेण प्रोक्तं । काश्यपीयं ॥

## कलापिवैशम्पायनान्तेवासिभ्यश्च ॥१०४॥

कलापिशिष्यवाचिभ्यो वैशम्पायनशिष्यवाचिभ्यश्च प्रोक्ते ऽर्थे णिनिः स्यात् ॥ कलाप्यन्तेवासिभ्यश्चतुर्भ्यः । हरिद्रुणा प्रोक्तमधीयते । हारिद्रविणः ॥ तौम्बुरविणः । औलपिनः । छगलिनो ढिनुकं वक्ष्यति ॥ वैशम्पायनान्तेवासिभ्यो नवभ्यः । आलम्बिना प्रोक्तमधीयते । आलम्बिनः ॥ पालंगिनः । काम-

लिनः । आर्चाभिनः । आरुणिनः । ताण्डिनः । श्यामायनिनः ॥ कठाल्लुकं वक्ष्यति । कलापिनश्चाणं ॥

## पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ॥ १०५ ॥

तृतीयान्तात् प्रोक्तमित्येतस्मिन्नर्थे णिनिः स्यात् । यत् प्रोक्तं चिरंतनमुनिप्रोक्ताश्चेद्ब्राह्मणकल्पास्ते भवन्ति ॥ ब्राह्मणेषु । भाल्लविनः । शाट्यायनिनः ॥ कल्पेषु । पैङ्गी कल्पः । आरुणपराजी ॥ पुराणप्रोक्तेषु किं । याज्ञवल्क्यानि ब्राह्मणानि । आश्मरथः कल्पः ॥

## शौनकादिभ्यश्छन्दसि ॥ १०६ ॥

शौनक । इत्येवमादिभ्यश्छन्दसि वाच्ये प्रोक्तमित्येतस्मिन्नर्थे णिनिः स्यात् ॥ शौनकेन प्रोक्तमधीयते । शौनकिनः ॥ वाजसनेयिनः ॥ छन्दसि किं । शौनकीयः श्लोकः ॥

## कठचरकाल्लुक् ॥ १०७ ॥

कठ । चरक । इत्येताभ्यां परस्य प्रोक्तप्रत्ययस्य लुक् स्यात् ॥ कठेन प्रोक्तमधीयते । कठाः । णिनेर्लुक् ॥ चरकाः । अत्राणो लुक् ॥ छन्दसीत्येव । काठाः । चारकाः श्लोकाः ॥

## कलापिनो ऽण् ॥ १०८ ॥

कलापिन् । इत्येतस्मात् प्रोक्ते ऽर्थे ऽण् स्यात् ॥ कलापिना प्रोक्तमधीयते । कालापाः ॥ अणग्रहणमधिकविधानार्थं । तेन माधुरी वृत्तिः । सौलभानि ब्राह्मणानि । इत्यादि सिद्धं ॥

## छगलिनो ढिनुक् ॥ १०९ ॥

छगलिन् । इत्येतस्मात् तृतीयान्तात् प्रोक्तमित्येतस्मिन्नर्थे ढिनुक् स्यात् ॥ छगलिना प्रोक्तमधीयते । छागलेयिनः ॥

## पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः ॥ ११० ॥

पाराशर्य । शिलालि । इत्येताभ्यां क्रमाद्भिक्षुसूत्रनटसूत्रयोर्वाच्ययोः प्रोक्ते ऽर्थे णिनिः स्यात् ॥ पाराशर्येण प्रोक्तमधीयते । पाराशरिणो भिक्षवः ॥ शिला-

लिना प्रोक्तमधीयते । शैलालिनो नटाः ॥ भिक्षुनटसूत्रयोः किं । पाराशर्यं । शैलालं ॥

## कर्मन्दकृशाश्वादिनिः ॥ १११ ॥

कर्मन्द । कृशाश्व । इत्येताभ्यां क्रमाद्भिक्षुनटसूत्रयोर्वाच्ययोः प्रोक्ते ऽर्थ इनिः स्यात् ॥ कर्मन्देन प्रोक्तमधीयते । कर्मन्दिनो भिक्षवः ॥ कृशाश्विनो नटाः ॥

## तेनैकदिक् ॥ ११२ ॥

तृतीयान्तादेकदिगित्येतस्मिन्नर्थे ऽणादयः प्रत्यया भवन्ति ॥ सुदाम्नाद्रिणैकदिक् । सौदामनी ॥ हैमवती ॥

## तसिश्च ॥ ११३ ॥

तृतीयान्तादेकदिगित्येतस्मिन्नर्थे तसिप्रत्ययः स्यात् ॥ सुदामतः । हिमवत्तः ॥

## उरसो यच्च ॥ ११४ ॥

उरस् । इत्येतस्मात् तृतीयान्तादेकदिगित्येतस्मिन्नर्थे यत् स्यात् । चकारात् तसिः ॥ उरसैकदिक् । उरस्यः । उरस्तः ॥

## उपज्ञाते ॥ ११५ ॥

तृतीयान्तादुपज्ञात इत्येतस्मिन्नर्थे यथाविहितमणादयः प्रत्यया भवन्ति ॥ पाणिनिनोपज्ञातं । पाणिनीयं व्याकरणं । विनोपदेशेन ज्ञातमित्यर्थः ॥

## कृते ग्रन्थे ॥ ११६ ॥

तृतीयान्तात् कृत इत्येतस्मिन्नर्थे ऽणादयः प्रत्यया भवन्ति । यत् तत् कृतं ग्रन्थश्चेत् स भवति ॥ वररुचिना कृतः । वाररुचो ग्रन्थः ॥ ग्रन्थे किं । वररुचिना कृतः प्रासादः ॥

## संज्ञायां ॥ ११७ ॥

तृतीयान्तात् कृत इत्येतस्मिन्नर्थे ऽणादयः प्रत्यया भवन्ति । समुदायेन चेत् संज्ञा गम्यते ॥ मक्षिकाभिः कृतं । माक्षिकं ॥ सारघं । क्षौद्रं । पौत्तिकं ॥

## कुलालादिभ्यो वुञ् ॥ ११८ ॥

कुलाल । इत्येवमादिभ्यः कृते ऽर्थे संज्ञायां वुञ् स्यात् ॥ कौलालकं । वारुडकं ॥

## क्षुद्राभ्रमरवटरपादपादञ् ॥११९॥

क्षुद्रा । भ्रमर । वटर । पादप । इत्येतेभ्यः संज्ञायां कृते ऽर्थे ऽञ् स्यात् ॥ क्षुद्राभिः कृतं । क्षौद्रं ॥ भ्रामरं । वाटरं । पादपं ॥

## तस्येदं ॥१२०॥

षष्ठ्यन्तादिदमित्येतस्मिन्नर्थे यथाविहितमण्णादयः प्रत्यया भवन्ति ॥ उपगोरिदं । औपगवं ॥ कापटवं । माथुरः । राष्ट्रियः । अवारपारीणः ॥

## रथाद्यत् ॥१२१॥

रथ । इत्येतस्मात् षष्ठ्यन्तादिदमित्येतस्मिन्नर्थे यत् स्यात् ॥ रथस्येदं । रथ्यं चक्रं । उत्तमरथ्यं ॥

## पत्रपूर्वादञ् ॥१२२॥

रथ । इत्येतस्माद्वाहनपूर्वादिदमर्थे ऽञ् स्यात् ॥ आश्वरथं । औष्ट्ररथं चक्रं ॥

## पत्राध्वर्युपरिषदश्च ॥१२३॥

वाहनवाचिनः । अध्वर्यु । परिषद् । इत्येताभ्यां च षष्ठ्यन्ताभ्यामिदमर्थे ऽञ् स्यात् ॥ अश्वस्येदं वहनीयं । आश्वं ॥ औष्ट्रं ॥ आध्वर्यवं । पारिषदं ॥

## हलसीराट्ठक् ॥१२४॥

हल । सीर । इत्येताभ्यामिदमर्थे ठक् स्यात् ॥ हालिकं । सैरिकं ॥

## द्वन्द्वाद्वुन् वैरमैथुनिकयोः ॥१२५॥

द्वन्द्वसमासात् षष्ठ्यन्तादिदमर्थे वैरमैथुनिकयोर्वाच्ययोर्वुन् स्यात् ॥ वैरे । काकोलूकिका ॥ मैथुनिकायां । कुत्सकुशिकिका ॥

## गोत्रचरणाद्वुञ् ॥१२६॥

गोत्रवाचिभ्यश्चरणवाचिभ्यश्चेदमर्थे वुञ् स्यात् ॥ गोत्र । ग्लौचुकायनकं । [illegible] । चरणात् । काठकं । कालापकं ॥

## संघाङ्कलक्षणेष्वञ्यञिञामण् ॥ १२७ ॥

अञ् । यञ् । इञ् । इत्येतदन्तादिदमर्थे संघाङ्कलक्षणेषु वाच्येष्वण् स्यात् ॥ अञन्तात् । वैदः संघः । वैदो ऽङ्कः । वैदं लक्षणं ॥ यञन्तात् । गार्गः संघो ऽङ्को वा । गार्गं लक्षणं ॥ इञन्तात् । दाक्षः संघो ऽङ्को वा । दाक्षं लक्षणं ॥

## शाकलाद्वा ॥ १२८ ॥

शाकल । इत्येतस्मात् षष्ठ्यन्तादिदमित्येतस्मिन्नर्थे संघादिषु वाच्येष्वण् वा स्यात् । पक्षे वुञ् ॥ शाकलानां संघो ऽङ्को घोषो वा । शाकलः । शाकलकः । शाकलं । शाकलकं लक्षणं ॥

## छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः ॥ १२९ ॥

छन्दोग । औक्थिक । याज्ञिक । बह्वृच । नट । इत्येतेभ्यः षष्ठ्यन्तेभ्य इदमर्थे ञ्यः स्यात् ॥ छन्दोगानां धर्म आम्नायो वा । छान्दोग्यं ॥ औक्थिक्यं । याज्ञिक्यं । बाह्वृच्यं । नाट्यं ॥

## न दण्डमाणवान्तेवासिषु ॥ १३० ॥

दण्डप्रधानमाणवेषु शिष्येषु च वाच्येषु गोत्रचरणाद्वुञ् न स्यात् ॥ कौकाक्षा दण्डमाणवाः । कौकाक्षा अन्तेवासिनः ॥

## रैवतिकादिभ्यश्छः ॥ १३१ ॥

रैवतिक । इत्येवमादिभ्यः षष्ठ्यन्तेभ्य इदमर्थे छः स्यात् ॥ रैवतिकीयः ॥

## कौपिञ्जलहास्तिपदादण् ॥ १३२ ॥

कौपिञ्जल । हास्तिपद । इत्येताभ्यां षष्ठ्यन्ताभ्यामिदमर्थे ऽण् स्यात् ॥ कौपिञ्जलः । हास्तिपदः ॥

## आथर्वणिकस्येकलोपश्च ॥ १३३ ॥

आथर्वणिक । इत्येतस्मात् षष्ठ्यन्तादिदमर्थे ऽण् स्यात् । तत्संनियोगेन । इक । इत्येतस्य लोपश्च भवति ॥ आथर्वणो धर्म आम्नायो वा ॥

## तस्य विकारः ॥ १३४ ॥

बह्वयन्ताद्विकार इत्येतस्मिन्नर्थे ऽण् स्यात् ॥ भस्मनो विकारः । भास्मनः ॥ मार्त्तिकः ॥

## अवयवे च प्राण्योषधिवृक्षेभ्यः ॥१३५॥

प्राणिन् । ओषधि । वृक्ष । इत्येतद्वाचिभ्यः षष्ठ्यन्तेभ्यो ऽवयव इत्येतस्मिन्नर्थे यथाविहितमण्णादयः प्रत्यया भवन्ति । चकाराद्विकारे ऽपि ॥ प्राणिभ्यो ऽञं वक्ष्यति ॥ कपोतस्यावयवो विकारो वा । कापोतः ॥ ओषधि । मौर्वं काण्डं भस्म वा ॥ वृक्ष । कारीरं काण्डं भस्म वा ॥

## विल्वादिभ्यो ऽण् ॥१३६॥

विल्व । इत्येवमादिभ्यो विकारे ऽवयवे च अण् स्यात् ॥ विल्वस्यावयवो विकारो वा । वैल्वः ॥

## कोपधाच्च ॥१३७॥

क् । इत्येतदुपधात् प्रातिपदिकाद्विकारे ऽवयवे चाण् स्यात् ॥ तर्कु । तार्कवं ॥ मधूक । माधूकं ॥

## त्रपुजतुनोः षुक् ॥१३८॥

त्रपु । जतु । इत्येताभ्यां विकारे ऽर्थे ऽण् स्यात् । तत्संनियोगेन तयोः षुगागमश्च भवति ॥ त्रपुणो विकारः । त्रापुषं ॥ जातुषं ॥

## ओरञ् ॥१३९॥

उ । इत्येतदन्ताद्विकारे ऽवयवे च अञ् स्यात् ॥ देवदारु । दैवदारवं ॥ भाद्रदारवं ॥

## अनुदात्तादेश्च ॥१४०॥

अनुदात्तादेः प्रातिपदिकाद्विकारे ऽवयवे चाञ् स्यात् ॥ दाधित्थं । कापित्थं ॥

## पलाशादिभ्यो वा ॥१४१॥

पलाश । इत्येवमादिभ्यो विकारे ऽवयवे चाञ् वा स्यात् ॥ पालाशं ॥ पक्षे ऽण् । स्वरे भेदः ॥

## शम्याः ष्लञ् ॥१४२॥

शमी । इत्येतस्माद्विकारेऽवयवे च ष्लञ् स्यात् ॥ शामीलं भस्म । शामीली स्रुक् ॥

## मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ॥ १४३ ॥

प्रातिपदिकाद्भाषायां वा मयट् स्यात् । भक्ष्याच्छादनवर्जितयोर्विकारावयवयोरर्थयोः ॥ अश्ममयं । आश्मनं ॥ भाषायां किं । बैल्वः खादिरो वा यूपः स्यात् ॥ अभक्ष्येत्यादि किं । मौद्गः सूपः । कार्पासमाच्छादनं ॥

## नित्यं वृद्धशरादिभ्यः ॥ १४४ ॥

वृद्धसंज्ञकेभ्यः । शरादिभ्यश्च भाषायां भक्ष्याच्छादनवर्जितयोर्विकारावयवयोरर्थयोर्नित्यं मयट् स्यात् ॥ आम्रमयं । शालमयं ॥ शरादिभ्यः । शरमयं ॥

## गोश्च पुरीषे ॥ १४५ ॥

गो । इत्येतस्मात् पुरीषे वाच्य उद्गमेर्थे मयट् स्यात् ॥ गोः पुरीषं । गोमयं ॥ पुरीषे किं । गव्यं पयः ॥

## पिष्टाच्च ॥ १४६ ॥

पिष्ट । इत्येतस्माद्विकारे नित्यं मयट् स्यात् ॥ पिष्टमयं भस्म ॥

## संज्ञायां कन् ॥ १४७ ॥

पिष्ट । इत्येतस्माद्विकारेऽर्थे संज्ञायां कन् स्यात् ॥ पिष्टको ऽपूपः ॥

## व्रीहेः पुरोडाशे ॥ १४८ ॥

व्रीहि । इत्येतस्मात् पुरोडाशरूपे विकारे मयट् स्यात् ॥ व्रीहिमयः पुरोडाशः । व्रैहमन्यत् ॥

## असंज्ञायां तिलयवाभ्यां ॥ १४९ ॥

तिल । यव । इत्येताभ्यामसंज्ञाविषये विकारावयवयोरर्थयोर्मयट् स्यात् ॥ तिलमयं । यवमयं ॥ असंज्ञायां किं । तैलं । यावकः ॥

## द्व्यचश्छन्दसि ॥ १५० ॥

द्व्यचः प्रातिपदिकाद्विकारावयवयोरर्थयोश्छन्दसि मयट् स्यात् ॥ यस्य पर्णमयी जुहूर्भवति । दर्भमयं वासो भवति ॥

## नोत्वद्वर्ध्रविल्वात् ॥१५१॥

उकारवतः प्रातिपदिकात् । वर्ध्र । विल्व । इत्येताभ्यां च वेदे मयड् स्यात् ॥ उत्वत् । मुञ्ज । मौञ्जं शिक्यं । मुद्ग । मौद्गश्चरुः ॥ वार्ध्री वाल-ग्रथिता भवति । वैल्वो ब्रह्मवर्चसकामेन कार्यः ॥

## तालादिभ्यो ऽण् ॥१५२॥

ताल । इत्येवमादिभ्यो विकारावयवयोरर्थयोरण् स्यात् ॥ तालं धनुः ॥

## जातरूपेभ्यः परिमाणे ॥१५३॥

जातरूपवाचिभ्यः प्रातिपदिकेभ्यः परिमाणाद्रूपे विकारे ऽण् स्यात् ॥ हाटको निष्कः । हाटकं कार्षापणं ॥ परिमाणे किं । हाटकमयी यष्टिः ॥

## प्राणिरजतादिभ्यो ऽञ् ॥१५४॥

प्राणिवाचिभ्यः । रजत । इत्येवमादिभ्यश्च विकारावयवयोरर्थयोरञ् स्यात् ॥ प्राणिन् । कापोतं । मायूरं ॥ रजतादिभ्यः । राजतं ॥

## ञितश्च तत्प्रत्ययात् ॥१५५॥

ञ् । इत्येतदित्संज्ञको यो विकारावयवार्थः प्रत्ययस्तदन्ताद्विकारावयवयोरर्थयोरञ् स्यात् ॥ ओरञ् । दैवदारवं । तस्य विकारो ऽवयवो वा । दैवदारवं ॥ शामीलं । कापोतं । औष्ट्रकं । ऐणेयं । कांस्यं । पारशवं ॥ ञितः किं । बैल्वमयं ॥ तत्प्रत्ययात् किं । वैदमयं ॥

## क्रीतवत् परिमाणात् ॥१५६॥

परिमाणवाचिनः क्रीते ऽर्थे ये ठञादयः प्रत्यया वक्ष्यन्ते ते विकारे ऽपि भवन्ति ॥ निष्केण क्रीतं । नैष्किकं । एवं निष्कस्य विकारः । नैष्किकः ॥ संख्याप्यत्र परिमाणं । शतस्य विकारो ऽवयवो वा । शत्यः । शतिकः ॥ वतिः सर्वसादृश्यार्थः । अध्यर्धपूर्वद्विगोर्लुगसंज्ञायामित्येवमादिकमप्यतिदिश्यते । द्विशत्यः । द्विशतिकः । द्विनिष्कः । द्विनैष्किकः ॥

## उष्ट्राद्वुञ् ॥१५७॥

उष्ट्र । इत्येतस्माद्विकारावयवयोरर्थयोर्वुञ् स्यात् ॥ उष्ट्रस्य विकारो ऽवयवो वा । औष्ट्रकः ॥

## उमोर्णयोर्वा ॥ १५८ ॥

उमा । ऊर्णा । इत्येताभ्यां विकारावयवयोर्वुञ् वा स्यात् ॥ औमं । औमकं ॥ और्णं । और्णकं ॥

## एण्या ढञ् ॥ १५९ ॥

एणी । इत्येतस्माद्विकारावयवयोर्ढञ् स्यात् ॥ ऐणेयं मांसं ॥ एणस्य त्वैणं । प्राणिलक्षणोऽञ् ॥

## गोपयसोर्यत् ॥ १६० ॥

गो । पयस् । इत्येताभ्यां विकारावयवयोर्यत् स्यात् ॥ गव्यं । पयस्यं ॥

## द्रोश्च ॥ १६१ ॥

द्रु । इत्येतस्माद्विकारावयवयोर्यत् स्यात् ॥ द्रव्यं ॥

## माने वयः ॥ १६२ ॥

द्रु । इत्येतस्मान्माने विकारविशेषे वयः स्यात् ॥ द्रुवयं ॥

## फले लुक् ॥ १६३ ॥

फले वाच्ये विकारावयवार्थप्रत्ययस्य लुक् स्यात् ॥ आमलक्याः फलं । आमलकं ॥ बदरं ॥

## प्लक्षादिभ्योऽण् ॥ १६४ ॥

प्लक्ष । इत्येवमादिभ्यः फले विकारावयवत्वेन विवक्षिते ऽण् स्यात् ॥ विधानसामर्थ्यात् तस्य लुङ्न भवति ॥ प्लाक्षं । नैयग्रोधं ॥

## जम्ब्वा वा ॥ १६५ ॥

जम्बू । इत्येतस्मात् फले विकारावयवत्वेन विवक्षिते ऽण् वा स्यात् ॥ जाम्बवानि फलानि । जम्बूनि वा ॥

## लुप् च ॥ १६६ ॥

जम्बू । इत्येतस्मात् फले विकारावयवप्रत्ययस्य वा लुप् स्यात् ॥ जम्ब्वाः फलं । जम्बूः । जम्बु । जाम्बवं ॥

## हरीतक्यादिभ्यश्च ॥१६७॥

हरीतकी । इत्येवमादिभ्यः फलप्रत्ययस्य लुप् स्यात् ॥ हरीतक्याः फलानि । हरीतक्यः ॥

## कंसीयपरशव्ययोर्यञञौ लुक् च ॥१६८॥

कंसीय । परशव्य । इत्येताभ्यां विकारे ऽर्थे क्रमेण, यञ् । अञ् । इत्येतौ प्रत्ययौ भवतः । कंसीयपरशव्यशब्दावयवयोश्छयतोश्च लुग्भवति ॥ कंसीयस्य विकारः । कांस्यं ॥ परशव्यस्य विकारः । पारशवः ॥

॥ इति सूत्रपाठे चतुर्थाध्यायस्य तृतीयः पादः ॥

---

## प्राग्वहतेष्ठक् ॥ १ ॥

तद्वहति रथयुगप्रासङ्गमिति सूत्रात् प्रागर्थेषु ठक् । इत्येषो ऽधिकृतो वेदितव्यः ॥ वक्ष्यति तेन दीव्यतीत्यादि । अक्षैर्दीव्यति । आक्षिकः ॥

## तेन दीव्यति खनति जयति जितं ॥ २ ॥

तृतीयान्ताद्दीव्यति । खनति । जयति । जितं । इत्येतेष्वर्थेषु ठक् स्यात् ॥ अक्षैर्दीव्यति । आक्षिकः ॥ अभ्र्या खनति । आभ्रिकः ॥ अक्षैर्जयति । आक्षिकः ॥ अक्षैर्जितं । आक्षिकं ॥

## संस्कृतं ॥ ३ ॥

तृतीयान्तात् संस्कृतमित्यस्मिन्नर्थे ठक् स्यात् ॥ दध्ना संस्कृतं । दाधिकं ॥ मारिचिकं ॥

## कुलत्थकोपधादण् ॥ ४ ॥

कुलत्थ । ककारोपधात् । अण् । इत्येतदुभयस्मात् तृतीयान्तात् संस्कृतमित्यस्मिन्नर्थे अण् स्यात् ॥ कुलत्थैः संस्कृतं । कौलत्थं ॥ तित्तिडीकेन । तैत्तिडीकं ॥

## तरति ॥५॥

तृतीयान्तात् तरतीत्येतस्मिन्नर्थे ठक् स्यात् ॥ उडुपेन तरति । औडुपिकः ॥

## गोपुच्छाट्ठञ् ॥६॥

गोपुच्छ । इत्येतस्मात् तरतीत्येतस्मिन्नर्थे ठञ् स्यात् ॥ गोपुच्छेन तरति । गौपुच्छिकः ॥

## नौद्व्यचष्ठन् ॥७॥

नौ । इत्येतस्माद्द्व्यच्काच्च प्रातिपदिकात् तरतीत्येतस्मिन्नर्थे ठन् स्यात् ॥ नावा तरति । नाविकः ॥ द्व्यचः । घटिकः । प्लविकः । बाहुका स्त्री ॥

## चरति ॥८॥

तृतीयान्ताच्चरतीत्येतस्मिन्नर्थे ठक् स्यात् ॥ दध्ना चरति । दाधिकः ॥ हास्तिकः ॥

## आकर्षात् ष्ठल् ॥९॥

आकर्ष । इत्येतस्माच्चरतीत्येतस्मिन्नर्थे ष्ठल् स्यात् ॥ आकर्षेण चरति । आकर्षिकः । आकर्षिकी ॥

## पर्पादिभ्यः ष्ठन् ॥१०॥

पर्प । इत्येवमादिभ्यश्चरतीत्येतस्मिन्नर्थे ष्ठन् स्यात् ॥ पर्पेण चरति । पर्पिकः । पर्पिकी ॥

## श्वगणाट्ठञ् च ॥११॥

श्वगण । इत्येतस्माच्चरतीत्येतस्मिन्नर्थे ठञ् स्यात् । चकारात् ष्ठन् ॥ श्वगणेन चरति । श्वागणिकः । श्वागणिकी ॥ ष्ठन् । श्वगणिकः । श्वगणिकी ॥

## वेतनादिभ्यो जीवति ॥१२॥

वेतन । इत्येवमादिभ्यस्तृतीयान्तेभ्यो जीवतीत्येतस्मिन्नर्थे ठक् स्यात् ॥ वेतनेन जीवति । वैतनिकः ॥ धानुर्दण्डिकः । धानुष्कः । दाण्डिकः ॥

## वस्नक्रयविक्रयाट्ठन् ॥१३॥

वस्न । क्रयविक्रय । इत्येताभ्यां तृतीयान्ताभ्यां जीवतीत्येतस्मिन्नर्थे ठन् स्यात् ॥ वस्नेन जीवति । वस्निकः ॥ क्रयविक्रयिकः ॥

## आयुधाच्छ च ॥१४॥

आयुध । इत्येतस्माज्जीवतीत्येतस्मिन्नर्थे छः स्यात् । चकाराट्ठन् ॥ आयुधेन जीवति । आयुधीयः । आयुधिकः ॥

## हरत्युत्सङ्गादिभ्यः ॥१५॥

उत्सङ्ग । इत्येवमादिभ्यस्तृतीयान्तेभ्यो हरतीत्येतस्मिन्नर्थे ठक् स्यात् ॥ उत्सङ्गेन हरति । औत्सङ्गिकः ॥

## भस्त्रादिभ्यः ष्ठन् ॥१६॥

भस्त्रा । इत्येवमादिभ्यस्तृतीयान्तेभ्यो हरतीत्येतस्मिन्नर्थे ष्ठन् स्यात् ॥ भस्त्रया हरति । भस्त्रिकः । भस्त्रिकी ॥

## विभाषा विवधात् ॥१७॥

विवध । इत्येतस्मात् तृतीयान्ताद्धरतीत्येतस्मिन्नर्थे ष्ठन् वा स्यात् ॥ विवधिकः विवधिकी ॥ पक्षे ठक् । वैवधिकः ॥

## अण् कुटिलिकायाः ॥१८॥

कुटिलिका । इत्येतस्मात् तृतीयान्ताद्धरतीत्येतस्मिन्नर्थे अण् स्यात् ॥ कुटिलिका व्याधानां गतिविशेषः कर्मारोपकरणभूतं लोहं च । तया हरति मृगान् । अङ्गारान् वा । कौटिलिको व्याधः कर्मारश्च ॥

## निर्वृत्तेऽक्षद्यूतादिभ्यः ॥१९॥

अक्षद्यूत । इत्येवमादिभ्यस्तृतीयान्तेभ्यो निर्वृत्त इत्येतस्मिन्नर्थे ठक् स्यात् ॥ अक्षद्यूतेन निर्वृत्तं । आक्षद्यूतिकं वैरं ॥

## त्रेर्मन्नित्यं ॥२०॥

क्त्रिप्रत्ययान्तान्निर्वृत्तेऽर्थे नित्यं मप् स्यात् ॥ डुकृञ् । ड्वितः क्त्रिः । कृत्या निर्वृत्तं । कृत्रिमं ॥ पक्त्रिमं । उप्त्रिमं ॥ [illegible] नित्यमिति ॥

## अपमित्ययाचिताभ्यां कक्कनौ ॥२१॥

अपमित्य । याचित । इत्येताभ्यां निर्वृत्ते ऽर्थे क्रमात् कक् । कन् । इत्येतौ प्रत्ययौ भवतः ॥ अपमित्य निर्वृत्तं । आपमित्यकं ॥ याचितकं ॥

## संसृष्टे ॥ २२ ॥

तृतीयान्तात् संसृष्ट इत्येतस्मिन्नर्थे ठक् स्यात् ॥ दध्ना संसृष्टं । दाधिकं ॥

## चूर्णादिनिः ॥ २३ ॥

चूर्ण । इत्येतस्मात् संसृष्टे ऽर्थ इनिः स्यात् ॥ चूर्णैः संसृष्टाः । चूर्णिनो ऽपूपाः ॥

## लवणाल्लुक् ॥ २४ ॥

लवण । इत्येतस्मात् संसृष्टे ऽर्थे ठको लुक् स्यात् ॥ लवणेन संसृष्टः । लवणः सूपः । लवणं शाकं । लवणा यवागूः ॥

## मुद्गादण् ॥ २५ ॥

मुद्ग । इत्येतस्मात् संसृष्टे ऽर्थे ऽण् स्यात् ॥ मौद्ग ओदनः ॥

## व्यञ्जनैरुपसिक्ते ॥ २६ ॥

व्यञ्जनवाचिभ्यस्तृतीयान्तेभ्य उपसिक्त इत्येतस्मिन्नर्थे ठक् स्यात् ॥ दध्नोपसिक्तं । दाधिकं ॥ सौपिकं ॥ व्यञ्जनैः किं । उदकेनोपसिक्त ओदनः ॥

## ओजःसहोम्भसा वर्तते ॥ २७ ॥

ओजस् । सहस् । अम्भस् । इत्येतेभ्यस्तृतीयान्तेभ्यो वर्तत इत्येतस्मिन्नर्थे ठक् स्यात् ॥ ओजसा वर्तते । औजसिकः शूरः । साहसिकश्चोरः । आम्भसिको मत्स्यः ॥

## तत् प्रत्यनुपूर्वमीपलोमकूलं ॥ २८ ॥

प्रति । अनु । इत्येवंपूर्वेभ्य ईप । लोम । कूल । इत्येतेभ्यो द्वितीयान्तेभ्यो वर्तत इत्येतस्मिन्नर्थे ठक् स्यात् ॥ ईप । प्रातीपिकः । आन्वीपिकः ॥ लोम । प्रातिलोमिकः । आनुलोमिकः ॥ कूल । प्रातिकूलिकः । आनुकूलिकः ॥ यद्यपि वृतुधातुरकर्मकस्तथापि क्रियाविशेषणत्वाद्द्वितीया ॥

## परिमुखं च ॥ २९ ॥

परिमुख । इत्येतस्माद्द्वितीयान्ताद्वर्तत इत्येतस्मिन्नर्थे ठक् स्यात् ॥ परिमुखं वर्तते । पारिमुखिकः सेवकः ॥

## प्रयच्छति गर्ह्यं ॥३०॥

द्वितीयान्तात् प्रयच्छतीत्येतस्मिन्नर्थे ठक् स्यात् । यद्द्वितीयान्तं गर्ह्यं चेत् तद्भवति ॥ द्विगुणार्थं द्विगुणं । तत् प्रयच्छति । द्वैगुणिकः ॥ गर्ह्यं किं । द्विगुणं प्रयच्छति ॥

## कुसीददशैकादशात् ष्ठन्ष्ठचौ ॥३१॥

कुसीद । दशैकादश । इत्येताभ्यां प्रयच्छतीत्येतस्मिन्नर्थे क्रमात् ष्ठन् । ष्ठच् । इत्येतौ प्रत्ययौ भवतः । यत् प्रयच्छति गर्ह्यं चेत् तत् ॥ कुसीदं वृद्धिस्तदर्थं द्रव्यं कुसीदं । तत् प्रयच्छति । कुसीदिकः । कुसीदिकी ॥ एकादशार्थत्वादेकादश । वस्तुतो दश । तत् प्रयच्छति । दशैकादशिकः । दशैकादशिकी ॥

## उञ्छति ॥३२॥

द्वितीयान्तादुञ्छतीत्येतस्मिन्नर्थे ठक् स्यात् ॥ बदराण्युञ्छति । बादरिकः ॥

## रक्षति ॥३३॥

द्वितीयान्ताद्रक्षतीत्येतस्मिन्नर्थे ठक् स्यात् ॥ समाजं रक्षति । सामाजिकः ॥

## शब्ददर्दुरं करोति ॥३४॥

शब्द । दर्दुर । इत्येताभ्यां द्वितीयान्ताभ्यां करोतीत्येतस्मिन्नर्थे ठक् स्यात् ॥ शब्दं करोति । शाब्दिकः ॥ दार्दुरिकः ॥

## पक्षिमत्स्यमृगान् हन्ति ॥३५॥

पक्षिन् । मत्स्य । मृग । इत्येतेभ्यो द्वितीयान्तेभ्यो हन्तीत्येतस्मिन्नर्थे ठक् स्यात् ॥ पक्षिन् । पक्षिणो हन्ति । पाक्षिकः । शाकुनिकः । मायूरिकः ॥ मत्स्य । मात्स्यिकः । मैनिकः । शाफरिकः । शाकुलिकः ॥ मृग । मार्गिकः । हारिणिकः । सारंगिकः ॥

## परिपन्थं च तिष्ठति ॥३६॥

परिपन्थ । इत्येतस्माद्द्वितीयान्तात् तिष्ठतीत्येतस्मिन्नर्थे हन्तीत्येतस्मिन्नर्थे च ठक् स्यात् ॥ पारिपन्थिकश्चौरः । पन्थानं वर्जयित्वा व्याप्य वा तिष्ठतीत्यर्थः ॥

## माथोत्तरपदपदव्यनुपदं धावति ॥ ३७ ॥

माथ । इत्येतदुत्तरपदात् । पदवी । अनुपद । इत्येताभ्यां च धावतीत्येतस्मिन्नर्थे ठक् स्यात् ॥ दण्डमाथं धावति । दाण्डमाथिकः ॥ पादविकः ॥ आनुपदिकः ॥

## आक्रन्दाट्ठञ् च ॥ ३८ ॥

आक्रन्द । इत्येतस्माद्द्वितीयान्ताद्धावतीत्येतस्मिन्नर्थे ठञ् स्यात् । चकाराट्ठक् ॥ आक्रान्दिकः ॥ ठक्ठञोः स्वरे विशेषो न तु रूपे ॥

## पदोत्तरपदं गृह्णाति ॥ ३९ ॥

पद । इत्येतदुत्तरपदं यस्य तस्माद्द्वितीयान्ताद्गृह्णातीत्येतस्मिन्नर्थे ठक् स्यात् ॥ पूर्वपदं गृह्णाति । पौर्वपदिकः ॥ औत्तरपदिकः ॥

## प्रतिकण्ठार्थललामं च ॥ ४० ॥

प्रतिकण्ठ । अर्थ । ललाम । इत्येतेभ्यो द्वितीयान्तेभ्यो गृह्णातीत्येतस्मिन्नर्थे ठक् स्यात् ॥ प्रातिकण्ठिकः । आर्थिकः । लालामिकः ॥

## धर्मं चरति ॥ ४१ ॥

धर्म । इत्येतस्माद्द्वितीयान्ताच्चरतीत्येतस्मिन्नर्थे ठक् स्यात् ॥ धर्मं चरति । धार्मिकः ॥

## प्रतिपथमेति ठँश्च ॥ ४२ ॥

प्रतिपथ । इत्येतस्माद्द्वितीयान्तादेतीत्येतस्मिन्नर्थे ठन् स्यात् । चकाराट्ठक् ॥ प्रतिपथिकः । प्रातिपथिकः ॥

## समवायान् समवैति ॥ ४३ ॥

समवायवाचिभ्यो द्वितीयान्तेभ्यः समवैतीत्येतस्मिन्नर्थे ठक् स्यात् ॥ समवायं समवैति । सामवायिकः ॥ सामूहिकः । सांनिवेशिकः ॥

## परिषदो ण्यः ॥ ४४ ॥

परिषद् । इत्येतस्माद्द्वितीयान्तात् समवैतीत्येतस्मिन्नर्थे ण्यः स्यात् ॥ परिषदं समवैति । पारिषद्यः ॥

## सेनाया वा ॥४५॥

सेना । इत्येतस्मात् समवैतीत्येतस्मिन्नर्थे वा ण्यः स्यात् ॥ सेनां समवैति । सैन्यः । सैनिकः ॥

## संज्ञायां ललाटकुक्कुट्यौ पश्यति ॥४६॥

ललाट । कुक्कुटी । इत्येताभ्यां द्वितीयान्ताभ्यां पश्यतीत्येतस्मिन्नर्थे संज्ञाविषये ठक् स्यात् ॥ ललाटं पश्यति । लालाटिकः सेवकः ॥ कौक्कुटिको भिक्षुः ॥

## तस्य धर्म्यं ॥४७॥

षष्ठ्यन्ताद्धर्म्यमित्येतस्मिन्नर्थे ठक् स्यात् ॥ आपणस्य धर्म्यं । आपणिकं ॥ आन्तरागारिकं ॥

## अण् महिष्यादिभ्यः ॥४८॥

महिषी । इत्येवमादिभ्यो धर्म्यमित्येतस्मिन्नर्थे ऽण् स्यात् ॥ महिष्या धर्म्यं । माहिषं ॥ प्राजापतं ॥

## ऋतो ऽञ् ॥४९॥

ऋ । इत्येतदन्ताद्धर्म्यमित्येतस्मिन्नर्थे ऽञ् स्यात् ॥ होतुर्धर्म्यं । हौत्रं ॥ औद्गात्रं ॥

## अवक्रयः ॥५०॥

षष्ठ्यन्तादवक्रय इत्येतस्मिन्नर्थे ठक् स्यात् ॥ शुल्कशालाया अवक्रयः । शौल्कशालिकः ॥ आपणिकः ॥

## तदस्य पण्यं ॥५१॥

प्रथमान्तादस्येति षष्ठ्यर्थे ठक् स्यात् । तत् प्रथमान्तं पण्यं चेत् तद्भवति ॥ अपूपाः पण्यमस्य । आपूपिकः ॥ मौदकिकः ॥

## लवणाट्ठञ् ॥५२॥

लवण । इत्येतस्मात् प्रथमान्तात् षष्ठ्यर्थे ठञ् स्यात् । प्रथमान्तार्थः पण्यं चेत् ॥ लवणं पण्यमस्य । लावणिकः ॥

## किसरादिभ्यः ष्ठन् ॥ ५३ ॥

किसर । इत्येवमादिभ्यः प्रथमान्तेभ्यो ऽस्येति षष्ठ्यर्थे ष्ठन् स्यात् । प्रथमान्तार्थः पण्यं चेत् ॥ किसरं पण्यमस्य । किसरिकः । किसरिकी ॥

## शलालुनो ऽन्यतरस्यां ॥ ५४ ॥

शलालु । इत्येतस्मात् प्रथमान्तादस्येति षष्ठ्यर्थे ष्ठन् वा स्यात् । प्रथमान्तार्थः पण्यं चेत् ॥ शलालु पण्यमस्य । शलालुकः । शलालुकी ॥ पक्षे ठक् । शालालुकः ॥

## शिल्पं ॥ ५५ ॥

प्रथमान्तादस्येति षष्ठ्यर्थे ठक् स्यात् । यत् प्रथमान्तं शिल्पं चेत् तद्भवति ॥ मृदङ्गवादनं शिल्पमस्य । मार्दङ्गिकः ॥

## मड्डुककर्करादणन्यतरस्यां ॥ ५६ ॥

मड्डुक । कर्कर । इत्येताभ्यां प्रथमान्ताभ्यामस्येति षष्ठ्यर्थे ऽण् वा स्यात् । प्रथमान्तार्थः शिल्पं चेत् ॥ मड्डुकवादनं शिल्पमस्य । माड्डुकः ॥ कार्करः ॥ पक्षे ठक् । माड्डुकिकः । कार्करिकः ॥

## प्रहरणं ॥ ५७ ॥

प्रथमान्तादस्येति षष्ठ्यर्थे ठक् स्यात् । यत् प्रथमान्तं प्रहरणं चेत् तद्भवति ॥ असिः प्रहरणमस्य । आसिकः ॥ प्रासिकः ॥

## परश्वधाट्ठञ् च ॥ ५८ ॥

परश्वध । इत्येतस्मात् प्रथमान्तादस्येति षष्ठ्यर्थे ठञ् स्यात् ॥ परश्वधः प्रहरणमस्य । पारश्वधिकः ॥ चकाराट्ठक् । पारश्वधिकः । स्वरे विशेषः ॥

## शक्तियष्ट्योरीकक् ॥ ५९ ॥

शक्ति । यष्टि । इत्येताभ्यां प्रथमान्ताभ्यामस्येति षष्ठ्यर्थ ईकक् स्यात् । यत् प्रथमान्तं प्रहरणं चेत् तत् ॥ शक्तिः प्रहरणमस्य । शाक्तीकः ॥ याष्टीकः ॥

## अस्तिनास्तिदिष्टं मतिः ॥ ६० ॥

अस्ति । नास्ति । दिष्ट । इत्येतेभ्यः प्रथमान्तेभ्यो ऽस्येति षष्ठ्यर्थे ठक् स्यात् । प्रथमान्तार्थो मतिश्चेत् ॥ आस्तिकः । नास्तिकः । दैष्टिकः ॥

## शीलं ॥ ६१ ॥

प्रथमान्तादस्येति षष्ठ्यर्थे ठक् स्यात् । यत् प्रथमान्तं शीलं चेत् तद्भवति ॥ अपूपभक्षणं शीलमस्य । आपूपिकः ॥

## छत्रादिभ्यो णः ॥ ६२ ॥

छत्र । इत्येवमादिभ्यः प्रथमान्तेभ्यो ऽस्येति षष्ठ्यर्थे णः स्यात् । यत् प्रथमान्तं शीलं चेत् तत् ॥ गुरोर्दोषाणामावरणं छत्रं । तच्छीलमस्य । छात्रः ॥

## कर्माध्ययने वृत्तं ॥ ६३ ॥

प्रथमान्तादस्येति षष्ठ्यर्थे ठक् स्यात् । अध्ययने वृत्ता या क्रिया सा चेत् प्रथमान्तस्यार्थः ॥ एकमन्यदध्ययने वृत्तमस्य । ऐकान्यिकः ॥

## वृद्धच्पूर्वपदाट्ठञ् ॥ ६४ ॥

वृद्धच्पूर्वपदात् प्रथमान्तादस्येति षष्ठ्यर्थे ठञ् स्यात् । अध्ययने वृत्ता क्रिया प्रथमान्तार्थश्चेत् ॥ द्वादशान्यानि कर्माणि वृत्तान्यस्य । द्वादशान्यिकः । द्वादशापपाठा अस्य जाता इत्यर्थः ॥

## हितं भक्षाः ॥ ६५ ॥

प्रथमान्ताच्चतुर्थ्यर्थे ठक् स्यात् । यत् प्रथमान्तं हितं चेत् तद्भवति तस्य भक्षाः ॥ अपूपभक्षणं हितमस्मै । आपूपिकः ॥

## तदस्मै दीयते नियुक्तं ॥ ६६ ॥

प्रथमान्तादस्मै । इत्येतस्मिन् चतुर्थ्यर्थे ठक् स्यात् । यः प्रथमान्तार्थः स चेन्नियुक्तं दीयते ॥ अग्रभोजनं नियतं दीयते ऽस्मै । आग्रभोजनिकः ॥

## श्राणामांसौदनाट्टिठन् ॥ ६७ ॥

श्राणा । मांसौदन । इत्येताभ्यां प्रथमान्ताभ्यामस्मै । इति चतुर्थ्यर्थे टिठन् स्यात् ॥ श्राणा नियुक्तं दीयते ऽस्मै । श्राणिकः ॥ मांसौदनिकः ॥ ट् ङीबर्थः । श्राणिकी ॥ इकार उच्चारणार्थः ॥

## भक्तादणन्यतरस्यां ॥ ६८ ॥

भक्त । इत्येतस्मात् प्रथमान्तादस्मै । इति चतुर्थ्यर्थे ऽण् वा स्यात् ॥ भक्तं नियुक्तं दीयते ऽस्मै । भाक्तः ॥ पक्षे ठक् । भाक्तिकः ॥

## तत्र नियुक्तः ॥ ६९ ॥

सप्तम्यन्तान्नियुक्त इत्येतस्मिन्नर्थे ठक् स्यात् ॥ आकारे नियुक्तः । आकारिकः ॥

## अगारान्ताट्ठन् ॥ ७० ॥

अगार । इत्येतदन्तात् प्रातिपदिकान्नियुक्त इत्येतस्मिन्नर्थे ठन् स्यात् ॥ भाण्डागारे नियुक्तः । भाण्डागारिकः ॥

## अध्यायिन्यदेशकालात् ॥ ७१ ॥

निषिद्धदेशवाचिनो निषिद्धकालवाचिनश्च सप्तम्यन्तादध्यायिन्यर्थे ठक् स्यात् ॥ श्मशाने ऽधीते । श्माशानिकः ॥ अकालात् । चतुर्दश्यामधीते । चातुर्दशिकः ॥ अदेशकालात् किं । स्रुघ्ने ऽधीते । पूर्वाह्णे ऽधीते ॥

## कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति ॥ ७२ ॥

कठिन । इत्येतदन्तात् । प्रस्तार । संस्थान । इत्येताभ्यां च सप्तम्यन्ताभ्यां व्यवहरतीत्येतस्मिन्नर्थे ठक् स्यात् ॥ वंशकठिने व्यवहरति । वांशकठिनिकः ॥ प्रास्तारिकः । सांस्थानिकः ॥

## निकटे वसति ॥ ७३ ॥

निकट । इत्येतस्मात् सप्तम्यन्ताद्वसतीत्येतस्मिन्नर्थे ठक् स्यात् ॥ निकटे वसति । नैकटिको भिक्षुः ॥

## आवसथात् ष्ठल् ॥ ७४ ॥

आवसथ । इत्येतस्मात् सप्तम्यन्ताद्वसतीत्येतस्मिन्नर्थे ष्ठल् स्यात् ॥ आवसथे वसति । आवसथिकः । आवसथिकी ॥

## प्राग्घिताद्यत् ॥ ७५ ॥

तस्मै हितमिति सूत्रात् प्राग्यत् । इत्येतस्याधिकारो वेदितव्यः ॥ वक्ष्यति तद्वहति रथयुगप्रासङ्गमित्यादि । रथ्यः । युग्यः । प्रासङ्ग्यः ॥

## तद्वहति रथयुगप्रासङ्गं ॥ ७६ ॥

रथ । युग । प्रासङ्ग । इत्येतेभ्यो द्वितीयान्तेभ्यो वहतीत्येतस्मिन्नर्थे यत् स्यात् ॥ रथं वहति । रथ्यः ॥ युग्यः । प्रासङ्ग्यः ॥

## धुरो यड्ढकौ ॥ ७७ ॥

धुर् । इत्येतस्माद्द्वितीयान्ताद्वहतीत्येतस्मिन्नर्थे यत् । ढक् । इत्येतौ प्रत्ययौ भवतः ॥ धुर्यः । धौरेयः ॥

## खः सर्वधुरात् ॥ ७८ ॥

सर्वधुर । इत्येतस्माद्द्वितीयान्ताद्वहतीत्येतस्मिन्नर्थे खः स्यात् ॥ सर्वधुरां वहति । सर्वधुरीणः ॥ ख इति योगो विभज्यते । उत्तरधुरीणः । दक्षिणधुरीणः ॥ स्त्रीलिङ्गनिर्देशो न्याय्यः । सर्वधुरादिति निर्देशस्तु प्रातिपदिकापेक्षः ॥

## एकधुराल्लुक् च ॥ ७९ ॥

एकधुर । इत्येतस्माद्द्वितीयान्ताद्वहतीत्येतस्मिन्नर्थे खः स्यात् । तस्य च विधानसामर्थ्यात् पाक्षिको लुक् च भवति ॥ एकधुरीणः । एकधुरः ॥

## शकटादण् ॥ ८० ॥

शकट । इत्येतस्माद्द्वितीयान्ताद्वहतीत्येतस्मिन्नर्थे अण् स्यात् ॥ शकटं वहति । शाकटो गौः ॥

## हलसीराट्ठक् ॥ ८१ ॥

हल । सीर । इत्येताभ्यां द्वितीयान्ताभ्यां वहतीत्येतस्मिन्नर्थे ठक् स्यात् ॥ हलं वहति । हालिकः ॥ सैरिकः ॥

## संज्ञायां जन्या ॥ ८२ ॥

जन्या । इत्येतन्निपात्यते समुदायेन चेत् संज्ञा गम्यते ॥ जनी वधूः । जनी वहति । जन्या जामातुर्वयस्या ॥

## विध्यत्यधनुषा ॥ ८३ ॥

द्वितीयान्ताद्विध्यतीत्येतस्मिन्नर्थे यत् स्यात् । न चेत् तत्र धनुः करणं ॥ पादौ विध्यन्ति । पद्याः शर्कराः ॥ अधनुषेति किं । पादौ विध्यति धनुषा ॥

## धनगणं लब्धा ॥ ८४ ॥

धन । गण । इत्येताभ्यां लब्धा । इत्येतस्मिन्नर्थे यत् स्यात् ॥ धनं लब्धा । धन्यः ॥ गणं लब्धा । गण्यः ॥

## अन्नाण्णः ॥ ८५ ॥

अन्न । इत्येतस्माद्द्वितीयान्ताल्लब्धा । इत्येतस्मिन्नर्थे णः स्यात् ॥ अन्नं लब्धा । आन्नः ॥

## वशं गतः ॥ ८६ ॥

वश । इत्येतस्माद्द्वितीयान्ताद्गत इत्येतस्मिन्नर्थे यत् स्यात् ॥ वश्यः ॥

## पदमस्मिन् दृश्यं ॥ ८७ ॥

पद । इत्येतस्मात् प्रथमान्ताद्दृश्यमित्येतदुपाधिकादस्मिन्निति सप्तम्यर्थे यत् स्यात् ॥ पदं दृश्यमस्मिन् । पद्यः कर्दमः ॥

## मूलमस्याबर्हि ॥ ८८ ॥

मूल । इत्येतस्मात् प्रथमान्तादाबर्हीत्येवमुपाधिकादस्येति षष्ठ्यर्थे यत् स्यात् ॥ मूलमाबर्ह्यमस्य । मूल्यो मुद्गादिः । उत्पाटनयोग्य इत्यर्थः ॥

## संज्ञायां धेनुष्या ॥ ८९ ॥

धेनुष्या । इत्येतन्निपात्यते संज्ञाविषये ॥ धेनुशब्दस्य षुगागमो यत्प्रत्ययश्च ॥ धेनुष्या बन्धके स्थिता गौः ॥

## गृहपतिना संयुक्ते ञ्यः ॥ ९० ॥

गृहपति । इत्येतस्मात् तृतीयान्तात् संयुक्त इत्येतस्मिन्नर्थे ञ्यः स्यात् ॥ गृहपतिना संयुक्तः । गार्हपत्यो ऽग्निविशेषः । न तु दक्षिणाग्निः ॥

## नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु ॥ ९१ ॥

नौ । वयस् । धर्म । विष । मूल । मूल । सीता । तुला । इत्येतेभ्यस्तृतीयान्तेभ्यः क्रमात् तार्य । तुल्य । प्राप्य । वध्य । आनाम्य । सम ।

समित । संमित । इत्येतेष्वर्थेषु यत् स्यात् ॥ नावा तार्यं । नाव्यं जलं ॥ वयसा तुल्यः । वयस्यः ॥ धर्मेण प्राप्यं । धर्म्यं ॥ विषेण वध्यः । विष्यः ॥ मूलेनानाम्यं । मूल्यं ॥ मूलेन समः । मूल्यः ॥ सीतया समितं । सीत्यं क्षेत्रं ॥ तुलया संमितं । तुल्यं ॥

## धर्मपथ्यर्थन्यायादनपेते ॥ ९२॥

धर्म । पथिन् । अर्थ । न्याय । इत्येतेभ्यः पञ्चम्यन्तेभ्यो ऽनपेत इत्येतस्मिन्नर्थे यत् स्यात् ॥ धर्मादनपेतं । धर्म्यं ॥ पथ्यं । अर्थ्यं । न्याय्यं ॥

## छन्दसो निर्मिते ॥ ९३॥

छन्दस् । इत्येतस्मात् तृतीयान्तान्निर्मित इत्येतस्मिन्नर्थे यत् स्यात् ॥ छन्दसा निर्मितः । छन्दस्यः ॥ इच्छापर्यायश्छन्दःशब्दः ॥

## उरसो ऽण् च ॥ ९४॥

उरस् । इत्येतस्मात् तृतीयान्तान्निर्मित इत्येतस्मिन्नर्थे ऽण् स्यात् ॥ उरसा निर्मितः । औरसः पुत्रः ॥ चकाराद्यत् । उरस्यः ॥

## हृदयस्य प्रियः ॥ ९५॥

हृदय । इत्येतस्मात् षष्ठ्यन्तात् प्रिय इत्येतस्मिन्नर्थे यत् स्यात् ॥ हृद्यो देशः । हृद्यं जलं ॥

## बन्धने चर्षौ ॥ ९६॥

हृदय । इत्येतस्मात् षष्ठ्यन्ताद्बन्धन इत्येतस्मिन्नर्थे वेदे वाच्ये यत् स्यात् ॥ हृदयस्य बन्धनः । हृद्यो वशीकरणमन्त्रः ॥

## मतजनहलात् करणजल्पकर्षेषु ॥ ९७॥

मत । जन । हल । इत्येतेभ्यः षष्ठ्यन्तेभ्यः क्रमात् करण । जल्प । कर्ष । इत्येतेष्वर्थेषु यत् स्यात् ॥ मतं ज्ञानं । मतस्य करणं । मत्यं ॥ जनस्य जल्पः । जन्यः ॥ हलस्य कर्षः । हल्यः ॥

## तत्र साधुः ॥ ९८॥

सप्तम्यन्तात् साधुरित्येतस्मिन्नर्थे यत् स्यात् ॥ सामसु साधुः । सामन्यः ॥

## प्रतिजनादिभ्यः खञ् ॥ ९९ ॥

प्रतिजन । इत्येवमादिभ्यः सप्तम्यन्तेभ्यः साधुरित्येतस्मिन्नर्थे खञ् स्यात् ॥ प्रतिजने साधुः । प्रातिजनीनः ॥

## भक्ताण्णः ॥ १०० ॥

भक्त । इत्येतस्मात् साधुरित्येतस्मिन्नर्थे णः स्यात् ॥ भाक्ताः शालयः ॥

## परिषदो ण्यः ॥ १०१ ॥

परिषद् । इत्येतस्मात् साधुरित्येतस्मिन्नर्थे ण्यः स्यात् ॥ पारिषद्यः ॥

## कथादिभ्यष्ठक् ॥ १०२ ॥

कथा । इत्येवमादिभ्यः साधुरित्येतस्मिन्नर्थे ठक् स्यात् ॥ काथिकः ॥

## गुडादिभ्यष्ठञ् ॥ १०३ ॥

गुड । इत्येवमादिभ्यः साधुरित्येतस्मिन्नर्थे ठञ् स्यात् ॥ गौडिक इक्षुः ॥

## पथ्यतिथिवसतिस्वपतेर्ढञ् ॥ १०४ ॥

पथिन् । अतिथि । वसति । स्वपति । इत्येतेभ्यः साधुरित्येतस्मिन्नर्थे ढञ् स्यात् ॥ पथि साधुः । पाथेयः ॥ आतिथेयः । वासतेयं । स्वापतेयं ॥

## सभाया यः ॥ १०५ ॥

सभा । इत्येतस्मात् साधुरित्येतस्मिन्नर्थे यः स्यात् ॥ सभायां साधुः । सभ्यः ॥

## ढश्छन्दसि ॥ १०६ ॥

सभा । इत्येतस्मात् सप्तम्यन्तात् साधुरित्येतस्मिन्नर्थे वेदे ढः स्यात् ॥ सभेयो युवास्य यजमानस्य वीरो जायतां ॥

## समानतीर्थे वासी ॥ १०७ ॥

समानतीर्थ । इत्येतस्मात् सप्तम्यन्ताद्वासीत्येतस्मिन्नर्थे यत् स्यात् ॥ समानतीर्थे गुरौ वसति । सतीर्थ्यः ॥

## समानोदरे शयित ओ चोदात्तः ॥ १०८ ॥

समानोदर । इत्येतस्मात् सप्तम्यन्ताच्छयित इत्येतस्मिन्नर्थे यत् स्यात् । ओ । इत्येष चोदात्तः स्यात् ॥ समान उदरे शयितः स्थितः । समानोदर्यः ॥

## सोदराद्यः ॥१०९॥

सोदर । इत्येतस्मात् सप्तम्यन्ताच्छयित इत्येतस्मिन्नर्थे यः स्यात् ॥ सोदर्यो भ्राता ॥

## भवे छन्दसि ॥११०॥

सप्तम्यन्ताद्भव इत्येतस्मिन्नर्थे वेदे यत् स्यात् ॥ मेघ्याय च नमो विद्युत्याय च ॥

## पाथोनदीभ्यां ड्यण् ॥१११॥

पाथस् । नदी । इत्येताभ्यां सप्तम्यन्ताभ्यां भव इत्येतस्मिन्नर्थे छन्दसि ड्यण् स्यात् ॥ पाथ्यो वृषा । नाद्यो गिरो मे प्रयच्छति ॥

## वेशन्तहिमवद्भ्यामण् ॥११२॥

वेशन्त । हिमवत् । इत्येताभ्यां सप्तम्यन्ताभ्यां छन्दसि भव इत्येतस्मिन्नर्थे ऽण् स्यात् ॥ वैशन्तीभ्यः स्वाहा । हैमवतीभ्यः स्वाहा ॥

## स्रोतसो विभाषा ड्यड्ड्यौ ॥११३॥

स्रोतस् । इत्येतस्मात् सप्तम्यन्ताच्छन्दसि भव इत्येतस्मिन्नर्थे ड्यत् । ड्य । इत्येतौ प्रत्ययौ वा भवतः ॥ स्रोत्यः । स्वरे विशेषः ॥ पक्षे यत् । स्रोतस्यः ॥

## सगर्भसयूथसनुताद्यन् ॥११४॥

सगर्भ । सयूथ । सनुत । इत्येतेभ्यः सप्तम्यन्तेभ्यश्छन्दसि भव इत्येतस्मिन्नर्थे यत् स्यात् ॥ अनुभ्राता सगर्भ्यः । अनुसखा सयूथ्यः । यो नः सनुत्यः ॥

## तुग्राद्घन् ॥११५॥

तुग्र । इत्येतस्माद्भवे ऽर्थे छन्दसि घन् वा स्यात् ॥ शर्मं वृषभं तुग्रियासु इति बह्वृचाः ॥ पक्षे यत् । तुग्र्यासु इत्यन्यशाखायां ॥

## अग्राद्यत् ॥११६॥

अग्र । इत्येतस्मात् सप्तम्यन्ताच्छन्दसि भव इत्येतस्मिन्नर्थे यत् स्यात् ॥ अग्रे भवं । अग्र्यं ॥

## घञ्छौ च ॥ ११७ ॥

अग्र । इत्येतस्मात् सप्तम्यन्ताच्छन्दसि भव इत्येतस्मिन्नर्थे घ । छ । इत्येतौ प्रत्ययौ भवतः ॥ अग्रियं । अग्रीयं ॥ चकाराद्यत् । अग्र्यं ॥

## समुद्राभ्राद्घः ॥ ११८ ॥

समुद्र । अभ्र । इत्येताभ्यां सप्तम्यन्ताभ्यां छन्दसि भव इत्येतस्मिन्नर्थे घः स्यात् ॥ समुद्रियाणां नदीनां । अभ्रियस्येव घोषः ॥

## बर्हिषि दत्तं ॥ ११९ ॥

बर्हिस् । इत्येतस्मात् सप्तम्यन्ताद्दत्तमित्येतस्मिन्नर्थे छन्दसि यत् स्यात् ॥ बर्हिष्येषु निधिषु प्रियेषु ॥

## दूतस्य भागकर्मणी ॥ १२० ॥

दूत । इत्येतस्मात् षष्ठ्यन्ताच्छन्दसि भागे कर्मणि चार्थे यत् स्यात् ॥ दूतस्य भागः कर्म वा । दूत्यं ॥

## रक्षोयातूनां हननी ॥ १२१ ॥

रक्षस् । यातु । इत्येताभ्यां षष्ठ्यन्ताभ्यां छन्दसि हननीत्येतस्मिन्नर्थे यत् स्यात् ॥ या ते अग्ने रक्षस्या तनूः । यातव्या ॥

## रेवतीजगतीहविष्याभ्यः प्रशस्ये ॥ १२२ ॥

रेवती । जगती । हविष्या । इत्येतेभ्यः षष्ठ्यन्तेभ्यश्छन्दसि प्रशंसने ऽर्थे यत् स्यात् ॥ यद्वो रेवती रेवत्यं । यद्वो जगती जगत्यं । यद्वो हविष्यं ॥

## असुरस्य स्वं ॥ १२३ ॥

असुर । इत्येतस्मात् षष्ठ्यन्ताच्छन्दसि स्वमित्येतस्मिन्नर्थे यत् स्यात् ॥ असुर्यं वा एतत् पात्रं ॥

## मायायामण् ॥ १२४ ॥

असुर । इत्येतस्मात् षष्ठ्यन्ताच्छन्दसि मायायां स्वविशेषे ऽण् स्यात् ॥ आसुरी माया स्वधया कृतासि ॥

## तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः ॥१२५॥

मतुप्प्रत्ययान्तात् प्रथमान्तादासामिति षष्ठ्यर्थे यत् स्यात् । यत् तत् प्रथमान्तमुपधानो मन्त्रश्चेत् स भवति । यत् तदासामिति निर्दिष्टमिष्टकाश्चेत् ता भवन्ति । मतुपो लुक् च भवति ॥ वर्चःशब्दो यस्मिन् मन्त्रे स वर्चस्वान् । वर्चस्वानुपधानो मन्त्र आसामिष्टकानां । वर्चस्या उपदधाति ॥ तद्वानिति किं । मन्त्रादेव समुदायान्मा भूत् ॥ उपधानः किं । वर्चस्वानुपस्थानमन्त्र आसां ॥ मन्त्रः किं । अङ्गुलिमानुपधानो हस्त आसां ॥ इतिशब्दो विवक्षाबोधनार्थः ॥ इष्टकासु किं । वर्चस्वानुपधानो मन्त्र एषां कपालानां ॥

## अश्विमानण् ॥१२६॥

अश्विमत् । इत्येतस्मात् प्रथमान्तात् पूर्वसूत्रविषये ऽण् स्यात् । मतुपो लुक् च ॥ अश्विमानुपधानो मन्त्र आसां । आश्विनीरुपदधाति ॥

## वयस्यासु मूर्ध्नो मतुप् ॥१२७॥

मूर्धन् । इत्येतस्मान्मत्वन्ताद्वयःशब्दवन्मन्त्रोपधेयास्विष्टकासु वाच्यासु वेदे मतुप् स्यात् । प्रथमस्य मतुपो लुक् च ॥ मूर्धन्वतीरुपदधाति ॥ वयस्यासु किं । यत्र मन्त्रे मूर्धन्वच्छब्द एव केवलो न तु वयःशब्दस्तत्र मा भूत् ॥

## मत्वर्थे मासतन्वोः ॥१२८॥

प्रथमान्तादस्युपाधिकात् षष्ठ्यर्थे सप्तम्यर्थे च मासतन्वोर्वाच्ययोर्वेदे यत् स्यात् ॥ नभांसि विद्यन्ते ऽस्मिन् वा । नभस्यो मासः ॥ सहस्यः । तपस्यः ॥ तन्वां । ओजस्या तनूः । रजस्या ॥ मासतन्वोः किं । मधुमता पात्रेण चरन्ति ॥

## मधोर्ञ च ॥१२९॥

मधु । इत्येतस्मान्मत्वर्थे मासतन्वोर्वेदे ञः स्यात् । चकाराद्यत् ॥ माधवः । मधव्यः । मधुः ॥ तन्वां । माधवा । मधव्या । मधुस्तनूः ॥

## ओजसो ऽहनि यत्खौ ॥१३०॥

ओजस् । इत्येतस्मादहनि वाच्ये छन्दसि मत्वर्थे यत् । ख । इत्येतौ प्रत्ययौ भवतः ॥ ओजस्यं । ओजसीनमहः ॥

## वेशोयशआदेर्भगाद्यल् ॥१३१॥

वेशस् । यशस् । इत्येतदादेर्भग । इत्येतदन्तात् प्रातिपदिकाद्वेदे मत्वर्थे यल् स्यात् ॥ वेशोभग्यः । यशोभग्यः ॥ वेशःशब्दो बलवाची ॥

## ख च ॥१३२॥

वेशोयशआदेर्भगान्तात् प्रातिपदिकाद्वेदे मत्वर्थे खः स्यात् ॥ वेशोभगीनः । यशोभगीनः ॥

## पूर्वैः कृतमिनियौ च ॥१३३॥

पूर्व । इत्येतस्मात् तृतीयान्तात् कृतमित्येतस्मिन्नर्थे वेद इनि । य । इत्येतौ प्रत्ययौ भवतः । चकारात् खः ॥ पथिभिः पूर्विभिः । पूर्व्यैः । पूर्वीणैः ॥

## अद्भिः संस्कृतं ॥१३४॥

अप् । इत्येतस्मात् तृतीयान्तात् संस्कृतमित्येतस्मिन्नर्थे वेदे यत् स्यात् ॥ अप्यं हविः ॥

## सहस्रेण संमितौ घः ॥१३५॥

सहस्र । इत्येतस्मात् तृतीयान्तात् संमित इत्येतस्मिन्नर्थे वेदे घः स्यात् ॥ अग्निः सहस्रियः । सहस्रेण तुल्य इत्यर्थः ॥

## मतौ च ॥१३६॥

सहस्र । इत्येतस्मान्मत्वर्थे वेदे घः स्यात् ॥ सहस्रं विद्यते ऽस्यास्मिन् वा । सहस्रियः ॥

## सोममर्हति यः ॥१३७॥

सोम । इत्येतस्माद्द्वितीयान्तादर्हतीत्येतस्मिन्नर्थे वेदे यः स्यात् ॥ सोममर्हति । सोम्यो ब्राह्मणः । यज्ञार्ह इत्यर्थः ॥

## मये च ॥१३८॥

सोम । इत्येतस्मान्मयडर्थे वेदे यः स्यात् ॥ सोम्यं मधु पिबन्ति । सोममय-मित्यर्थः ॥

## मधोः ॥१३९॥

मधु । इत्येतस्मान्मयडर्थे वेदे यत् स्यात् ॥ मधव्यान् स्तोमान् ॥

## वसोः समूहे च ॥१४०॥

वसु । इत्येतस्मान्मयडर्थे समूहे ऽर्थे च वेदे यत् स्यात् ॥ वसूनां समूहः । वसव्यः ॥

## नक्षत्राद्घः ॥१४१॥

नक्षत्र । इत्येतस्माद्वेदे स्वार्थे घः स्यात् ॥ नक्षत्रियेभ्यः स्वाहा ॥

## सर्वदेवात् तातिल् ॥१४२॥

सर्व । देव । इत्येताभ्यां वेदे स्वार्थे तातिल् स्यात् ॥ सर्वतातिः । देवतातिः ॥

## शिवशमरिष्टस्य करे ॥१४३॥

शिव । शं । अरिष्ट । इत्येतेभ्यः षष्ठ्यन्तेभ्यः कर इत्येतस्मिन्नर्थे वेदे तातिल् स्यात् ॥ शिवस्य करः । शिवतातिः ॥ शंतातिः । अरिष्टताति. ॥

## भावे च ॥१४४॥

शिव । शं । अरिष्ट । इत्येतेभ्यो वेदे भावे तातिल् स्यात् ॥ शिवस्य भावः । शिवतातिः ॥ शंतातिः । अरिष्टतातिः ॥

॥ इति सूत्रपाठे चतुर्थाध्यायस्य चतुर्थः पादो ऽध्यायश्च समाप्तः ॥

॥ अथ पञ्चमो ऽध्यायः ॥

## प्राक् क्रीताच्छः ॥ १ ॥

तेन क्रीतमित्यतः प्रागर्थेषु छप्रत्ययो ऽधिकृतो वेदितव्यः ॥ वक्ष्यति तस्मै हितमित्यादि । वत्सेभ्यो हितः । वत्सीयो गोधुक् ॥

## उगवादिभ्यो यत् ॥ २ ॥

उ । इत्येतदन्तात् । गो । इत्येवमादिभ्यश्च प्राक्क्रीतीयेष्वर्थेषु यत् स्यात् ॥ शङ्कवे हितं । शङ्कव्यं दारु ॥ गवादिभ्यः । गव्यं । हविष्यं ॥

## कम्बलाच्च संज्ञायां ॥ ३ ॥

कम्बल । इत्येतस्मात् संज्ञाविषये प्राक्क्रीतीयेष्वर्थेषु यत् स्यात् ॥ कम्बल्यमूर्णापलशतं ॥ संज्ञायां किं । कम्बलीयोर्णा ॥

## विभाषा हविरपूपादिभ्यः ॥ ४ ॥

हविर्विशेषवाचिभ्यो ऽपूपादिभ्यश्च प्राक्क्रीतीयेष्वर्थेषु वा यत् स्यात् ॥ आमिक्ष्यं । आमिक्षीयं दधि ॥ अपूपादिभ्यः । अपूप्यं । अपूपीयं ॥

## तस्मै हितं ॥ ५ ॥

चतुर्थ्यन्ताद्धितमित्येतस्मिन्नर्थे यथाविहितं छादयः प्रत्यया भवन्ति ॥ वत्सेभ्यो हितः । वत्सीयो गोधुक् ॥ पट्व्यं । गव्यं । अपूप्यं । अपूपीयं ॥

## शरीरावयवाच्च यत् ॥६॥

शरीरावयववाचिनश्चतुर्थ्यन्ताद्धितमित्येतस्मिन्नर्थे यत् स्यात् ॥ दन्तेभ्यो हितं । दन्त्यं ॥ ओष्ठ्यं । कर्ण्यं । ललाट्यं ॥

## खलयवमाषतिलवृषब्रह्मणश्च ॥७॥

खल । यव । माष । तिल । वृष । ब्रह्मन् । इत्येतेभ्यश्चतुर्थ्यन्तेभ्यो हित-मित्येतस्मिन्नर्थे यत् स्यात् ॥ खल्यं । यव्यं । माष्यं । तिल्यं । वृष्यं । ब्रह्मण्यं ॥

## अजाविभ्यां थ्यन् ॥८॥

अजा । अवि । इत्येताभ्यां चतुर्थ्यन्ताभ्यां हितमित्येतस्मिन्नर्थे थ्यन् स्यात् ॥ अजथ्या । अविथ्या ॥

## आत्मन्विश्वजनभोगोत्तरपदात् खः ॥९॥

आत्मन् । विश्वजन । इत्येताभ्यां भोग । इत्येतदुत्तरपदाच्च हितमित्येतस्मिन्नर्थे खः स्यात् ॥ आत्मनीनं । विश्वजनीनं ॥ भोगोत्तरपदात् । मातृभोगीणः । पितृभोगीणः ॥

## सर्वपुरुषाभ्यां णढञौ ॥१०॥

सर्व । पुरुष । इत्येताभ्यां हितमित्येतस्मिन्नर्थे क्रमात् । ण । ढञ् । इत्येतौ प्रत्ययौ भवतः ॥ सार्वं । पौरुषेयं ॥

## माणवचरकाभ्यां खञ् ॥११॥

माणव । चरक । इत्येताभ्यां चतुर्थ्यन्ताभ्यां हिते ऽर्थे खञ् स्यात् ॥ माण-वीनं । चारकीणं ॥

## तदर्थं विकृतेः प्रकृतौ ॥१२॥

विकृतिवाचिनश्चतुर्थ्यन्ताद्विकृत्यर्थायां प्रकृतौ वाच्यायां यथाविहितं छादयः प्रत्यया भवन्ति ॥ अङ्गारेभ्य एतानि । अङ्गारीयाणि काष्ठानि ॥ प्राकारीया इष्टकाः । शङ्कव्यं दारु ॥ तदर्थं किं । धानानां सक्तवः । नात्र तादर्थ्यं विवक्षितं ॥ विकृतेः किं । उदकार्थः कूपः ॥ प्रकृतौ किं । असर्था कोशी ॥

## छदिरुपधिबलेर्ढञ् ॥१३॥

छदिस् । उपधि । बलि । इत्येतेभ्यश्चतुर्थ्यन्तेभ्यो विकृत्यर्थायां प्रकृतौ वाच्यायां ढञ् स्यात् ॥ छादिषेयाणि तृणानि ॥ रथाङ्गविशेष उपधिस्तदेव । औपधेयं ॥ बालेयास्तण्डुलाः ॥

## ऋषभोपानहोर्ञ्यः ॥१४॥

ऋषभ । उपानह् । इत्येताभ्यां चतुर्थ्यन्ताभ्यां विकृत्यर्थायां प्रकृतौ वाच्यायां ञ्यः स्यात् ॥ आर्षभ्यो वत्सः । औपानह्यो मुञ्जः ॥

## चर्मणो ऽञ् ॥१५॥

चर्मणो या विकृतिस्तद्वाचिनश्चतुर्थ्यन्ताद्विकृत्यर्थायां प्रकृतौ वाच्यायामञ् स्यात् ॥ वार्ध्रं चर्म ॥

## तदस्य तदस्मिन् स्यादिति ॥१६॥

प्रथमान्तादस्त्युपाधिकादस्येति षष्ठ्यर्थे ऽस्मिन्निति सप्तम्यर्थे च यथाविहितं छादयः प्रत्यया भवन्ति ॥ प्राकारः स्यादासामिष्टकानां । प्राकारीया इष्टकाः ॥ प्राकारो ऽस्मिन् स्यात् । प्राकारीयो देशः ॥

## परिखाया ढञ् ॥१७॥

परिखा । इत्येतस्मात् प्रथमान्तादस्येति षष्ठ्यर्थे ऽस्मिन्निति सप्तम्यर्थे च ढञ् स्यात् ॥ पारिखेयी भूमिः ॥

## प्राग्वतेष्ठञ् ॥१८॥

तेन तुल्यं क्रिया चेद्वतिरिति सूत्रात् प्राक् ठञ् । इत्येतदधिकृतं वेदितव्यं ॥ वक्ष्यति पारायणतुरायणेत्यादि । पारायणिकः । तौरायणिकः ॥

## आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् ॥१९॥

तदर्हतीत्येतत् सूत्रमभिव्याप्य ठञधिकारमध्ये ठक् । इत्येतदधिकृतं वेदितव्यं । गोपुच्छादीन् वर्जयित्वा ॥ वक्ष्यति तेन क्रीतं । नैष्किकं ॥ अगोपुच्छेत्यादि किं । गौपुच्छिकं । संख्या । साप्ततिकं । परिमाणे । प्रास्थिकं ॥ एषु ठञ् । न तु ठक् ॥

## शरीरावयवाद्यत् ॥ ६ ॥

शरीरावयववाचिनश्चतुर्थ्यन्ताद्धितमित्येतस्मिन्नर्थे यत् स्यात् ॥ दन्तेभ्यो हितं । दन्त्यं ॥ ओष्ठ्यं । कर्ण्यं । ललाट्यं ॥

## खलयवमाषतिलवृषब्रह्मणश्च ॥ ७ ॥

खल । यव । माष । तिल । वृष । ब्रह्मन् । इत्येतेभ्यश्चतुर्थ्यन्तेभ्यो हितमित्येतस्मिन्नर्थे यत् स्यात् ॥ खल्यं । यव्यं । माष्यं । तिल्यं । वृष्यं । ब्रह्मण्यं ॥

## अजाविभ्यां थ्यन् ॥ ८ ॥

अजा । अवि । इत्येताभ्यां चतुर्थ्यन्ताभ्यां हितमित्येतस्मिन्नर्थे थ्यन् स्यात् ॥ अजथ्या । अविथ्या ॥

## आत्मन्विश्वजनभोगोत्तरपदात् खः ॥ ९ ॥

आत्मन् । विश्वजन । इत्येताभ्यां भोग । इत्येतदुत्तरपदाच्च हितमित्येतस्मिन्नर्थे खः स्यात् ॥ आत्मनीनं । विश्वजनीनं ॥ भोगोत्तरपदात् । मातृभोगीणः । पितृभोगीणः ॥

## सर्वपुरुषाभ्यां णढञौ ॥ १० ॥

सर्व । पुरुष । इत्येताभ्यां हितमित्येतस्मिन्नर्थे क्रमात् । ण । ढञ् । इत्येतौ प्रत्ययौ भवतः ॥ सार्वं । पौरुषेयं ॥

## माणवचरकाभ्यां खञ् ॥ ११ ॥

माणव । चरक । इत्येताभ्यां चतुर्थ्यन्ताभ्यां हिते ऽर्थे खञ् स्यात् ॥ माणवीनं । चारकीणं ॥

## तदर्थं विकृतेः प्रकृतौ ॥ १२ ॥

विकृतिवाचिनश्चतुर्थ्यन्तादिभ्यः वर्गाणां प्रकृतौ वाच्यायां यथाविहितं छादयः प्रत्यया भवन्ति ॥ अङ्गारेभ्य एतानि । अङ्गारीयाणि काष्ठानि ॥ प्राकारीया इष्टकाः । शङ्कव्यं दारु ॥ गर्त्यं किं । धनानां गर्तः । नात्र तादर्थ्यं विवक्षितं ॥ विकृतेः किं । उदकार्थः कूपः ॥ प्रकृतौ किं । असेरर्था कोशी ॥

## छदिरुपधिबलेर्ढञ् ॥१३॥

छदिस् । उपधि । बलि । इत्येतेभ्यश्चतुर्थ्यन्तेभ्यो विकृत्यर्थायां प्रकृतौ वाच्यायां ढञ् स्यात् ॥ छादिषेयाणि तृणानि ॥ रथाङ्गविशेष उपधिस्तदेव । औपधेयं ॥ बालेयास्तण्डुलाः ॥

## ऋषभोपानहोर्ञ्यः ॥१४॥

ऋषभ । उपानह् । इत्येताभ्यां चतुर्थ्यन्ताभ्यां विकृत्यर्थायां प्रकृतौ वाच्यायां ञ्यः स्यात् ॥ आर्षभ्यो वत्सः । औपानह्यो मुञ्जः ॥

## चर्मणोऽञ् ॥१५॥

चर्मणो या विकृतिस्तद्वाचिनश्चतुर्थ्यन्ताद्विकृत्यर्थायां प्रकृतौ वाच्यायामञ् स्यात् ॥ वार्ध्रं चर्म ॥

## तदस्य तदस्मिन् स्यादिति ॥१६॥

प्रथमान्तात्स्युपाधिकादस्येति षष्ठ्यर्थे ऽस्मिन्निति सप्तम्यर्थे च यथाविहितं छादयः प्रत्यया भवन्ति ॥ प्राकारः स्यादासामिष्टकानां । प्राकारीया इष्टकाः ॥ प्राकारो ऽस्मिन् स्यात् । प्राकारीयो देशः ॥

## परिखाया ढञ् ॥१७॥

परिखा । इत्येतस्मात् प्रथमान्तादस्येति षष्ठ्यर्थे ऽस्मिन्निति सप्तम्यर्थे च ढञ् स्यात् ॥ पारिखेयी भूमिः ॥

## प्राग्वतेष्ठञ् ॥१८॥

तेन तुल्यं क्रिया चेद्वतिरिति सूत्रात् प्राक् ठञ् । इत्येतदधिकृतं वेदितव्यं ॥ वक्ष्यति पारायणतुरायणेत्यादि । पारायणिकः । तौरायणिकः ॥

## आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् ॥१९॥

तदर्हतीत्येतत् सूत्रमभिव्याप्य ठञधिकारमध्ये ठक् । इत्येतदधिकृतं वेदितव्यं । गोपुच्छादीन् वर्जयित्वा ॥ वक्ष्यति तेन क्रीतं । नैष्किकं ॥ अगोपुच्छेत्यादि किं । गौपुच्छिकं । संख्या । साप्ततिकं । परिमाणे । प्रास्थिकं ॥ एषु ठञ् । न तु ठक् ॥

## असमासे निष्कादिभ्यः ॥२०॥

निष्क । इत्येवमादिभ्य आर्हीयेष्वर्थेष्वसमासे ठक् स्यात् ॥ नैष्किकं । पाणिकं ॥ असमासे किं । परमनैष्किकं ॥

## शताच्च ठन्यतावशते ॥२१॥

शत । इत्येतस्माट्ठन् । यत् । इत्येतौ प्रत्ययौ भवतः । अशते वाच्य आर्हीयेष्वर्थेषु ॥ शतेन क्रीतं । शतिकं । शत्यं ॥ अशते किं । शतं परिमाणमस्य । शतकः संघः ॥ असमास इत्येव । नेह । द्विशतकं ॥

## संख्याया अतिशदन्तायाः कन् ॥२२॥

ति । शत् । इत्येतदन्तभिन्ना या संख्या तस्या आर्हीयेष्वर्थेषु कन् स्यात् ॥ पञ्चभिः क्रीतः । पञ्चकः पटः ॥ बहुकः । गणकः ॥ अतिशदन्तायाः किं । साप्ततिकः । चात्वारिंशत्कः ॥

## वतोरिड्वा ॥२३॥

वतुप्रत्ययात् कन इडागमो वा स्यात् ॥ तावतिकः । तावत्कः ॥ वतोः किं । बहुकः ॥

## विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायां ॥२४॥

विंशति । त्रिंशत् । इत्येताभ्यामसंज्ञायामार्हीयेष्वर्थेषु ड्वुन् स्यात् ॥ विंशकः । त्रिंशकः ॥

## कंसाट्टिठन् ॥२५॥

कंस । इत्येतस्मादार्हीयेष्वर्थेषु टिठन् स्यात् ॥ कंसिकः ॥ टकारो ङीबर्थः । कंसिकी ॥ इकार उच्चारणार्थः । नकारः स्वरार्थः ॥

## शूर्पादञन्यतरस्यां ॥२६॥

शूर्प । इत्येतस्मादार्हीयेष्वर्थेष्वञ् वा स्यात् ॥ शौर्पं । शौर्पिकं ॥

## शतमानविंशतिकसहस्रवसनादण् ॥२७॥

शतमान । विंशतिक । सहस्र । वसन । इत्येतेभ्य आर्हीयेष्वर्थेष्वण् स्यात् ॥ शातमानं । वैंशतिकं । साहस्रं । वासनं ॥

## अध्यर्धपूर्वद्विगोर्लुगसंज्ञायां ॥ २८ ॥

अध्यर्ध । इत्येवंपूर्वात् प्रातिपदिकाद्द्विगोश्च परस्याहीयस्य प्रत्ययस्यासंज्ञायां लुक् स्यात् ॥ अध्यर्धकंसं । अध्यर्धशूर्पं ॥ द्विगोः । द्विकंसं । द्विशूर्पं ॥ असंज्ञायां किं । पाञ्चलोहितिकं ॥

## विभाषा कार्षापणसहस्राभ्यां ॥ २९ ॥

कार्षापण । सहस्र । इत्येतदन्तादध्यर्धपूर्वाद्द्विगोश्च परस्याहीयस्य प्रत्ययस्य लुग्वा स्यात् ॥ अध्यर्धकार्षापणं । अध्यर्धकार्षापणिकं । पक्षे प्रतिरादेशो विकल्पितः । अध्यर्धप्रतिकं ॥ सहस्रान्तात् । अध्यर्धसहस्रं । अध्यर्धसाहस्रं ॥ द्विगोः । द्विकार्षापणं । द्विकार्षापणिकं । द्विप्रतिकं । द्विसहस्रं । द्विसाहस्रं ॥

## शाणाद्वा ॥३५॥

शाण । इत्येतदन्तादध्यर्धपूर्वाद्द्विगोश्चार्हीयेष्वर्थेषु वा यत् स्यात् ॥ अध्यर्धशाण्यं । द्विशाण्यं ॥ पक्षे ठञ् तस्य लुक् । अध्यर्धशाणं । द्विशाणं ॥

## द्वित्रिपूर्वादण् च ॥३६॥

द्वि । त्रि । इत्येवंपूर्वात् शाणान्ताद्द्विगोरार्हीयेष्वर्थेष्वण् वा स्यात् । चकाराद्यच्च ॥ द्वैशाणं । द्विशाण्यं । द्विशाणं ॥ त्रैशाणं । त्रिशाण्यं । त्रिशाणं ॥

## तेन क्रीतं ॥३७॥

तृतीयान्तात् क्रीतमित्येतस्मिन्नर्थे ठञादयः प्रत्यया भवन्ति ॥ गोपुच्छिकं । नैष्किकं । शत्यं । शतिकं ॥

## तस्य निमित्तं संयोगोत्पातौ ॥३८॥

षष्ठ्यन्तान्निमित्तमित्येतस्मिन्नर्थे ठञादयः प्रत्यया भवन्ति । यन्निमित्तं स चेत् संयोग उत्पातो वा भवति ॥ शतस्य निमित्तं । शत्यः । शतिकः संयोग उत्पातो वा ॥ प्राणिनां शुभाशुभसूचको भूतविकार उत्पातः । शत्यं । शतिकं दक्षिणाक्षिस्पन्दनं ॥

## गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् ॥३९॥

गो । इत्येतस्माद्द्व्यचश्च संख्यापरिमाणाश्वादिवर्जिताद्यत् स्यात् ॥ गोर्निमित्तं संयोग उत्पातो वा । गव्यः ॥ द्व्यचः । धन्यं । यशस्यं । स्वर्ग्यं ॥ गोद्व्यचः किं । वैनयिकः ॥ असंख्यापरिमाणाश्वादेः किं । पञ्चकं । सप्तकं ॥ परिमाण । प्रास्थिकं ॥ अश्वादेः । आश्विकं । आश्मिकं ॥

## पुत्राच्छ च ॥४०॥

पुत्र । इत्येतस्माच्छः स्यात् । चकाराद्यत् ॥ पुत्रस्य निमित्तं संयोग उत्पातो वा । पुत्रीयः । पुत्र्यः ॥

## सर्वभूमिपृथिवीभ्यामणञौ ॥४१॥

सर्वभूमि । पृथिवी । इत्येताभ्यां यथाक्रमादण् । अञ् । इत्येतौ प्रत्ययौ भवतः ॥

सर्वभूमेर्निमित्तं संयोग उत्पातो वा । सार्वभौमः । अनुशतिकादित्वादुभयपद-वृद्धिः ॥ पार्थिवः ॥

## तस्येश्वरः ॥ ४२ ॥

सर्वभूमि । पृथिवी । इत्येताभ्यां षष्ठ्यन्ताभ्यामीश्वर इत्येतस्मिन्नर्थे क्रमादण् । अञ् । इत्येतौ प्रत्ययौ भवतः ॥ सर्वभूमेरीश्वरः । सार्वभौमः ॥ पृथिव्या ईश्वरः । पार्थिवः ॥ प्रत्ययार्थाननुवृत्त्यर्थः पुनस्तस्येति समर्थविभक्तिनिर्देशः । अन्यथेश्वरः प्रत्ययार्थविशेषणं संभाव्येत ॥

## तत्र विदित इति च ॥ ४३ ॥

सर्वभूमि । पृथिवी । इत्येताभ्यां सप्तम्यन्ताभ्यां विदित इत्येतस्मिन्नर्थे क्रमादण् । अञ् । इत्येतौ प्रत्ययौ भवतः ॥ सर्वभूमौ विदितः । सार्वभौमः ॥ पार्थिवः ॥

## लोकसर्वलोकाट्ठञ् ॥ ४४ ॥

लोक । सर्वलोक । इत्येताभ्यां सप्तम्यन्ताभ्यां विदित इत्येतस्मिन्नर्थे ठञ् स्यात् ॥ लोके विदितः । लौकिकः ॥ सार्वलौकिकः । अनुशतिकादित्वादु-भयपदवृद्धिः ॥

## तस्य वापः ॥ ४५ ॥

षष्ठ्यन्ताद्वाप इत्येतस्मिन्नर्थे यथाविहितं ठञादयः प्रत्यया भवन्ति ॥ उप्यते ऽस्मिन्निति वापः । प्रस्थस्य वापः । प्रास्थिकं क्षेत्रं ॥ द्रौणिकं । खारीकं ॥

## पात्रात् ष्ठन् ॥ ४६ ॥

पात्र । इत्येतस्मात् ष्ठन् स्यात् ॥ पात्रस्य वापः । पात्रिकं क्षेत्रं । पात्रिकी क्षेत्रभक्तिः ॥

## तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते ॥ ४७ ॥

प्रथमान्तादस्मिन्निति सप्तम्यर्थे यथाविहितं ठञादयः प्रत्यया भवन्ति । यः प्रथमान्तार्थो वृद्ध्यादिः स दीयते चेत् ॥ पञ्चास्मिन् वृद्धिरायो लाभः शुल्कमुपदा वा दीयते । पञ्चकः ॥ शत्यः । शतिकः ॥ उत्तमर्णाय धनातिरिक्तं देयं वृद्धिः ॥ ग्रामादिषु स्वामिग्राह्यो भाग आयः ॥ पटादीनां मूल्यातिरिक्तं द्रव्यं लाभः ॥ रक्षानिर्वेशो राजभागः शुल्कः ॥ उत्कोच उपदा ॥

## पूरणार्धाट्ठन् ॥४८॥

पूरणप्रत्ययान्तात् । अर्ध । इत्येतस्माच्च ठन् स्यात् ॥ द्वितीयो वृद्ध्यादिरस्मिन् दीयते । द्वितीयिकः ॥ तृतीयिकः ॥ अर्धिकः ॥ अर्धशब्दो रूपकार्धे रूढः ॥

## भागाद्यच्च ॥४९॥

भाग । इत्येतस्माद्यत् स्यात् । चकाराट्ठन् ॥ भागो वृद्ध्यादिरस्मिन् दीयते । भाग्यं । भागिकं शतं । भाग्या । भागिका विंशतिः ॥ भागशब्दो रूपकस्यार्धे रूढः ॥

## तद्धरति वहत्यावहति भाराद्वंशादिभ्यः ॥५०॥

वंश । इत्येवमादिभ्यः परो यो भार इत्येष तत्प्रकृतिकाद्द्वितीयान्ताद्धरति । वहति । आवहति । इत्येतेष्वर्थेषु यथाविहितं ठञादयः प्रत्यया भवन्ति ॥ वंशभारं हरति वहत्यावहति वा । वांशभारिकः ॥ कौटजभारिकः ॥ भारादिति किं । वंशं हरति ॥ वंशादिभ्य. किं । व्रीहिभारं हरति ॥ भारभूतेभ्यो वंशादिभ्य इति व्याख्यानान्तरं ॥ भारभूतान् वंशान् हरति । वांशिकः ॥

## वस्नद्रव्याभ्यां ठन्कनौ ॥५१॥

वस्न । द्रव्य । इत्येताभ्यां द्वितीयान्ताभ्यां हरत्यादिष्वर्थेषु यथाक्रमं ठन् । कन् । इत्येतौ प्रत्ययौ भवतः ॥ वस्नं हरति वहत्यावहति वा । वस्निकः ॥ द्रव्यक. ॥

## संभवत्यवहरति पचति ॥५२॥

द्वितीयान्तात् संभवति । अवहरति । पचति । इत्येतेष्वर्थेषु यथाविहितं ठञादयः प्रत्यया भवन्ति ॥ प्रस्थं संभवति । प्रास्थिकः कटाहः । प्रस्थं स्वस्मिन् समावेशयतीत्यर्थः । कुडवमवहरति । कौडविक. । उपसंहरतीत्यर्थः ॥ प्रस्थं पचति । प्रास्थिकी ब्राह्मणी ॥

## आढकाचितपात्रात् खो ऽन्यतरस्यां ॥५३॥

आढक । आचित । पात्र । इत्येतेभ्यो द्वितीयान्तेभ्यः संभवत्यादिष्वर्थेषु वा

कः स्यात् । पक्षे ठञ् ॥ आढकं संभवत्यवहरति पचति वा । आढकीना । आढकिकी ॥ आचितीना । आचितिकी ॥ पात्रीणा । पात्रिकी ॥

## द्विगोः ष्ठंश्च ॥ ५४ ॥

आढक । आचित । पात्र । इत्येतदन्ताद्द्विगोः संभवत्यादिष्वर्थेषु ष्ठन् स्यात् । चकारात् खश्च वा । पक्षे ठञो लुक् ॥ द्व्याढकिकी । द्व्याढकीना । द्व्याढकी ॥ द्व्याचितिकी । द्व्याचितीना । द्व्याचिता ॥ द्विपात्रिकी । द्विपात्रीणा । द्विपात्री ॥

## कुलिजाल्लुक्खौ च ॥ ५५ ॥

कुलिज । इत्येतदन्ताद्द्विगोः संभवत्यादिष्वर्थेषु लुक्खौ वा भवतः । चकारात् ष्ठंश्च ॥ द्विकुलिजी । ठञो लुक् ॥ लुको ऽभावे । द्विकौलिजिकी ॥ ख । द्विकुलिजीना ॥ ष्ठन् । द्विकुलिजिकी ॥

## सो ऽस्यांशवस्नभृतयः ॥ ५६ ॥

प्रथमान्तादस्येति षष्ठ्यर्थे यथाविहितं ठञादयः प्रत्यया भवन्ति । प्रथमान्तार्थो ऽंशवस्नभृतयश्चेद्भवन्ति ॥ पञ्चांशो वस्नं भृतिर्वास्य । पञ्चकः ॥ शत्यः । शतिकः ॥ अंशो भागः । वस्नं मूल्यं । भृतिर्वेतनं ॥

## तदस्य परिमाणं ॥ ५७ ॥

प्रथमान्तादस्येति षष्ठ्यर्थे यथाविहितं ठञादयः प्रत्यया भवन्ति । यः प्रथमान्तार्थः स चेत् परिमाणं भवति ॥ प्रस्थः परिमाणमस्य । प्रास्थिको राशिः ॥ शत्यः । शतिकः ॥ तदस्यग्रहणं पुनर्विधानार्थं । द्वे षष्टी परिमाणमस्य । द्विषाष्टिकः । अध्यर्धपूर्वद्विगोरिति लुग्न भवति ॥

## संख्यायाः संज्ञासंघसूत्राध्ययनेषु ॥ ५८ ॥

परिमाणोपाधिकात् संख्यावाचिनः प्रथमान्तादस्येति षष्ठ्यर्थे संज्ञासंघसूत्राध्ययनेषु वाच्येषु यथाविहितं ठञादयः प्रत्यया भवन्ति ॥ संज्ञा । पञ्चकाः शकुनयः ॥ संघ । पञ्च परिमाणमस्य । पञ्चकः ॥ सूत्र । अष्टावध्यायाः परिमाणमस्य । अष्टकं पाणिनीयं ॥ अध्ययने । पञ्चको ऽधीतः । पञ्चकमध्ययनं ॥

## पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतं ॥५९॥

पङ्क्ति । विंशति । त्रिंशत् । चत्वारिंशत् । पञ्चाशत् । षष्टि । सप्तति । अशीति । नवति । शत । इत्येते रूढशब्दा निपात्यन्ते ॥ पञ्च पदानि परिमाणमस्य । पङ्क्तिश्छन्दः । टिलोपस्तिप्रत्ययः ॥ द्वौ दशतौ परिमाणमस्य । विंशतिः । प्रकृतेर्विन्भावः शतिप्रत्ययश्च ॥ त्रयो दशतः परिमाणमस्य । त्रिंशत् । त्रिन्भावः शच्च प्रत्ययः ॥ चत्वारिंशत् । चत्वारिन्भावः शच्च प्रत्ययः ॥ पञ्चाशत् । पञ्चाभावः शच्च प्रत्ययः ॥ षष्टिः । षष्भावस्तिप्रत्ययो ऽपदत्वं च ॥ सप्ततिः । सप्तभावस्तिप्रत्ययश्च ॥ अशीतिः । अशीभावस्तिप्रत्ययश्च ॥ नवतिः । नवभावस्तिप्रत्ययश्च ॥ दश दशतः परिमाणमस्य । शतं । शभावस्तश्च प्रत्ययः ॥

## पञ्चद्दशतौ वर्गे वा ॥६०॥

पञ्चत् । दशत् । इत्येतौ वर्गे वाच्ये वा निपात्येते ॥ पञ्च परिमाणमस्य । पञ्चद्वर्गः ॥ दशद्वर्गः ॥ उभयत्र अतिप्रत्ययः ॥ पक्षे कन् । पञ्चकः । दशकः ॥

## सप्तनो ऽञ् छन्दसि ॥६१॥

सप्तन् । इत्येतस्माद्वर्गे वाच्ये वेदे ऽञ् स्यात् ॥ सप्त साप्तानि असृजत् ॥

## त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण् ॥६२॥

त्रिंशत् । चत्वारिंशत । इत्येताभ्यां ब्राह्मणे वाच्ये संज्ञाविषये डण् स्यात् ॥ त्रिंशदध्यायाः परिमाणमेषां ब्राह्मणानां । त्रैंशानि । चात्वारिंशानि ब्राह्मणानि ॥

## तदर्हति ॥६३॥

द्वितीयान्तादर्हतीत्येतस्मिन्नर्थे यथाविहितं ठञादयः प्रत्यया भवन्ति ॥ श्वेतच्छत्रमर्हति । श्वैतच्छत्रिकः ॥ शत्यः । शतिकः ॥

## छेदादिभ्यो नित्यं ॥६४॥

छेद । इत्येवमादिभ्यो नित्यमर्हतीत्येतस्मिन्नर्थे यथाविहितं ठञादयः प्रत्यया भवन्ति ॥ छेदं नित्यमर्हति । छैदिकः ॥

## शीर्षच्छेदाद्यच्च ॥ ६५ ॥

शीर्षच्छेद । इत्येतस्मान्नित्यमर्हतीत्येतस्मिन्नर्थे यत् स्यात् । चकाराट्ठञ् ॥ शिरश्छेदं नित्यमर्हति । शीर्षच्छेद्यः । शैर्षच्छेदिकः ॥ प्रत्ययसंनियोगेन शिरसः शीर्षभावो निपात्यते ॥

## दण्डादिभ्यो यः ॥ ६६ ॥

दण्ड । इत्येवमादिभ्योऽर्हतीत्येतस्मिन्नर्थे यः स्यात् ॥ दण्डमर्हति । दण्ड्यः ॥

## छन्दसि च ॥ ६७ ॥

द्वितीयान्तादर्हतीत्येतस्मिन्नर्थे वेदे यत् स्यात् ॥ यूप्यः पलाशः । गर्त्यो देशः ॥

## पात्राद्घंश्च ॥ ६८ ॥

पात्र । इत्येतस्मादर्हतीत्येतस्मिन्नर्थे घन् स्यात् । चकाराद्यच्च ॥ पात्रमर्हति । पात्रियः । पात्र्यः ॥

## कडंकरदक्षिणाच्छ च ॥ ६९ ॥

कडंकर । दक्षिणा । इत्येताभ्यामर्हतीत्येतस्मिन्नर्थे छः स्यात् । चकाराद्यच्च ॥ कडंकरमर्हति । कडंकरीयो गौः । कडंकर्यः ॥ दक्षिणामर्हति । दक्षिणीयो विप्रः । दक्षिण्यः ॥ अल्पाच्तरस्य परनिपातान्न यथासंख्यं ॥

## स्थालीबिलात् ॥ ७० ॥

स्थालीबिल । इत्येतस्मादर्हतीत्येतस्मिन्नर्थे छ । यत् । इत्येतौ प्रत्ययौ भवतः ॥ स्थालीबिलमर्हन्ति । स्थालीबिलीयाः । स्थालीबिल्यास्तण्डुलाः । पाकयोग्या इत्यर्थः ॥

## यज्ञर्त्विग्भ्यां घखञौ ॥ ७१ ॥

यज्ञ । ऋत्विज् । इत्येताभ्यामर्हतीत्येतस्मिन्नर्थे यथाक्रमं घ । खञ् । इत्येतौ प्रत्ययौ भवतः ॥ यज्ञमर्हति । यज्ञियो विप्रः ॥ ऋत्विज्ञमर्हति । आर्त्विजीनो ब्राह्मणः ॥

## पारायणतुरायणचान्द्रायणं वर्तयति ॥ ७२ ॥

पारायण । तुरायण । चान्द्रायण । इत्येतेभ्यो द्वितीयान्तेभ्यो वर्तयतीत्येतस्मिन्नर्थे ठञ् स्यात् ॥ पारायणं वर्तयति । पारायणिकः ॥ तुरायणं यज्ञं वर्तयति । तौरायणिकः ॥ चान्द्रायणं वर्तयति । चान्द्रायणिकः ॥

## संशयमापन्नः ॥७३॥

संशय । इत्येतस्माद्द्वितीयान्तादापन्न इत्येतस्मिन्नर्थे ठञ् स्यात् ॥ संशयमापन्नः । सांशयिकः ॥

## योजनं गच्छति ॥७४॥

योजन । इत्येतस्माद्द्वितीयान्ताद्गच्छतीत्येतस्मिन्नर्थे ठञ् स्यात् ॥ यौजनिकः ॥

## पथः ष्कन् ॥७५॥

पथिन् । इत्येतस्माद्द्वितीयान्ताद्गच्छतीत्येतस्मिन्नर्थे ष्कन् स्यात् ॥ पन्थानं गच्छति । पथिकः ॥ ष् ङीषर्थः । पथिकी ॥ नकारः स्वरार्थः ॥

## पन्थो ण नित्यं ॥७६॥

पथिन् । इत्येतस्मान्नित्यं गच्छतीत्येतस्मिन्नर्थे णप्रत्ययः स्यात् ॥ पन्थानं नित्यं गच्छति । पान्थः । पान्था ॥ पथः पन्थ चेति पन्थादेशः ॥ नित्यं किं । पथिकः ॥ पन्थो ण नित्यं । इत्येव सूत्रपाठः काशिकायां ॥

## उत्तरपथेनाहृतं च ॥७७॥

उत्तरपथ । इत्येतस्मात् तृतीयान्तादाहृतमित्येतस्मिन्नर्थे गच्छतीत्येतस्मिन्नर्थे च ठञ् स्यात् ॥ औत्तरपथिकं ॥ उत्तरपथेन गच्छति । औत्तरपथिकः ॥

## कालात् ॥७८॥

अधिकारोऽयं व्युष्टादिभ्योऽणिति यावत् ॥ इत ऊर्ध्वं यद्वक्ष्यामः कालवाचिभ्यस्तदेदितव्यं ॥ वक्ष्यति तेन निर्वृत्तं । आह्निकं । मासिकं ॥

## तेन निर्वृत्तं ॥७९॥

तृतीयान्तात् कालवाचिनो निर्वृत्तमित्येतस्मिन्नर्थे ठञ् स्यात् ॥ अह्ना निर्वृत्तं । आह्निकं ॥ मासिकं ॥

## तमधीष्टो भृतो भूतो भावी ॥८०॥

द्वितीयान्तात् कालवाचिनो ऽधीष्टः । भृतः । भूतः । भावी । इत्येतेष्वर्थेषु ठञ् स्यात् ॥ मासमधीष्टः । मासिको ऽध्यापकः । मासं सत्कृत्य स्थापित इत्यर्थः ॥ मासं भृतः । मासिकः कर्मकरः । मासं वेतनेन क्रीत इत्यर्थः ॥ मासं भूतः । मासिको व्याधिः । मासं स्वसत्तया व्याप्तकाल इत्यर्थः ॥ मासं भावी । मासिक उत्सवः । मासं स्वसत्तयानागत इत्यर्थः ॥ अत्यन्तसंयोगे द्वितीया ॥

## मासाद्वयसि यत्खञौ ॥८१॥

मास । इत्येतस्माद्वयसि वाच्ये भूत इत्येतस्मिन्नर्थे यत् । खञ् । इत्येतौ प्रत्ययौ भवतः ॥ मासं भूतः । मास्यः । मासीनः ॥ वयसि किं । मासिकः ॥

## द्विगोर्यप् ॥८२॥

मास । इत्येतदन्ताद्द्विगोर्वयसि वाच्ये भूत इत्येतस्मिन्नर्थे यप् स्यात् ॥ द्वौ मासौ भूतः । द्विमास्यः ॥

## षण्मासाण्ण्यच्च ॥८३॥

षण्मास । इत्येतस्माद्वयसि वाच्ये भूत इत्येतस्मिन्नर्थे ण्यत् । यप् । इत्येतौ प्रत्ययौ भवतः । चकाराट्ठञ् च ॥ षण्मासं भूतः । षाण्मास्यः । षण्मास्यः । षाण्मासिकः ॥

## अवयसि ठँश्च ॥८४॥

षण्मास । इत्येतस्मादवयसि वाच्ये भूत इत्येतस्मिन्नर्थे ठन् स्यात् । चकाराण्ण्यत् ॥ षण्मासिकः । षाण्मास्यः ॥

## समायाः खः ॥८५॥

समा । इत्येतस्मादधीष्टादिषु चतुर्ष्वर्थेषु खः स्यात् ॥ समामधीष्टो भृतो भूतो भावी वा । समीनः ॥

## द्विगोर्वा ॥८६॥

समा । इत्येतदन्ताद्द्विगोरधीष्टादिषु चतुर्ष्वर्थेषु वा खः स्यात् ॥ द्विसमीनः ॥ पक्षे ठञ् । द्वैसमिकः ॥

## रात्र्यहःसंवत्सराच्च ॥८७॥

रात्रि । अहन् । संवत्सर । इत्येतदन्ताद्द्विगोर्निर्वृत्तादिष्वर्थेषु वा खः स्यात् । पक्षे ठञ् ॥ द्विरात्रीणः । द्वैरात्रिकः ॥ द्व्यहीनः । द्वैयह्निकः ॥ द्विसंवत्सरीणः । द्विसांवत्सरिकः ॥

## वर्षाल्लुक् च ॥८८॥

वर्ष । इत्येतदन्ताद्द्विगोर्निर्वृत्तादिष्वर्थेषु वा खः स्यात् । पक्षे ठञ् । तयोश्च वा लुग्भवति ॥ द्विवर्षीणः । द्विवार्षिकः । द्विवर्षः ॥

## चित्तवति नित्यं ॥८९॥

वर्ष । इत्येतदन्ताद्द्विगोश्चित्तवति वाच्ये नित्यं लुक् स्यात् ॥ द्विवर्षो दारकः ॥ चित्तवति किं । द्विवर्षीणो व्याधिः ॥

## षष्टिकाः षष्टिरात्रेण पच्यन्ते ॥९०॥

षष्टिकाः । इत्येतत् षष्टिरात्रेण पच्यन्त इत्येतस्मिन्नर्थे निपात्यते ॥ बहुवचनमविवक्षितं ॥ षष्टिरात्रेण पच्यते । षष्टिको धान्यविशेषः ॥ तृतीयान्तात् कन् । रात्रशब्दलोपश्च ॥

## वत्सरान्ताच्छश्छन्दसि ॥९१॥

वत्सर । इत्येतदन्तात् प्रातिपदिकान्निर्वृत्तादिष्वर्थेषु वेदे छः स्यात् ॥ इद्वत्सरीयः । इदावत्सरीयः ॥

## संपरिपूर्वात् ख च ॥९२॥

सं । परि । इत्येवंपूर्वाद्वत्सर । इत्येतदन्तान्निर्वृत्तादिष्वर्थेषु वेदे खः स्यात् । चकाराच्छः ॥ संवत्सरीणः । संवत्सरीयः ॥ परिवत्सरीणः । परिवत्सरीयः ॥

## तेन परिजय्यलभ्यकार्यसुकरं ॥९३॥

तृतीयान्तात् कालवाचिनः परिजय्यादिष्वर्थेषु ठञ् स्यात् ॥ मासेन परिजय्यः । मासिको व्याधिः । मासेन जेतुं शक्य इत्यर्थः ॥ मासेन लभ्यः । मासिकः पटः ॥ मासेन कार्यं । मासिकं चान्द्रायणं ॥ मासेन सुकरः । मासिकः प्रासादः ॥

## तदस्य ब्रह्मचर्यं ॥९४॥

द्वितीयान्तात् कालवाचिनो ऽस्येति षष्ठ्यर्थे ठञ् स्यात् । ब्रह्मचर्यं चेद्गम्यते ॥ मासं ब्रह्मचर्यमस्य । मासिको ब्रह्मचारी ॥ प्रथमान्तात् षष्ठ्यर्थे ठञ् । षष्ठ्यर्थो ब्रह्मचर्यं चेत् । इति व्याख्यानान्तरं ॥ मासो ऽस्य ब्रह्मचर्यस्य । मासिकं ब्रह्मचर्यं ॥

## तस्य दक्षिणा यज्ञाख्येभ्यः ॥९५॥

षष्ठ्यन्तेभ्यो यज्ञनामभ्यो दक्षिणा । इत्येतस्मिन्नर्थे ठञ् स्यात् ॥ अग्निष्टोमस्य दक्षिणा । आग्निष्टोमिकी ॥ ऐकाहिकी । वाजपेयिकी । राजसूयिकी ॥ आख्याग्रहणमप्रसिद्धयज्ञवाचिनो ऽपि परिग्रहार्थं । पाकौदनिकी । दाशौदनिकी ॥

## तत्र च दीयते कार्यं भववत् ॥९६॥

सप्तम्यन्तात् कालवाचिनो दीयते । कार्यं । इत्येतयोरर्थयोर्भववत् प्रत्ययः स्यात् ॥ यथा मासे भवं । मासिकं । एवं मासे दीयते । मासिकं ॥ मासे कार्यं । मासिकं ॥ प्रावृषेण्यं । शारदं । वासन्तिकं । हैमन्तिकं ॥

## व्युष्टादिभ्यो ऽण् ॥९७॥

व्युष्ट । इत्येवमादिभ्यः सप्तम्यन्तेभ्यो दीयते कार्यमित्येतयोरर्थयोरण् स्यात् ॥ व्युष्टे दीयते कार्यं वा । वैयुष्टं ॥

## तेन यथाकथाचहस्ताभ्यां णयतौ ॥९८॥

यथाकथाच । इत्येतस्मादव्ययसमुदायात् तृतीयान्ताद्धस्त । इत्येतस्माच्च दीयते कार्यमित्येतयोरर्थयोर्ण । यत् । इत्येतौ प्रत्ययौ भवतः ॥ यथा कथा च दीयते कार्यं वा । याथाकथाचं । अनादरेण देयं कार्यं वेत्यर्थः ॥ हस्त्यं ॥

## संपादिनि ॥९९॥

तृतीयान्तात् संपादिनीत्येतस्मिन्नर्थे ठञ् स्यात् ॥ कर्णवेष्टकाभ्यां संपादि । कार्णवेष्टकिकं मुखं । कर्णालंकाराभ्यामवश्यं शोभत इत्यर्थः ॥

## कर्मवेषाद्यत् ॥१००॥

कर्मन् । वेष । इत्येताभ्यां तृतीयान्ताभ्यां संपादिनीत्येतस्मिन्नर्थे यत् स्यात् ॥ कर्मणा संपद्यते । कर्मण्यं शौर्यं ॥ वेषेण संपद्यते । वेष्यो नटः ॥

## तस्मै प्रभवति संतापादिभ्यः ॥ १०१ ॥

संताप । इत्येवमादिभ्यश्चतुर्थ्यन्तेभ्यः प्रभवतीत्येतस्मिन्नर्थे ठञ् स्यात् ॥ संतापाय प्रभवति । सांतापिकः ॥

## योगाद्यच्च ॥ १०२ ॥

योग । इत्येतस्माच्चतुर्थ्यन्तात् प्रभवतीत्येतस्मिन्नर्थे यत् स्यात् । चकाराट्ठञ् ॥ योगाय प्रभवति । योग्यः । यौगिकः ॥

## कर्मण उकञ् ॥ १०३ ॥

कर्मन् । इत्येतस्माच्चतुर्थ्यन्तात् प्रभवतीत्येतस्मिन्नर्थे उकञ् स्यात् ॥ कर्मणे प्रभवति । कार्मुकं धनुः ॥ धनुषो ऽन्यत्रानभिधानान्न भवति ॥

## समयस्तदस्य प्राप्तं ॥ १०४ ॥

समय । इत्येतस्मात् प्रथमान्तादस्येति षष्ठ्यर्थे ठञ् स्यात् ॥ प्रथमान्तार्थः प्राप्तश्चेत् ॥ समयः प्राप्तो ऽस्य । सामयिकं ॥

## ऋतोरण् ॥ १०५ ॥

ऋतु । इत्येतस्मात् प्रथमान्तात् प्राप्तोपाधिकादस्येति षष्ठ्यर्थे ऽण् स्यात् ॥ ऋतुः प्राप्तो ऽस्य । आर्तवं पुष्पादि ॥

## छन्दसि घस् ॥ १०६ ॥

ऋतु । इत्येतस्मात् प्रथमान्तात् प्राप्तोपाधिकादस्येति षष्ठ्यर्थे छन्दसि घस् स्यात् ॥ अयं ते योनिर्ऋत्वियः ॥

## कालाद्यत् ॥ १०७ ॥

काल । इत्येतस्मात् प्रथमान्तात् प्राप्तोपाधिकादस्येति षष्ठ्यर्थे यत् स्यात् ॥ कालः प्राप्तो ऽस्य । काल्यः ॥

## प्रकृष्टे ठञ् ॥ १०८ ॥

काल । इत्येतस्मात् प्रकृष्टे वर्तमानात् प्रथमान्तादस्येति षष्ठ्यर्थे ठञ् स्यात् ॥ प्रकृष्टो दीर्घः कालो ऽस्येति । कालिकं वैरं ॥ ठञ्ग्रहणं विस्पष्टार्थं ॥

## प्रयोजनं ॥ १०९ ॥

प्रयमान्तादस्येति षष्ठ्यर्थे ठञ् स्यात् । यत् प्रयमान्तं प्रयोजनं चेत् तद्भवति ॥ इन्द्रमहः प्रयोजनमस्य । ऐन्द्रमहिकं ॥

## विशाखाषाढादण् मन्थदण्डयोः ॥ ११० ॥

विशाखा । अषाढा । इत्येताभ्यां प्रयोजनोपाधिकाभ्यामस्येति षष्ठ्यर्थे ऽण् स्यात् । क्रमान्मन्थदण्डयोर्वाच्ययोः ॥ विशाखा प्रयोजनमस्य । वैशाखो मन्थः ॥ आषाढो दण्डः ॥

## अनुप्रवचनादिभ्यश्छः ॥ १११ ॥

अनुप्रवचन । इत्येवमादिभ्यः प्रयोजनोपाधिकेभ्यो ऽस्येति षष्ठ्यर्थे छः स्यात् ॥ अनुप्रवचनं प्रयोजनमस्य । अनुप्रवचनीयं ॥

## समापनात् सपूर्वपदात् ॥ ११२ ॥

समापन । इत्येतस्माद्विद्यमानपूर्वपदात् प्रयोजनोपाधिकादस्येति षष्ठ्यर्थे छः स्यात् ॥ व्याकरणसमापनीयं ॥ पदग्रहणं बहुच्पूर्वनिरासार्थं ॥

## ऐकागारिकट् चौरे ॥ ११३ ॥

ऐकागारिकट् । इत्येतच्चौरे वाच्ये निपात्यते ॥ एकमसहायमगारं प्रयोजनमस्य । ऐकागारिकः । ऐकागारिकी ॥ इकट् । वृद्धिश्च निपातनात् ॥ चौरे किं । एकागारं प्रयोजनमस्य भिक्षोः ॥

## आकालिकडाद्यन्तवचने ॥ ११४ ॥

आकालिकट् । इत्येतदाद्यन्तवचने निपात्यते ॥ समानकालावाद्यन्तावस्य । आकालिकः स्तनयित्नुः । आकालिकी विद्युत् । उत्पत्त्यनन्तरं विनाशिनीत्यर्थः ॥ समानकालशब्दस्य आकाल आदेश इकट्प्रत्ययश्च निपातनात् ॥

## तेन तुल्यं क्रिया चेद्वतिः ॥ ११५ ॥

तृतीयान्तात् तुल्यमित्येतस्मिन्नर्थे वतिः स्यात् । यत् तुल्यं क्रिया चेत् सा भवति ॥ ब्राह्मणेन तुल्यमधीते । ब्राह्मणवदधीते ॥ क्षत्रियवत् ॥ क्रिया चेत् किं । पुत्रेण तुल्यः स्थूलः ॥

## तत्र तस्येव ॥ ११६ ॥

सप्तम्यन्तात् षष्ठ्यन्ताच्च । इव । इत्येतस्मिन्नर्थे वतिः स्यात् ॥ मथुरायामिव । मथुरावत् स्रुघ्ने प्राकारः ॥ देवदत्तस्येव । देवदत्तवद्यज्ञदत्तस्य गावः ॥

## तदर्हं ॥११७॥

द्वितीयान्तादर्हतीत्येतस्मिन्नर्थे वतिः स्यात् ॥ राजानमर्हति । राजवत् ॥

## उपसर्गाच्छन्दसि धात्वर्थे ॥११८॥

उपसर्गात् साधने धात्वर्थे वर्तमानाच्छन्दसि स्वार्थे वतिः स्यात् ॥ उद्गतानि । उद्वतः । निगतानि । निवतः ॥

## तस्य भावस्त्वतलौ ॥११९॥

षष्ठ्यन्ताद्भाव इत्येतस्मिन्नर्थे त्व । तल् । इत्येतौ प्रत्ययौ भवतः ॥ शब्दप्रवृत्तिनिमित्तं भावः । अश्वस्य भावः । अश्वत्वं । अश्वता ॥ शुक्लत्वं । शुक्लता । पाठकत्वं । पाठकता । देवदत्तत्वं । देवदत्तता ॥

## आ च त्वात् ॥१२०॥

इत ऊर्ध्वं ब्रह्मणस्त्व इति सूत्रात् प्राक् त्व । तल् । इत्येतावधिकृतौ वेदितव्यौ ॥ वक्ष्यति पृथ्वादिभ्य इमनिज्वेति । प्रथिमा । पार्थवं । पृथुत्वं । पृथुता ॥ अपवादैः सह समावेशार्थं कर्मणि विधानार्थं च वचनं ॥ चकारो नञ्स्नञ्भ्यामपि समावेशार्थः । स्त्रिया भावः । स्त्रैणं । स्त्रीत्वं । स्त्रीता ॥

## न नञ्पूर्वात् तत्पुरुषादचतुरसंगतलवणवटयुधकतरसलसेभ्यः ॥१२१॥

इत उत्तरं ये भावप्रत्ययास्ते नञ्पूर्वात् तत्पुरुषसमासान्न भवन्ति । चतुर । संगत । लवण । वट । युध । कत । रस । लस । इत्येतान् वर्जयित्वा ॥ वक्ष्यति पत्यन्तपुरोहितादिभ्यो यगिति । अपतित्वं । अपतिता ॥ अपटुत्वं । अपटुता ॥ नञ्पूर्वात् किं । बार्हस्पत्यं ॥ तत्पुरुषात् किं । बहुव्रीहेर्मा भूत् । आपटवं ॥ अचतुरेत्यादि किं । आचतुर्यं । आसंगत्यं । आलवण्यं । आवट्यं । आयुध्यं । आकत्यं । आरस्यं । आलस्यं ॥

## पृथ्वादिभ्य इमनिज्वा ॥१२२॥

पृथु । इत्येवमादिभ्यः षष्ठ्यन्तेभ्यो भाव इत्येतस्मिन्नर्थे वा इमनिच् स्यात् ॥ वाग्रहणादण् । अधिकारात् त्वतलौ ॥ पृथोर्भावः । प्रथिमा । पार्थवं । पृथुत्वं । पृथुता ॥

# वर्णदृढादिभ्यः ष्यञ् च ॥१२३॥

वर्णविशेषवाचिभ्यः । दृढ । इत्येवमादिभ्यश्च षष्ठ्यन्तेभ्यो भावे ष्यञ् स्यात् । चकारादिमनिच च ॥ शुक्लस्य भावः । शौक्ल्यं । शुक्लिमा । शुक्लत्वं । शुक्लता ॥ दृढादिभ्यः । दार्ढ्यं । द्रढिमा । दृढत्वं । दृढता ॥ ष् ङीषर्थः । औचिती ॥

# गुणवचनब्राह्मणादिभ्यः कर्मणि च ॥१२४॥

गुणवचनेभ्यः । ब्राह्मण । इत्येवमादिभ्यश्च षष्ठ्यन्तेभ्यः कर्मणि भावे च ष्यञ् स्यात् ॥ शुक्लस्य कर्म भावो वा । शौक्ल्यं ॥ ब्राह्मणादिभ्यः । ब्राह्मण्यं ॥

# स्तेनाद्यन्नलोपश्च ॥१२५॥

स्तेन । इत्येतस्मात् षष्ठ्यन्ताद्भावकर्मणोर्यत् स्यात् । न । इत्येतस्य लोपश्च ॥ स्तेनस्य भावः कर्म वा । स्तेयं ॥ स्तेनादिति योगविभागात् ष्यञपि । स्तैन्यं ॥

# सख्युर्यः ॥१२६॥

सखि । इत्येतस्मात् षष्ठ्यन्ताद्भावे कर्मणि च यः स्यात् ॥ सख्युर्भावः कर्म वा । सख्यं ॥

# कपिज्ञात्योर्ढक् ॥१२७॥

कपि । ज्ञाति । इत्येताभ्यां भावे कर्मणि च ढक् स्यात् ॥ कापेयं । ज्ञातेयं ॥

# पत्यन्तपुरोहितादिभ्यो यक् ॥१२८॥

पति । इत्येतदन्तात् । पुरोहित । इत्येवमादिभ्यश्च भावे कर्मणि च यक् स्यात् ॥ सेनापतेर्भावः कर्म वा । सैनापत्यं ॥ पुरोहितादिभ्यः । पौरोहित्यं ॥

# प्राणभृज्जातिवयोवचनोद्गात्रादिभ्यो ऽञ् ॥१२९॥

प्राणभृज्जातिवाचिभ्यः । वयोवचनेभ्यः । उद्गातृ । इत्येवमादिभ्यश्च भावे कर्मणि च अञ् स्यात् ॥ अश्वस्य भावः कर्म वा । आश्वं ॥ वयोवचनेभ्यः । कौमारं । कैशोरं ॥ उद्गात्रादिभ्यः । औद्गात्रं । औन्नेत्रं ॥

## हायनान्तयुवादिभ्योऽण् ॥१३०॥

हायन । इत्येतदन्तेभ्यः । युवन् । इत्येवमादिभ्यश्च भावे कर्मणि च अण् स्यात् ॥ द्वैहायनं । त्रैहायणं ॥ युवादिभ्यः । यौवनं । स्थाविरं ॥

## इगन्ताच्च लघुपूर्वात् ॥१३१॥

लघुपूर्वो य इक् तदन्तात् प्रातिपदिकाद्भावे कर्मणि चाण् स्यात् ॥ शुचि । शौचं । लघु । लाघवं ॥ इगन्तात् किं । पटुत्वं ॥ लघुपूर्वात् किं । पाण्डुत्वं ॥ कथं काव्यमिति । ब्राह्मणादित्वात् ॥

## योपधाद्गुरूपोत्तमाद्वुञ् ॥१३२॥

त्रिप्रभृतीनामन्त्यात् पूर्वमुपोत्तमं ॥ गुरूपोत्तमं यस्य यकारोपधस्य प्रातिपदिकस्य ततो भावे कर्मणि च वुञ् स्यात् ॥ रामणीयकं ॥ योपधात् किं । विमानत्वं ॥ गुरूपोत्तमात् किं । क्षत्रियत्वं ॥

## द्वन्द्वमनोज्ञादिभ्यश्च ॥१३३॥

द्वन्द्वसमासात् । मनोज्ञ । इत्येवमादिभ्यश्च भावे कर्मणि च वुञ् स्यात् ॥ शैष्योपाध्यायिका । गौपालपशुपालिका ॥ मनोज्ञादिभ्यः । मानोज्ञकं ॥

## गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु ॥१३४॥

गोत्रवाचिनः । चरणवाचिनश्च प्रातिपदिकाद्भावकर्मणोरर्थयोः श्लाघादिषु विषयभूतेषु वुञ् स्यात् ॥ श्लाघा विकत्थनं । गार्गिकया श्लाघते ॥ अत्याकारो ऽधिक्षेपः । गार्गिकयात्याकुरुते ॥ तदवेतस्तत्प्राप्तः । गार्गिकामवेतः ॥ श्लाघादिषु किं । गार्ग्यत्वं ॥

## होत्राभ्यश्छः ॥१३५॥

ऋत्विग्विशेषवाचिभ्यो भावे कर्मणि च छः स्यात् ॥ अच्छावाकीयं । मित्रावरुणीयं । ब्राह्मणाच्छंसीयं ।

## ब्रह्मणस्त्वः ॥१३६॥

ब्रह्मन् । इत्येतस्माद्दृत्विग्विशेषवाचिनो भावे कर्मणि च त्वः स्यात् ॥ ब्रह्मणो भावः कर्म वा । ब्रह्मत्वं ॥ नेति वक्तव्ये त्ववचनं तलो बाधनार्थं ॥ ब्राह्मणपर्यायाद्ब्रह्मन्शब्दात् तु त्वतलौ भवत एव । ब्रह्मत्वं । ब्रह्मता ॥

॥ इति सूत्रपाठे पञ्चमाध्यायस्य प्रथमः पादः ॥

---

## धान्यानां भवने क्षेत्रे खञ् ॥१॥

धान्यविशेषवाचिभ्यः षष्ठ्यन्तेभ्यो भवने क्षेत्रे खञ् स्यात् ॥ मुद्गानां भवनं क्षेत्रं । मौद्गीनं ॥ कौलत्थीनं । कौद्रवीणं ॥ धान्यानां किं । तृणानां भवनं क्षेत्रं ॥ क्षेत्रे किं । मुद्गानां भवनं कुशूलः ॥

## व्रीहिशाल्योर्ढक् ॥२॥

व्रीहि । शालि । इत्येताभ्यां भवने क्षेत्रे ढक् स्यात् ॥ व्रीहीणां भवनं क्षेत्रं । व्रैहेयं ॥ शालेयं ॥

## यवयवकषष्टिकाद्यत् ॥३॥

यव । यवक । षष्टिक । इत्येतेभ्यो भवने क्षेत्रे यत् स्यात् ॥ यव्यं । यवक्यं । षष्टिक्यं ॥

## विभाषा तिलमाषोमाभङ्गाणुभ्यः ॥४॥

तिल । माष । उमा । भङ्गा । अणु । इत्येतेभ्यो भवने क्षेत्रे वा यत् स्यात् । पक्षे खञ् ॥ तिल्यं । तैलीनं ॥ माष्यं । माषीणं ॥ उम्यं । औमीनं ॥ भङ्ग्यं । भाङ्गीनं ॥ अणव्यं । आणवीनं ॥

## सर्वचर्मणः कृतः खखञौ ॥५॥

सर्वचर्मन् । इत्येतस्मात् तृतीयान्तात् कृत इत्येतस्मिन्नर्थे ख । खञ् । इत्येतौ प्रत्ययौ भवतः ॥ सर्वचर्मणा कृतः । सर्वचर्मीणः । सार्वचर्मीणः ॥

## यथामुखसंमुखस्य दर्शनः खः ॥ ६ ॥

यथामुख । संमुख । इत्येताभ्यां षष्ठ्यन्ताभ्यां दर्शन इत्येतस्मिन्नर्थे खः स्यात् ॥ यथामुखं दर्शनः । यथामुखीनः । निपातनात् सादृश्ये ऽव्ययीभावः ॥ संमुखस्य दर्शनः । संमुखीनः ॥

## तत् सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ॥ ७ ॥

पथिन् । अङ्ग । कर्मन् । पत्र । पात्र । इत्येतदन्तात् सर्व । इत्येतदादेर्द्वितीयान्ताद्व्याप्नोतीत्येतस्मिन्नर्थे खः स्यात् ॥ सर्वपथान् व्याप्नोति । सर्वपथीनो रथः ॥ सर्वाङ्गीणस्तापः । सर्वकर्मीणः पुरुषः । सर्वपत्रीणः सारथिः । सर्वपात्रीण ओदनः ॥

## आप्रपदं प्राप्नोति ॥ ८ ॥

आप्रपद । इत्येतस्माद्द्वितीयान्तात् प्राप्नोतीत्येतस्मिन्नर्थे खः स्यात् ॥ आप्रपदं प्राप्नोति । आप्रपदीनः पटः । पादाग्रं मर्यादीकृत्येत्यर्थः ॥

## अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु ॥ ९ ॥

अनुपद । सर्वान्न । अयानय । इत्येतेभ्यो द्वितीयान्तेभ्यः क्रमेण बद्धा । भक्षयति । नेय । इत्येतेष्वर्थेषु खः स्यात् ॥ अनुपदं बद्धा । अनुपदीनोपानत् ॥ सर्वान्नानि भक्षयति । सर्वान्नीनो भिक्षुः ॥ अयानयं स्थलविशेषं नेतव्यः । अयानयीनः शारः ॥

## परोवरपरंपरपुत्रपौत्रमनुभवति ॥ १० ॥

परोवर । परंपर । पुत्रपौत्र । इत्येतेभ्यो द्वितीयान्तेभ्यो ऽनुभवतीत्येतस्मिन्नर्थे खः स्यात् ॥ परांश्चावरांश्चानुभवति । परोवरीणः ॥ परांश्च परतरांश्चानुभवति । परंपरीणः ॥ पुत्रपौत्राननुभवति । पुत्रपौत्रीणः ॥

## अवारपारात्यन्तानुकामं गामी ॥ ११ ॥

अवारपार । अत्यन्त । अनुकाम । इत्येतेभ्यो द्वितीयान्तेभ्यो गामीत्येतस्मिन्नर्थे खः स्यात् ॥ अवारपारं गामी । अवारपारीणः ॥ अत्यन्तीनः । अनुकामीनः ॥

## समांसमां विजायते ॥ १२ ॥

समांसमां । इत्येतस्मात् सुबन्तसमुदायाद्विजायत इत्येतस्मिन्नर्थे खः स्यात् ॥ समां समां विजायते । समांसमीना गौर्या प्रतिवर्षं प्रसूयते ॥

# अद्यश्वीनावष्टब्धे ॥१३॥

अद्यश्वीना । इत्येतदासन्ने निपात्यते ॥ अद्य श्वो वा विजायते । अद्यश्वीना वडवा । आसन्नप्रसवेत्यर्थः ॥ विजायत इति न संबध्यत इति पक्षे तु । अद्यश्वीनं मरणं । अद्यश्वीनो वियोग इत्यप्युदाहरणं ॥

# आगवीनः ॥१४॥

आगवीन । इत्येतन्निपात्यते ॥ आगवीनः । गोः प्रत्यर्पणपर्यन्तं यः कार्यं करोति स उच्यते ॥

# अनुग्वलंगामी ॥१५॥

अनुगु । इत्येतस्मादलंगामीत्येतस्मिन्नर्थे खः स्यात् ॥ अनुगवीनो गोपालः । गोः पश्चात् पर्याप्तं गच्छतीत्यर्थः ॥

# अध्वनो यत्खौ ॥१६॥

अध्वन् । इत्येतस्माद्द्वितीयान्तादलंगामीत्येतस्मिन्नर्थे यत् । ख । इत्येतौ प्रत्ययौ भवतः ॥ अध्वानमलं गच्छति । अध्वन्यः । अध्वनीनः ॥

# अभ्यमित्राच्छ च ॥१७॥

अभ्यमित्र । इत्येतस्माद्द्वितीयान्तादलंगामीत्येतस्मिन्नर्थे छ । यत् । ख । इत्येते प्रत्यया भवन्ति ॥ अभ्यमित्रीयः । अभ्यमित्र्यः । अभ्यमित्रीणः । अमित्राभिमुखं सुष्ठु गच्छतीत्यर्थः ॥

# गोष्ठात् खञ् भूतपूर्वे ॥१८॥

गोष्ठ । इत्येतस्माद्भूतपूर्वोपाधिकात् स्वार्थे खञ् स्यात् ॥ गोष्ठो भूतपूर्वः । गौष्ठीनो देशः ॥ भूतपूर्वे किं । गोष्ठो वर्तते ॥

# अश्वस्यैकाहगमः ॥१९॥

अश्व । इत्येतस्मात् षष्ठ्यन्तादेकाहगम इत्येतस्मिन्नर्थे खञ् स्यात् ॥ आश्वीनोऽध्वा ॥

## शालीनकौपीने अधृष्टाकार्ययोः ॥२०॥

शालीन । कौपीन । इत्येतावधृष्टाकार्ययोः क्रमेण निपात्येते ॥ शालाप्रवेशनमर्हति । शालीनो जडः ॥ कूपपतनमर्हति । कौपीनं पापं ॥ खञ्प्रत्ययः ॥

## व्रातेन जीवति ॥२१॥

व्रात । इत्येतस्मात् तृतीयान्ताज्जीवतीत्येतस्मिन्नर्थे खञ् स्यात् ॥ व्रातेन शरीरायासेन जीवति । व्रातीनः ॥

## साप्तपदीनं सख्यं ॥२२॥

साप्तपदीन । इत्येतत् खञ्प्रत्ययान्तं मित्रे निपात्यते ॥ सप्तभिः पदैरवाप्यते । साप्तपदीनं सख्यं ॥

## हैयंगवीनं संज्ञायां ॥२३॥

हैयंगवीन । इत्येतत् संज्ञाविषये निपात्यते ॥ ह्योगोदोहस्य विकारः । हैयंगवीनं नवनीतं ॥ खञ्प्रत्ययः ॥

## तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ ॥२४॥

पीलु । इत्येवमादिभ्यः । कर्ण । इत्येवमादिभ्यश्च षष्ठ्यन्तेभ्यः पाकमूलयोरर्थयोः क्रमात् कुणप् । जाहच् । इत्येतौ प्रत्ययौ भवतः ॥ पीलूनां पाकः । पीलुकुणः ॥ कर्णादिभ्यः । कर्णस्य मूलं । कर्णजाहं ॥

## पक्षात् तिः ॥२५॥

पक्ष । इत्येतस्मात् षष्ठ्यन्तान्मूलमित्येतस्मिन्नर्थे तिः स्यात् ॥ पक्षतिः ॥

## तेन वित्तश्चुञ्चुप्चणपौ ॥२६॥

तृतीयान्ताद्वित्त इत्येतस्मिन्नर्थे चुञ्चुप् । चणप् । इत्येतौ प्रत्ययौ भवतः ॥ विद्यया वित्तः प्रसिद्धः । विद्याचुञ्चुः । विद्याचणः ॥

## विनञ्भ्यां नानाञौ न सह ॥२७॥

वि । नञ् । इत्येताभ्यामसहायवाचिभ्यां क्रमेण ना । नाञ् । इत्येतौ प्रत्ययौ भवतः ॥ विना । नाना ॥

## वेः शालच्छङ्कटचौ ॥२८॥

वि । इत्येतस्मादुपसर्गात् स्वार्थे शालच् । शङ्कटच् । इत्येतौ प्रत्ययौ भवतः ॥ विस्तृतं । विशालं । विशङ्कटं ॥

## संप्रोदश्च कटच् ॥२९॥

सं । प्र । उद् । इत्येतेभ्यः स्वार्थे कटच् स्यात् । चकाराद्वेश्च ॥ संकटं । प्रकटं । उत्कटं । विकटं ॥

## अवात् कुटारच् च ॥३०॥

अव । इत्येतस्मात् कुटारच् । कटच् । इत्येतौ प्रत्ययौ भवतः ॥ अवकुटारः । अवकटः ॥

## नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः ॥३१॥

अव । इत्येतस्मान्नासिकासंबन्धिनि नमने वाच्ये संज्ञाविषये टीटच् । नाटच् । भ्रटच् । इत्येते प्रत्यया भवन्ति ॥ नासिकाया नतं । अवटीटं । अवनाटं । अवभ्रटं ॥ तद्योगान्नासिकावटीटा । पुरुषो ऽवटीटः ॥

## नेर्बिडज्बिरीसचौ ॥३२॥

नि । इत्येतस्मान्नासिकाया नते वाच्ये संज्ञायां बिडच् । बिरीसच् । इत्येतौ प्रत्ययौ भवतः ॥ निबिडं । निबिरीसं ॥ तद्योगान्नासिका निबिडा । निबिडाः केशाः ॥

## इनच्पिटच् चिकचि च ॥३३॥

नि । इत्येतस्मान्नासिकाया नते वाच्य इनच् । पिटच् । इत्येतौ प्रत्ययौ भवतः । तयोः परतः क्रमात् चिक । चि । इत्येतावादेशौ च भवतः ॥ चिकिनं । चिपिटं ॥

## उपाधिभ्यां त्यकन्नासन्नारूढयोः ॥३४॥

उप । अधि । इत्येताभ्यामासन्नाधिरूढयोर्वर्तमानाभ्यां स्वार्थे त्यकन् स्यात् ॥ उपत्यका पर्वतस्यासन्नं स्थलं ॥ अधित्यका पर्वतस्याधिरूढं स्थलं ॥

## कर्मणि घटो ऽठच् ॥३५॥

कर्मन् । इत्येतस्मात् सप्तम्यन्ताद्घट इत्येतस्मिन्नर्थे ऽठच् स्यात् ॥ कर्मणि घटते । कर्मठः पुरुषः ॥

## तदस्य संजातं तारकादिभ्य इतच् ॥३६॥

तारका । इत्येवमादिभ्यः संजातोपाधिकेभ्यः प्रथमान्तेभ्यो ऽस्येति षष्ठ्यर्थ इतच् स्यात् ॥ तारकाः संजाता अस्य । तारकितं नभः ॥

## प्रमाणे द्वयसज्दघ्नञ्मात्रचः ॥३७॥

प्रमाणे वर्तमानात् प्रथमान्तादस्येति षष्ठ्यर्थे द्वयसच् । दघ्नच् । मात्रच् । इत्येते प्रत्यया भवन्ति ॥ ऊरु प्रमाणमस्य । ऊरुद्वयसं । ऊरुदघ्नं । ऊरुमात्रं ॥

## पुरुषहस्तिभ्यामण् च ॥३८॥

पुरुष । हस्तिन् । इत्येताभ्यां प्रथमान्ताभ्यां प्रमाणे वर्तमानाभ्यामस्येति षष्ठ्यर्थे ऽण् स्यात् । चकाराद्द्वयसजादयश्च ॥ पुरुषः प्रमाणमस्य । पौरुषं । पुरुषद्वयसं । पुरुषदघ्नं । पुरुषमात्रं ॥ हस्तिन् । हास्तिनं । हस्तिद्वयसं । हस्तिदघ्नं । हस्तिमात्रं ॥ द्विगोर्नित्यं लुक् । द्विपुरुषमुदकं । द्विहस्ति ॥

## यत्तदेतेभ्यः परिमाणे वतुप् ॥३९॥

यद् । तद् । एतद् । इत्येतेभ्यः प्रथमान्तेभ्यः परिमाणोपाधिकेभ्यो ऽस्येति षष्ठ्यर्थे वतुप् स्यात् ॥ यत् परिमाणमस्य । यावान् ॥ तावान् । एतावान् ॥

## किमिदम्भ्यां वो घः ॥४०॥

किं । इदं । इत्येताभ्यां परस्य वतुपो व् । इत्येतस्य घ् । इत्येष आदेशः स्यात् ॥ कियान् । इयान् ॥

## किमः संख्यापरिमाणे डति च ॥४१॥

किं । इत्येतस्मात् संख्यापरिच्छेदे वर्तमानात् प्रथमान्तादस्येति षष्ठ्यर्थे डतिः स्यात् । चकाराद्वतुप् ॥ का संख्या परिमाणमेषां । कति । कियान् ॥

## संख्याया अवयवे तयप् ॥४२॥

संख्याया अवयवे वर्तमानाया अस्येति षष्ठ्यर्थे ऽवयविनि तयप् स्यात् ॥ पञ्चावयवा अस्य । पञ्चतयं । पञ्चतयो रज्जुः ॥

## द्वित्रिभ्यां तयस्यायज्वा ॥४३॥

द्वि । त्रि । इत्येताभ्यां परस्य तयप् । इत्येतस्य अयच् । इत्येष आदेशो वा स्यात् ॥ द्वयं । द्वितयं ॥ त्रयं । त्रितयं ॥

## उभादुदात्तो नित्यं ॥४४॥

उभ । इत्येतस्मात् परस्य तयपो नित्यमयजादेशः स्यात् । स चोदात्तः ॥ उभयो मणिः । उभये देवमनुष्याः ॥

## तदस्मिन्नधिकमिति दशान्ताड्डः ॥४५॥

दशन् । इत्येतदन्तात् प्रथमान्तादस्मिन्निति सप्तम्यर्थे डः स्यात् । यत् प्रथमान्तमधिकं चेत् तद्भवति ॥ एकादशाधिका अस्मिन् शते । एकादशं शतं सहस्रं वा ॥ दशान्तात् किं । पञ्चाधिका अस्मिन् शते ॥ अन्तग्रहणं किं । दशाधिका अस्मिन् शते ॥ इतिशब्दो विवक्षाबोधनार्थः ॥

## शदन्तविंशतेश्च ॥४६॥

शत् । इत्येतदन्तात् । विंशति । इत्येतस्माच्च तदस्मिन्नधिकमित्येतस्मिन् विषये डः स्यात् ॥ त्रिंशं शतं । चत्वारिंशं शतं ॥ विंशतिरधिकास्मिन् । विंशं शतं ॥

## संख्याया गुणस्य निमाने मयट् ॥४७॥

संख्यावाचिनो भागस्य मूल्ये वर्तमानात् प्रथमान्तादस्येति षष्ठ्यर्थे मयट् स्यात् ॥ यवानां द्वौ भागौ निमानमस्योदश्वितद्भागस्य । द्विमयमुदश्वियवानां ॥ गुणस्येत्येकत्वं विवक्षितं । तेनेह न । द्वौ भागौ यवानां त्रय उदश्वितः ॥ गुणस्य किं । द्वौ व्रीहियवौ निमानमस्योदश्वितः ॥ निमाने किं । द्वौ गुणौ क्षीरस्यैकस्तैलस्य । द्विगुणं तैलं पच्यते क्षीरेण ॥

## तस्य पूरणे डट् ॥४८॥

षष्ठ्यन्तात् संख्यावाचिनः पूरण इत्येतस्मिन्नर्थे डट् स्यात् ॥ एकादशानां पूरणः । एकादशः ॥ द्वादशः । त्रयोदशः ॥

## नान्तादसंख्यादेर्मट् ॥४९॥

न् । इत्येतदन्तादसंख्यादेः संख्यावाचिनः परस्य डटो मट् । इत्येष आगमः स्यात् ॥ पञ्चानां पूरणः । पञ्चमः ॥ नान्तात् किं । विंशः ॥ असंख्यादेः किं । एकादशः ॥

## थट् चच्छन्दसि ॥५०॥

न् । इत्येतदन्तादसंख्यादेः संख्यावाचिनः परस्य डटो वेदे थट् । इत्येष आगमः स्यात् ॥ चकारान्मट् ॥ पर्णमयानि पञ्चथानि । पञ्चममिन्द्रियमस्यापाक्रमत् ॥

## षट्कतिकतिपयचतुरां थुक् ॥५१॥

षष् । कति । कतिपय । चतुर् । इत्येतेषां डटि परे थुक् । इत्येष आगमः स्यात् ॥ षष्ठः । कतिथः । कतिपयथः । चतुर्थः ॥ कतिपयस्यासंख्यात्वे ऽप्यत एव ज्ञापकाड्डट् ॥

## बहुपूगगणसंघस्य तिथुक् ॥५२॥

बहु । पूग । गण । संघ । इत्येतेषां डटि परे तिथुगागमः स्यात् ॥ बहुतिथः । पूगतिथः । गणतिथः । संघतिथः ॥ पूगसंघयोरसंख्यात्वे ऽप्यत एव ज्ञापकाड्डट् ॥

## वतोरिथुक् ॥५३॥

वतुप् । इत्येतदन्तस्य डटि पर इथुगागमः स्यात् ॥ यावथिथः । तावतिथः ॥

## द्वेस्तीयः ॥५४॥

द्वि । इत्येतस्मात् षष्ठ्यन्तात् पूरण इत्येतस्मिन्नर्थे तीयः स्यात् ॥ द्वितीयः ॥

## त्रेः संप्रसारणं च ॥५५॥

त्रि । इत्येतस्मात् षष्ठ्यन्तात् पूरणे ऽर्थे तीयः स्यात् । तत्संनियोगेन त्रिशब्दस्य संप्रसारणं च भवति ॥ त्रयाणां पूरणः । तृतीयः ॥

## विंशत्यादिभ्यस्तमडन्यतरस्यां ॥५६॥

विंशति । इत्येवमादिभ्यः परस्य डटस्तमट् । इत्येष आगमो वा स्यात् ॥ विंशतितमः । विंशः । एकविंशतितमः । एकविंशः ॥ विंशत्यादयो लोकप्रसिद्धाः संख्याशब्दा गृह्यन्ते । न तु पङ्क्त्यादिसूत्रसंनिविष्टाः ॥

## नित्यं शतादिमासार्धमाससंवत्सराच्च ॥५७॥

शतादिभ्यः । मास । अर्धमास । संवत्सर । इत्येतेभ्यश्च परस्य डटो नित्यं तमडागमः स्यात् ॥ एकशततमः । एकसहस्रतमः ॥ शतादिग्रहणं संख्यार्थं ॥ मासतमः । अर्धमासतमः । संवत्सरतमः ॥ मासादेरसंख्यात्वे ऽप्यत एव ज्ञापकाड्डट् ॥

## षष्ट्यादेश्चासंख्यादेः ॥५८॥

षष्टि । इत्येवमादेरसंख्यादेः संख्यावाचिनः परस्य डटो नित्यं तमडागमो भवति ॥ षष्टितमः । सप्ततितमः ॥ असंख्यादेः किं । एकषष्टः । एकषष्टितमः ॥

## मतौ छः सूक्तसाम्नोः ॥५९॥

प्रथमान्तात् सूक्ते सामनि च वाच्ये मत्वर्थे छः स्यात् ॥ अच्छावाकशब्दो ऽस्मिन्नस्तीति । अच्छावाकीयं सूक्तं ॥ वारवन्तीयं साम ॥ अनुकरणादयं प्रत्ययः । तेन पदसमुदायादपि । अस्यवामीयं ॥

## अध्यायानुवाकयोर्लुक् ॥६०॥

अध्याये ऽनुवाके च वाच्ये मत्वर्थे छस्य लुग्वा स्यात् ॥ गर्दभाण्डः । गर्दभाण्डीयो ऽध्यायो ऽनुवाको वा ॥

## विमुक्तादिभ्यो ऽण् ॥६१॥

विमुक्त । इत्येवमादिभ्यो ऽध्यायानुवाकयोर्वाच्ययोर्मत्वर्थे ऽण् स्यात् ॥ विमुक्तशब्दो ऽस्मिन्नस्ति । वैमुक्तो ऽध्यायो ऽनुवाको वा ॥

## गोषदादिभ्यो वुन् ॥६२॥

गोषद् । इत्येवमादिभ्यो ऽध्यायानुवाकयोर्वाच्ययोर्मत्वर्थे वुन् स्यात् ॥ गोषदकः ॥

## तत्र कुशलः पथः ॥६३॥

पथिन् । इत्येतस्मात् सप्तम्यन्तात् कुशल इत्येतस्मिन्नर्थे वुन् स्यात् ॥ पथि कुशलः । पथिकः ॥

## आकर्षादिभ्यः कन् ॥६४॥

आकर्ष । इत्येवमादिभ्यः सप्तम्यन्तेभ्यः कुशल इत्येतस्मिन्नर्थे कन् स्यात् ॥ आकर्षे कुशलः । आकर्षकः ॥ आकषादिभ्य इति पाठान्तरं ॥

## धनहिरण्यात् कामे ॥ ६५ ॥

धन । हिरण्य । इत्येताभ्यां सप्तम्यन्ताभ्यां काम इत्येतस्मिन्नर्थे कन् स्यात् ॥ धने कामः । धनको देवदत्तस्य ॥ हिरण्ये कामः । हिरण्यको देवदत्तस्य ॥

## स्वाङ्गेभ्यः प्रसिते ॥ ६६ ॥

स्वाङ्गवाचिभ्यः सप्तम्यन्तेभ्यः प्रसित इत्येतस्मिन्नर्थे कन् स्यात् ॥ केशेषु प्रसितः । केशकः ॥ दन्तकः । ओष्ठकः ॥ बहुवचनात् स्वाङ्गसमुदायादपि । दन्तोष्ठकः ॥

## उदराट्ठगाद्यूने ॥ ६७ ॥

उदर । इत्येतस्मात् सप्तम्यन्तात् प्रसित इत्येतस्मिन्नर्थे ऽविजिगीषौ ठक् स्यात् ॥ औदरिकः । बुभुक्षयात्यन्तपीडित इत्यर्थः ॥ आद्यूने किं । उदरकः ॥

## सस्येन परिजातः ॥ ६८ ॥

सस्य । इत्येतस्मात् तृतीयान्तात् परिजात इत्येतस्मिन्नर्थे कन् स्यात् ॥ सस्येन गुणेन परिजातः संबद्धः । सस्यको वत्सः । सस्यकः साधुः ॥ शस्येनेति पाठान्तरं ॥

## अंशं हारी ॥ ६९ ॥

अंश । इत्येतस्माद्द्वितीयान्ताद्धारीत्येतस्मिन्नर्थे कन् स्यात् ॥ अंशं हारी । अंशको दायादः ॥ हारीत्यावश्यके णिनिरिति द्वितीयैत्र ॥

## तन्त्रादचिरापहृते ॥ ७० ॥

तन्त्र । इत्येतस्मात् पञ्चम्यन्तादचिरापहृत इत्येतस्मिन्नर्थे कन् स्यात् ॥ तन्त्रादचिरापहृतः । तन्त्रकः पटः । नव इत्यर्थः ॥

## ब्राह्मणकोष्णिके संज्ञायां ॥ ७१ ॥

ब्राह्मणक । उष्णिका । इत्येतौ संज्ञायां कन्प्रत्ययान्तौ निपात्येते ॥ ब्राह्मणको देश आयुधजीविब्राह्मणानां ॥ अल्पमन्नमस्यां । उष्णिका यवागूः ॥ उष्णा देशो ऽपि ॥

## शीतोष्णाभ्यां कारिणि ॥ ७२ ॥

शीत । उष्ण । इत्येताभ्यां द्वितीयान्ताभ्यां करोतीत्येतस्मिन्नर्थे कन् स्यात् ॥ शीतं करोति । शीतको ऽलसः ॥ उष्णकः शीघ्रकारी ॥ क्रियाविशेषणत्वा-द्द्वितीया ॥

## अधिकं ॥ ७३ ॥

अधिक । इत्येतत् कन्नन्तं निपात्यते ॥ अधिको द्रोणः खार्याः । अधिका खारी द्रोणेन ॥

## अनुकाभिकाभीकः कमिता ॥ ७४ ॥

अनुक । अभिक । अभीक । इत्येते कन्नन्ता निपात्यन्ते कमिता । इत्येतस्मि-न्नर्थे ॥ अनुकामयते । अनुकः ॥ अभिकामयते । अभिकः । अभीकः । अभेः पाक्षिको दीर्घश्च ॥

## पार्श्वेनान्विच्छति ॥ ७५ ॥

पार्श्व । इत्येतस्मात् तृतीयान्तादन्विच्छतीत्येतस्मिन्नर्थे कन् स्यात् ॥ अनृजुरुपायः पार्श्वं । तेनार्थानन्विच्छति । पार्श्वकः कौसृतिकः ॥

## अयःशूलदण्डाजिनाभ्यां ठक्ठञौ ॥ ७६ ॥

अयःशूल । दण्डाजिन । इत्येताभ्यां तृतीयान्ताभ्यामन्विच्छतीत्येतस्मिन्नर्थे यथाक्रमं ठक् । ठञ् । इत्येतौ प्रत्ययौ भवतः ॥ तीक्ष्ण उपायो ऽयःशूलं । तेनान्वि-च्छति । आयःशूलिकः ॥ दाण्डाजिनिकः सदम्भः ॥

## तावतिथं ग्रहणमिति लुग्वा ॥ ७७ ॥

पूरणप्रत्ययान्ताद्ग्रहणोपाधिकात् स्वार्थे कन् स्यात् । पूरणप्रत्ययस्य च वा लुक् स्यात् ॥ द्विकं । द्वितीयकं । त्रिकं । तृतीयकं वा ग्रहणं ॥

## स एषां ग्रामणीः ॥ ७८ ॥

प्रथमान्तादेषामिति षष्ठ्यर्थे कन् स्यात् । यत् प्रथमान्तं मुख्यश्चेत् स भवति ॥ देवदत्तो ग्रामणीरेषां । देवदत्तकाः ॥ ग्रामणीः किं । देवदत्तः शत्रुरेषां ॥

## शृङ्खलमस्य बन्धनं करभे ॥ ७९ ॥

शृङ्खल । इत्येतस्मात् प्रथमान्तात् करभे वाच्ये ऽस्येति षष्ठ्यर्थे कन् स्यात् । यत् प्रथमान्तं बन्धनं चेत् तद्भवति ॥ शृङ्खलं बन्धनमस्य । शृङ्खलकः करभः ॥

## उत्क उन्मनाः ॥ ८० ॥

उत्क । इत्येतन्निपात्यत उत्कण्ठितमनाश्चेद्भवति ॥ उच्छब्दात् साधनक्रियावाचनात् तद्वति कन् । उत्को देवदत्तः ॥

## कालप्रयोजनाद्रोगे ॥ ८१ ॥

कालवाचिनः प्रयोजनवाचिनश्च रोगे वाच्ये कन् स्यात् ॥ द्वितीये ऽह्नि भवः । द्वितीयको ज्वरः । तृतीयकः । चतुर्थकः ॥ प्रयोजनं कारणं फलं च । विषपुष्पैर्जनितः । विषपुष्पको ज्वरः । उष्णं कार्यमस्य । उष्णको ज्वरः ॥

## तदस्मिन्नन्नं प्राये संज्ञायां ॥ ८२ ॥

प्रथमान्तादस्मिन्निति सप्तम्यर्थे संज्ञायां कन् स्यात् । यत् प्रथमान्तमन्नं चेत् प्रायविषयं तद्भवति ॥ गुडापूपाः प्रायेणान्नमस्यां । गुडापूपिका पौर्णमासी ॥

## कुल्माषादञ् ॥ ८३ ॥

कुल्माष । इत्येतस्मादञ् स्यात् ॥ कुल्माषाः प्रायेणान्नमस्यां पौर्णमास्यां । कौल्माषी पौर्णमासी ॥

## श्रोत्रियंश्छन्दो ऽधीते ॥ ८४ ॥

श्रोत्रियन् । इत्येतच्छन्दो ऽधीत इत्येतस्मिन्नर्थे वा निपात्यते ॥ छन्दो ऽधीते । श्रोत्रियः ॥ पक्षे ऽण् । छान्दसः ॥

## श्राद्धमनेन भुक्तमिनिठनौ ॥ ८५ ॥

श्राद्ध । इत्येतस्माद्भुक्तोपाधिकात् प्रथमान्तादनेनेति तृतीयार्थ इनि । ठन् । इत्येतौ प्रत्ययौ भवतः ॥ श्राद्धं भुक्तमनेन । श्राद्धी । श्राद्धिकः ॥

## पूर्वादिनिः ॥ ८६ ॥

पूर्व । इत्येतस्मादनेनेत्येतस्मिन् क्रियाकर्तरि इनिः स्यात् ॥ पूर्वमनेन कृतं गतं भुक्तं पीतं वा । पूर्वी । पूर्विणौ ॥

## सपूर्वाच्च ॥ ८७ ॥

## तपःसहस्राभ्यां विनीनी ॥१०२॥

तपस् । सहस्र । इत्येताभ्यां क्रमान्मत्वर्थे विनि । इनि । इत्येतौ प्रत्ययौ भवतः ॥ तपस्वी । सहस्री ॥ असन्तत्वाददन्तत्वाच्च सिद्धे पुनर्वचनमणा बाधो मा भूदिति । सहस्रात् तु ठन्नपि बाध्यते ॥

## अण् च ॥१०३॥

तपस् । सहस्र । इत्येताभ्यां मत्वर्थे ऽण् स्यात् ॥ तापसः । साहस्रः ॥

## सिकताशर्कराभ्यां च ॥१०४॥

सिकता । शर्करा । इत्येताभ्यां मत्वर्थे ऽण् स्यात् ॥ सैकतो घटः । शार्करं मधु ॥

## देशे लुबिलचौ च ॥१०५॥

सिकता । शर्करा । इत्येताभ्यां देशे वाच्ये मत्वर्थीयस्य लुप् स्यात् । इलच्प्रत्ययश्च । चकारादण् मतुप् च ॥ सिकता । सिकतिलः । सैकतः । सिकतावान् ॥ शर्करा । शर्करिलः । शार्करः । शर्करावान् ॥ देशे किं । सैकतो घटः । शार्करं मधु ॥

## दन्त उन्नत उरच् ॥१०६॥

दन्त । इत्येतस्मादुन्नतोपाधिकादुरच् स्यात् ॥ उन्नता दन्ता अस्य । दन्तुरः ॥ उन्नतः किं । दन्तवान् ॥

## ऊषसुषिमुष्कमधो रः ॥१०७॥

ऊष । सुषि । मुष्क । मधु । इत्येतेभ्यो मत्वर्थे रः स्यात् ॥ ऊषरः । सुषिरः । मुष्करः । मधुरः ॥

## द्युद्रुभ्यां मः ॥१०८॥

द्यु । द्रु । इत्येताभ्यां मत्वर्थे मः स्यात् ॥ द्युमः । द्रुमः ॥

## केशाद्वो ऽन्यतरस्यां ॥१०९॥

केश । इत्येतस्मान्मत्वर्थे वप्रत्ययो वा स्यात् ॥ अन्यतरस्यांग्रहणमिनिठनोः समुच्चयार्थं ॥ केशवः । केशी । केशिकः । केशवान् ॥

प्रथमान्तादस्त्युपाधिकादस्येति षष्ठ्यर्थे ऽस्मिन्निति सप्तम्यर्थे च मतुप् स्यात् ॥ गावः सन्त्यस्य । गोमान् ॥ गावः सन्त्यस्मिन् । गोमान् ॥ वृक्षवान् । धनवान् ॥

## रसादिभ्यश्च ॥ ९५ ॥

रस । इत्येवमादिभ्यः प्रथमान्तेभ्यो ऽस्त्युपाधिकेभ्यः षष्ठ्यर्थे सप्तम्यर्थे च मतुप् स्यात् ॥ रसवान् । रूपवान् । स्ववान् ॥

## प्राणिस्थादातो लजन्यतरस्यां ॥ ९६ ॥

प्राणिस्थवाचिन आ । इत्येतदन्तान्मत्वर्थे वा लच् स्यात् ॥ चूडालः ॥ पक्षे मतुप् । चूडावान् ॥ प्राणिस्थात् किं । शिखावान् दीपः ॥ आतः किं । हस्तवान् ॥

## सिध्मादिभ्यश्च ॥ ९७ ॥

सिध्म । इत्येवमादिभ्यो मत्वर्थे वा लच् स्यात् ॥ सिध्मलः । सिध्मवान् ॥

## वत्सांसाभ्यां कामबले ॥ ९८ ॥

वत्स । अंस । इत्येताभ्यां क्रमात् कामे बलवति च वाच्ये मत्वर्थे लच् स्यात् ॥ वत्सलः । अंसलः ॥ कामबले किं । वत्सवती गौः । अंसवान् दुर्बलः ।

## फेनादिलच् च ॥ ९९ ॥

फेन । इत्येतस्मान्मत्वर्थ इलच् । लच् । इत्येतौ प्रत्ययौ भवतः ॥ फेनिलः । फेनलः । फेनवान् ॥

## लोमादिपामादिपिच्छादिभ्यः शनेलचः ॥ १०० ॥

लोमादिभ्यः । पामादिभ्यः । पिच्छादिभ्यश्च मत्वर्थे यथाक्रमं श । न । इलच् । इत्येते प्रत्यया वा भवन्ति ॥ लोमशः । लोमवान् ॥ पामनः । पामवान् ॥ पिच्छिलः । पिच्छावान् ॥

## प्रज्ञाश्रद्धार्चाभ्यो णः ॥ १०१ ॥

प्रज्ञा । श्रद्धा । अर्चा । इत्येतेभ्यो मत्वर्थे वा णः स्यात् ॥ प्राज्ञः । प्रज्ञावान् ॥ श्राद्धः । श्रद्धावान् ॥ आर्चः । अर्चावान् ॥

## तपःसहस्राभ्यां विनीनी ॥१०२॥

तपस् । सहस्र । इत्येताभ्यां क्रमान्मत्वर्थे विनि । इनि । इत्येतौ प्रत्ययौ भवतः ॥ तपस्वी । सहस्री ॥ असन्तत्वाददन्तत्वाच्च सिद्धे पुनर्वचनमणा बाधो मा भूदिति । सहस्रात् तु ठन्नपि बाध्यते ॥

## अण् च ॥१०३॥

तपस् । सहस्र । इत्येताभ्यां मत्वर्थे ऽण् स्यात् ॥ तापसः । साहस्रः ॥

## सिकताशर्कराभ्यां च ॥१०४॥

सिकता । शर्करा । इत्येताभ्यां मत्वर्थे ऽण् स्यात् ॥ सैकतो घटः । शार्करं मधु ॥

## देशे लुबिलचौ च ॥१०५॥

सिकता । शर्करा । इत्येताभ्यां देशे वाच्ये मत्वर्थीयस्य लुप् स्यात् । इलच्प्रत्ययश्च । चकारादण् मतुप् च ॥ सिकता । सिकतिलः । सैकतः । सिकतावान् ॥ शर्करा । शर्करिलः । शार्करः । शर्करावान् ॥ देशे किं । सैकतो घटः । शार्करं मधु ॥

## दन्त उन्नत उरच् ॥१०६॥

दन्त । इत्येतस्मादुन्नतोपाधिकादुरच् स्यात् ॥ उन्नता दन्ता अस्य । दन्तुरः ॥ उन्नतः किं । दन्तवान् ॥

## ऊषसुषिमुष्कमधो रः ॥१०७॥

ऊष । सुषि । मुष्क । मधु । इत्येतेभ्यो मत्वर्थे रः स्यात् ॥ ऊषरः । सुषिरः । मुष्करः । मधुरः ॥

## द्युद्रुभ्यां मः ॥१०८॥

द्यु । द्रु । इत्येताभ्यां मत्वर्थे मः स्यात् ॥ द्युमः । द्रुमः ॥

## केशाद्वो ऽन्यतरस्यां ॥१०९॥

केश । इत्येतस्मान्मत्वर्थे वप्रत्ययो वा स्यात् ॥ अन्यतरस्यांग्रहणमिनिठनोः समुच्चयार्थं ॥ केशवः । केशी । केशिकः । केशवान् ॥

## गाण्डयजगात् संज्ञायां ॥११०॥

गाण्डी । अजग । इत्येताभ्यां मत्वर्थे संज्ञायां वः स्यात् ॥ गाण्डीवं धनुः । ह्रस्वान्तादपि । गाण्डिवः ॥ अजगवं पिनाकः ॥

## काण्डाण्डादीरन्नीरचौ ॥१११॥

काण्ड । आण्ड । इत्येताभ्यां मत्वर्थे क्रमेण । ईरन् । ईरच् । इत्येतौ प्रत्ययौ वा भवतः ॥ काण्डीरः । काण्डवान् ॥ आण्डीरः । आण्डवान् ॥

## रजःकृष्यासुतिपरिषदो वलच् ॥११२॥

रजस् । कृषि । आसुति । परिषद् । इत्येतेभ्यो मत्वर्थे वलच् स्यात् ॥ रजस्वला स्त्री । कृषीवलः कुटुम्बी । आसुतीवलः शौण्डिकः ॥ वल इति दीर्घः ॥ परिषद्वलो राजा ॥ पर्षदिति पाठान्तरं । पर्षद्वलः ॥

## दन्तशिखात् संज्ञायां ॥११३॥

दन्त । शिखा । इत्येताभ्यां मत्वर्थे संज्ञायां वलच् स्यात् ॥ दन्तावलो गजः । शिखावलः केकी ॥ वल इति दीर्घः ॥

## ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः ॥११४॥

ज्योत्स्ना । तमिस्रा । शृङ्गिण । ऊर्जस्विन् । ऊर्जस्वल । गोमिन् । मलिन । मलीमस । इत्येते मत्वर्थे संज्ञायां निपात्यन्ते ॥ ज्योतिस् । उपधालोपः । नप्रत्ययः । ज्योत्स्ना चन्द्रप्रभा ॥ तमस् । उपधाया इत्वं । रप्रत्ययः । तमिस्रा रात्रिः । तमिस्रं तमः ॥ शृङ्ग । इनच् । शृङ्गिणः ॥ ऊर्जस् । विन्वलप्रत्ययौ । ऊर्जस्वी । ऊर्जस्वलः ॥ गो । मिन् । गोमी ॥ मल । इनच् । मलिनः ॥ मल । ईमसच् । मलीमसः ॥

## अत इनिठनौ ॥११५॥

अ । इत्येतदन्तान्मत्वर्थे । इनि । ठन् । इत्येतौ प्रत्ययौ वा भवतः ॥ दण्डी । दण्डिकः । दण्डवान् ॥ तपरकरणं किं । मालावान् ॥

## व्रीह्यादिभ्यश्च ॥११६॥

व्रीहि । इत्येवमादिभ्यो मत्वर्थ इनिठनौ वा भवतः ॥ व्रीही । व्रीहिकः । व्रीहिमान् ॥

## तुन्दादिभ्य इलच् च ॥११७॥

तुन्द । इत्येवमादिभ्यो मत्वर्थ इलज्वा स्यात् । चकारादिनिठनौ ॥ तुन्दिलः । तुन्दी । तुन्दिकः । तुन्दवान् ॥

## एकगोपूर्वाट्ठञ् नित्यं ॥११८॥

एक । गो । इत्येवंपूर्वात् प्रातिपदिकान्मत्वर्थे नित्यं ठञ् स्यात् ॥ ऐकश-तिकः । ऐकसहस्रिकः ॥ गोपूर्वात् । गौशतिकः । गौसहस्रिकः । गौश-कटिकः ॥

## शतसहस्रान्ताच्च निष्कात् ॥११९॥

शत । सहस्र । इत्येतदन्तान्निष्क । इत्येतदादेः प्रातिपदिकान्मत्वर्थे ठञ् स्यात् ॥ नैष्कशतिकः । नैष्कसहस्रिकः ॥

## रूपादाहतप्रशंसयोर्यप् ॥१२०॥

रूप । इत्येतस्मादाहतप्रशंसयोर्वर्तमानान्मत्वर्थे यप् स्यात् ॥ आहतं रूपमस्यास्ति । रूप्यः कार्षापणः ॥ प्रशस्तं रूपमस्यास्ति । रूप्यो गौः ॥ आहतप्रशंसयोः किं । रूपवान् ॥

## अस्मायामेधास्रजो विनिः ॥१२१॥

अस् । इत्येतदन्तात् । माया । मेधा । स्रज् । इत्येतेभ्यश्च मत्वर्थे विनिर्वा स्यात् ॥ असन्तात् । यशस्वी । यशस्वान् ॥ मायावी । मायावान् ॥ मेधावी । मेधा-वान् ॥ स्रग्वी । स्रग्वान् ॥

## बहुलं छन्दसि ॥१२२॥

वेदे मत्वर्थे बहुलं विनिः स्यात् ॥ अग्ने तेजस्विन् । न च भवति । सूर्यो वर्चस्वान् ॥

## ऊर्णाया युस् ॥१२३॥

ऊर्णा । इत्येतस्मान्मत्वर्थे युस् स्यात् ॥ ऊर्णायुः ॥

## वाचो ग्मिनिः ॥१२४॥

वाच् । इत्येतस्मान्मत्वर्थे ग्मिनिः स्यात् ॥ वाग्मी । वाग्मिनौ ॥

## आलजाटचौ बहुभाषिणि ॥१२५॥

वाच् । इत्येतस्माद्बहुभाषिणि वाच्ये मत्वर्थ आलच् । आटच् । इत्येतौ प्रत्ययौ भवतः ॥ वाचालः । वाचाटः ॥

## स्वामिन्नैश्वर्ये ॥१२६॥

स्वामिन् । इत्येतदैश्वर्ये आमिनच्प्रत्ययान्तं निपात्यते ॥ स्वमैश्वर्यमस्यास्ति । स्वामी । स्वामिनौ । स्वामिनः ॥ ऐश्वर्ये किं । स्ववान् ॥

## अर्शआदिभ्यो ऽच् ॥१२७॥

अर्शस् । इत्येवमादिभ्यो मत्वर्थे ऽच् स्यात् ॥ अर्शांसि विद्यन्ते ऽस्य । अर्शसः ॥

## द्वन्द्वोपतापगर्ह्यात् प्राणिस्थादिनिः ॥१२८॥

द्वन्द्वसमासात् । उपतापवाचिनः । गर्ह्यवाचिनश्च । प्राणिस्थार्थवाचिनो मत्वर्थ इनिः स्यात् ॥ द्वन्द्व । कटकवलयिनी । शङ्खनूपुरिणी ॥ उपताप । कुष्ठी । किलासी ॥ गर्ह्यात् । ककुदावर्ती । काकतालुकी ॥ प्राणिस्थात् किं । पुष्पफलवान् वृक्षः ॥ प्राण्यङ्गान्न भवति । पाणिपादवती ॥ अत इत्येव । नेह । चित्रकललाटिकावती ॥ पुनर्वचनं ठन्नादिबाधनार्थं ॥

## वातातीसाराभ्यां कुक् च ॥१२९॥

वात । अतीसार । इत्येताभ्यां मत्वर्थ इनिः स्यात् । तत्संनियोगेन तयोः कुगागमश्च ॥ वातकी । अतीसारकी ॥ रोग एवायं । नेह । वातवती गुहा ॥

## वयसि पूरणात् ॥१३०॥

पूरणप्रत्ययान्तान्मत्वर्थे वयसि गम्यमान इनिः स्यात् ॥ पञ्चमो मासो ऽस्यास्ति । पञ्चमी उष्ट्रः ॥ वयसि किं । पञ्चमवान् सामरागः ॥

## सुखादिभ्यश्च ॥१३१॥

सुख । इत्येवमादिभ्यो मत्वर्थ इनिः स्यात् ॥ सुखी । दुःखी ॥

## धर्मशीलवर्णान्ताच्च ॥१३२॥

धर्म । शील । वर्ण । इत्येतदन्तान्मत्वर्थ इनिः स्यात् ॥ ब्राह्मणधर्मी । ब्राह्मणशीली । ब्राह्मणवर्णी ॥

## हस्ताज्जातौ ॥१३३॥

हस्त । इत्येतस्मान्मत्वर्थे समुदायेन जात्यभिधाने इनिः स्यात् ॥ हस्ती । हस्तिनां जातौ किं । हस्तवान् पुरुषः ॥

## वर्णाद्ब्रह्मचारिणि ॥१३४॥

वर्ण । इत्येतस्मान्मत्वर्थे ब्रह्मचारिणि वाच्य इनिः स्यात् ॥ वर्णी । वर्णिनौ । वर्णिनः ॥ ब्रह्मचारिणि किं । वर्णवान् ॥

## पुष्करादिभ्यो देशे ॥१३५॥

पुष्कर । इत्येवमादिभ्यो देशे वाच्ये मत्वर्थ इनिः स्यात् ॥ पुष्करिणी । पद्मिनी ॥ देशे किं । पुष्करवान् हस्ती ॥

## बलादिभ्यो मतुबन्यतरस्यां ॥१३६॥

बल । इत्येवमादिभ्यो मत्वर्थे वा मतुप् स्यात् । पक्ष इनिः ॥ बलवान् । बली ॥

## संज्ञायां मन्माभ्यां ॥१३७॥

मन् । म । इत्येतदन्ताभ्यां प्रातिपदिकाभ्यां संज्ञायां मत्वर्थ इनिः स्यात् ॥ मन् । प्रथिमिनी । दामिनी ॥ म । होमिनी । सोमिनी ॥ संज्ञायां किं । सामवान् । सोमवान् ॥

## कंशम्भ्यां बभयुस्तितुतयसः ॥१३८॥

कं । शं । इत्येताभ्यां मत्वर्थे ब । भ । युस् । ति । तु । त । यस् । इत्येते प्रत्यया भवन्ति ॥ कम्बः । शम्बः ॥ कम्भः । शम्भः ॥ कँयुः । शँयुः ॥ कन्तिः । शन्तिः ॥ कन्तुः । शन्तुः ॥ कन्तः । शन्तः ॥ कँयः । शँयः ॥ सकारः पदसंज्ञार्थः । तेनानुस्वारपरसवर्णौ भवतः ॥

## तुन्दिबलिवटेर्भः ॥१३९॥

तुन्दि । बलि । वटि । इत्येतेभ्यो मत्वर्थे भः स्यात् ॥ तुन्दिभः । बलिभः । वटिभः ॥ तुण्डि । इति माधवः ॥

## अहंशुभमोर्युस् ॥१४०॥

अहं । शुभं । इत्येताभ्यामव्ययाभ्यां मत्वर्थे युस् स्यात् ॥ अहंयुरहंकारवान् । शुभंयुः शुभान्वितः ॥

॥ इति सूत्रपाठे पञ्चमाध्यायस्य द्वितीयः पादः ॥

---

## प्राग्दिशो विभक्तिः ॥१॥

दिक्शब्देभ्य इत्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञका भवन्ति ॥ वक्ष्यति पञ्चम्यास्तसिल् । यतः । ततः । कुतः ॥ अतः परं स्वार्थिकाः प्रत्ययास्तत्र समर्थानां प्रथमाद्विति च निवृत्तं । वाग्रहणमनुवर्तत एव ॥

## किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ॥२॥

किं । इत्येतस्मात् । सर्वनामसंज्ञकात् । बहु । इत्येतस्माच्च । प्राग्दिशीयाः प्रत्यया वेदितव्याः ॥ वक्ष्यति पञ्चम्यास्तसिलित्यादि । किं । कुतः । कुत्र ॥ सर्वनाम । यतः । यत्र । ततः । तत्र ॥ बहु । बहुतः । बहुत्र ॥ द्व्यादिः सर्वाद्यन्तर्गणः ॥ अद्व्यादिभ्यः किं । द्वाभ्यां । द्वयोः ॥ प्रकृतिपरिसंख्यानं किं । वृक्षात् । वृक्षे ॥ प्राग्दिशः किं । वैयाकरणपाशः ॥

## इदम इश् ॥३॥

इदं । इत्येतस्य प्राग्दिशीये परे इश् । इत्ययमादेशः स्यात् ॥ इतः । इह ॥ शकारः सर्वादेशार्थः ॥

## एतेतौ रथोः ॥४॥

इदं । इत्येतस्य र । थ् । इत्येतादौ प्राग्दिशीये परे यथाक्रमं । एत । इत । इत्येतावादेशौ भवतः ॥ एतर्हि । इत्थं ॥

## एतदो ऽन् ॥५॥

एतद् । इत्येतस्य प्राग्दिशीये परे ऽन् । इत्येष आदेशः स्यात् ॥ अतः । अत्र ॥ एतदो ऽश् । इत्येष सूत्रपाठः काशिकायां ॥

## सर्वस्य सो ऽन्यतरस्यां दि ॥६॥

सर्व । इत्येतस्य द् । इत्येतदादौ प्राग्दिशीये परे स । इत्येष आदेशो वा स्यात् ॥ सदा । सर्वदा ॥ प्राग्दिशीये किं । सर्वदा ब्राह्मणी ॥

## पञ्चम्यास्तसिल् ॥७॥

पञ्चम्यन्तेभ्यः किंसर्वनामबहुभ्यो ऽद्व्यादिभ्यः स्वार्थे तसिल् स्यात् ॥ कस्मात् । कुतः ॥ यतः । ततः ॥ बहुतः ॥

## तसेश्च ॥८॥

तसि । इत्येतस्य वक्ष्यमाणस्य प्रत्ययस्य किंसर्वनामबहुभ्यो ऽद्व्यादिभ्यः परस्य तसिल् । इत्येष आदेशः स्यात् ॥ कुत आगतः । तत आगतः । बहुत आगतः ॥

## पर्यभिभ्यां च ॥९॥

परि । अभि । इत्येताभ्यां स्वार्थे तसिल् स्यात् ॥ परितः । सर्वत इत्यर्थः ॥ अभितः । उभयत इत्यर्थः ॥

## सप्तम्यास्त्रल् ॥१०॥

सप्तम्यन्तेभ्यः किंसर्वनामबहुभ्यो ऽद्व्यादिभ्यः स्वार्थे त्रल् स्यात् ॥ कस्मिन् । कुत्र ॥ यत्र । तत्र ॥ बहुत्र ॥

## इदमो हः ॥११॥

इदं । इत्येतस्मात् सप्तम्यन्तात् स्वार्थे हः स्यात् ॥ इह ॥

## किमो ऽत् ॥१२॥

किं । इत्येतस्मात् सप्तम्यन्तात् स्वार्थे ऽत्प्रत्ययो वा स्यात् ॥ क्व । कुत्र ॥

## वा ह च च्छन्दसि ॥१३॥

किं । इत्येतस्मात् सप्तम्यन्ताद्वेदे स्वार्थे वा हः स्यात् ॥ कुह स्थः । कुत्रा-दित्यस्य दूरे ॥

## इतराभ्यो ऽपि दृश्यन्ते ॥१४॥

पञ्चमीसप्तमीतरविभक्त्यन्तेभ्यो ऽपि तसिलादयो दृश्यन्ते ॥ स भवान् । ततो भवान् । तत्र भवान् । तं भवन्तं । ततो भवन्तं । तत्र भवन्तं । इत्यादि ॥

## सर्वैकान्यकिंयत्तदः काले दा ॥१५॥

सर्व । एक । अन्य । किं । यद् । तद् । इत्येतेभ्यः काले वर्तमानेभ्यः सप्तम्यन्तेभ्यः स्वार्थे दा स्यात् ॥ सर्वस्मिन् काले । सदा । सर्वदा ॥ एकदा । अन्यदा । कदा । यदा । तदा ॥ काले किं । सर्वत्र देशे ॥

## इदमो र्हिल् ॥१६॥

इदं । इत्येतस्मात् काले वर्तमानात् सप्तम्यन्तात् स्वार्थे र्हिल् स्यात् ॥ अस्मिन् काले । एतर्हि ॥ काले किं । इह देशे ॥

## अधुना ॥१७॥

अधुना । इत्येतन्निपात्यते ॥ अस्मिन् काले । अधुना ॥

## दानीं च ॥१८॥

इदं । इत्येतस्मात् काले वर्तमानात् सप्तम्यन्तात् स्वार्थे दानीं स्यात् ॥ अस्मिन् काले । इदानीं ॥

## तदो दा च ॥१९॥

तद् । इत्येतस्मात् काले वर्तमानात् सप्तम्यन्तात् स्वार्थे दा स्यात् । चकारा-द्दानीं ॥ तस्मिन् काले । तदा । तदानीं ॥

## तयोर्दार्हिलौ च च्छन्दसि ॥२०॥

इदं । तद् । इत्येताभ्यां सप्तम्यन्ताभ्यां यथाक्रमं वेदे दा । र्हिल् । इत्येतौ प्रत्ययौ भवतः । चकारात्पयाप्राप्तं ॥ इदावत्सरीयं ॥ तर्हिदानीमविकल्पयत् । यथा तदानीं ॥

## अनद्यतने र्हिलन्यतरस्यां ॥ २१ ॥

किंसर्वनामबहुभ्यः सप्तम्यन्तेभ्यो ऽनद्यतने काले र्हिल् वा स्यात् ॥ कर्हि । कदा ॥ यर्हि । यदा । तर्हि । तदा ॥

## सद्यः परुत् परार्यैषमः परेद्यव्यद्य पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ॥ २२ ॥

सद्यस् । परुत् । परारि । ऐषमस् । परेद्यवि । अद्य । पूर्वेद्युस् । अन्येद्युस् । अन्यतरेद्युस् । इतरेद्युस् । अपरेद्युस् । अधरेद्युस् । उभयेद्युस् । उत्तरेद्युस् । इत्येते निपात्यन्ते ॥ समाने ऽहनि । सद्यः ॥ पूर्वस्मिन् वत्सरे । परुत् ॥ पूर्वतरे वत्सरे । परारि ॥ अस्मिन् संवत्सरे । ऐषमः ॥ परस्मिन्नहनि । परेद्यवि ॥ अस्मिन्नहनि । अद्य ॥ पूर्वस्मिन्नहनि । पूर्वेद्युः ॥ अन्येद्युः । अन्यतरेद्युः । इतरेद्युः । अपरेद्युः । अधरेद्युः । उभयेद्युः । उत्तरेद्युः ॥

## प्रकारवचने थाल् ॥ २३ ॥

किंसर्वनामबहुभ्यो ऽद्व्यादिभ्यस्तृतीयान्तेभ्यः प्रकारे थाल् स्यात् ॥ सर्वैः प्रकारैः । सर्वथा ॥ बहुथा ॥

## इदमस्थमुः ॥ २४ ॥

इदं । इत्येतस्मात् प्रकारे थमुः स्यात् ॥ अनेन प्रकारेण । इत्थं ॥

## किमश्च ॥ २५ ॥

किं । इत्येतस्मात् प्रकारे थमुप्रत्ययः स्यात् ॥ केन प्रकारेण । कथं ॥

## था हेतौ चच्छन्दसि ॥ २६ ॥

किं । इत्येतस्माद्धेतौ प्रकारे च वेदे था स्यात् ॥ हेतौ । कथा ग्रामं न पृच्छसि । केन हेतुनेत्यर्थः ॥ प्रकारे । कथा देवा आसन् ॥

## दिक्छब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ॥ २७ ॥

दिशि रूढेभ्यो दिग्देशकालवृत्तिभ्यः सप्तमीपञ्चमीप्रथमान्तेभ्यः स्वार्थे ऽस्तातिः

स्यात् ॥ अधः । अधस्ताद्वसति ॥ अधः । अधस्तादागतः ॥ अधः । अधस्ताद्रमणीयं ॥ दिक्छब्देभ्यः किं । ऐन्द्र्यां दिशि वसति ॥ सप्तमीत्यादि किं । पूर्वं ग्रामं गतः ॥ दिग्देशकालेषु किं । पूर्वस्मिन् गुरौ वसति ॥

## दक्षिणोत्तराभ्यामतसुच् ॥२८॥

दक्षिण । उत्तर । इत्येताभ्यां सप्तमीपञ्चमीप्रथमान्ताभ्यां दिग्देशकालवृत्तिभ्यां स्वार्थे ऽतसुच् स्यात् ॥ दक्षिणतो वसति । दक्षिणत आगतः ॥ दक्षिणशब्दस्य काले वृत्तिर्न संभवति ॥ उत्तरतो वसति । उत्तरत आगतः । उत्तरतो रमणीयं ॥ अकारो विशेषणार्थः । अस्तातिप्रत्ययेनेति ॥

## विभाषा परावराभ्यां ॥२९॥

पर । अवर । इत्येताभ्यां वातसुच् स्यात् ॥ परतः । परस्तात् । वसत्यागतो रमणीयं वा ॥ अवरतः । अवरस्तात् । वसत्यागतो रमणीयं वा ॥

## अञ्चेर्लुक् ॥३०॥

अञ्चु । इत्येतदन्तेभ्यो दिग्देशकालेभ्यः परस्यास्तातिप्रत्ययस्य लुक् स्यात् ॥ प्राग्वसति । प्रागागतः । प्राग्रमणीयं । एवं प्रत्यक् ॥

## उपर्युपरिष्टात् ॥३१॥

उपरि । उपरिष्टात् । इत्येतावस्तातेरर्थे निपात्येते ॥ उपरि । उपरिष्टात् । वसत्यागतो रमणीयं वा ॥

## पश्चात् ॥३२॥

पश्चात् । इत्येतदस्तातेरर्थे निपात्यते ॥ पश्चात् । वसत्यागतो रमणीयं वा ॥

## पश्च पश्चा चच्छन्दसि ॥३३॥

पश्च । पश्चा । इत्येतावस्तातेरर्थे वेदे निपात्येते । चकारात् पश्चादित्यपि ॥ पुरा व्याघ्रो जायते पश्च सिंहः । पश्चा सिंहः । पश्चात् सिंहः ॥ अपरशब्दस्य पश्चभावः । अ आ इत्येतौ च प्रत्ययौ ॥

## उत्तराधरदक्षिणादातिः ॥३४॥

उत्तर । अधर । दक्षिण । इत्येतेभ्यः स्वार्थे आतिः स्यात् ॥ उत्तरात् । अधरात् । दक्षिणात् । वसत्यागतो रमणीयं वा ॥

## एनबन्यतरस्यामदूरेऽपञ्चम्याः ॥३५॥

उत्तर । अधर । दक्षिण । इत्येतेभ्यः स्वार्थे वा एनप् स्यात् । अदूरे चेदवधिमानवधेर्वर्तते । पञ्चम्यन्तात् तु न भवति ॥ उत्तरेण । उत्तरात् । उत्तरतः ॥ अधरेण । अधरात् । अधरतः ॥ दक्षिणेन । दक्षिणात् । दक्षिणतः । वसति रमणीयं वा ॥ अदूरे किं । उत्तराद्वसति ॥ अपञ्चम्याः किं । उत्तरादागतः ॥ केचिदिहोत्तरादिग्रहणं नानुवर्तयन्ति । दिक्शब्दमात्रात् प्रत्ययं विदधते। पूर्वेण ग्रामं । अपरेण ग्रामं ॥

## दक्षिणादाच् ॥३६॥

दक्षिण । इत्येतस्मात् स्वार्थ आच् स्यात् ॥ दक्षिणा । वसति रमणीयं वा ॥ अपञ्चम्या इत्येव । दक्षिणादागतः ॥ चकारो विशेषणार्थः । अञ्चूत्तरपदाजाहियुक्ता इति ॥

## आहि च दूरे ॥३७॥

दक्षिण । इत्येतस्मात् स्वार्थ आहिः स्यात् । दूरे चेदवधिमान् । आच् च चकारात् ॥ दक्षिणाहि । दक्षिणा । वसति रमणीयं वा ॥ दूरे किं । दक्षिणेन वसति ॥ अपञ्चम्या इत्येव । दक्षिणात आगतः ॥

## उत्तराच्च ॥३८॥

उत्तर । इत्येतस्मात् स्वार्थ आच् । आहि । इत्येतौ प्रत्ययौ भवतः ॥ उत्तरा । उत्तराहि । वसति रमणीयं वा ॥ दूर इत्येव । उत्तरेण वसति ॥ अपञ्चम्या इत्येव । उत्तरत आगतः ॥

## पूर्वाधरावराणामसि पुरधवश्चैषां ॥३९॥

पूर्व । अधर । अवर । इत्येतेभ्यः स्वार्थे ऽसिः स्यात् । तत्संनियोगेन चैषां यथासंख्यं पुर् । अध् । अव् । इत्येत आदेशा भवन्ति ॥ पुरः । अधः । अवः । वसत्यागतो रमणीयं वा ॥

## अस्ताति च ॥४०॥

पूर्व । अधर । अवर । इत्येतेभ्यः स्वार्थे ऽस्तातिः स्यात् । तत्संनियोगेन

चैषां यथाक्रमं पुरादय आदेशा भवन्ति ॥ पुरस्तात् । अधस्तात् । अवस्तात् । अवरस्तात् । वसत्यागतो रमणीयं वा ॥

## विभाषावरस्य ॥४१॥

अवर । इत्येतस्यास्तातिसंनियोगेन । अव् । इत्ययमादेशो वा स्यात् ॥ अवस्तात् । अवरस्तात् । वसत्यागतो रमणीयं वा ॥

## संख्याया विधार्थे धा ॥४२॥

संख्यावाचिभ्यः क्रियाप्रकारवृत्तिभ्यः स्वार्थे धा स्यात् ॥ एकधा । द्विधा वा भुङ्क्ते ॥

## अधिकरणविचाले च ॥४३॥

द्रव्यस्य संख्यान्तरापादने गम्यमाने संख्यावाचिनः स्वार्थे धा स्यात् ॥ एकं राशिं पञ्चधा कुरु । अनेकं राशिमेकधा कुरु । सप्तधा । अष्टधा ॥

## एकाद्धो ध्यमुञन्यतरस्यां ॥४४॥

एक । इत्येतस्मात् परस्य धा । इत्येतस्य ध्यमुञ् । इत्येष आदेशो वा स्यात् ॥ ऐकध्यं । एकधा वा राशिं कुरु । ऐकध्यं । एकधा वा भुङ्क्ते ॥ पुनर्धाग्रहणं धामात्रस्यादेशार्थं ॥

## द्वित्र्योश्च धमुञ् ॥४५॥

द्वि । त्रि । इत्येताभ्यां परस्य धा । इत्येतस्य धमुञ् । इत्येष आदेशो वा स्यात् ॥ द्वैधं । द्विधा ॥ त्रैधं । त्रिधा ॥

## एधाच् च ॥४६॥

द्वि । त्रि । इत्येताभ्यां परस्य धा । इत्येतस्य । एधाच् । इत्येष आदेशो वा स्यात् ॥ द्वेधा । द्विधा ॥ त्रेधा । त्रिधा ॥ विभाषेत्यनुवृत्त्यर्थश्चकारः ॥

## याप्ये पाशप् ॥४७॥

कुत्सितेऽर्थे वर्तमानात् प्रथमान्तात् स्वार्थे पाशप् स्यात् ॥ याप्यो वैयाकरणः । वैयाकरणपाशः ॥ याज्ञिकपाशः । वैदिकपाशः ॥

## पूरणाद्भागे तीयादन् ॥४८॥

पूरणार्थतीयप्रत्ययान्ताद्भागे वर्तमानात् स्वार्थे ऽन् स्यात् ॥ द्वितीयः । तृतीयो भागः ॥ भागे किं । द्वितीयं ॥ पूरणादित्युत्तरार्थं ॥ अन्विधानं स्वरार्थं ॥

## प्रागेकादशभ्यो ऽछन्दसि ॥४९॥

प्रागेकादशभ्यः संख्यावाचिभ्यः पूरणप्रत्ययान्तेभ्यो भागे वर्तमानेभ्यो ऽछन्दस्यन् स्यात् ॥ चतुर्थः । पञ्चमः । दशमः ॥ प्रागेकादशभ्यः किं । एकादशः । द्वादशः ॥ अछन्दसि किं । पञ्चमगिन्द्रियमस्यापाक्रमत् ॥ स्वरार्थं वचनं ॥

## षष्ठाष्टमाभ्यां ञ च ॥५०॥

षष्ठ । अष्टम । इत्येताभ्यां भागे ऽछन्दसि ञः स्यात् । अन्नपि चकारात् ॥ षाष्ठः । षष्ठः ॥ आष्टमः । अष्टमः ॥

## मानपश्वङ्गयोः कन्लुकौ च ॥५१॥

षष्ठ । अष्टम । इत्येताभ्यां मानपश्वङ्गयोर्वाच्ययोर्यथाक्रमं कन्लुकौ भवतः ॥ षष्ठको भागो मानं चेत् ॥ अष्टमो भागः पश्वङ्गं चेत् ॥ अस्य । अनो वा लुक् ॥ चकाराद्यथाप्राप्तं । षाष्ठः । षष्ठः । आष्टमः । अष्टमः ॥ मानपश्वङ्गयोः किं । षाष्ठः । आष्टमः ॥

## एकादाकिनिच् चासहाये ॥५२॥

एक । इत्येतस्मादसहायवाचिनः स्वार्थे आकिनिच् स्यात् । चकारात् कन्लुकौ च ॥ एकाकी । एकाकिनौ । एकाकिनः ॥ एककः । एकः ॥

## भूतपूर्वे चरट् ॥५३॥

भूतपूर्वे ऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे चरट् स्यात् ॥ आढ्यो भूतपूर्वः । आढ्यचरः । आढ्यचरी ॥

## षष्ठ्या रूप्य च ॥५४॥

षष्ठ्यन्ताद्भूतपूर्वे रूप्यः स्यात् । चकाराच्चरट् च ॥ देवदत्तस्य भूतपूर्वः । देवदत्तरूप्यो गौः । देवदत्तचरः ॥ यज्ञदत्तरूप्यः । यज्ञदत्तचरः ॥

## अतिशायने तमबिष्ठनौ ॥५५॥

अतिशयविशिष्टेऽर्थे वर्तमानात् प्रथमान्तात् स्वार्थे तमप् । इष्ठन् । इत्येतौ प्रत्ययौ भवतः ॥ अयमेषामतिशयेन पटुः । पटुतमः । पटिष्ठः ॥ लघुतमः । लघिष्ठः ॥

## तिङश्च ॥५६॥

तिङन्तादतिशायने तमप् स्यात् ॥ अतिशयेन पचति । पचतितमां ॥ जल्पतितमां । गच्छतितमां ॥

## द्विवचनविभज्योपपदे तरबीयसुनौ ॥५७॥

द्विवचने विभजनीये चोपपदे सुबन्तात् तिङन्ताच्चातिशायने तरप् । ईयसुन् । इत्येतौ प्रत्ययौ भवतः ॥ अयमनयोरतिशयेन पटुः । पटुतरः । पटीयान् ॥ लघुतरः । लघीयान् ॥ गुरुतरः । गरीयान् ॥ विभज्ये । माथुराः पाटलिपुत्रकेभ्यः पटुतराः । पटीयांसः ॥ तिङन्तात् । पचतितरां ॥

## अजादी गुणवचनादेव ॥५८॥

इष्ठन् । ईयसुन् । इत्येतावजादी गुणवचनादेव भवतः ॥ पटिष्ठः । पटीयान् ॥ इह तु न । पाचकतरः । पाचकतमः ॥ एवकार इष्टनियमाय ॥

## तुश्छन्दसि ॥५९॥

तृन् । तृच् । इत्येतदन्ताच्छन्दसि इष्ठन् । ईयसुन् । इत्येतौ प्रत्ययौ भवतः ॥ आसुतिंकरिष्ठः । दोहीयसी धेनुः ॥

## प्रशस्यस्य श्रः ॥६०॥

प्रशस्य । इत्येतस्याजाद्योरिष्ठनीयसुनोः परयोः श्र । इत्येष आदेशः स्यात् ॥ अयमेषामतिशयेन प्रशस्यः । श्रेष्ठः ॥ अयमनयोः प्रशस्यः । श्रेयान् ॥

## ज्य च ॥६१॥

प्रशस्य । इत्येतस्येष्ठनीयसुनोः परयोर्ज्यादेशः स्यात् ॥ अयमेषां ज्येष्ठः । अयमनयोर्ज्यायान् ॥

## वृद्धस्य च ॥६२॥

वृद्ध । इत्येतस्येष्ठनीयसुनोः परयोर्ज्यादेशः स्यात् ॥ अयमेषां वृद्धः । ज्येष्ठः ॥ अयमनयोर्वृद्धः । ज्यायान् ॥

## अन्तिकबाढयोर्नेदसाधौ ॥६३॥

अन्तिक । बाढ । इत्येतयोरिष्ठन्नीयसुनोः परयोर्यथाक्रमं नेद । साध । इत्येतावादेशौ भवतः ॥ इदमेषां नेदिष्ठं । इदमनयोर्नेदीयः ॥ अयमेषां साधिष्ठः । अयमनयोः साधीयान् ॥

## युवाल्पयोः कनन्यतरस्यां ॥६४॥

युवन् । अल्प । इत्येतयोरिष्ठन्नीयसुनोः परयोः कन् । इत्येष आदेशो वा स्यात् ॥ कनिष्ठः । कनीयान् । यविष्ठः । यवीयान् । अल्पिष्ठः । अल्पीयान् ॥

## विन्मतोर्लुक् ॥६५॥

विन् । मतुप् । इत्येतयोः प्रत्यययोरिष्ठन्नीयसुनोः परयोर्लुक् स्यात् ॥ इमे स्रग्विणः । अयमेषां स्रजिष्ठः । अयमनयोः स्रजीयान् ॥ इमे त्वग्वन्तः । अयमेषां त्वचिष्ठः । अयमनयोस्त्वचीयान् ।

## प्रशंसायां रूपप् ॥६६॥

प्रशंसाविशिष्टे ऽर्थे वर्तमानात् सुबन्तात् तिङन्ताच्च स्वार्थे रूपप् स्यात् ॥ प्रशस्तो वैयाकरणः । वैयाकरणरूपः ॥ याज्ञिकरूपः । मीमांसकरूपः ॥ तिङन्तात् । पचतिरूपं । पचतोरूपं । पचन्तिरूपं ॥

## ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ॥६७॥

ईषदसमाप्तिविशिष्टे ऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे कल्पप् । देश्य । देशीयर् । इत्येते प्रत्यया भवन्ति ॥ ईषदसमाप्तः पटुः । पटुकल्पः । पटुदेश्यः । पटुदेशीयः ॥ तिङश्चेत्येव । पचतिकल्पं ॥

## विभाषा सुपो बहुच् पुरस्तात् तु ॥६८॥

ईषदसमाप्तिविशिष्टे ऽर्थे वर्तमानात् सुबन्ताद्वा बहुच् स्यात् । स च पुरस्तादेव न तु परतः ॥ बहुपटुः । पटुकल्पः । पटुदेश्यः । पटुदेशीयः ॥ सुपः किं । पचति ॥

## प्रकारवचने जातीयर् ॥६९॥

सामान्यस्य भेदको विशेषः प्रकारः । तद्वति वर्तमानात् सुबन्तात् स्वार्थे जातीयर् स्यात् ॥ पटुप्रकारः । पटुजातीयः ॥ प्रकारवति चायं । प्रकारमात्रे थाल् ॥

## प्रागिवात् कः ॥७०॥

इवे प्रतिकृताविति सूत्रात् प्राक् कप्रत्ययो ऽधिकृतो वेदितव्यः ॥ वक्ष्यति । अज्ञाते । अश्वकः ॥ तिङन्तादयं नेष्यते ॥

## अव्ययसर्वनाम्नामकच् प्राक् टेः ॥७१॥

अव्ययानां सर्वनाम्नां तिङन्तानां च प्रागिवीयेष्वर्थेषु टेः प्रागकच् स्यात् ॥ उच्चकैः । नीचकैः ॥ सर्वनाम्नां । सर्वके । विश्वके ॥ तिङन्तानां । पचतकि । जल्पतकि ॥

## कस्य च दः ॥७२॥

क् । इत्येतदन्तस्याव्ययस्याकच्संनियोगेन द् । इत्येष आदेशः स्यात् ॥ धिक् । धकित् ॥ हिरुक् । हिरकुत् ॥ पृथक् । पृथकत् ॥

## अज्ञाते ॥७३॥

अज्ञातोपाधिके ऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे कप्रत्ययः स्यात् ॥ कस्यायमश्वः । अश्वकः ॥ उष्ट्रकः । गर्दभकः ॥

## कुत्सिते ॥७४॥

कुत्साविशिष्टे ऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे कप्रत्ययः स्यात् ॥ कुत्सितो ऽश्वः । अश्वकः ॥

## संज्ञायां कन् ॥७५॥

कुत्साविशिष्टे ऽर्थे वर्तमानात् प्रातिपदिकात् संज्ञायां कन् स्यात् ॥ शूद्रकः । पूर्णकः ॥ स्वरार्थं वचनं ॥

## अनुकम्पायां ॥७६॥

अनुकम्पाविशिष्टे ऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे कप्रत्ययः स्यात् ॥ अनुकम्पित. पुत्रः । पुत्रकः ॥ वत्सकः । दुर्बलकः ॥

## नीतौ च तद्युक्तात् ॥ ७७ ॥

नीतौ गम्यमानायामनुकम्पायुक्तात् प्रातिपदिकात् स्वार्थे कप्रत्ययः स्यात् ॥ सामदानादिरुपायो नीतिः ॥ हन्त ते धानकाः । हन्त ते गुडकाः ॥ पूर्वसूत्रेण साक्षादनुकम्पायुक्तात् प्रत्ययः । अनेन तु परंपरानुकम्पायुक्ताद्विधीयते ॥

## बह्वचो मनुष्यनाम्नष्ठज्वा ॥ ७८ ॥

नीतावनुकम्पायुक्ताद्बह्वचो मनुष्यनाम्नो वा ठच् स्यात् ॥ देविकः । देवदत्तकः । यज्ञिकः । यज्ञदत्तकः ॥ बह्वचः किं । देवकः ॥ मनुष्यनाम्नः किं । भद्रबाहुकः ॥

## घनिलचौ च ॥ ७९ ॥

नीतावनुकम्पायुक्ताद्बह्वचो मनुष्यनाम्नो घन् । इलच् । इत्येतौ प्रत्ययौ भवतः । चकाराट्ठच्कौ ॥ देवियः । देविलः । देविकः । देवदत्तकः ॥

## प्राचामुपादेरडज्वुचौ च ॥ ८० ॥

नीतावनुकम्पायुक्तादुप । इत्येतदादेर्बह्वचो मनुष्यनाम्नो ऽडच् । वुच् । इत्येतौ प्रत्ययौ वा भवतः । चकाराद्घनिलचौ ठच् च वा ॥ उपडः । उपकः । उपियः । उपिलः । उपिकः ॥ पक्षे कः । उपेन्द्रदत्तकः ॥ प्राचां ग्रहणं पूजार्थं ॥

## जातिनाम्नः कन् ॥ ८१ ॥

नीतावनुकम्पायुक्ताज्जातिनाम्नो मनुष्यनाम्नः कन् वा स्यात् ॥ सिंहकः । शरभकः ॥ पक्षे यथाप्राप्तं प्रत्ययाः । सिंहियः । सिंहिलः ॥

## अजिनान्तस्योत्तरपदलोपश्च ॥ ८२ ॥

अजिन । इत्येतदन्तान्मनुष्यनाम्नो ऽनुकम्पायुक्तात् कन् स्यात् । अजिन । इत्येतस्य च लोपः स्यात् ॥ अनुकम्पितो व्याघ्राजिनः । व्याघ्रकः ॥ सिंहकः । कृष्णकः ॥

## ठाजादावूर्ध्वं द्वितीयादचः ॥ ८३ ॥

अस्मिन् प्रकरणे यो ऽजादिः प्रत्ययस्तस्मिन् परतः प्रकृतेर्द्वितीयादचः ऊर्ध्वा-

दूर्ध्वभागस्य लोपः स्यात् ॥ ठच् । अनुकम्पितो देवदत्तः । देविकः ॥ अजादौ । देवियः । देविलः ॥

## शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात् ॥८४॥

शेवल । सुपरि । विशाल । वरुण । अर्यमन् । इत्येतदादिकानां मनुष्यनाम्नां ठाजादौ परतस्तृतीयादच ऊर्ध्वभागस्य लोपः स्यात् ॥ अनुकम्पितः शेवलदत्तः । शेवलिकः । शेवलियः । शेवलिलः ॥ सुपरिदत्तः । सुपरिकः । सुपरियः । सुपरिलः ॥ विशालदत्तः । विशालिकः । विशालियः । विशालिलः ॥ वरुणदत्तः । वरुणिकः । वरुणियः । वरुणिलः ॥ अर्यमदत्तः । अर्यमिकः । अर्यमियः । अर्यमिलः ॥

## अल्पे ॥८५॥

अल्पत्वविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे कप्रत्ययः स्यात् ॥ अल्पं तैलं । तैलकं ॥

## ह्रस्वे ॥८६॥

ह्रस्वत्वविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे कप्रत्ययः स्यात् ॥ ह्रस्वो वृत्तः । वृत्तकः ॥ पटकः । स्तम्भकः ॥

## संज्ञायां कन् ॥८७॥

ह्रस्वहेतुकायां संज्ञायां स्वार्थे कन् स्यात् ॥ वंशकः । वेणुकः । दण्डकः ॥

## कुटीशमीशुण्डाभ्यो रः ॥८८॥

कुटी । शमी । शुण्डा । इत्येतेभ्यो ह्रस्वत्वे द्योत्ये रः स्यात् ॥ ह्रस्वा कुटी । कुटीरः ॥ शमीरः । शुण्डारः ॥

## कुत्वा डुपच् ॥८९॥

कुतू । इत्येतस्माद्ध्रस्वत्वे द्योत्ये डुपच् स्यात् ॥ ह्रस्वा कुतूः । कुतुपश्चर्ममयं स्नेहपात्रं ॥

## कासूगोणीभ्यां ष्टरच् ॥९०॥

कासू । गोणी । इत्येताभ्यां ह्रस्वत्वे द्योत्ये ष्टरच् स्यात् ॥ ह्रस्वा कासूः । कासूतरी शक्त्याख्यमायुधं ॥ गोणीतरी ॥ पू डीपर्थः ॥

## वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ॥ ९१ ॥

वत्स । उक्षन् । अश्व । ऋषभ । इत्येतेभ्यस्तनुत्वोपाधिके ऽर्थे वर्तमानेभ्यः स्वार्थे टरच् स्यात् ॥ वत्सतरः । उक्षतरः । अश्वतरः । ऋषभतरः ॥ गुणस्य तनुत्वे ऽयं प्रत्ययः ॥

## किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच् ॥ ९२ ॥

किं । यद् । तद् । इत्येतेभ्यो निर्धार्यमाणवाचिभ्यो द्वयोरेकस्य निर्धारणे सति स्वार्थे डतरच् स्यात् ॥ कतरः कठो ऽनयोः । कतरः पटुरनयोः । कतरः कारको ऽनयोः । कतरो देवदत्तो ऽनयोः ॥ यतरः । ततरः ॥ जात्या गुणेन क्रियया वा समुदायादेकदेशस्य पृथक्करणं निर्धारणं ॥

## वा बहूनां जातिपरिप्रश्ने डतमच् ॥ ९३ ॥

किं । यद् । तद् । इत्येतेभ्यो बहूनामेकस्य निर्धारणे सति जातिपरिप्रश्ने वा डतमच् स्यात् ॥ कतमो भवतां कठः । यतमो भवतां कठः । ततम आगच्छतु ॥ वाग्रहणादकजपि । को भवतां कठः । यकः । सकः ॥

## एकाच्च प्राचां ॥ ९४ ॥

एक । इत्येतस्माद्द्वयोर्बहूनां चैकस्य निर्धारणे डतरच् । डतमच् । इत्येतौ प्रत्ययौ वा भवतः ॥ एकतरो भवतोर्देवदत्तः । एकतमो भवतां देवदत्तः ॥

## अवक्षेपणे कन् ॥ ९५ ॥

अवक्षेपणे वर्तमानात् प्रातिपदिकात् स्वार्थे कन् स्यात् ॥ व्याकरणकेन त्वं गर्वितः ॥

## इवे प्रतिकृतौ ॥ ९६ ॥

इवार्थे प्रतिकृतौ वर्तमानात् प्रातिपदिकात् स्वार्थे कन् स्यात् ॥ अश्व इवेयमस्त्रप्रतिकृतिः । अश्वकः ॥ उष्ट्रकः । गर्दभकः ॥ प्रतिकृतौ किं । गौरिव गवयः ॥

## संज्ञायां च ॥ ९७ ॥

इवार्थे गम्यमाने कन् स्यात् । समुदायेन चेत् संज्ञा गम्यते ॥ अश्वसदृशस्य संज्ञा । अश्वकः ॥ अप्रतिकृत्यर्थमिदं सूत्रं ॥

## लुम्मनुष्ये ॥ ९८ ॥

मनुष्ये वाच्ये संज्ञायां कनो लुप् स्यात् ॥ चञ्चेव मनुष्यः । चञ्चा ॥ दासी । खरकुटी ॥ मनुष्ये किं । अश्वकः ॥ देवपथादिप्रपञ्चो ऽयं ॥

## जीविकार्थे चापण्ये ॥ ९९ ॥

जीविकार्थं यदपण्यं तस्मिन् वाच्ये कनो लुप् स्यात् ॥ वासुदेवः । शिवः । आदित्यः ॥ देवलका जीविकार्थं याः परिगृह्य गृहाद्गृहमटन्ति ता देवप्रकृतय उच्यन्ते ॥ अपण्ये किं । पूजार्थासु मा भूत् । शिवकान् विक्रीणीते ॥

## देवपथादिभ्यश्च ॥ १०० ॥

देवपथ । इत्येवमादिभ्यः परस्य प्रतिकृतौ संज्ञायां च विहितस्य कनो लुप् स्यात् ॥ देवपथः । हंसपथः ॥

## वस्तेर्ढञ् ॥ १०१ ॥

वस्ति । इत्येतस्मादिवार्थे ढञ् स्यात् ॥ वस्तिरिव । वास्तेयं ॥

## शिलाया ढः ॥ १०२ ॥

शिला । इत्येतस्मादिवार्थे ढः स्यात् ॥ शिलेव । शिलेयं दधि ॥ शिलाया इति योगविभागेन ढञपि । शैलेयं ॥

## शाखादिभ्यो यः ॥ १०३ ॥

शाखा । इत्येवमादिभ्यः प्रातिपदिकेभ्य इवार्थे यः स्यात् ॥ शाखेव । शाख्यः ॥

## द्रव्यं च भव्ये ॥ १०४ ॥

द्रव्य । इत्येतद्भव्ये ऽभिधेये निपात्यते ॥ द्रु । इवार्थे यत् । द्रव्यमयं माणवकः । अभिप्रेतार्थपात्रभूत इत्यर्थः ॥

## कुशाग्राच्छः ॥ १०५ ॥

कुशाग्र । इत्येतस्मादिवार्थे छः स्यात् ॥ कुशाग्रमिव । कुशाग्रीया बुद्धिः ॥

## समासाच्च तद्विषयात् ॥ १०६ ॥

इवार्थविषयात् समासादिवार्थे छः स्यात् ॥ काकतालीयो देवदत्तस्य वधः । अजाकृपाणीयः ॥ अस्मादेव ज्ञापकादिवार्थे समासः । सह सुपेति वा ॥

## शर्करादिभ्यो ऽण् ॥१०७॥

शर्करा । इत्येवमादिभ्यः प्रातिपदिकेभ्य इवार्थे ऽण् स्यात् ॥ शार्करं ॥

## अङ्गुल्यादिभ्यष्ठक् ॥१०८॥

अङ्गुली । इत्येवमादिभ्यः प्रातिपदिकेभ्य इवार्थे ठक् स्यात् ॥ आङ्गुलिकः ॥

## एकशालायाष्ठजन्यतरस्यां ॥१०९॥

एकशाला । इत्येतस्मादिवार्थे ठच् स्यात् । पक्षे ठक् ॥ एकशालेव । एक-शालिकः । ऐकशालिकः ॥

## कर्कलोहितादीकक् ॥११०॥

कर्क । लोहित । इत्येताभ्यामिवार्थ ईकक् स्यात् ॥ कर्कः शुक्लो ऽश्वः । तत्सदृशः । कार्कीकः ॥ लौहितीकः स्फटिकः ॥

## प्रत्नपूर्वविश्वेमात् थाल् छन्दसि ॥१११॥

प्रत्न । पूर्व । विश्व । इम । इत्येतेभ्यः प्रातिपदिकेभ्यो वेद इवार्थे थाल् स्यात् ॥ तं प्रत्नथा पूर्वथा विश्वथेमथा ॥

## पूगाञ्ञ्यो ऽग्रामणीपूर्वात् ॥११२॥

नानाजातीया अनियतवृत्तयो ऽर्थकामप्रधानाः संघाः पूगाः । तद्वाचिनः प्राति-पदिकादग्रामणीपूर्वात् स्वार्थे ञ्यः स्यात् ॥ लौहित्ध्वज्यः । लौहित्ध्वज्यौ । लोहितध्वजाः ॥ शैब्यः । शैब्यौ । शिबयः ॥ अग्रामणीपूर्वात् किं । देवदत्तो ग्रामणीर्येषां ते । दैवदत्तकाः ॥

## व्रातच्फञोरस्त्रियां ॥११३॥

नानाजातीयानामनियतवृत्तीनामुत्सेधजीविनां संघो व्रातः । तद्वाचिभ्यः च्फञ्प्र-त्ययान्तेभ्यश्च स्वार्थे ञ्यः स्यात् । न तु स्त्रियां ॥ कापोतपाक्यः । कापोत-पाक्यौ । कपोतपाकाः । व्रैहिमत्यः । व्रैहिमत्यौ । व्रीहिमताः ॥ च्फञन्तात् । कौञ्जायन्यः । कौञ्जायन्यौ । कौञ्जायनाः । ब्राध्नायन्यः । ब्राध्नायन्यौ । ब्रा-ध्नायनाः ॥ अस्त्रियां किं । कपोतपाकी । कौञ्जायनी ॥

## आयुधजीविसंघाञ्ञ्यड्वाहीकेष्वब्राह्मणराजन्यात् ॥११४॥

वाहीकदेशेषु य आयुधजीविसंघस्तद्वाचिनः प्रातिपदिकाद्ब्राह्मणराजन्यवर्जितात् स्वार्थे ञ्यट् स्यात् ॥ क्षौद्रक्यः । क्षौद्रक्यौ । क्षुद्रकाः । मालव्यः । मालव्यौ । मालवाः ॥ टकारो ङीबर्थः । क्षौद्रकी । मालवी ॥ आयुधेति किं । मल्लाः ॥ संघेति किं । सम्राट् ॥ वाहीकेषु किं । शबराः ॥ अब्राह्मणराजन्यात् किं । गोपालवाः शालङ्कायनाः । राजन्याः ॥

## वृकाट्टेण्यण् ॥११५॥

वृक । इत्येतस्मादायुधजीविसंघवाचिनः स्वार्थे टेण्यण् स्यात् ॥ वार्केण्यः । वार्केण्यौ । वृकाः ॥ टकारो ङीबर्थः । वार्केणी ॥ आयुधेत्यादि किं । वृकः ॥

## दामन्यादित्रिगर्तषष्ठाच्छः ॥११६॥

दामनि । इत्येवमादिभ्यः । त्रिगर्तः षष्ठो येषां तेभ्यश्चायुधजीविसंघवाचिभ्यः स्वार्थे छः स्यात् ॥ दामनीयः । दामनीयौ । दामनयः ॥ त्रिगर्तषष्ठेभ्यः । कौण्डोपरथीयः । कौण्डोपरथीयौ । कौण्डोपरथाः ॥ एवं दाण्डकीय इत्यादि ॥

## पर्श्वादियौधेयादिभ्यो ऽणञौ ॥११७॥

पर्शु । इत्येवमादिभ्यः । यौधेय । इत्येवमादिभ्यश्चायुधजीविभ्यः स्वार्थे क्रमेण । अण् । अञ् । इत्येतौ प्रत्ययौ भवतः ॥ पार्शवः । पार्शवौ । पर्शवः ॥ यौधेयादिभ्यः । यौधेयः । यौधेयौ । यौधेयाः ॥

## अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ् ॥११८॥

अभिजित् । विदभृत् । शालावत् । शिखावत् । शमीवत् । ऊर्णावत् । श्रुमत् । इत्येतेभ्यो ऽणन्तेभ्यः स्वार्थे यञ् स्यात् ॥ अभिजितो ऽपत्यं । आभिजितः । आभिजित्यः । आभिजित्यौ । आभिजिताः ॥ एवं वैदभृत्यः । शालावत्यः । शैखावत्यः । शामीवत्यः । और्णावत्यः । श्रौमत्यः ॥ अणित्यामित्येव । आभिजिती ॥

## ञ्यादयस्तद्राजाः ॥११९॥

पूगाञ्ञ्यो ऽग्रामणीपूर्वादित्यारभ्य ये प्रत्यया उक्तास्ते तद्राजसंज्ञका भवन्ति ॥ लोहितध्वजाः । व्रीहिमताः । कौञ्जायनाः । लुङ्गकाः । वृकाः । दामनयः । पर्शवः । यौधेयाः । आभिजिताः ॥

॥ इति सूत्रपाठे पञ्चमाध्यायस्य तृतीयः पादः ॥

---

## पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्च ॥१॥

पाद । शत । इत्येतदन्तात् संख्यादेः प्रातिपदिकाद्वीप्सायां गम्यमानायां वुन् स्यात् । तत्संनियोगेन च तयोरन्त्यलोपः ॥ द्वौ द्वौ पादौ ददाति । द्विपदिकां ददाति ॥ द्वे द्वे शते ददाति । द्विशतिकां ददाति ॥ स्त्रीत्वं स्वभावात् ॥ पादशतस्य किं । द्वौ द्वौ माषौ ददाति ॥ संख्यादेः किं । पादं पादं ददाति ॥ वीप्सायां किं । द्वौ पादौ ददाति ॥ यस्येति चेति लोपे तु तस्य स्थानिवत्त्वात् पदादेशो न स्यादतो ऽपरनिमित्तलोपविधानं ॥

## दण्डव्यवसर्गयोश्च ॥२॥

पाद । शत । इत्येतदन्तात् संख्यादेः प्रातिपदिकाद्दण्डने दाने च गम्ये वुन् स्यात् । तत्संनियोगेन च तयोरन्त्यलोपः ॥ द्वौ पादौ दण्डितः । द्विपदिकां दण्डितः । द्विपदिकां व्यवसृजति ॥ द्विशतिकां ॥

## स्थूलादिभ्यः प्रकारवचने कन् ॥३॥

स्थूल । इत्येवमादिभ्यः प्रकारवचने द्योत्ये कन् स्यात् ॥ स्थूलप्रकारः । स्थूलकः ॥

## अनत्यन्तगतौ क्तात् ॥४॥

अत्यन्तगतिरश्लेषसंबन्धस्तदभावे गम्ये क्तप्रत्ययान्तात् प्रातिपदिकात् कन् स्यात् ॥ छिन्नकं । भिन्नकं ॥ अनत्यन्तगतौ किं । छिन्नं । भिन्नं ॥

## न सामिवचने ॥५॥

सामिपर्याय उपपदे क्तप्रत्ययान्तात् कन् न स्यात् ॥ सामिकृतं । अर्धकृतं ॥ एतदेवात्यन्तस्वार्थिकं कनं ज्ञापयति । बहुतरकं ॥

## बृहत्या आच्छादने ॥६॥

बृहती । इत्येतस्मादाच्छादने वर्तमानात् स्वार्थे कन् स्यात् ॥ बृहतिका ॥ आच्छादने किं । बृहती छन्दः ॥

## अषडक्षाशितंग्वलंकर्मालंपुरुषाध्युत्तरपदात् खः ॥७॥

अषडक्ष । आशितंगु । अलंकर्मन् । अलंपुरुष । इत्येतेभ्यो ऽधि । इत्येतदुत्तरपदकेभ्यश्च प्रातिपदिकेभ्यः स्वार्थे खः स्यात् ॥ अषडक्षीणो मन्त्रः । द्वाभ्यामेव कृत इत्यर्थः ॥ आशितंगवीनमरण्यं । निपातनात् पूर्वपदस्य मुमागमः ॥ अलंकर्मणो । अलंकर्मीणाः ॥ अलंपुरुषाय । अलंपुरुषीणाः ॥ अध्युत्तरपदात् । राजाधीनः । ब्राह्मणाधीनः ॥

## विभाषाञ्चेरदिक्स्त्रियां ॥८॥

अञ्चु । इत्येतदन्तात् प्रातिपदिकाददिक्स्त्रियां वर्तमानात् स्वार्थे वा खः स्यात् ॥ प्राक् । प्राचीनं । प्रत्यक् । प्रतीचीनं । अवाक् । अवाचीनं ॥ अदिक्स्त्रियां किं । प्राची दिक् ॥ दिग्ग्रहणं किं । प्राचीना ब्राह्मणी ॥ स्त्रीग्रहणं किं । प्राचीनं ग्रामादाम्राः ॥

## जात्यन्ताच्छ बन्धुनि ॥९॥

जाति । इत्येतदन्तात् प्रातिपदिकाद्द्रव्ये वर्तमानात् स्वार्थे छः स्यात् ॥ ब्राह्मणजातीयः । क्षत्रियजातीयः ॥ बन्धुनि किं । ब्राह्मणजातिः शोभना ॥

## स्थानान्ताद्विभाषा सस्थानेनेति चेत् ॥१०॥

स्थान । इत्येतदन्तात् प्रातिपदिकाद्वा छः स्यात् । स्थानेन तुल्यश्चेत् स्थानान्तवाच्यः ॥ पित्रा तुल्यः । पितृस्थानीयः । पितृस्थानः ॥ सस्थानेनेति किं । गोस्थानं ॥

## किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ॥११॥

किं । एदन्त । तिङन्त । अव्यय । इत्येतेभ्यो घसंज्ञकप्रत्ययान्तेभ्यो ऽद्रव्य-

प्रकर्ष आमुः स्यात् ॥ किन्तरां । किन्तमां ॥ एदन्त । पूर्वाह्णेतरां । पूर्वाह्णेतमां ॥ तिङन्त । पचतितरां । पचतितमां ॥ अव्यय । उच्चैस्तरां । उच्चैस्तमां ॥ अद्रव्यप्रकर्षे किं । उच्चैस्तरो वृक्षः ॥

## अमु च च्छन्दसि ॥ १२ ॥

किं । एदन्त । तिङन्त । अव्यय । इत्येतेभ्यो घसंज्ञकप्रत्ययान्तेभ्यो ऽद्रव्यप्रकर्षे वेदे ऽमु । आमु । इत्येतौ प्रत्ययौ भवतः ॥ किन्तरं । किन्तरामित्यादि ॥

## अनुगादिनष्ठक् ॥ १३ ॥

अनुगादिन् । इत्येतस्मात् स्वार्थे ठक् स्यात् ॥ आनुगादिकः ॥

## णचः स्त्रियामञ् ॥ १४ ॥

णच्प्रत्ययान्तात् प्रातिपदिकात् स्त्रियां स्वार्थे ऽञ् स्यात् ॥ व्यावक्रोशी । व्यावहासी ॥

## अणिनुणः ॥ १५ ॥

इनुणप्रत्ययान्तात् प्रातिपदिकात् स्वार्थे ऽण् स्यात् ॥ सांराविणं वर्तते । सांकूटिनं । सांमार्जिनं ॥

## विसारिणो मत्स्ये ॥ १६ ॥

विसारिन् । इत्येतस्मान्मत्स्ये वाच्ये स्वार्थे ऽण् स्यात् ॥ वैसारिणो मत्स्यः ॥ मत्स्ये किं । विसारी देवदत्तः ॥

## संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् ॥ १७ ॥

संख्यावाचिभ्य एककर्तृकैकजातीयक्रियाजन्मगणने वर्तमानेभ्यः स्वार्थे कृत्वसुच् स्यात् ॥ पञ्च वारान् भुङ्क्ते । पञ्चकृत्वो ऽह्नो भुङ्क्ते ॥ षट्कृत्वः । सप्तकृत्वः ॥ संख्यायाः किं । भूरिवारान् भुङ्क्ते ॥ अभ्यावृत्तिः क्रियाया एव संभवतीति क्रियाग्रहणमुत्तरार्थं ॥ अभ्यावृत्तिग्रहणं किं । पञ्च पाकाः ॥ गणने किं । वाराणां शतं भुङ्क्ते । शतकृत्वो भुङ्क्ते । अत्रापि यथा स्यात् । न ह्यत्राभ्यावृत्तौ शतशब्दः किं तु संख्यानमात्रवाची ॥

## द्वित्रिचतुर्भ्यः सुच् ॥१८॥

द्वि । त्रि । चतुर् । इत्येतेभ्यः क्रियाभ्यावृत्तिगणनवृत्तिभ्यः स्वार्थे सुच् स्यात् ॥ द्विर्भुङ्क्ते । त्रिर्भुङ्क्ते । चतुर्भुङ्क्ते ॥

## एकस्य सकृच्च ॥१९॥

एक । इत्येतस्मात् क्रियागणनवृत्तेः स्वार्थे सुच् स्यात् । एक । इत्येतस्य सकृदित्येष आदेशश्च ॥ सकृद्भुङ्क्ते । सकृदधीते ॥ न ह्यत्राभ्यावृत्तिः । किं तु गणनमात्रं ॥ एकः पाक इत्यत्रानभिधानान्न भवति ॥

## विभाषा बहोर्धाविप्रकृष्टकाले ॥२०॥

बहु । इत्येतस्मादासन्नकालिके क्रियाभ्यावृत्तिगणने वर्तमानात् स्वार्थे धाप्रत्ययो वा स्यात् । पक्षे कृत्वसुच् ॥ बहुधा दिवसस्य भुङ्क्ते । बहुकृत्वो दिवसस्य भुङ्क्ते ॥ अविप्रकृष्टकाले किं । बहुकृत्वो मासस्य भुङ्क्ते ॥

## तत् प्रकृतवचने मयट् ॥२१॥

प्रथमान्तात् प्रकृतोपाधिकात् स्वार्थे मयट् स्यात् ॥ प्रकृतमन्नं । अन्नमयं ॥ अपूपमयं । यवागूमयी ॥ यद्वा प्रथमान्तात् प्रकृतवचने ऽर्थे मयट् । अन्नं प्रकृतमुच्यते ऽस्मिन्निति । अन्नमयो यज्ञः ॥ अपूपमयं पर्व ॥

## समूहवच्च बहुषु ॥२२॥

प्रकृतवचनेषु बहुषु प्रथमान्तात् समूहवत् प्रत्यया भवन्ति । चकारान्मयट् च ॥ प्रकृता मोदकाः । मौदकिकं । मोदकमयं ॥ यद्वा मोदकाः प्रकृता अस्मिन् । मौदकिको यज्ञः । मोदकमयः ॥

## अनन्तावसथेतिहभेषजाञ्ञ्यः ॥२३॥

अनन्त । आवसथ । इतिह । भेषज । इत्येतेभ्यः स्वार्थे ञ्यः स्यात् ॥ अनन्तमेव । आनन्त्यं ॥ आवसथ एव । आवसथ्यं ॥ इतिह । इत्येष निपातसमुदाय उपदेशपारम्पर्ये । ऐतिह्यं ॥ भेषजमेव । भैषज्यं ॥

## देवतान्तात् तादर्थ्ये यत् ॥२४॥

देवता । इत्येतदन्तात् प्रातिपदिकात् तादर्थ्ये यत् स्यात् ॥ अग्निर्देवताया- यिदं । अग्निदेवत्यं ॥ देवताशब्दः क्रियावाच्यत्र । न तु जातिवाची । पितृदेवत्यं ॥

## पादार्घाभ्यां च ॥२५॥

पाद । अर्घ । इत्येताभ्यां चतुर्थ्यन्ताभ्यां तादर्थ्ये यत् स्यात् ॥ पादार्थमुदकं । पाद्यं ॥ अर्घार्थमुदकं । अर्घ्यं ॥

## अतिथेर्ञ्यः ॥२६॥

अतिथि । इत्येतस्माच्चतुर्थ्यन्तात् तादर्थ्ये ञ्यः स्यात् ॥ अतिथय इदं । आ- तिथ्यं ॥

## देवात् तल् ॥२७॥

देव । इत्येतस्मात् स्वार्थे तल् स्यात् ॥ देव एव । देवता ॥

## अवेः कः ॥२८॥

अवि । इत्येतस्मात् स्वार्थे कः स्यात् ॥ अविरेव । अविकः ॥

## यावादिभ्यः कन् ॥२९॥

याव । इत्येवमादिभ्यः प्रातिपदिकेभ्यः स्वार्थे कन् स्यात् ॥ यावकः ॥

## लोहितान्मणौ ॥३०॥

लोहित । इत्येतस्मान्मणौ वर्तमानात् स्वार्थे कन् स्यात् ॥ लोहितो मणिः । लोहितकः ॥

## वर्णे चानित्ये ॥३१॥

लोहित । इत्येतस्मादनित्ये वर्णे वर्तमानात् स्वार्थे कन् स्यात् ॥ लोहितकः कोपेन ॥ अनित्ये किं । लोहिता गौः ॥

## रक्ते ॥३२॥

लोहित । इत्येतस्माल्लाक्षादिना रक्ते ऽर्थे वर्तमानात् स्वार्थे कन् स्यात् ॥ लोहितकः पटः ॥ लिङ्गबाधनं वेत्यव । लोहितिका । लोहिनिका शाटी ॥

## कालाच्च ॥ ३३ ॥

काल । इत्येतस्मात्‌नित्ये वर्णे रक्ते चार्थे वर्तमानात् स्वार्थे कन् स्यात् ॥ कालकं मुखं कोपेन ॥ रक्ते । कालकः पटः ॥

## विनयादिभ्यष्ठक् ॥ ३४ ॥

विनय । इत्येवमादिभ्यः स्वार्थे ठक् स्यात् ॥ वैनयिकः । सामयिकः । औपयिकः ॥

## वाचो व्याहृतार्थायां ॥ ३५ ॥

वाच् । इत्येतस्मात् संदेशवाचिवर्तमानात् स्वार्थे ठक् स्यात् ॥ वाचिकं संदेशवचनं ॥ व्याहृतार्थायां किं । मधुरा वाक् ॥

## तद्युक्तात् कर्मणोऽण् ॥ ३६ ॥

कर्मन् । इत्येतस्माद्व्याहृतार्थवाग्युक्तकर्मवाचिनः स्वार्थेऽण् स्यात् ॥ कर्मैव । कार्मणं । वाचिकं श्रुत्वा क्रियमाणं कर्मेत्यर्थः ॥

## ओषधेरजातौ ॥ ३७ ॥

ओषधि । इत्येतस्मादजातौ वर्तमानात् स्वार्थेऽण् स्यात् ॥ औषधं पिबति ॥ अजातौ किं । ओषधयः क्षेत्रे भवन्ति ॥

## प्रज्ञादिभ्यश्च ॥ ३८ ॥

प्रज्ञ । इत्येवमादिभ्यः प्रातिपदिकेभ्यः स्वार्थेऽण् स्यात् ॥ प्राज्ञ । वाणिजः ॥

## मृदस्तिकन् ॥ ३९ ॥

मृद् । इत्येतस्मात् स्वार्थे तिकन् स्यात् ॥ मृदेव । मृत्तिका ॥

## सस्नौ प्रशंसायां ॥ ४० ॥

मृद् । इत्येतस्मात् प्रशंसाविशिष्टात् स्वार्थे स । स्न । इत्येतौ प्रत्ययौ भवतः ॥ प्रशस्ता मृत् । मृत्सा । मृत्स्ना ॥

## वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि ॥ ४१ ॥

वृक । ज्येष्ठ । इत्येताभ्यां प्रशंसोपाधिकाभ्यां वेदे स्वार्थे क्रमात् तिल् । तातिल् । इत्येतौ प्रत्ययौ भवतः ॥ वृकतिः । ज्येष्ठतातिः ॥

## बह्वल्पार्थाच्छस् कारकादन्यतरस्यां ॥ ४२ ॥

बह्वर्थात् । अल्पार्थाच्च कारकवाचिनः स्वार्थे शस् वा स्यात् ॥ बहुशो ददाति । अल्पशो ददाति । भूरिशः । स्तोकशः ॥ बह्वल्पार्थात् किं । गां ददाति ॥ कारकात् किं । बहूनां स्वामी ॥

## संख्यैकवचनाच्च वीप्सायां ॥ ४३ ॥

संख्यावाचिभ्यः । एकवचनान्ताच्च कारकाद्वीप्सायां द्योत्यायां शस् वा स्यात् ॥ द्वौ द्वौ ददाति । द्विशो ददाति ॥ एकवचनात् । माषं माषं ददाति । माषशो ददाति ॥ पादशः । प्रस्थशः ॥ संख्यैकवचनात् किं । घटं घटं ददाति ॥ वीप्सायां किं । द्वौ ददाति । माषं ददाति ॥ कारकादित्येव । द्वयोर्द्वयोः स्वामी । माषस्य माषस्य स्वामी ॥

## प्रतियोगे पञ्चम्यास्तसिः ॥ ४४ ॥

प्रति । इत्यनेन कर्मप्रवचनीयेन योगे या पञ्चमी तदन्तात् स्वार्थे वा तसिः स्यात् ॥ प्रद्युम्नः कृष्णात् प्रति । प्रद्युम्नः कृष्णतः प्रति ॥

## अपादाने चाहीयरुहोः ॥ ४५ ॥

अपादाने या पञ्चमी तदन्ताद्वा तसिः स्यात् । तच्चेदपादानं हीयरुहोः संबन्धि न भवति ॥ ग्रामादागच्छति । ग्रामत आगच्छति ॥ अहीयरुहोः किं । ओहाक् । स्वर्गाद्धीयते ॥ ओहाङ् । इत्यस्य न निषेधो यका निर्देशात् । भूमेरुज्जिहीते । भूमित उज्जिहीते ॥ रुह । पर्वतादवरोहति ॥

## अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः ॥ ४६ ॥

अकर्तरि या तृतीया तदन्तादतिग्रहे ऽव्यथने क्षेपे च विषये वा तसिः स्यात् ॥ चारित्रेणातिगृह्यते । चारित्रतो ऽतिगृह्यते ॥ अव्यथन । चारित्रतो न व्यथते ॥ क्षेप । वृत्ततः क्षिप्तः ॥ अतिग्रहेत्यादि किं । वृत्तेन भिन्नः ॥ अकर्तरि किं । देवदत्तेन निन्दितः ॥ तृतीयायाः किं । देवदत्तमतिगृह्णाति ॥

## हीयमानपापयोगाच्च ॥ ४७ ॥

अकर्तरि या तृतीया तदन्ताद्धीयमानेन पापेन च युक्ताद्वा तसिः स्यात् ॥ वृत्तेन हीयते । वृत्ततो हीयते ॥ चरित्रेण पापः । चरित्रतः पापः ॥ नात्र क्षेपः । किं तु तत्त्वकथने तात्पर्यं ॥ अकर्तरीत्येव । देवदत्तेन हीयते ॥ हीयमानपापयोगात् किं । वृत्तेन भिन्नः ॥ तृतीयाया इत्येव । देवदत्तं जहाति ॥

## षष्ठ्या व्याश्रये ॥४८॥

षष्ठ्यन्ताद्विभिन्नाश्रये गम्यमाने वा तसिः स्यात् ॥ देवा अर्जुनतोऽभवन् । आदित्याः कर्णतः । अर्जुनस्य कर्णस्येति वा ॥ व्याश्रये किं । वृक्षस्य शाखा ॥

## रोगाच्चापनयने ॥४९॥

रोगवाचिनः षष्ठ्यन्तात् प्रतीकारे गम्ये वा तसिः स्यात् ॥ प्रवाहिकायाः कुरु । प्रवाहिकातः कुरु ॥ अपनयने किं । प्रवाहिकायाः प्रकोपनं ॥

## कृभ्वस्तियोगे संपद्यकर्तरि च्विः ॥५०॥

संपद्यकर्तरि वर्तमानात् प्रातिपदिकात् । डुकृञ् । भू । अस । इत्येतैर्धातुभिर्योगे वा च्विः स्यात् ॥ अशुक्लः शुक्लः संपद्यते । तं तथा करोति । शुक्लीकरोति ॥ शुक्लीभवति । शुक्लीस्यात् ॥ कृभ्वस्तियोगे किं । अशुक्लः शुक्लो जायते ॥ संपद्यकर्तरि किं । कारकान्तरे मा भूत् । अदेवगृहे देवगृहं संपद्यते ॥

## अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च ॥५१॥

अरुस् । मनस् । चक्षुस् । चेतस् । रहस् । रजस् । इत्येतेषामन्त्यस्य लोपः स्यात् । च्विप्रत्ययश्च ॥ अनरुः अरुः संपद्यते । तं तथा करोति । अरूकरोति ॥ अरूभवति । अरूस्यात् ॥ उन्मनीकरोति । उन्मनीभवति । उन्मनीस्यात् ॥ उच्चक्षूकरोति । उच्चक्षूभवति । उच्चक्षूस्यात् ॥ विचेतीकरोति । विचेतीभवति । विचेतीस्यात् ॥ विरहीकरोति । विरहीभवति । विरहीस्यात् ॥ विरजीकरोति । विरजीभवति । विरजीस्यात् ॥

## विभाषा साति कार्त्स्न्ये ॥५२॥

कार्त्स्न्ये गम्यमाने च्विप्रत्ययविषये सातिप्रत्ययो वा स्यात् ॥ अग्निसाद्भवति । अग्नीभवति शस्त्रं ॥ कार्त्स्न्ये किं । एकदेशेन पटः शुक्लीभवति ॥

## अभिविधौ संपदा च ॥ ५३ ॥

अभिव्याप्तौ गम्यमाने च्विविषये संपूर्वेण पद । इत्येतेन धातुना योगे कृभ्वस्तियोगे च वा सातिः स्यात् ॥ अग्निसात् संपद्यते । अग्निसात् करोति । अग्निसाद्भवति । अग्निसात् स्यात् ॥ पक्षे । अग्नीकरोतीत्यादि ॥ बहूनां व्यक्तीनामेकदेशेनान्वयाभावो ऽभिविधिः । कार्त्स्न्यं त्वेकव्यक्तेः सर्वावयवेनान्वयाभावः ॥

## तदधीनवचने ॥ ५४ ॥

स्वामिविशेषवाचिनः प्रातिपदिकादीशितव्ये ऽभिधेये कृभ्वस्तियोगे संपदा योगे च सातिः स्यात् ॥ राज्ञो ऽधीनं करोति । राजसात् करोति ॥ राजसाद्भवति । राजसात् स्यात् । राजसात् संपद्यते ॥

## देये त्रा च ॥ ५५ ॥

तदधीने देये प्रातिपदिकात् त्रा । साति । इत्येतौ प्रत्ययौ भवतः । कृभ्वस्तियोगे संपदा योगे च ॥ ब्राह्मणाधीनं देयं करोति । ब्राह्मणत्रा करोति ॥ ब्राह्मणत्रा भवति । ब्राह्मणत्रा स्यात् । ब्राह्मणत्रा संपद्यते ॥ एवं ब्राह्मणसात् ॥ देये किं । राजसाद्भवति राष्ट्रं ॥

## देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलं ॥ ५६ ॥

देव । मनुष्य । पुरुष । पुरु । मर्त्य । इत्येतेभ्यो द्वितीयान्तेभ्यः सप्तम्यन्तेभ्यश्च बहुलं त्रा स्यात् ॥ देवान् गच्छति । देवत्रा गच्छति ॥ मनुष्येषु वसति । मनुष्यत्रा वसति ॥ पुरुषत्रा । पुरुत्रा । मर्त्यत्रा ॥ बहुलग्रहणादन्यत्रापि । बहुत्रा जीवतो मनः ॥

## अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच् ॥ ५७ ॥

ध्वनेरनुकरणादनेकाजर्धात् कृभ्वस्तियोगे डाच् स्यात् । इति । इत्येतस्मिन् परतस्तु न भवति ॥ पटपटाकरोति भवति स्याद्वा ॥ अव्यक्तानुकरणात् किं । दृषत् करोति ॥ द्व्यजवरार्धात् किं । श्रत्करोति ॥ अनितौ किं ।

खरटखरटाकरोति ॥ अनितौ किं । पट इति करोति ॥ स्वरितत्वाधनार्थश्चकारः । पटपटासि ॥

## कृञो द्वितीयतृतीयशम्बबीजात् कृषौ ॥५८॥

द्वितीय । तृतीय । शम्ब । बीज । इत्येतेभ्यः कर्षणे वाच्ये डुकृञ्योगे डाच् स्यात् ॥ द्वितीयाकरोति । तृतीयाकरोति । द्वितीयं तृतीयं कर्षणं करोतीत्यर्थः ॥ शम्बाकरोति । अनुलोमकृष्टं क्षेत्रं प्रतिलोमं कर्षतीत्यर्थः ॥ बीजाकरोति । सह बीजेन कर्षतीत्यर्थः ॥ कृषौ किं । द्वितीयं पटं करोति ॥

## संख्यायाश्च गुणान्तायाः ॥५९॥

गुण । इत्येतदन्तात् संख्यावाचिनः प्रातिपदिकात् कर्षणे वाच्ये डुकृञ्योगे डाच् स्यात् ॥ द्विगुणाकरोति क्षेत्रं ॥ कृषौ किं । द्विगुणां रज्जुं करोति ॥

## समयाच्च यापनायां ॥६०॥

समय । इत्येतस्मादतिक्रमणे गम्ये डुकृञ्योगे डाच् स्यात् ॥ समयाकरोति । कालक्षेपं करोतीत्यर्थः ॥ यापनायां किं । समयं करोति ॥

## सपत्रनिष्पत्रादतिव्यथने ॥६१॥

सपत्र । निष्पत्र । इत्येताभ्यामतिव्यथने गम्ये डुकृञ्योगे डाच् स्यात् ॥ सपत्राकरोति मृगं व्याधः । सपत्रशरमस्य शरीरे प्रवेशयतीत्यर्थः ॥ निष्पत्राकरोति । शरीराच्छरमपरपार्श्वे निष्कामयतीत्यर्थः ॥ अतिव्यथने किं । सपत्रं करोति । निष्पत्रं करोति भूमितलं ॥

## निष्कुलान्निष्कोषणे ॥६२॥

निष्कुल । इत्येतस्मादन्तरवयवानां बहिर्निःसारणे गम्ये डुकृञ्योगे डाच् स्यात् ॥ निष्कुलाकरोति दाडिमं ॥ निष्कोषणे किं । निष्कुलान् करोति शत्रून् ॥

## सुखप्रियादानुलोम्ये ॥६३॥

सुख । प्रिय । इत्येताभ्यामानुलोम्ये गम्ये डुकृञ्योगे डाच् स्यात् ॥ सुखाकरोति । प्रियाकरोति स्वामिनं । सुखं प्रियं पुनरानन्दयतीत्यर्थः ॥ आनुलोम्ये किं । सुखं करोत्यौषधम् ॥

## दुःखात् प्रातिलोम्ये ॥ ६४ ॥

दुःख । इत्येतस्मात् प्रातिलोम्ये गम्ये डुकृञ्योगे डाच् स्यात् ॥ दुःखाकरोति भृत्यः । स्वामिनं पीडयतीत्यर्थः ॥ प्रातिलोम्ये किं । दुःखं करोति ॥

## शूलात् पाके ॥ ६५ ॥

शूल । इत्येतस्मात् पाकविषये डुकृञ्योगे डाच् स्यात् ॥ शूलेन पचति । शूलाकरोति मांसं ॥ पाके किं । शूलं करोति कदन्नं ॥

## सत्यादशपथे ॥ ६६ ॥

सत्य । इत्येतस्मादशपथे वर्तमानाड्डुकृञ्योगे डाच् स्यात् ॥ सत्याकरोति वणिग्भाण्डं । क्रेतव्यमिति तथ्यं करोतीत्यर्थः ॥ अशपथे किं । सत्यं करोति ॥

## मद्रात् परिवापणे ॥ ६७ ॥

मद्र । इत्येतस्मान्मुण्डने ऽर्थे डुकृञ्योगे डाच् स्यात् ॥ मद्राकरोति । मङ्गलं मुण्डनं करोतीत्यर्थः ॥ परिवापणे किं । मद्रं करोति ॥

## समासान्ताः ॥ ६८ ॥

अधिकारो ऽयं ॥ आ पादपरिसमाप्तेर्ये प्रत्ययास्ते समासस्यान्तावयवा वेदितव्याः ॥ वक्ष्यति ऋक्पूरब्धूःपथामानक्षे । त्रिपुरी । त्रिधुरी ॥

## न पूजनात् ॥ ६९ ॥

पूजनार्थात् परा ये शब्दास्तदन्तात् समासात् समासान्ता न भवन्ति ॥ सुराजा । अतिराजा । सुगौः । अतिगौः ॥

## किमः क्षेपे ॥ ७० ॥

किं । इत्येतस्मान्निन्दार्थात् परे ये शब्दास्तदन्तात् समासात् समासान्ता न भवन्ति ॥ कुत्सितो राजा । किंराजा यो न रक्षति ॥ किंसखा ॥ क्षेपे किं । किंराजः ॥

## नञस्तत्पुरुषात् ॥ ७१ ॥

नञः परा ये शब्दास्तदन्तात् तत्पुरुषात् समासान्ता न भवन्ति ॥ अराजा । असखा । अगौः ॥ तत्पुरुषात् किं । अनृचः शिशुः ॥

## पथो विभाषा ॥७२॥

नञः परो यः पथिन् । इत्येष शब्दस्तदन्तात् तत्पुरुषात् समासान्तो वा न भवति ॥ अपथं । अपन्थाः ॥

## बहुव्रीहौ संख्येये डजबहुगणात् ॥७३॥

संख्येये यो बहुव्रीहिरबहुगणान्तस्ततः समासान्तो डच् स्यात् ॥ उपदशाः । आसन्नविंशाः । द्वित्राः ॥ संख्येये किं । चित्रगुः ॥ अबहुगणात् किं । उपबहवः । उपगणाः ॥

## ऋक्पूरब्धूःपथामानक्षे ॥७४॥

ऋच् । पुर् । अप् । धुर् । पथिन् । इत्येतदन्तात् समासात् समासान्तो ऽप्रत्ययः स्यात् । अक्षे या धूस्तदन्तात् तु न भवति ॥ ऋच् । अर्धर्चः । अनृचः ॥ पुर् । ललाटपुरं । नान्दीपुरं ॥ अप् । द्वीपं । समीपं ॥ धुर् । राजधुरः । महाधुरः ॥ पथिन् । स्थलपथः ॥ अनक्षे किं । दृढधूरक्षः ॥

## अच् प्रत्यन्ववपूर्वात् सामलोम्नः ॥७५॥

प्रति । अनु । अव । इत्येतत्पूर्वात् सामन् । लोमन् । इत्येतदन्तात् समासात् समासान्तो ऽच् स्यात् ॥ प्रतिसामं । अनुसामं । अवसामं ॥ प्रतिलोमं । अनुलोमं । अवलोमं ॥

## अक्ष्णो ऽदर्शनात् ॥७६॥

दर्शनादन्यत्र यो ऽक्षि । इत्येष शब्दस्तदन्तात् समासात् समासान्तो ऽच् स्यात् ॥ पुष्कराक्षः । गवाक्षः ॥ अदर्शनात् किं । ब्राह्मणाक्षि ॥

## अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिंदिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ॥७७॥

अचतुर । विचतुर । सुचतुर । स्त्रीपुंस । धेन्वनडुह । ऋक्साम । वाङ्मनस । अक्षिभ्रुव । दारगव । ऊर्वष्ठीव । पदष्ठीव । नक्तंदिव । रात्रिंदिव । अहर्दिव । सरजस । निःश्रेयस । पुरुषायुष । द्व्यायुष । त्र्यायुष । ऋग्यजुष । जातोक्ष । महोक्ष । वृद्धोक्ष । उपशुन । गोष्ठश्व । इत्येते ऽच्प्रत्ययान्ता निपात्यन्ते ॥ आद्यास्त्रयो बहुव्रीहयः । अविद्यमानानि चत्वार्यस्य । अचतुरः । विचतुरः । सुचतुरः ॥ तत एकादश द्वन्द्वाः । स्त्रीपुंसौ । धेन्वनडुहे । ऋक्सामे । वाङ्मनसे । अक्षिभ्रुवं । दारगवं । ऊरू चाष्ठीवन्तौ च । ऊर्वष्ठीवं । निपातनाट्टिलोपः । पादौ चाष्ठीवन्तौ च । पदष्ठीवं । टिलोपः पद्भावश्च निपातनात् । नक्तं च दिवा च । नक्तंदिवं । रात्रौ च दिवा च । रात्रिंदिवं । पूर्वपदस्य मुम् । अहनि च दिवा च । अहर्दिवं । वीप्सायां द्वन्द्वो निपातनात् ॥ तत एको ऽव्ययीभावः साकल्ये । सरजसं । बहुव्रीहौ तु सरजः पङ्कजं ॥ ततश्चत्वारस्तत्पुरुषाः । निश्चितं श्रेयः । निःश्रेयसं । पुरुषस्यायुः । पुरुषायुषं । तत्र द्वौ द्विगू । द्वे आयुषी । द्व्यायुषं । त्र्यायुषं ॥ तत एको द्वन्द्वः । ऋग्यजुषं ॥ ततस्त्रयः कर्मधारयाः । जातश्चासावुक्षा च । जातोक्षः । महोक्षः । वृद्धोक्षः ॥ तत एको ऽव्ययीभावः । शुनः समीपं । उपशुनं । टिलोपाभावः संप्रसारणं च निपातनात् ॥ तत एकस्तत्पुरुषः । गोष्ठे ऽश्वः । गोष्ठश्वः ॥

## ब्रह्महस्तिभ्यां वर्चसः ॥७८॥

ब्रह्मन् । हस्तिन् । इत्येताभ्यां परो यो वर्च्चस् । इत्येष शब्दस्तदन्तात् समासात् समासान्तो ऽच् स्यात् ॥ ब्रह्मवर्चसं । हस्तिवर्चसं ॥

## अवसमन्धेभ्यस्तमसः ॥७९॥

अव । सं । अन्ध । इत्येतेभ्यः परो यस्तमस् । इत्येष शब्दस्तदन्तात् समासात् समासान्तो ऽच् स्यात् ॥ अवतमसं । संतमसं । अन्धतमसं ॥

## श्वसो ऽवसीयःश्रेयसः ॥८०॥

श्वस् । इत्येतस्मात् परौ यौ । अवसीयस् । श्रेयस् । इत्येतौ तदन्तात् समासात् समासान्तो ऽच् स्यात् ॥ श्वोवसीयसं । श्वःश्रेयसं ते भूयात् ॥ वसुशब्दः प्रशंसावाचीयसुन्नन्तः श्वःशब्द आशीर्द्योतकः । मयूरव्यंसकादित्वात् समासः ॥

## अन्ववतप्ताद्रहसः ॥८१॥

अनु । अव । तप्त । इत्येतेभ्यः परो यो रहस् । इत्येष शब्दस्तदन्तात् समासात् समासान्तो ऽच् स्यात् ॥ अनुरहसं । अवरहसं । तप्तरहसं ॥

## प्रतेरुरसः सप्तमीस्थात् ॥८२॥

प्रति । इत्येतस्मात् परो य उरस् । इत्येष शब्दः सप्तम्यर्थवृत्तिस्तदन्तात् समासात् समासान्तो ऽच् स्यात् ॥ उरसीति । प्रत्युरसं ॥ विभक्त्यर्थे ऽव्ययीभावः ॥ सप्तमीस्थात् किं । प्रतिगतमुरः । प्रत्युरः ॥

## अनुगवमायामे ॥८३॥

अनुगव । इत्येतदच्प्रत्ययान्तं दैर्घ्ये वाच्ये निपात्यते ॥ अनुगवं गमनं ॥ आयामे किं । गोः पश्चात् । अनुगु ॥

## द्विस्तावा त्रिस्तावा वेदिः ॥८४॥

द्विस्तावा । त्रिस्तावा । इत्येतौ वेद्यां वाच्यायां निपात्येते ॥ यावती प्रकृतियोगे वेदिस्ततो द्विगुणा त्रिगुणा वा यत्र विकृतियोगे तत्रेदं निपातनं ॥ द्विगुणा तावती । द्विस्तावा वेदिः ॥ त्रिगुणा तावती । त्रिस्तावा वेदिः ॥ अच्प्रत्ययटिलोपः नुगन्तेन समासश्च निपातनात् ॥ वेदिरिति किं । द्विस्तावती । त्रिस्तावती रज्जुः ॥

## उपसर्गादध्वनः ॥८५॥

प्रादेः परो यो ऽध्वन् । इत्येष शब्दस्तदन्तात् समासात् समासान्तो ऽच् स्यात् ॥ प्रगतो ऽध्वानं । प्राध्वो रथः ॥ निरध्वं । प्रत्यध्वं ॥ उपसर्गात् किं । उत्ताध्वा ॥

## तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ॥८६॥

अङ्गुलि । इत्येतदन्तात् संख्यादेरव्ययादेश्च तत्पुरुषसमासात् समासान्तो ऽच् स्यात् ॥ द्वे अङ्गुली प्रमाणमस्य । द्व्यङ्गुलं । त्र्यङ्गुलं ॥ अव्ययादेः । निरङ्गुलं ॥ तत्पुरुषस्य किं । पञ्चाङ्गुलिर्हस्तः ॥

## अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ॥८७॥

अहन् । सर्व । एकदेशवाचिन् । संख्यात । पुण्य । इत्येतेभ्यः परो यो रात्रि । इत्येष शब्दस्तदन्तात् तत्पुरुषात् समासान्तो ऽच् स्यात् । चकारात् संख्याव्ययादेश्च ॥ अहश्च रात्रिश्च । अहोरात्रः ॥ सर्वा रात्रिः । सर्वरात्रः ॥ एकदेश । पूर्वं रात्रेः । पूर्वरात्रः । मध्यरात्रः । अपररात्रः ॥ संख्याता रात्रिः । संख्यातरात्रः ॥ पुण्या रात्रिः । पुण्यरात्रः ॥ संख्याव्ययादेः । द्विरात्रं । अतिरात्रः ॥

## अह्नो ऽह्न एतेभ्यः ॥८८॥

सर्व । एकदेश । संख्यात । पुण्य । संख्या । अव्यय । इत्येतेभ्यः परस्याहन् । इत्येतस्याह्न । इत्येष आदेशः स्यात् ॥ सर्वमहः । सर्वाह्णः ॥ एकदेश । पूर्वाह्णः । अपराह्णः ॥ संख्यात । संख्याताह्नः ॥ पुण्यात् प्रतिषेधं वक्ष्यति ॥ संख्या । द्वयोरह्नोर्भवः । द्व्यह्नः ॥ अव्यय । अत्यह्नः । निरह्णः ॥

## न संख्यादेः समाहारे ॥८९॥

संख्यादेः समाहारे वर्तमानस्य तत्पुरुषस्याहन् । इत्येतस्याह्न । इत्येष आदेशो न स्यात् ॥ द्वयोरह्नोः समाहारः । द्व्यहः ॥ त्र्यहः । चतुरहः ॥ समाहारे किं । द्वयोरह्नोर्भवः । द्व्यह्नः ॥

## उत्तमैकाभ्यां च ॥९०॥

पुण्य । एक । इत्येताभ्यां परस्याहन् । इत्येतस्याह्नादेशो न स्यात् ॥ उत्तमशब्दो ऽन्त्यवाची । तेन अहःसर्वैकदेशेत्यादिसूत्रोपात्तेष्वन्त्यः पुण्यशब्दो गृह्यते ॥ पुण्याहं । सुदिनाहं ॥ एकाहं ॥ उत्तमग्रहणानुपान्त्यस्यापि संग्रहार्थमित्येके । संख्याताहः ॥

## राजाहःसखिभ्यष्टच् ॥९१॥

राजन् । अहन् । सखि । इत्येतदन्तात् तत्पुरुषाट्टच् स्यात् ॥ महाराजः । परमराजः ॥ परमाहः । उत्तमाहः ॥ राजसखः । विप्रसखः ॥ लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्नेह । मद्रराज्ञी ॥

## गोरतद्धितलुकि ॥९२॥

गो । इत्येतदन्तात् तत्पुरुषाट्टच् स्यात् । न तु तद्धितलुकि ॥ परमगवः ।

पञ्चगवं ॥ अतद्धितलुकि किं । पञ्चभिर्गोभिः क्रीतः । पञ्चगुः ॥ तद्धितग्रहणं किं । राजगवीयति ॥ लुग्ग्रहणं किं । पञ्चगवरूप्यं ॥

## अग्राख्यायामुरसः ॥ ९३ ॥

प्रधानाख्यायां य उरस् । इत्येष शब्दस्तदन्तात् तत्पुरुषाट्टच् स्यात् ॥ अश्वानामुर इव । अश्वोरसं । मुख्योऽश्व इत्यर्थः ॥ अग्राख्यायां किं । देवदत्तोरः ॥

## अनोश्मायःसरसां जातिसंज्ञयोः ॥ ९४ ॥

अनस् । अश्मन् । अयस् । सरस् । इत्येतदन्तात् तत्पुरुषाज्जातौ संज्ञायां च टच् स्यात् ॥ उपानसं । अमृताश्मः । कालायसं । मण्डूकसरसं । एता जातयः ॥ महानसं । पिण्डाश्मः । लोहितायसं । जलसरसं । एताः संज्ञाः ॥ जातिसंज्ञयोः किं । सदनः । सदश्मा । सदयः । सत्सरः ॥

## ग्रामकौटाभ्यां च तक्ष्णः ॥ ९५ ॥

ग्राम । कौट । इत्येताभ्यां परो यस्तक्षन् । इत्येष शब्दस्तदन्तात् तत्पुरुषाट्टच् स्यात् ॥ ग्रामतक्षः । साधारण इत्यर्थः ॥ कौटतक्षः । स्वतन्त्र इत्यर्थः ॥ ग्रामकौटाभ्यां किं । राजतक्षा ॥

## अतेः शुनः ॥ ९६ ॥

अति । इत्येतस्मात् परो यः श्वन् । इत्येष शब्दस्तदन्तात् तत्पुरुषाट्टच् स्यात् ॥ अतिश्वो वराहः । अतिश्वी सेवा ॥

## उपमानादप्राणिषु ॥ ९७ ॥

अप्राणिविषयकोपमानवाची यः श्वन् । इत्येष शब्दस्तदन्तात् तत्पुरुषाट्टच् स्यात् ॥ आकर्षः श्वेव । आकर्षश्वः ॥ अप्राणिषु किं । वानरश्वा ॥

## उत्तरमृगपूर्वाच्च सक्थ्नः ॥ ९८ ॥

उत्तर । मृग । पूर्व । इत्येतेभ्य उपमानाच्च परो यः सक्थि । इत्येष शब्दस्तदन्तात् तत्पुरुषाट्टच् स्यात् ॥ उत्तरसक्थं । मृगसक्थं । पूर्वसक्थं ॥ उपमानात् । फलकमिव सक्थि । फलकसक्थं ॥

## नावो द्विगोः ॥९९॥

नौ । इत्येतदन्ताद्द्विगुसमासाट्टच् स्यात् ॥ द्विनावं । त्रिनावं । पञ्चनावप्रियः । द्विनावरूप्यं । त्रिनावमयं ॥ द्विगोः किं । राजनौः ॥ अतद्धितलुकीत्येव । पञ्चभिर्नौभिः क्रीतः । पञ्चनौः ॥

## अर्धाच्च ॥१००॥

अर्ध । इत्येतस्मात् परो यो नौ । इत्येष शब्दस्तदन्तात् तत्पुरुषाट्टच् स्यात् ॥ नावोऽर्धं । अर्धनावं । लोकाश्रयत्वान्न परवल्लिङ्गं ॥

## खार्याः प्राचां ॥१०१॥

खारी । इत्येतदन्ताद्द्विगोः । अर्ध । इत्येतस्मात् परो यः खारी । इत्येष शब्दस्तदन्ताच्च तत्पुरुषाद्वा टच् स्यात् ॥ द्विखारं । द्विखारि ॥ अर्धखारं । अर्धखारी ॥

## द्वित्रिभ्यामञ्जलेः ॥१०२॥

द्वि । त्रि । इत्येताभ्यां परो योऽञ्जलि । इत्येष शब्दस्तदन्ताद्द्विगोर्वा टच् स्यात् ॥ द्व्यञ्जलं । द्व्यञ्जलि ॥ त्र्यञ्जलं । त्र्यञ्जलि ॥ द्विगोः किं । द्वयोरञ्जलिः । द्व्यञ्जलिः ॥ अतद्धितलुकीत्येव । द्वाभ्यामञ्जलिभ्यां क्रीतः । द्व्यञ्जलिः ॥

## अन्नसन्तान्नपुंसकाच्छन्दसि ॥१०३॥

अन् । अस् । इत्येतदन्तान्नपुंसकलिङ्गात् तत्पुरुषाद्वेदे टच् स्यात् ॥ हस्तिचर्मे जुहोति ॥ अस् । देवच्छन्दसानि च ॥ अन्नसन्तात् किं । बिल्वदारु जुहोति ॥ नपुंसकात् किं । सुत्रामाणं ॥

## ब्रह्मणो जानपदाख्यायां ॥१०४॥

ब्रह्मन् । इत्येतदन्तात् तत्पुरुषाट्टच् स्यात् । समासेन ब्रह्मणो जानपदत्वमाख्यायते चेत् ॥ सुराष्ट्रब्रह्मः । अवन्तिब्रह्मः ॥ जानपदाख्यायां किं । देवब्रह्मा नारदः ॥

## कुमहद्भ्यामन्यतरस्यां ॥१०५॥

कु । महत् । इत्येताभ्यां परो यो ब्रह्मन् । इत्येष शब्दस्तदन्तात् तत्पुरुषाद्वा टच् स्यात् ॥ कुब्रह्मः । कुब्रह्मा ॥ महाब्रह्मः । महाब्रह्मा ॥

## द्वन्द्वाच्चुदषहान्तात् समाहारे ॥१०६॥

चवर्गान्तात् । द् । ष् । ह् । इत्येतदन्ताच्च समाहारद्वन्द्वात् समासान्तष्टच् स्यात् ॥ चु । वाक्त्वचं । श्रीस्रजं । गुरुपरिव्राजं ॥ द् । समिद्दृषदं । संपद्विपदं ॥ ष् । वाक्त्विषं । वाग्विप्रुषं ॥ ह् । छत्रोपानहं । धेनुगोदुहं ॥ द्वन्द्वात् किं । पञ्चानां वाचां समाहारः । पञ्चवाक् ॥ चुदषहान्तात् किं । वाक्समित् ॥ समाहारे किं । प्रावृट्शरदौ ॥

## अव्ययीभावे शरत्प्रभृतिभ्यः ॥१०७॥

शरद् । इत्येवमाद्यन्तादव्ययीभावसमासात् समासान्तष्टच् स्यात् ॥ उपशरदं । उपविपाशं ॥

## अनश्च ॥१०८॥

अन् । इत्येतदन्तादव्ययीभावाट्टच् स्यात् ॥ उपराजं । अध्यात्मं ॥

## नपुंसकादन्यतरस्यां ॥१०९॥

अन् । इत्येतदन्तं यन्नपुंसकं तदन्तादव्ययीभावाद्वा टच् स्यात् ॥ उपचर्मं । उपचर्म ॥

## नदीपौर्णमास्याग्रहायणीभ्यः ॥११०॥

नदी । पौर्णमासी । आग्रहायणी । इत्येतदन्तादव्ययीभावाद्वा टच् स्यात् ॥ उपनदं । उपनदि ॥ उपपौर्णमासं । उपपौर्णमासि ॥ उपाग्रहायणं । उपाग्रहायणि ॥

## झयः ॥१११॥

झयन्तादव्ययीभावाद्वा टच् स्यात् ॥ उपसमिधं । उपसमित् । उपदृषदं । उपदृषत् ॥

## गिरेश्च सेनकस्य ॥११२॥

गिरि । इत्येतदन्तादव्ययीभावाद्वा टच् स्यात् ॥ उपगिरं । उपगिरि ॥ सेनकग्रहणं पूजार्थं ॥

## बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् ॥११३॥

सक्थि । अक्षि । इत्येतौ यौ स्वाङ्गवाचिनौ तदन्ताद्बहुव्रीहेः समासान्तः षच् स्यात् ॥ सुसक्थः । परमसक्थः ॥ विशालाक्षः । कमलाक्षः ॥ बहुव्रीहौ किं । परमसक्थि । परमाक्षि ॥ सक्थ्यक्ष्णोः किं । सुबाहुः ॥ स्वाङ्गात् किं । दीर्घसक्थि शकटं । स्थूलाक्षिरिक्षुः ॥

## अङ्गुलेर्दारुणि ॥११४॥

अङ्गुलि । इत्येतदन्ताद्बहुव्रीहेः षच् स्यात् । दारुणि समासार्थे ॥ द्व्यङ्गुलं । त्र्यङ्गुलं दारु ॥ दारुणि किं । पञ्चाङ्गुलिर्हस्तः ॥

## द्वित्रिभ्यां ष मूर्ध्नः ॥११५॥

द्वि । त्रि । इत्येताभ्यां परो यो मूर्धन् । इत्येष शब्दस्तदन्ताद्बहुव्रीहेः षप्रत्ययः स्यात् ॥ द्विमूर्धः । त्रिमूर्धः ॥ द्वित्रिभ्यां किं । उच्चैर्मूर्धा ॥

## अप् पूरणीप्रमाण्योः ॥११६॥

पूरणार्थप्रत्ययान्तोत्तरपदात् । प्रमाणी । इत्येतदन्ताच्च बहुव्रीहेरप् स्यात् ॥ कल्याणी पञ्चमी यासां रात्रीणां ताः । कल्याणीपञ्चमा रात्रयः ॥ स्त्री प्रमाणी येषां ते । स्त्रीप्रमाणाः कुटुम्बिनः ॥

## अन्तर्बहिर्भ्यां च लोम्नः ॥११७॥

अन्तर् । बहिस् । इत्येताभ्यां परो यो लोमन् । इत्येष शब्दस्तदन्ताद्बहुव्रीहेरप् स्यात् ॥ अन्तर्लोमः । बहिर्लोमः ॥

## अञ्नासिकायाः संज्ञायां नसं चास्थूलात् ॥११८॥

नासिका । इत्येतदन्ताद्बहुव्रीहेः संज्ञाविषये अच् स्यात् । नासिका । इत्येतस्य नस् । इत्येष आदेशश्च स्यात् । स चेन्नासिकाशब्दः स्थूलशब्दात् परो न भवति ॥ द्रुरिव नासिकास्य । द्रुणसः ॥ वार्ध्रीणसः । गोनसः ॥ संज्ञायां किं । तुङ्गनासिकः ॥ अस्थूलात् किं । स्थूलनासिकः ॥

## उपसर्गाच्च ॥११९॥

प्रादिभ्यः परो यो नासिकाशब्दस्तदन्ताद्बहुव्रीहेः समासान्तो ऽच् स्यात् । नासिकायाश्च नस्भावः ॥ प्रणसः । उन्नसः ॥

## सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः ॥ १२० ॥

सुप्रात । सुश्व । सुदिव । शारिकुक्ष । चतुरश्र । एणीपद । अजपद । प्रोष्ठपद । इत्येते बहुव्रीहयो ऽच्प्रत्ययान्ता निपात्यन्ते ॥ शोभनं प्रातरस्य । सुप्रातः ॥ शोभनं श्वो ऽस्य । सुश्वः ॥ शोभनं दिवास्य । सुदिवः ॥ शारेरिव कुक्षिरस्य । शारिकुक्षः ॥ चतस्रो ऽश्रयो ऽस्य । चतुरश्रः ॥ एण्या इव पादौ यस्य । एणीपदः ॥ अजस्येव पादौ यस्य । अजपदः ॥ प्रोष्ठो गौः । प्रोष्ठस्येव पादौ यस्य । प्रोष्ठपदः ॥

## नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्यां ॥१२१॥

नञ् । दुस् । सु । इत्येतेभ्यः परौ यौ हलि । सक्थि । इत्येतौ तदन्ताद्बहुव्रीहेर्वाच् स्यात् ॥ नञ् । अहलः । अहलिः ॥ असक्थः । असक्थिः ॥ दुस् । दुर्हलः । दुर्हलिः ॥ दुःसक्थः । दुःसक्थिः ॥ सु । सुहलः । सुहलिः ॥ सुसक्थः । सुसक्थिः ॥ शक्त्योरिति केचित् पठन्ति ॥ अशक्तः । अशक्तिः ॥ दुःशक्तः । दुःशक्तिः ॥ सुशक्तः । सुशक्तिः ॥

## नित्यमसिच् प्रजामेधयोः ॥१२२॥

नञ् । दुस् । सु । इत्येतेभ्यः परौ यौ प्रजा । मेधा । इत्येतौ तदन्ताद्बहुव्रीहेर्नित्यं समासान्तो ऽसिच् स्यात् ॥ अप्रजाः । दुष्प्रजाः । सुप्रजाः ॥ अमेधाः । दुर्मेधाः । सुमेधाः ॥ नित्यग्रहणं क्वचिदन्यत्रापि विधानार्थं । अल्पमेधाः ॥

## बहुप्रजाश्छन्दसि ॥१२३॥

बहुप्रजाः । इत्येतदसिच्प्रत्ययान्तं वेदे निपात्यते ॥ बहुप्रजा निर्ऋतिमाविवेश ॥ छन्दसि किं । बहुप्रजो ब्राह्मणः ॥

## धर्मादनिच् केवलात् ॥१२४॥

केवलात् पूर्वपदात् परो यो धर्म । इत्येष शब्दस्तदन्ताद्बहुव्रीहेः समासान्तो ऽनिच् स्यात् ॥ कल्याणधर्मा ॥ केवलात् किं । परमस्वधर्मः ॥

## जम्भा सुहरिततृणसोमेभ्यः ॥१२५॥

सु । हरित । तृण । सोम । इत्येतेभ्यः परं जम्भन् । इत्येतदनिच्प्रत्ययान्तं निपात्यते ॥ शोभनो जम्भो भक्ष्यो दन्तो वास्य । सुजम्भा ॥ हरितजम्भा । तृणजम्भा । सोमजम्भा ॥ सुहरिततृणसोमेभ्यः किं । पतितजम्भः ॥

## दक्षिणेर्मा लुब्धयोगे ॥१२६॥

दक्षिणेर्मन् । इत्येतद्बहुव्रीहावनिजन्तं निपात्यते । व्याधसंबन्धे सति ॥ दक्षिणमीर्मं व्रणमस्य । दक्षिणेर्मा मृगः । व्याधेन कृतव्रण इत्यर्थः ॥ लुब्धयोगे किं । दक्षिणेर्मं शकटं ॥

## इच् कर्मव्यतिहारे ॥१२७॥

कर्मव्यतिहारे यो बहुव्रीहिस्ततः समासान्त इच् स्यात् ॥ केशाकेशि । कचाकचि । मुसलामुसलि । दण्डादण्डि ॥

## द्विदण्ड्यादिभ्यश्च ॥१२८॥

द्विदण्डि । इत्येवमादीनां सिद्ध्यर्थं समासान्त इच् स्यात् ॥ द्विदण्डि प्रहरति । द्विमुसलि ॥ समुदायनिपातनादर्थविशेष एव । इह तु न । द्विदण्डा शाला ॥ क्वचित् तत्पुरुषादपि । निकुच्यकर्णि धावति ॥

## प्रसम्भ्यां जानुनो ज्ञुः ॥१२९॥

प्र । सं । इत्येताभ्यां परस्य जानु । इत्येतस्य बहुव्रीहौ ज्ञु । इत्येष आदेशः समासान्तः स्यात् ॥ प्रगते जानुनी यस्य । प्रज्ञुः ॥ संज्ञुः ॥ स्वाभिधानार्थमयं समासः ॥

ऊधस् । इत्येतदन्तस्य बहुव्रीहेः समासान्तोऽनङादेशः स्यात् ॥ कुण्डोध्नी । घटोध्नी ॥

## धनुषश्च ॥१३२॥

धनुस् । इत्येतदन्तस्य बहुव्रीहेः समासान्तोऽनङादेशः स्यात् ॥ शार्ङ्गधन्वा । पुष्पधन्वा ॥

## वा संज्ञायां ॥१३३॥

धनुस् । इत्येतदन्तस्य बहुव्रीहेः संज्ञायामनङादेशो वा स्यात् ॥ शतधनुः । शतधन्वा ॥ दृढधनुः । दृढधन्वा ॥

## जायाया निङ् ॥१३४॥

जाया । इत्येतदन्तस्य बहुव्रीहेर्निङ् । इत्येष आदेशः स्यात् ॥ युवतिर्जायास्य । युवजानिः ॥ प्रियजानिः । सुन्दरजानिः । शुभजानिः ॥

## गन्धस्येदुत्पूतिसुसुरभिभ्यः ॥१३५॥

उद् । पूति । सु । सुरभि । इत्येतेभ्यः परो यो गन्ध । इत्येष शब्दस्तदन्तस्य बहुव्रीहेः समासान्त इ । इत्येष आदेशः स्यात् ॥ उद्गन्धिः । पूतिगन्धिः । सुगन्धिः । सुरभिगन्धिः ॥ उत्पूतिसुसुरभिभ्यः किं । तीक्ष्णगन्धः ॥

## अल्पाख्यायां ॥१३६॥

अल्पाख्यायां यो गन्ध । इत्येष शब्दस्तदन्तस्य बहुव्रीहेः समासान्त इ । इत्येष आदेशः स्यात् ॥ सूपगन्धि । दधिगन्धि । घृतगन्धि भोजनं ॥ अल्पाख्यायां किं । पुष्पगन्धः ॥

## उपमानाच्च ॥१३७॥

उपमानवाचिनः परो यो गन्ध इत्येष शब्दस्तदन्तस्य बहुव्रीहेः समासान्त इ । इत्येष आदेशः स्यात् ॥ पद्मगन्धिः । करीषगन्धिः ॥

## पादस्य लोपोऽहस्त्यादिभ्यः ॥१३८॥

हस्त्यादिवर्जितादुपमानात् परो यः पाद । इत्येष शब्दस्तदन्तस्य बहुव्रीहेर्लोपः स्यात् ॥ व्याघ्रस्येव पादावस्य । व्याघ्रपात् ॥ स्थानिवत्तया लोपः समासान्तः ॥ हस्त्यादिभ्यः किं । हस्तिपादः ॥

## कुम्भपदीषु च ॥ १३९ ॥

कुम्भपदी । इत्येवमादिषु बहुव्रीहिषु पादस्य लोपः स्त्रियां नित्यं ङीप् च निपात्यते ॥ कुम्भस्येव पादावस्याः सा । कुम्भपदी ॥ स्त्रियां किं । कुम्भपादः ॥

## संख्यासुपूर्वस्य ॥ १४० ॥

संख्यापूर्वस्य । सु । इत्येवंपूर्वस्य च पाद । इत्येतदन्तस्य बहुव्रीहेर्लोपः स्यात् ॥ संख्या । द्विपात् । त्रिपात् । चतुष्पात् ॥ सु । सुपात् ॥

## वयसि दन्तस्य दतृ ॥ १४१ ॥

संख्यापूर्वस्य । सु । इत्येवंपूर्वस्य च दन्त । इत्येतस्य बहुव्रीहौ वयसि गम्यमाने दतृ । इत्येष आदेशः स्यात् ॥ द्विदन् । त्रिदन् । चतुर्दन् वृषभः ॥ सु । सुदन् ॥ वयसि किं । द्विदन्तः करी । सुदन्तः ॥ ऋकारो ङीवर्थः । द्विदती । सुदती वत्सतरी ॥

## छन्दसि च ॥ १४२ ॥

दन्त । इत्येतस्य बहुव्रीहौ छन्दसि दतृ । इत्येष आदेशः स्यात् ॥ उन्नतदत आलभते । उभयदतः प्रतिगृह्णाति ॥ छन्दसि किं । उभयदन्ताः ॥

## स्त्रियां संज्ञायां ॥ १४३ ॥

स्त्रीलिङ्गे बहुव्रीहौ संज्ञायां दन्त । इत्येतस्य दतृ । इत्येष आदेशः स्यात् ॥ अयोदती । फालदती ॥ संज्ञायां किं । समदन्ती । स्निग्धदन्ती ॥

## विभाषा श्यावारोकाभ्यां ॥ १४४ ॥

श्याव । अरोक । इत्येताभ्यां परस्य दन्त । इत्येतस्य बहुव्रीहौ दतृ । इत्येष आदेशो वा स्यात् ॥ श्यावदन् । श्यावदन्तः ॥ अरोकदन् । अरोकदन्तः ॥ संज्ञायामित्येव । श्यावदन्तः । अरोकदन्तः ॥

## अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च ॥ १४५ ॥

अग्र । इत्येतदन्तात् । शुद्ध । शुभ्र । वृष । वराह । इत्येतेभ्यश्च परस्य दन्त । इत्येतस्य बहुव्रीहौ दतृ । इत्येष आदेशो वा स्यात् ॥ अग्रान्त । कुड्मलाग्रदन् । कुड्मलाग्रदन्तः । शिखराग्रदन् । शिखराग्रदन्तः ॥ शुद्धदन् ।

शुद्धदन्तः ॥ शुभ्रदन् । शुभ्रदन्तः ॥ वृषदन् । वृषदन्तः ॥ वराहदन् । वराहदन्तः ॥ चकारोऽनुक्तसमुच्चयार्थः । अहिदन् । अहिदन्तः । मूषिकादन् । मूषिकादन्तः ॥

## ककुदस्यावस्थायां लोपः ॥१४६॥

ककुद । इत्येतदन्तस्य बहुव्रीहेरवस्थायां गम्यमानायां लोपः स्यात् ॥ अजातककुत् । पूर्णककुत् ॥ अवस्थायां किं । श्वेतककुदः ॥

## त्रिककुत् पर्वते ॥१४७॥

त्रिककुद् । इत्येतद्बहुव्रीहौ पर्वते वाच्ये निपात्यते ॥ त्रीणि ककुदान्यस्य । त्रिककुत् पर्वतविशेषः ॥ पर्वते किं । त्रिककुदोऽन्यः ॥

## उद्विभ्यां काकुदस्य ॥१४८॥

उद् । वि । इत्येताभ्यां परो यः काकुद । इत्येष शब्दस्तदन्तस्य बहुव्रीहेर्लोपः स्यात् ॥ उत्काकुत् । विकाकुत् ॥

## पूर्णाद्विभाषा ॥१४९॥

पूर्ण । इत्येतस्मात् परस्य बहुव्रीहौ काकुद । इत्येतस्य वा लोपः स्यात् ॥ पूर्णकाकुत् । पूर्णकाकुदः ॥ पूर्णात् किं । रक्तकाकुदः ॥

## सुहृद्दुर्हृदौ मित्रामित्रयोः ॥१५०॥

सुहृद् । दुर्हृद् । इत्येतौ बहुव्रीहौ क्रमान्मित्रामित्रयोर्वाच्ययोर्निपात्येते ॥ शोभनं हृदयमस्य । सुहृन्मित्रं ॥ दुष्टं हृदयमस्य दुर्हृदमित्रः ॥ हृदयस्य हृदादेशो निपातनात् ॥ मित्रामित्रयोः किं । सुहृदयः । दुर्हृदयः ॥

## उरःप्रभृतिभ्यः कप् ॥१५१॥

उरस् । इत्येवमादन्ताद्बहुव्रीहेः कप् स्यात् ॥ व्यूढमुरो यस्य सः । व्यूढोरस्कः ॥ विशालोरस्कः ॥ गणे येषामेकवचनान्तानां पाठस्तेषां द्विवचनबहुवचनान्तानां समासे शेषाद्विभाषेति कब्विकल्पः । द्विपुमान् । द्विपुंस्कः ॥

## इनः स्त्रियां ॥१५२॥

इन् । इत्येतदन्ताद्बहुव्रीहेः स्त्रियां कप् स्यात् ॥ बहुदण्डिका । बहुस्वामिका । बहुवाग्मिका ॥ स्त्रियां किं । बहुदण्डी । बहुदण्डिकः ॥

## नद्यृतश्च ॥ १५३ ॥

नद्यन्तात् । ऋ । इत्येतदन्ताच्च बहुव्रीहेः कप् स्यात् ॥ नदी । बहुकुमारीकः । बहुब्रह्मबन्धूकः ॥ ऋतः । बहुभर्तृकः । बहुकर्तृकः ॥

## शेषाद्विभाषा ॥ १५४ ॥

अनुक्तसमासान्ताच्छेषाधिकारस्याद्बहुव्रीहेर्वा कप् स्यात् ॥ बहुखट्वकः । बहुखट्वः ॥ बहुमालकः । बहुमालः ॥ शेषात् किं । व्याघ्रपात् । सुगन्धिः । प्रियपथः ॥ शेषाधिकारस्यात् किं । उपबहवः । उत्तरपूर्वा । सपुत्रः ॥

## न संज्ञायां ॥ १५५ ॥

संज्ञाविषये बहुव्रीहेः कप्न स्यात् ॥ विश्वेदेवः । विश्वयशाः ॥

## ईयसश्च ॥ १५६ ॥

ईयस् । इत्येतदन्तोत्तरपदाद्बहुव्रीहेः कप्न स्यात् ॥ बहुश्रेयान् । बहुश्रेयसी ॥

## वन्दिते भ्रातुः ॥ १५७ ॥

पूजिते ऽर्थे यो भ्रातृ । इत्येष शब्दस्तदन्ताद्बहुव्रीहेः कप्न स्यात् ॥ सुभ्राता । प्रशस्तभ्राता ॥ वन्दिते किं । मूर्खभ्रातृकः ॥ भ्रातुः किं । सुमातृकः ॥

## ऋतश्छन्दसि ॥ १५८ ॥

ऋ । इत्येतदन्ताद्बहुव्रीहेर्वेदे कप्न स्यात् ॥ हतमाता । हतपिता । सुहोता ॥ छन्दसि किं । पञ्चहोतृकः ॥

## नाडीतन्त्र्योः स्वाङ्गे ॥ १५९ ॥

नाडी । तन्त्री । इत्येतौ यौ स्वाङ्गवाचिनौ तदन्ताद्बहुव्रीहेः कप्न स्यात् ॥ बहुनाडिः कायः । बहुतन्त्रीर्ग्रीवा ॥ स्वाङ्गे किं । बहुनाडीकः स्तम्भः । बहुतन्त्रीका वीणा ॥ समासान्ताश्च प्रत्यया अलौकिके वाक्ये समाससंज्ञातः पूर्वमेव । उत्तरपदस्यावयवीभूयविभक्तेः प्रागुत्पद्यन्ते । अतो नात्रोपसर्जनह्रस्वः ॥

## निष्प्रवाणिश्च ॥१६०॥

निष्प्रवाणि । इत्येतद्बहुव्रीहौ निपात्यते ॥ निर्गता प्रवाणी तन्तुवायशलाकास्य । निष्प्रवाणिः पटः । नवीन इत्यर्थः ॥ कपो ऽभावो निपात्यते ॥

॥ इति सूत्रपाठे पञ्चमाध्यायस्य चतुर्थः पादो ऽध्यायश्च समाप्तः ॥

॥ अथ षष्ठो ऽध्यायः ॥

## एकाचो द्वे प्रथमस्य ॥१॥

अधिकारो ऽयं ष्यङः संप्रसारणमित्यतः प्राक् ॥ इत ऊर्ध्वं यद्वक्ष्यामस्तत्रैकाचः प्रथमस्य द्वे भवतः । इत्येवं तद्वेदितव्यं ॥ वक्ष्यति लिटि धातोरनभ्यासस्य । पपाच । जजागार । इयाय । आर ॥

## अजादेर्द्वितीयस्य ॥२॥

अधिकारो ऽयं ॥ अजादेर्धातोर्द्वितीयस्यैकाचो द्वे भवतः ॥ वक्ष्यति सन्यङोरिति । अट । अटिटिषति ॥ अश । अशिशिषति ॥

## न न्द्राः संयोगादयः ॥३॥

न् । द् । र् । इत्येते द्वितीयस्यैकाचो ऽवयवा आदिभूतादचः पराः संयोगादयो न द्विरुच्यन्ते ॥ उन्दी । उन्दिदिषति ॥ अड्ड । अड्डिडिषति ॥ अर्च । अर्चिचिषति ॥ न्द्राः किं । उच्छी । उचिच्छिषति ॥ संयोगादयः किं । अन । प्राणिणिषति ॥ द्वितीयस्येत्येव । दिद्रासति ॥ आदिभूतादचः पराः किं । इन्द्रीयिषति ॥

## पूर्वो ऽभ्यासः ॥४॥

अस्मिन् प्रकरणे ये द्वे विहिते तयोः पूर्वो ऽभ्याससंज्ञः स्यात् ॥ पपाच । पिपक्षति । अपीपचत् । पापच्यते ॥

## उभे अभ्यस्तं ॥५॥

अस्मिन् प्रकरणे ये द्वे विहिते ते उभे अभ्यस्तसंज्ञे भवतः ॥ ददाति । ददातु ॥ उभे किं । नेनिजति । अभ्यस्तानामादिरित्याद्युदात्तत्वं समुदाये यथा स्यात् । प्रत्येकं पर्यायेण वा मा भूत् ॥

## जक्षित्यादयः षट् ॥६॥

जक्ष । इत्यादयः सप्त धातवो ऽभ्यस्तसंज्ञका भवन्ति ॥ जक्ष ।- जक्षति ॥ जागृ । जाग्रति ॥ दरिद्रा । दरिद्रति ॥ चकासृ । चकासति ॥ शासु । शासति ॥ दीधीङ् । दीध्यते ॥ वेवीङ् । वेव्यते ॥

## तुजादीनां दीर्घो ऽभ्यासस्य ॥७॥

तुजादीनां धातूनामभ्यासस्य दीर्घः स्यात् ॥ तूतुजानः । मामहानः । अनड्वान् दाधार । स तूताव ॥ छन्दसि प्रत्ययविशेषे ऽयं दीर्घो न त्वन्यत्र ॥ तुजादिरपि स्वरूपतो ऽनुगन्तव्यो न तु क्वचित् पठ्यते ॥

## लिटि धातोरनभ्यासस्य ॥८॥

लिट्प्रत्यये परे ऽनभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वे भवतः । अजादेस्तु द्वितीयस्यैकाचः ॥ पपाच । पपाठ ॥ अजादेः । आट । इयाय । ऊर्णुनाव ॥ लिटि किं । कृष्णो नोनाव । नोनूयतेर्नोनाव ॥

## सन्यङोः ॥९॥

सन् । यङ् । इत्येतदन्तस्य धातोरनभ्यासस्य प्रथमस्यैकाचो द्वे भवतः । अजादेस्तु द्वितीयस्यैकाच. ॥ सन् । पिपक्षति । पिपठिषति ॥ यङ् । पापच्यते । पापठ्यते ॥ अजादेः । ऊर्णुनविषति । ऊर्णोनूयते ॥ अनभ्यासस्येत्येव । जुगुप्सिषते । लोलूयिषते ॥

## श्लौ ॥१०॥

श्लौ सति धातोर्द्वे भवतः ॥ हु । जुहोति ॥ डुभृञ् । बिभर्ति ॥ पॄ । पिपर्ति ॥

## चङि ॥११॥

चङ्प्रत्यये परे ऽनभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वे भवतः । अजादेस्तु द्वितीयस्यैकाचः ॥ अपीपचत् । आटिटत् ॥

## दाश्वान् साह्वान् मीढ्वाँश्च ॥ १२ ॥

दाश्वान् । साह्वान् । मीढ्वान् । इत्येते छन्दसि भाषायां च निपात्यन्ते ॥ दाशृ । दाश्वान् । क्वसुप्रत्ययः द्वित्वाभावो ऽनिट्त्वं च निपातनात् ॥ षह । साह्वान् । परस्मैपदमुपधादीर्घत्वमद्विर्वचनमनिट्त्वं च निपातनात् ॥ मिह । मीढ्वान् । अद्वित्वमनिट्त्वमुपधादीर्घत्वं ढत्वं च निपातनात् ॥

## ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे ॥ १३ ॥

ष्यङ्प्रत्ययान्तस्य पूर्वपदस्य पुत्र । पति । इत्येतयोरुत्तरपदयोः परतस्तत्पुरुषसमासे संप्रसारणं स्यात् ॥ कारीषगन्धीपुत्रः । कारीषगन्धीपतिः ॥ ष्यङः किं । इभ्यापुत्रः । क्षत्रियापतिः ॥ पुत्रपत्योः किं । कारीषगन्ध्याकुलं ॥ तत्पुरुषे किं । कारीषगन्ध्या पतिर्यस्य । कारीषगन्ध्यापतिर्ग्रामः ॥

## बन्धुनि बहुव्रीहौ ॥ १४ ॥

बन्धु । इत्येतस्मिन्नुत्तरपदे बहुव्रीहौ ष्यङन्तस्य पूर्वपदस्य संप्रसारणं स्यात् ॥ कारीषगन्धीबन्धुः ॥

## वचिस्वपियजादीनां किति ॥ १५ ॥

वच । ञिष्वप् । इत्येतयोर्यजादीनां च किति प्रत्यये परे संप्रसारणं स्यात् ॥ स्वपि । सुप्तः । वच । उक्तः । उक्तवान् । ब्रुवो वचिरपि गृह्यते ॥ स्वपि । सुप्तः । सुप्तवान् ॥ यजादिरा गणान्तात् । यज । इष्टः । इष्टवान् ॥ वप् । उप्तः । उप्तवान् ॥ वह । ऊढः । ऊढवान् ॥ टुओश्वि । शूनः । शूनवान् ॥

## ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ॥ १६ ॥

ग्रह । ज्या । वेञो वयिः । व्यध । वश । व्यच । ओव्रश्चू । प्रच्छ । भ्रस्जो । इत्येतेषां धातूनां किति ङिति च संप्रसारणं स्यात् ॥ ग्रह । गृहीतवान् । जरीगृह्यते ॥ ज्या । जीनवान् । जेजीयते ॥ वेञो वय् । ह्लोप आदेशः । ऊयतुः । ऊयुः । ङिति नास्त्युदाहरणमस्य ॥ व्यध । विद्धवान् ।

वेविध्यते ॥ वश । उशितवान् । उशन्ति ॥ व्यच । विचितवान् । वेविच्यते ॥ ओव्रश्चू । वृक्णवान् । वरीवृश्च्यते ॥ प्रच्छ । पृष्टवान् । परीपृच्छ्यते ॥ भ्रस्ज । भृष्टवान् । वरीभृज्ज्यते ॥

## लिट्यभ्यासस्योभयेषां ॥१७॥

वच्यादीनां ग्रह्यादीनां चाभ्यासस्य लिटि परे संप्रसारणं स्यात् ॥ वच् । उवाच । उवचिथ ॥ ञिष्वप् । सुष्वाप । सुष्वपिथ ॥ यज । इयाज । इयजिथ ॥ डुवप् । उवाप । उवपिथ ॥ ग्रहेरविशेषः । जग्राह । जग्रहिथ ॥ ज्या । जिज्यौ । जिज्यिथ ॥ ओव्रश्चू । वव्रश्च । वव्रश्चिथ ॥ पृच्छतिभृज्जत्योरविशेषः । पप्रच्छ । बभ्रज्ज ॥ किति लिटि तु द्वित्वात् परत्वाद्धातोः संप्रसारणे पुनः प्रसङ्गविज्ञानाद्द्वित्वं । ऊचतुः । ऊचुरित्यादि ॥ वच्यादीनां ग्रह्यादीनां चानुवृत्त्यैव सिद्ध उभयेषांग्रहणसामर्थ्याद्धलादिः शेषं बाधित्वा संप्रसारणं । विव्याध । विव्याच ॥

## स्वापेश्चङि ॥१८॥

ञिष्वप् । इत्येतस्य ण्यन्तस्य चङि परे संप्रसारणं स्यात् ॥ असूषुपत् । असूषुपतां । असूषुपन् ॥ चङि किं । स्वाप्यते ॥

## स्वपिस्यमिव्येञां यङि ॥१९॥

ञिष्वप् । स्यम् । व्येञ् । इत्येतेषां धातूनां यङि परे संप्रसारणं स्यात् ॥ सोषुप्यते । सेसिम्यते । वेवीयते ॥ यङि किं । स्वप्नक् ॥

## न वशः ॥२०॥

वश । इत्येतस्य धातोर्यङि परे संप्रसारणं न स्यात् ॥ वावश्यते । वावश्यते ॥ यङि किं । उष्टः । उशन्ति ॥

## चायः की ॥२१॥

चायृ । इत्येतस्य धातोर्यङि परे की । इत्येष आदेशः स्यात् ॥ चेकीयते । दीर्घासारणं यङ्लुगर्थं । चेकीतः ॥

## स्फायः स्फी निष्ठायां ॥२२॥

स्फायी । इत्येतस्य धातोर्निष्ठायां परतः स्फी । इत्ययमादेशः स्यात् ॥ स्फीतः । स्फीतवान् ॥ निष्ठायां किं । पस्फाये ॥

## स्त्यः प्रपूर्वस्य ॥ २३ ॥

स्त्यै । ष्ट्यै । इत्येतयोः प्रपूर्वयोर्निष्ठायां परतः संप्रसारणं स्यात् ॥ प्रस्तीमः । प्रस्तीमवान् । प्रस्तीतः । प्रस्तीतवान् ॥ प्रपूर्वस्य किं । संस्त्यानः । संस्त्यानवान् ॥

## द्रवमूर्तिस्पर्शयोः श्यः ॥ २४ ॥

श्यैङ् । इत्येतस्य धातोर्द्रवद्द्रव्यकाठिन्ये स्पर्शे च निष्ठायां परतः संप्रसारणं स्यात् ॥ शीनं घृतं । शीना यवागूः । द्रवावस्थायाः काठिन्यं गतमित्यर्थः ॥ स्पर्शे । शीतमुदकं । शीतो वायुः ॥ द्रवमूर्तिस्पर्शयोः किं । संश्यानो वृश्चिकः ॥

## प्रतेश्च ॥ २५ ॥

श्यैङ् । इत्येतस्य प्रतिपूर्वस्य निष्ठायां संप्रसारणं स्यात् ॥ प्रतिशीतः । प्रतिशीतवान् ॥

## विभाषाभ्यवपूर्वस्य ॥ २६ ॥

श्यैङ् । इत्येतस्य । अभि । अव । इत्येतत्पूर्वस्य निष्ठायां संप्रसारणं वा स्यात् ॥ अभिशीनं । अभिश्यानं । अभिशीतः । अभिश्यातो वायुः ॥ अवशीतं । अवश्यातमुदकं ॥ पूर्वग्रहणादिहापि । अभिसंशीनं । अभिसंश्यानं ॥

## शृतं पाके ॥ २७ ॥

शृतं । इत्येतत् क्तप्रत्ययान्तं पाकेऽभिधेये वा निपात्यते ॥ शृतं क्षीरं स्वयमेव । शृतं हविः स्वयमेव । अकर्मकत्वात् कर्तरि क्तः ॥ ण्यन्तस्याप्येतन्निपातनं । शृतं क्षीरं देवदत्तेन । शृतं हविर्देवदत्तेन ॥

## प्यायः पी ॥ २८ ॥

ओप्यायी । इत्येतस्य धातोर्निष्ठायां पी । इत्ययमादेशो वा स्यात् ॥ पीनं मुखं । पीनमुरः ॥ व्यवस्थितविभाषात्वात् सोपसर्गे न भवति । प्रप्यानः । आङ्पूर्वस्यान्धूधसोर्भवति । आपीनोऽन्धुः । आपीनमूधः ॥

## लिड्यङोश्च ॥२९॥

ओप्यायी । इत्येतस्य लिटि यङि च परे पी । इत्येष आदेशः स्यात् ॥ लिट् । पिप्ये । पिप्याते । पिप्यिरे । परपीभावे कृते पुनः प्रसङ्गविज्ञानाद्-द्वित्वं । एरनेकाच इति यण् ॥ यङ् । पेपीयते । पेपीयेते ॥

## विभाषा श्वेः ॥३०॥

टुओश्वि । इत्येतस्य धातोर्लिटि यङि च संप्रसारणं वा स्यात् ॥ शुशाव । शिश्वाय । शुशुवतुः । शिश्वियतुः ॥ यङ् । शोशूयते । शेश्वीयते ॥

## णौ च संश्चङोः ॥३१॥

टुओश्वि । इत्येतस्य सन्परे चङ्परे च णिचि संप्रसारणं वा स्यात् ॥ शुशाव-यिषति । शिश्वाययिषति ॥ अशूशवत् । अशिश्वयत् ॥

## ह्वः संप्रसारणं ॥३२॥

ह्वेञ् । इत्येतस्य धातोः सन्परे चङ्परे च णिचि संप्रसारणं स्यात् ॥ जुहा-वयिषति । जुहावयिषतः ॥ अजूहवत् । अजूहवतां ॥ संप्रसारणग्रहणं वि-भाषानिवृत्त्यर्थं ॥

## अभ्यस्तस्य च ॥३३॥

ह्वेञ् । इत्येतस्याभ्यस्तकारणस्य संप्रसारणं स्यात् ॥ द्वित्वात् प्राक् संप्रसारणं ॥ जुहाव । जोहूयते । जुहूषति ॥

## बहुलं छन्दसि ॥३४॥

ह्वेञ् । इत्येतस्य छंदे बहुलं संप्रसारणं स्यात् ॥ इन्द्राग्नी हुवे । लडुत्तमै-कवचने शपो लुकि संप्रसारणमुवङादेशः ॥

## चायः की ॥३५॥

चाय । इत्येतस्य धातोश्छंदे बहुलं की । इत्ययमादेशः स्यात् ॥ नाभ्यन्तं चिक्युः । निचिक्युषम् । चिकिद् इति गुणं ॥ न च भवति । अग्निज्योतिर्निचाय्य ॥

## अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताः श्रित-माशीराशीर्त्ताः ॥३६॥

अपस्पृधेयां । आनृचुः । आनृहुः । चिच्युषे । तित्याज । श्राता । श्रित । आशीर्तत् । आशीर्त । इत्येते शब्दा वेदे निपात्यन्ते ॥ स्पर्ध । इन्द्रश्च विष्णो यदपस्पृधेयां । लङि द्वित्वं संप्रसारणमकारलोपश्च । अपस्पर्धेथामिति लोके ॥ ऋच । य उग्रा अर्कमानृचुः । लिटि संप्रसारणमकारलोपश्च । आनर्चुरिति लोके ॥ अर्ह । आनृहुः । लिटि संप्रसारणमकारलोपश्च । आनर्हुरिति लोके ॥ च्युङ् । चिच्युषे । लिटि संप्रसारणमनिट्त्वं च । चुच्युविष इति लोके ॥ त्यज । तित्याज । अभ्यासस्य संप्रसारणं । तत्याजेति लोके ॥ श्रीञ् । आतास्त इन्द्रसोमाः । क्तप्रत्यये श्रादेशः । श्रीतमिति लोके ॥ श्रीञ् । श्रि आदेशः । सोमो गौरी अधि श्रितः ॥ श्रीञ् । आङ्पूर्वात् क्विपि शीरादेशः । आशीः ॥ श्रीञ् । आङ्पूर्वात् क्तप्रत्यये शीरादेशो निष्ठानत्वाभावश्च । आशीर्तः ॥

# न संप्रसारणे संप्रसारणं ॥ ३७ ॥

संप्रसारणे परतः पूर्वस्य यणः संप्रसारणं न स्यात् ॥ व्यध । विद्धः ॥ व्यच् । विचितः ॥ पुनः संप्रसारणग्रहणं विदेशस्थस्यापि संप्रसारणस्य प्रतिषेधार्थं । श्वयुवमघोनामतद्धिते । यूनः । यूना ॥ सूत्रारम्भसामर्थ्यात् परस्य यणः पूर्वं संप्रसारणं पूर्वस्य तु तन्निमित्तः प्रतिषेधः ॥

# लिटि वयो यः ॥ ३८ ॥

लिटि परे वय् । इत्येतदवयवस्य य् । इत्येतस्य संप्रसारणं न स्यात् ॥ ऊयतुः । ऊयुः ॥ लिटीत्येतदुत्तरार्थं ॥

# वश्चास्यान्यतरस्यां किति ॥ ३९ ॥

वयो यकारस्य किति लिटि परे वकारादेशो वा स्यात् ॥ ऊवतुः । ऊवुः ॥ किति किं । उवाय ॥

# वेञः ॥ ४० ॥

वेञ् । इत्येतस्य धातोर्लिटि परे संप्रसारणं न स्यात् ॥ ववौ । ववतुः । ववुः ॥

# ल्यपि च ॥ ४१ ॥

वेञ् । इत्येतस्य ल्यपि परे संप्रसारणं न स्यात् ॥ प्रवाय । उपवाय ॥

## ज्यश्च ॥४२॥

ज्या । इत्येतस्य धातोर्ल्यपि परे संप्रसारणं न स्यात् ॥ उपज्याय ॥

## व्यश्च ॥४३॥

व्येञ् । इत्येतस्य धातोर्ल्यपि परे संप्रसारणं न स्यात् ॥ प्रव्याय ॥ योगविभाग उत्तरार्थः ॥

## विभाषा परेः ॥४४॥

व्येञ् । इत्येतस्य परेरुत्तरस्य ल्यपि संप्रसारणं वा न स्यात् ॥ परिवीय यूपं । परिव्याय ॥

## आदेच उपदेशेऽशिति ॥४५॥

उपदेशे एजन्तस्य धातोराकारादेशः स्यात् । न तु शिति प्रत्यये ॥ देङ् । दाता । दातुं ॥ ग्लै । ग्लाता । ग्लातुं ॥ शो । शाता । शातुं ॥ एचः किं । कर्ता ॥ उपदेशे किं । चिञ् । चेता ॥ अशिति किं । ग्लायति ॥ इत्संज्ञकशकारादौ निषेधः । एशि भवत्येव । जग्ले । मम्ले ॥

## न व्यो लिटि ॥४६॥

व्येञ् । इत्येतस्य धातोर्लिटि परे आकारादेशो न स्यात् ॥ विव्याय । विव्ययिथ ॥

## स्फुरतिस्फुलत्योर्घञि ॥४७॥

स्फुर । स्फुल । इत्येतयोर्धात्वोरेचः स्थाने घञ्याकारादेशः स्यात् ॥ विस्फारः । विस्फालः ॥

## क्रीङ्जीनां णौ ॥४८॥

क्रीङ् । इङ् । जि । इत्येतेषामेचः स्थाने णिचि परे आकारादेशः स्यात् ॥ क्रापयति । अध्यापयति । जापयति ॥

## सिध्यतेरपारलौकिके ॥४९॥

षिधु । इत्येतस्य धातोरपारलौकिकेऽर्थे वर्तमानस्यैचः स्थाने णौ परत

आकारादेशः स्यात् ॥ अन्नं साधयति ॥ अपारलौकिके किं । सेधयति तापसं तपः ॥ सिध्यतेरिति श्यना निर्देशाद्दिवादिर्गृह्यते । न तु भ्वादिः ॥

## मीनातिमिनोतिदीङां ल्यपि च ॥५०॥

मीञ् । डुमिञ् । दीङ् । इत्येतेषां धातूनां ल्यब्विषय एज्निमित्तप्रत्ययविषये चाकारादेशः स्यात् ॥ प्रमाय । प्रमाता । प्रमातव्यं ॥ निमाय । निमाता । निमातव्यं ॥ उपदाय । उपदाता । उपदातव्यं ॥

## विभाषा लीयतेः ॥५१॥

लीङ् । ली । इत्येतयोर्धात्वोर्ल्यप्येज्निमित्तप्रत्ययविषये चाकारादेशो वा स्यात् ॥ विलाय । विलाता । विलातव्यं । विलीय । विलेता । विलेतव्यं ॥

## खिदेश्छन्दसि ॥५२॥

खिद् । इत्येतस्य धातोरेचः स्थाने वेदे आकारादेशो वा स्यात् ॥ चित्तं चिखेद । चिखाद ॥ छन्दसि किं । खेदयति ॥

## अपगुरो णमुलि ॥५३॥

गुरी । इत्येतस्य धातोरपपूर्वस्यैचः स्थाने णमुलि परे आकारादेशो वा स्यात् ॥ अपगारमपगारं । अपगोरमपगोरं ॥

## चिस्फुरोर्णौ ॥५४॥

चिञ् । स्फुर । इत्येतयोर्धात्वोर्णौ परे एच आकारादेशो वा स्यात् ॥ चापयति । चाययति ॥ स्फारयति । स्फोरयति ॥

## प्रजने वीयतेः ॥५५॥

वी । इत्येतस्य धातोर्गर्भग्रहणे वर्तमानस्य णिच्याकारादेशो वा स्यात् ॥ वापयति । वाययति वा गाः पुरो वातः । गर्भं ग्राहयतीत्यर्थः ॥

## बिभेतेर्हेतुभये ॥५६॥

ञिभी । इत्येतस्य धातोर्णिच्याकारादेशो वा स्यात् । प्रयोजकाद्भयं गति ॥ मुण्डो भापयते । भीषयते ॥ हेतुभये किं । कुञ्चिकयैनं भाययति देवदत्तः । यत्र कुञ्चिका भयहेतुर्न तु प्रयोजको देवदत्तः ॥

## नित्यं स्मयतेः ॥५७॥

ष्मिङ् । इत्येतस्य धातोः प्रयोजकात् स्मये सति णिचि परे नित्यमाकारादेशः स्यात् ॥ जटिलो विस्मापयते ॥ हेतुभये किं । कुञ्चिकयैनं विस्माययति ॥

## सृजिदृशोर्झल्यमकिति ॥५८॥

सृज । दृशिर् । इत्येतयोर्धात्वोर्झलादावकिति प्रत्यये परे ऽम् । इत्येष आगमः स्यात् ॥ स्रष्टा । स्रष्टव्यं । अस्राक्षीत् ॥ द्रष्टा । द्रष्टव्यं । अद्राक्षीत् ॥ झलि किं । सर्जनं ॥ अकिति किं । दृष्टः ॥

## अनुदात्तस्य चर्दुपधस्यान्यतरस्यां ॥५९॥

उपदेशे ऽनुदात्तस्य ऋकारोपधस्य धातोर्झलादावकिति प्रत्यये ऽमागमो वा स्यात् ॥ तृप । त्रप्ता । तर्प्ता ॥ दृप । द्रप्ता । दर्प्ता ॥ ऋदुपधस्य किं । भेत्ता ॥ झलीत्येव । तर्पणं ॥ अकितीत्येव । तृप्तः ॥

## शीर्षंश्छन्दसि ॥६०॥

शीर्षन् । इत्येतच्छिरःशब्दसमानार्थं शब्दान्तरं छन्दसि निपात्यते ॥ यत् ते शीर्ष्णो दौर्भाग्यं ॥ छन्दसि किं । शिरः ॥

## ये च तद्धिते ॥६१॥

शिरस् । इत्येतस्य यकारादौ तद्धिते परतः शीर्षन् । इत्येष आदेशः स्यात् ॥ शिरसि भवः । शीर्षण्यो मुख्यः ॥ तद्धिते किं । शिर इच्छति । शिरस्यति ॥

## अचि शीर्षः ॥६२॥

शिरस् । इत्येतस्याजादौ तद्धिते परे शीर्ष । इत्ययमादेशः स्यात् ॥ स्थूलशिरस इदं । स्थौलशीर्षं ॥ हास्तिशीर्षिः । इञ् बाह्वादित्वात् ॥

## पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ॥६३॥

पाद । दन्त । नासिका । मास । हृदय । निशा । असृज् । यूष । दोष् । यकृत् । शकृत् । उदक । आस्य । इत्येतेषां स्थाने शसादौ परतः क्रमेण

पद् । दत् । नस् । मास् । हृद् । निश् । असन् । यूषन् । दोषन् । यकन् । शकन् । उदन् । आसन् । इत्येत आदेशा वा भवन्ति ॥ पदः । पादान् । पदा । पादेन । पद्भ्यां । पादाभ्यां । पद्भिः । पादैः ॥ दतः । दन्तान् । दता । दन्तेन । दद्भ्यां । दन्ताभ्यां ॥ नसः । नासिकाः । नसा । नासिकया । नोभ्यां । नासिकाभ्यां ॥ मासः । मासान् । मासा । मासेन । माभ्यां । मासाभ्यां ॥ हृन्दि । हृदयानि । हृदा । हृदयेन । हृद्भ्यां । हृदयाभ्यां ॥ निशः । निशाः । निशा । निशया । निड्भ्यां । निशाभ्यां ॥ असानि । असृञ्जः । अस्ना । असृञ्जा । असभ्यां । असृग्भ्यां ॥ यूष्णः । यूषान् । यूष्णा । यूषेण । यूषभ्यां । यूषाभ्यां ॥ दोष्णः । दोषः । दोष्णा । दोषा । दोषभ्यां । दोर्भ्यां ॥ यकानि । यकृन्ति । यक्ना । यकृता । यकभ्यां । यकृद्भ्यां ॥ शकानि । शकृन्ति । शक्ना । शकृता । शकभ्यां । शकृद्भ्यां ॥ उदानि । उदकानि । उद्ना । उदकेन । उदभ्यां । उदकाभ्यां ॥ आसानि । आस्यानि । आस्ना । आस्येन । आसभ्यां । आस्याभ्यां ॥ शस्प्रभृतिषु किं । पादः । पादौ ॥ प्रभृतिशब्दः प्रकारे । तेन ककुद्दोषणी । शाला दोषणी । इत्यत्राप्यादेशो भवति ॥ अत्रच्छन्दसीति केचिदनुवर्तयन्ति । अपरे ऽविशेषेणेच्छन्ति ॥

## धात्वादेः षः सः ॥ ६४ ॥

उपदेशे धात्वादेः ष् । इत्येतस्य स् । इत्येष आदेशः स्यात् ॥ षह । सहते ॥ षिच । सिञ्चति ॥ धातुग्रहणं किं । षण्डः ॥ आदेः किं । कषति ॥ उपदेशे किं । षकारीयति ॥ के पुनः षोपदेशाः । ये तथा पठ्यन्ते ॥

## णो नः ॥ ६५ ॥

उपदेशे धात्वादेः । ण् । इत्येतस्य न् । इत्येष आदेशः स्यात् ॥ णीञ् । नयति ॥ णम् । नमति ॥ उपदेशे किं । णकारीयति ॥ धात्वादेः किं । अणति ॥ के पुनर्णोपदेशाः । ये तथा पठ्यन्ते ॥ नामधातोरयमपि नेष्यते ॥

## लोपो व्योर्वलि ॥ ६६ ॥

व् । य् । इत्येतयोर्वलि परे लोपः स्यात् ॥ दिदिवान् । दिदिवांसौ । गौधेरः । पचेरन् । जीरदानुः ॥ वलि किं । दीव्यते ॥

## वेरपृक्तस्य ॥६७॥

क्विप् । क्विन् । ण्वि । इत्येवमादेरपृक्तसंज्ञकस्य वेः । इत्येतस्य लोपः स्यात् ॥ क्विप् । ब्रह्महा । भ्रूणहा ॥ क्विन् । घृतस्पृक् ॥ ण्वि । अर्धभाक् ॥ अपृक्तस्य किं । दर्विः । जागृविः ॥

## हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् ॥६८॥

हलन्तात् परं । दीर्घौ यौ ङ्यापौ । तदन्ताच्च परं सु । ति । सि । इत्येतदपृक्तं हल् लुप्यते ॥ हलन्तात् । राजा । अबिभर्भवान् । अभिनो ऽत्र ॥ ङ्यन्तात् । कुमारी । गौरी । शार्ङ्गरवी ॥ आबन्तात् । खट्वा । बहुराजा । कारीषगन्धा ॥ हल्ङ्याब्भ्यः किं । ग्रामणीः ॥ दीर्घात् किं । अतिखट्वः । निष्कौशाम्बिः ॥ सुतिसीति किं । अभैत्सीत् । तिप्साहचर्यात् सिचो ऽग्रहणं ॥ अपृक्तं किं । भिनत्ति ॥ हल् किं । बिभेद ॥ हलन्तात् सुतिसीनां लोपः । ङ्याबन्ताभ्यां सोरेव तिसिपोरसंभवात् ॥

## एङ्ह्रस्वात् संबुद्धेः ॥६९॥

एङन्ताद्ध्रस्वान्ताच्चाङ्गात् परो हल् लुप्यते । स चेत् संबुद्धेरवयवः ॥ एङन्तात् । हे अग्ने । हे वायो ॥ ह्रस्वान्तात् । हे राम । हे नदि । हे वधु । हे कुण्ड । कुण्डशब्दादतो ऽमिति पररूपे च कृते कृतैकादेशस्य पूर्वान्तवत्त्वेनाद्ध्रस्वान्तत्वान्मकारलोपः । हे कतरदित्यादौ तु डित्वाट्टिलोपे ह्रस्वान्तत्वं नास्ति । अतो न तकारलोपः ॥ एङ्ग्रहणं किं । हे अग्ने । हे वायो । अत्रापवादत्वाद्गुणे कृते ह्रस्वात् परत्वाभावात् संबुद्धिलोपो न स्यात् ॥

## शेश्छन्दसि बहुलं ॥७०॥

शि । इत्येतस्य वेदे बहुलं लोपः स्यात् ॥ या क्षेत्रा । या वना ॥ लोके तु यानि क्षेत्राणि । यानि वनानि ॥

## ह्रस्वस्य पिति कृति तुक् ॥७१॥

ह्रस्वान्तस्य धातोः पिति कृति परतस्तुगागमः स्यात् ॥ अग्निचित् । प्रकृत्य ॥ ह्रस्वस्येति किं । ग्रामणीः ॥ पिति किं । कृतं ॥ कृति किं । पठतः ॥ [illegible] कृतं । अत्र न तुगन्तरङ्गत्वेन [illegible] ॥

## संहितायां ॥७२॥

अधिकारो ऽयं ॥ अनुदात्तं पदमेकवर्जमित्यतः प्राग्यदस्यागः संहितायामित्येवं तद्वेदितव्यं ॥ वक्ष्यति । इको यणचि । दध्यत्र । मध्वत्र ॥ संहितायां किं । दधि अत्र । मधु अत्र ॥

## छे च ॥७३॥

संहितायां विषये ह्रस्वस्य छकारे परे तुगागमः स्यात् ॥ इच्छति । गच्छति ॥ छस्य एवागमनो । न तु तदन्तः । तेन चिच्छिदतुरित्यत्र हलादिः शेषेण तुको निवृत्तिर्न भवति । अवयवावयवस्य समुदायावयवत्वाभावात् ॥

## आङ्माङोश्च ॥७४॥

आङ् । माङ् । इत्येतयोश्छकारे परे संहितायां तुक् स्यात् ॥ आच्छादयति । माच्छिदत् ॥

## दीर्घात् ॥७५॥

दीर्घस्य छकारे परे संहितायां तुक् स्यात् ॥ म्लेच्छति ॥

## पदान्ताद्वा ॥७६॥

दीर्घस्य पदान्तस्य छकारे परे संहितायां वा तुक् स्यात् ॥ बदरीच्छाया । बदरीछाया ॥

## इको यणचि ॥७७॥

इ । उ । ऋ । लृ । इत्येतेषामचि परे य् । व् । र् । ल् । इत्येत आदेशा भवन्ति ॥ दध्यत्र । मध्वत्र । पित्रर्थं । लनुबन्धः ॥

## एचोऽयवायावः ॥७८॥

ए । ओ । ऐ । औ । इत्येतेषामचि परे अय् । अव् । आय् । आव् । इत्येत आदेशाः क्रमेण भवन्ति ॥ चयनं । लवनं । चायकः । लावकः ॥

## वान्तो यि प्रत्यये ॥७९॥

ओ । औ । इत्येतयोर्यकारादौ प्रत्यये परे अव् । आव् । इत्येतावादेशौ भवतः ॥

बाभ्रव्यः । नाव्यं ॥ वान्तः किं । रायमिच्छति । रैयति ॥ यीति किं । गोभ्यां ॥ प्रत्यये किं । गोयानं ॥

## धातोस्तन्निमित्तस्यैव ॥ ८० ॥

धातोरेचो यकारादिप्रत्ययनिमित्तस्यैव यकारादौ प्रत्यये परे वान्तादेशः स्यात् ॥ लव्यं । अवश्यलाव्यं ॥ धातोः किं । प्रातिपदिकविषयको नियमः स्यात् । तथा सति बाभ्रव्य इत्यत्रैव स्यात् । गव्यमित्यत्र न स्यात् ॥ तन्निमित्तस्य किं । ओयते । औयत ॥ एवेति किं । धातुनियमनं यथा स्यात् । तन्निमित्तनियमो मा भूत् । शङ्कव्यं । पिचव्यं ॥ इष्टतो ऽवधारणार्थ एवकारः ॥

## क्षय्यजय्यौ शक्यार्थे ॥ ८१ ॥

क्षय्य । जय्य । इत्येतौ निपात्येते शक्यार्थे गम्यमाने ॥ क्षि । क्षेतुं शक्यः । क्षय्यः ॥ जि । जेतुं शक्यः । जय्यः ॥ उभयत्रैकारस्यायादेशः ॥ शक्यार्थे किं । क्षेतुं योग्यं । क्षेयं पापं । जेयं मनः ॥

## क्रय्यस्तदर्थे ॥ ८२ ॥

क्रय्य । इत्येतत्क्रियार्थे वस्तुनि निपात्यते ॥ डुक्रीञ् । क्रय्यं । क्रेतारः क्रीणीयुरिति बुद्ध्यापणे प्रसारितं वस्तु ॥ तदर्थे किं । क्रेयमन्यत् ॥

## भय्यप्रवय्ये चच्छन्दसि ॥ ८३ ॥

भय्य । प्रवय्या । इत्येतौ वेदे निपात्येते ॥ ञिभी । भय्यं किलासीत् ॥ वी प्रपूर्वः । वत्सतरी प्रवय्या ॥ उभयत्र बाहुलकादपादाने यत् । निपातनादयादेशः ॥ छन्दसि किं । भेयं । प्रवेयं ॥

## एकः पूर्वपरयोः ॥ ८४ ॥

अधिकारो ऽयं । ख्यत्यात् परस्येति सूत्रात् प्राक् ॥ इत ऊर्ध्वं यद्वक्ष्यामस्तत् पूर्वपरयोर्वर्णयोः स्थाने एक आदेशो बोध्यः ॥ वक्ष्यति । आद्गुणः । महेन्द्रः । पट्वीपकाः ॥ पूर्वपरग्रहणं द्वयोर्युगपदादेशार्थं । एकग्रहणं पृथगादेशनिवृत्त्यर्थं ॥

## अन्तादिवच्च ॥ ८५ ॥

पूर्वपरयोर्यो ऽयमेक आदेशः स पूर्वस्यान्तवत् स्यात् । परस्यादिवत् स्यात् ॥

ब्रह्मबन्धूः । अत्र पूर्वान्तवद्भावात् स्वादयः ॥ वृक्षौ । अत्र परादिवद्भावात् सुप्तं सुप्तिङन्तं पदमिति पदसंज्ञा भवति ॥

## षत्वतुकोरसिद्धः ॥ ८६ ॥

षत्वे तुकि च कर्तव्य एकादेशो ऽसिद्धः स्यात् ॥ को ऽसिचत् । सो ऽसिचत् । इह पूर्वरूपस्यासिद्धत्वादिणः परत्वाभावान्न षत्वं ॥ तुकि । अधीत्य । प्रेत्य । इह सवर्णदीर्घस्यासिद्धत्वाद्ध्रस्वस्य पिति कृति तुग्भवति ॥

## आद्गुणः ॥ ८७ ॥

अवर्णादचि परे पूर्वपरयोरेको गुणः स्यात् ॥ तवर्द्धिः । तवल्कारः । खट्वेन्द्रः । खट्वोदकं ॥

## वृद्धिरेचि ॥ ८८ ॥

अवर्णात् । ए । ओ । ऐ । औ । इत्येतेषु परेषु पूर्वपरयोर्वर्णयोः स्थाने वृद्धिरेकादेशः स्यात् ॥ ब्रह्मैडका । खट्वैडका । ब्रह्मौदनः । खट्वौदनः । ब्रह्मैतिकायनः । खट्वैतिकायनः । ब्रह्मौपगवः । खट्वौपगवः ॥

## एत्येधत्यूठ्सु ॥ ८९ ॥

अवर्णात् । इण् । एध । इत्येतयोर्धात्वोरेजाद्योः परयोरूठि च परे पूर्वपरयोर्वर्णयोर्वृद्धिरेकादेशः स्यात् ॥ उपैति । उपैमि ॥ उपैधते । प्रैधते ॥ ऊठि । प्रष्ठौहः । विश्वौहः ॥

## आटश्च ॥ ९० ॥

आटो ऽचि परे पूर्वपरयोर्वृद्धिरेकादेशः स्यात् ॥ आदीत् । ऐक्षिष्ट । औपीत् ॥

## उपसर्गादृति धातौ ॥ ९१ ॥

अवर्णान्तादुपसर्गादृकारादौ धातौ परे पूर्वपरयोः स्थाने वृद्धिरेकादेशः स्यात् ॥ प्रार्छति । उपार्छति ॥ उपसर्गात् किं । खट्वर्छति । प्रगता ऋच्छकास्मात् । प्रर्छकः ॥ ऋति किं । उपेतः ॥ तपरकरणं किं । उप ऋकारीयति । उपकारीयति । उत्तरसूत्रेण विकल्पो मा भूत् ॥

## वा सुप्यापिशलेः ॥ ९२ ॥

अवर्णान्तादुपसर्गादृकारादौ सुबन्तप्रकृतिके धातौ परे पूर्वपरयोर्वृद्धिरेकादेशो वा स्यात् ॥ प्रर्षभीयति । प्रार्षभीयति ॥ सावर्ण्याल्लृवर्णग्रहणं । प्रल्कारीयति । प्राल्कारीयति ॥ आपिशलिग्रहणं पूजार्थं ॥

## औतोऽम्शसोः ॥९३॥

आ ओत इति द्वे पदे ॥ ओ । इत्येतदन्तादम्शसोरचि पूर्वपरयोराकार एकादेशः स्यात् ॥ गां पश्य । द्यां पश्य । शसा साहचर्यादम् सुब्रेव गृह्यते । न तु तिङ् । अचिनवं ॥

## एङि पररूपं ॥९४॥

अवर्णान्तादुपसर्गादेङादौ धातौ परे पूर्वपरयोः पररूपमेकादेशः स्यात् ॥ प्रेजते । उपोषति ॥ वा सुपीत्यनुवर्तते । तेनैङादौ सुब्धातौ वा पररूपं भवति । उपेडकीयति । उपैडकीयति ॥

## ओमाङोश्च ॥९५॥

अवर्णात् । ओं । आङ् । इत्येतयोः परयोः पूर्वपरयोः स्थाने पररूपमेकादेशः स्यात् ॥ का ओं । कों ॥ आ ऊढा । ओढा । अद्योढा । अद्य आ ऊढा ॥ अवर्णात् ॥

## उस्यपदान्तात् ॥९६॥

अवर्णादपदान्तादुसि । इत्येतस्मिन् परे पूर्वपरयोः पररूपमेकादेशः स्यात् ॥ भिन्द्या उस् । भिन्द्युः । अदा उस् । अदुः ॥ अपदान्तादित्युत्तरार्थं ॥ अवर्णात् किं । चक्रुः ॥

## अतो गुणे ॥९७॥

अ । इत्येतस्मादपदान्तात् । अ । ए । ओ । इत्येतेषु परेषु पूर्वपरयोः पररूपमेकादेशः स्यात् ॥ पच अन्ति । पचन्ति ॥ पच ए । पचे ॥ अतः किं । यान्ति ॥ अपदान्तात् किं । दण्डाग्रं ॥

## अव्यक्तानुकरणस्यात इतौ ॥९८॥

अत् । इत्येतस्मादव्यक्तानुकरणात् । इतौ । इत्येतस्मिन् परे पूर्वपरयोः पररूपमेकादेशः स्यात् ॥ पटत् इति । पटिति ॥ अतः किं । मरुदिति ॥ इतौ किं । पटदत्र ॥

## नाम्रेडितस्यान्त्यस्य तु वा ॥ ९९ ॥

अत् । इत्येतस्याव्यक्तानुकरणस्याम्रेडितस्य । इति । इत्येतस्मिन् परे पररूपं न स्यात् । अन्त्यस्य तु तकारमात्रस्य वा स्यात् ॥ पटत्पटदिति । पटत्पटेति ॥ समुदायस्यानुकरणत्वे तु भवत्येव । पटत्पटिति ॥

## नित्यमाम्रेडिते डाचि ॥ १०० ॥

अत् । इत्येतस्याव्यक्तानुकरणस्य डाच्परकं यदाम्रेडितं तस्मिन् परे ऽन्त्यस्य तकारमात्रस्य परवर्णस्य च नित्यं पररूपं स्यात् ॥ पटपटाकरोति । डाचि कृते टिलोपात् पूर्वं द्वित्वमिष्यते ॥

## अकः सवर्णे दीर्घः ॥ १०१ ॥

अ । इ । उ । ऋ । लृ । इत्येतेभ्यः । अ । इ । उ । ऋ । लृ । इत्येतेष्वचु परेषु पूर्वपरयोः सवर्णदीर्घ एकादेशः स्यात् ॥ दैत्य अरिः । दैत्यारिः ॥ श्री ईशः । श्रीशः ॥ होतृ ऋकारः । होतृकारः ॥ अकः किं । अग्नये ॥ सवर्णे किं । दध्यत्र ॥ अचि किं । कुमारी शेते । नाज्झलावित्यत्र ग्रहणकशास्त्रस्यानभिनिर्वृत्तत्वादचः सवर्णग्रहणाद्दीर्घकारशकारयोः सावर्ण्यमस्त्येव ॥

## प्रथमयोः पूर्वसवर्णः ॥ १०२ ॥

अ । इ । उ । ऋ । लृ । इत्येतेभ्यः प्रथमाद्वितीययोरचि परे पूर्वपरयोः पूर्वसवर्णदीर्घ एकादेशः स्यात् ॥ देवाः । देवान् । हरी । हरीन् । भानू । भानून् । मातॄः । गमॄन् ॥ अचि किं । देवः ॥ अकः किं । नावौ ॥ दीर्घग्रहणं त्रिमात्रे पूर्वसवर्णः किं । अग्नी । इह परसवर्णो मा भूत् ॥ स्थानिनि त्रिमात्र आदेशो मा भूदिति ॥

## तस्माच्छसो नः पुंसि ॥ १०३ ॥

शसो ऽवयवस्य पुंलिङ्गे न् । इत्यय-
न् । इत्येतस्य पूर्वसवर्णदीर्घात् परस्य
मादेशः स्यात् ॥ देवान् । हरीन् । भानून् । पितॄन् ॥ पुंसि किं । दुर्गाः । गौरीः । वधूः । मातॄः पश्य ॥

## नादिचि ॥ १०४ ॥

अवर्णादिचि परे प्रथमयोः पूर्वसवर्णदीर्घो न स्यात् ॥ देवौ । वृक्षौ । खट्वे । कुण्डे ॥ आत् किं । अग्नी ॥ इचि किं । वृक्षाः ॥

## दीर्घाज्जसि च ॥१०५॥

दीर्घाज्जसि परे इचि च परे प्रथमयोः पूर्वसवर्णदीर्घो न स्यात् ॥ गौर्यौ । गौर्यः । वध्वौ । वध्वः ॥

## वा छन्दसि ॥१०६॥

दीर्घाज्जसि । इचि च परे छन्दसि प्रथमयोः पूर्वसवर्णदीर्घो वा स्यात् ॥ मारुतीश्चतसः । मारुत्यश्चतसः । वाराही उपानहौ । वाराह्यौ उपानहौ ॥

## अमि पूर्वः ॥१०७॥

अकोऽमि परे पूर्वपरयोः पूर्वरूपमेकादेशः स्यात् ॥ देवं । हरिं । भानुं । दुर्गां । गौरीं । वधूं ॥ वा छन्दसीत्यनुवर्तते । गौरीं । गौर्यं ॥

## संप्रसारणाच्च ॥१०८॥

संप्रसारणादचि परे पूर्वपरयोः पूर्वरूपमेकादेशः स्यात् ॥ यज । इष्टं । वप् । उप्तं । ग्रह । गृहीतं ॥

## एङः पदान्तादति ॥१०९॥

ए । ओ । एताभ्यां पदान्ताभ्यामति परे पूर्वपरयोः पूर्वरूपमेकादेशः स्यात् ॥ वने ऽत्र । वायो ऽत्र ॥ एङः किं । दध्यत्र ॥ पदान्तात् किं । चयनं । लवनं ॥ अति किं । वन इति । वायो इति ॥ तपरकरणं किं । वायवायाहि ॥

## ङसिङसोश्च ॥११०॥

ए । ओ । एताभ्यां ङसि । ङस् । एतयोरति परे पूर्वपरयोः पूर्वरूपमेकादेशः स्यात् ॥ वनेरागच्छति । वायोरागच्छति ॥ ङस् । वनेः स्वं । वायोः स्वं ॥ अपदान्तार्थ आरम्भः ॥

## ऋत उत् ॥१११॥

ऋ । ऋकारान्ताङ्ङसिङसोरति परे पूर्वपरयोः स्थाने । उ । इत्ययमेकादेशः स्यात् ॥ होतुरागतं । होतुः स्वं ॥

## ख्यत्यात् परस्य ॥ ११२ ॥

खि । खी । ति । ती । इत्येतस्मात् कृतयणादेशान्ङसिङसोरति परे पूर्वपरयोः स्थाने । उ । इत्ययमेकादेशः स्यात् ॥ खि । सख्युरागतं । सख्युः स्वं ॥ खी । सखीयतेः क्विप् । सख्युरागतं । सख्युः स्वं ॥ ति । पत्युरागतं । पत्युः स्वं ॥ ती । लूनीयतेः क्विप् । लून्युरागतं । लून्युः स्वं । निष्ठानत्वस्यासिद्धत्वात् तीशब्दो ऽयं ॥ ख्यत्य । इति विकृतनिर्देशादिह न भवति । अतिसखेः । सेनापतेः ॥

## अतो रोरप्लुतादप्लुते ॥ ११३ ॥

अ । इत्येतस्मादप्लुतात् परस्य उकारसंज्ञकस्य रु । इत्येतस्याप्लुत ऽति परे । उ । इत्ययमादेशः स्यात् ॥ वृक्षो ऽत्र । प्लक्षो ऽत्र ॥ अत इति तपरः किं । वृक्षा अत्र ॥ रोरिति सानुबन्धकग्रहणं किं । स्वरत्र ॥ अप्लुतात् किं । एहि सुस्रोता३ अत्र स्नाहि । प्लुतस्यासिद्धत्वादतः परो रुः । अप्लुताद्ग्रहणे तु विशेषणसामर्थ्यात् प्लुतो नासिद्धः ॥ अप्लुते किं । तिष्ठतु पय आ३ग्निदत्त ॥ अति किं । वृक्ष इह ॥ अतीति तपरः किं । वृक्ष आश्रितः ॥

## हशि च ॥ ११४ ॥

अ । इत्येतस्मादप्लुतात् परस्योकारसंज्ञकस्य रु । इत्येतस्य हशि परे । उ । इत्ययमादेशः स्यात् ॥ पुरुषो याति । पुरुषो हसति । पुरुषो ददाति ॥

## प्रकृत्यान्तःपादमव्यपरे ॥ ११५ ॥

ए । ओ । इत्येतावृक्पादमध्ये ऽवकारयकारपरके ऽति परे प्रकृत्या भवतः ॥ सुजाते अश्वसूनृते । अध्वर्यो अद्रिभिः सुतं ॥ अन्तःपादं किं । कयामति कुत एतास एते ऽर्चन्ति ॥ अव्यपर इति किं । ते ऽवदन् । ते ऽवस्यन् ॥ एङित्येव । प्रत्यग्निरुषसामग्र्यमख्यन् ॥ नान्तःपादमिति केचित् पठन्ति ॥

## अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च ॥ ११६ ॥

अव्यात् । अवद्यात् । अवक्रमुः । अव्रत । अयं । अवन्तु । अवस्यु । इत्येतेषां वकारयकारपरे ऽति परे । ए । ओ । इत्येतावृक्पादमध्ये प्रकृत्या

भवतः ॥ अग्निः प्रथमो वसुभिर्नो अव्यात् । मित्रमहो अवद्यात् । मा शिवासो अवक्रमुः । ते नो अव्रत । शतधारो अयं मणिः । ते नो अवन्तु पितरः । कुशिकासो अवस्यवः ॥

## यजुष्युरः ॥११७॥

उरः । इत्ययमेङन्तो ऽति परे यजुर्वेदे प्रकृत्या स्यात् ॥ उरो अन्तरिक्षं ॥ अनन्तःपादार्थं सूत्रं ॥ उरो । इति संबुद्ध्यन्तमुकारान्तमुरुशब्दं सूत्रे केचित् पठन्ति ॥

## आपो जुषाणो वृष्णो वर्षिष्ठे ऽम्बेअम्बाले ऽम्बिकेपूर्वे ॥११८॥

आपो । जुषाणो । वृष्णो । वर्षिष्ठे । इत्येते । अम्बे अम्बाले । इत्येतौ चाम्बिकेशब्दपूर्वौ यजुर्वेदे ऽति प्रकृत्या भवन्ति ॥ आपो अस्मान् मातरः शुन्धयन्तु । जुषाणो अग्निराज्यस्य । वृष्णो अंशुभ्यां । वर्षिष्ठे अधि नाके । अम्बे अम्बाले अम्बिके ॥ सूत्रे निपातनादेवाम्बार्थेति ह्रस्वत्वं न भवति ॥

## अङ्ग इत्यादौ च ॥११९॥

अङ्ग । इत्येतदेङन्तमङ्गशब्दादावति च परे यदेङन्तं तदकारे परे यजुर्वेदे प्रकृत्या स्यात् ॥ प्राणो अङ्गे अङ्गे निदीध्यत् । प्राणो अङ्गे अङ्गे अशोचियत् ॥

## अनुदात्ते च कुधपरे ॥१२०॥

ए । ओ । इत्येतौ यजुर्वेदे कवर्गधकारपरे ऽनुदात्ते ऽति परे प्रकृत्या भवतः ॥ अयं सो अग्निः । अयं ते अध्वरः ॥ अनुदात्ते किं । अधो ऽग्रे ॥ कुधपरे किं । सो ऽयमग्निः ॥

## अवपथासि च ॥१२१॥

अवपथाः । इत्येतस्मिन्ननुदात्ते परे एङ् प्रकृत्या स्यात् ॥ रुद्रेभ्यो अवपथाः । तिङ्ङतिङ इति निघातः ॥ अनुदात्ते किं । यद्रुद्रेभ्यो ऽवपथाः । निपातैर्यदित्यादिना निघातप्रतिषेधः ॥

## सर्वत्र विभाषा गोः ॥ १२२ ॥

गो । इत्येतदेङन्तं लोके वेदे चाति परे प्रकृत्या वा स्यात् ॥ गोअग्रं । गोग्रं । अन्यो गोअश्वेभ्यः । पशवो गोश्वाः ॥ एङन्तस्य किं । चित्रग्वग्रं ॥

## अवङ् स्फोटायनस्य ॥ १२३ ॥

गो । इत्येतस्यैङन्तस्य पदान्तस्याचि परे ऽवङ् । इत्ययमादेशो वा स्यात् ॥ गवाग्रं । गोग्रं । गवाजिनं । गोजिनं ॥ व्यवस्थितविभाषाश्रयणादिह नित्यमवङ् । गवाक्षः ॥ स्फोटायनग्रहणं पूजार्थं ॥

## इन्द्रे च नित्यं ॥ १२४ ॥

गो । इत्येतस्येन्द्रशब्दे परे नित्यमवङादेशः स्यात् ॥ गवेन्द्रो यज्ञेश्वरः ॥

## प्लुतप्रगृह्या अचि ॥ १२५ ॥

प्लुताः प्रगृह्याश्चाचि परे नित्यं प्रकृत्या भवन्ति ॥ अग्नी इति । वायू इति । खट्वे इति ॥ अचि किं । इह मा भूत् । जानु उ अस्य रुजति । जानू अस्य रुजति । जान्वस्य रुजति ॥

## आङो ऽनुनासिकश्छन्दसि ॥ १२६ ॥

आङ् । इत्येतस्याचि परे वेदे ऽनुनासिकादेशः स्यात् । स च प्रकृत्या स्यात् ॥ अभ्र आँ अपः ॥

## इको ऽसवर्णे शाकल्यस्य ह्रस्वश्च ॥ १२७ ॥

पदान्ता इको ऽसवर्णे ऽचि परे प्रकृत्या वा भवन्ति । ह्रस्वश्चैको भवति ॥ चक्रि अत्र । चक्र्यत्र । मधु अत्र । मध्वत्र ॥ पदान्ता इत्येव । गौर्यौ ॥ इकः किं । खट्वेन्द्रः ॥ असवर्णे किं । कुमारीह ॥ शाकल्यग्रहणं पूजार्थं । ह्रस्वविधानसामर्थ्यादेव यणादेशेन सह विकल्पसिद्धेः ॥

## ऋत्यकः ॥ १२८ ॥

अ । इ । उ । ऋ । लृ । इत्येत ऋति परे शाकल्यमतेन प्रकृत्या भवन्ति । ह्रस्वश्चैतेषां ॥ ब्रह्मऋषिः । ब्रह्मर्षिः ॥ कुमारि ऋश्यः । कुमार्यृश्यः ॥

होतृऋश्यः । होतृश्यः ॥ ऋति किं । खट्वेन्द्रः ॥ अकः किं । वृक्षावृश्यः ॥ सवर्णार्थमनिगन्तार्थं च सूत्रं ॥

## अप्लुतवदुपस्थिते ॥१२९॥

अवैदिक इतिशब्दे परे प्लुतो ऽप्लुतवत् स्यात् ॥ अप्लुतकार्यं गुणादिकं करोतीत्यर्थः ॥ सुश्लोका३ इति । सुश्लोकेति ॥ वत् किं । अप्लुत इत्युक्ते प्लुत एव निषिध्येत । तथा सति प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणं न स्यात् ॥ अग्नी३ इति ॥

## ई३ चाक्रवर्मणस्य ॥१३०॥

ई३ । इत्येषः प्लुतो ऽचि परे ऽप्लुतवद्वा स्यात् ॥ अस्तु हीत्यब्रवीत् । अस्तु ही३ इत्यब्रवीत् ॥ चिनुहीदं । चिनुही३ इदं ॥ चाक्रवर्मणग्रहणं विकल्पार्थं । ऽन्यत्र विभाषेयं ॥

## दिव उत् ॥१३१॥

दिव् । इत्येतस्य प्रातिपदिकस्य पदान्ते । उत् । इत्ययमादेशः स्यात् ॥ द्युभ्यां । द्युभिः ॥ पदान्ते किं । दिवौ । दिवः ॥

## एतत्तदोः सुलोपो ऽकोरनञ्समासे हलि ॥१३२॥

एतद् । तद् । इत्येतयोरककारयोः संख्याबोधको यः सु । इत्येषः प्रत्ययस्तस्य हलि परे लोपः स्यात् । न तु नञ्समासे ॥ एष ददाति । परमैष ददाति ॥ स भुङ्क्ते । परमस भुङ्क्ते ॥ एतत्तदोः किं । यो ददाति । यो भुङ्क्ते ॥ सुग्रहणं किं । एतौ गावौ ॥ अकोः किं । एषको रुद्रः । सको देवः ॥ अनञ्समासे किं । अनेषो ददाति । असो ददाति ॥ हलि किं । एषो ऽत्र । सो ऽत्र ॥

## स्यश्छन्दसि बहुलं ॥१३३॥

स्यः । इत्येतस्य छन्दसि हलि परे बहुलं सुलोपः स्यात् ॥ एष स्य ते मधुमान् ॥ न च भवति । यत्र स्यो निपतन् ॥

## सो ऽचि लोपे चेत् पादपूरणं ॥१३४॥

सः । इत्येतस्याचि परे सुलोपः स्यात् । लोपे सत्येव चेत् पादः पूर्यते ॥

नेन्द्रो राजा जयति चर्षणीनां । सौषधीरनुरुध्यसे । सैष दाशरथी रामः । सैष राजा युधिष्ठिरः ॥ लोपे चेदित्यादि किं । स इव व्याघ्रो भवेत् ॥ अचीति स्पष्टार्थं ॥ लोपे सत्येवेत्यवधारणं बहुलग्रहणानुवृत्त्या लभ्यते । तेनेह न । सो ऽहमाजन्म शुद्धानां । अत्र लोपाभावे ऽपि पादपूर्तेः सत्त्वात् ॥

## सुट् कात् पूर्वः ॥ १३५ ॥

इत ऊर्ध्वं पारस्करप्रभृतीनीति यावत् सुट् । इत्येतत् कात् पूर्व इत्येतच्चाधिकृतं वेदितव्यं ॥ वक्ष्यति संपर्युपेभ्यः करोतौ भूषणे । संस्कर्ता । सँस्कर्तुं ॥ कात्पूर्वग्रहणं सुटो ऽभक्तत्वबोधनार्थं । तेन सँस्कृषीष्ट सँस्क्रियते । इत्यत्र संयोगादिलक्षणाविड्गुणौ न भवतः । संचस्करतुरित्यत्र गुणस्तु तन्मध्यपतितन्यायात् ॥ सुट्स्तुस्वञ्जामिति विशेषणार्थष्टकारः ॥

## अडभ्यासव्यवाये ऽपि ॥ १३६ ॥

अडागमेन । अभ्यासेन च व्यवधाने ऽपि कात् पूर्वः सुट् स्यात् ॥ समस्करोत् । समस्कार्षीत् ॥ अभ्यासेन । संचस्कार । परिचस्कार ॥

## संपर्युपेभ्यः करोतौ भूषणे ॥ १३७ ॥

सं । परि । उप । इत्येतेभ्यो भूषणे ऽर्थे करोतौ परे ककारात् पूर्वः सुट् स्यात् ॥ सँस्कर्ता । सँस्कर्तुं ॥ समः सुटीति रुत्वे विसर्गे च कृते संपुंकानामिति तस्य सकारः । पूर्वस्य चानुनासिकः ॥ परिष्कर्तुं । परिनिविभ्य इति षत्वं ॥ उपस्कर्ता । उपस्कर्तुं ॥ भूषणे किं । उपकरोति ॥ संपूर्वस्य क्वचिदभूषणे ऽपि सुट् । सँस्कृतमन्नमिति ॥

## समवाये च ॥ १३८ ॥

सं । परि । उप । इत्येतेभ्यः समूहार्थे करोतौ परे ककारात् पूर्वः सुट् स्यात् ॥ तत्र न सँस्कृतं । परिष्कृतं । उपस्कृतं ॥

## उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु ॥ १३९ ॥

उप । इत्येतस्मात् करोतौ परे ककारात् पूर्वः सुट् स्यात् । प्रतियत्न । वैकृत । वाक्याध्याहार । इत्येतेष्वर्थेषु गम्यमानेषु ॥ प्रतियत्नः सतो गुणान्तराधानं । एधोदकस्योपस्कुरुते ॥ विकृतमेव वैकृतं । उपस्कृतं ॥ वाक्या-

ध्याहारे । वादिनमुपस्कुरुते । वाक्याध्याहारेण ब्रूत इत्यर्थः ॥ एतेषु किं । उपकरोति ॥

## किरतौ लवने ॥१४०॥

उप । इत्येतस्मात् कॄ । इत्येतस्मिन् धातौ परे छेदने गम्ये ककारात् पूर्वः सुट् स्यात् ॥ उपस्कारं लुनन्ति । णमुलत्र । विक्षिप्य लुनन्तीत्यर्थः ॥ लवने किं । उपकिरति ॥

## हिंसायां प्रतेश्च ॥१४१॥

प्रति । उप । इत्येताभ्यां कॄ । इत्येतस्मिन् धातौ परे हिंसायां विषये सुट् कात् पूर्वः स्यात् ॥ प्रतिस्कीर्णं । हन्त ते वृषल भूयात् । उपस्कीर्णं । हे वृषल ते तथा विक्षेपो ऽस्तु यथा हिंसामनुबध्नातीत्यर्थः ॥ हिंसायां किं । प्रतिकीर्णं ॥

## अपाच्चतुष्पाच्छकुनिष्वालेखने ॥१४२॥

अप । इत्येतस्मात् कॄ । इत्येतस्मिन् धातौ परे पश्वालेखने पक्ष्यालेखने च ककारात् पूर्वः सुट् स्यात् ॥ अपस्किरते वृषभो हृष्टः ॥ अपस्किरते कुक्कुटो भक्ष्यार्थी । अपस्किरते श्वाश्रयार्थी ॥ आलिख्य विक्षिपतीत्यर्थः ॥ चतुष्पाच्छकुनिष्विति किं । अपकिरति देवदत्तः ॥

## कुस्तुम्बुरूणि जातिः ॥१४३॥

कुस्तुम्बुरु । इत्येतस्मिन् शब्दे सुडागमो निपात्यते जातिश्चेद्भवति ॥ कुस्तुम्बुरुर्धान्यकम् । तत्फलानि कुस्तुम्बुरूणि ॥ जातिः किं । कुत्सितानि तुम्बुरूणि तिन्दुकीफलानि । कुतुम्बुरूणि ॥

## अपरस्पराः क्रियासातत्ये ॥१४४॥

अपरस्पर । इत्येतस्मिन् सुडागमो निपात्यते क्रियासातत्ये गम्यमाने ॥ अपरस्पराः सार्था गच्छन्ति ॥ क्रियासातत्ये किं । अपरपराः सार्था गच्छन्ति । अपरं च परं च सकृदेव गच्छन्तीत्यर्थः ॥

## गोष्पदं सेवितासेवितप्रमाणेषु ॥१४५॥

गोपद । इत्येतस्मिन् सुण्निपात्यते षत्वं च सेविते ऽसेविते प्रमाणे च

विषये ॥ गोष्पदो गोसेवितो देशः ॥ असेविते । अगोष्पदान्यरण्यानि ॥ प्रमाणे । गोष्पदमात्रं क्षेत्रं ॥ सेवितेत्यादि किं । गोपदं ॥

## आस्पदं प्रतिष्ठायां ॥ १४६ ॥

आस्पद । इत्येतस्मिन्नात्मयापनाय स्थानं प्रतिष्ठा । तस्यां गम्यमानायां सुणिन-पात्यते ॥ आस्पदं लब्धं ॥ प्रतिष्ठायां किं । आपदं ॥

## आश्चर्यमनित्ये ॥ १४७ ॥

आश्चर्य । इत्येतस्मिन्नद्भुतभावे सुणिनपात्यते ॥ आश्चर्यं यदि स भुञ्जीत । अद्भुतमित्यर्थः ॥ अनित्ये किं । आचर्यं कर्म ॥

## वर्चस्केऽवस्करः ॥ १४८ ॥

अवस्कर । इत्येतस्मिन्नन्नमले वाच्ये सुणिनपात्यते ॥ अवस्करोऽन्नमलं । तत्संबन्धाद्देशश्च ॥ वर्चस्के किं । अवकरः ॥

## अपस्करो रथाङ्गं ॥ १४९ ॥

अपस्कर । इत्येतस्मिन् रथाङ्गे वाच्ये सुणिनपात्यते ॥ अपस्करो रथावयवः ॥ रथाङ्गे किं । अपकरः ॥

## विष्किरः शकुनिर्विकिरो वा ॥ १५० ॥

विष्किर । इत्येतस्मिन् शकुनौ वाच्ये सुड्वा स्यात् ॥ विष्किरः । विकिरः शकुनिः ॥ वाग्रहणेन सुटो विकल्पे सिद्धे विकिरग्रहणं विकिर इत्येतस्यापि शकुनेरन्यत्र प्रयोगो मा भूदिति ॥

## ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ॥ १५१ ॥

चन्द्र । इत्येतस्मिन्नुत्तरपदे मन्त्रविषये ह्रस्वादुत्तरः सुट् स्यात् ॥ सुश्चन्द्रो युष्मन् ॥ ह्रस्वात् किं । सूर्याचन्द्रमसौ ॥ मन्त्रे किं । सुचन्द्रा पौर्णमासी ॥ उत्तरपदग्रहणात् समास एव । इह तु न । शुक्रमसि चन्द्रमसि ॥

## प्रतिष्कशश्च कशेः ॥ १५२ ॥

प्रतिष्कश । इत्येतस्मिन् कश । इत्येतस्य धातो रूपे प्रतिपूर्वे सुट् षत्वं च निपात्यते ॥ प्रतिष्कशः । वार्त्तापुरुषः सहायः पुरोगन्ता वा ॥ कशेः किं ।

प्रतिगतः कशां । प्रतिकशो ऽश्वः ॥ यद्यपि कशधातोरेव कशाशब्दः । तथापि कशेरिति इकप्रत्ययेन धातुनिर्देशादुपसर्गग्रहणाद्धात्वन्तरोपसर्गान्न भवति ॥

## प्रस्कण्वहरिश्चन्द्रावृषी ॥१५३॥

प्रस्कण्व । हरिश्चन्द्र । इत्येतयोः सुण्निपात्यते । ऋषी चेदभिधेयौ भवतः ॥ प्रस्कण्व ऋषिः ॥ हरिश्चन्द्र ऋषिः ॥ ऋषी किं । प्रकण्वो देशः । हरिचन्द्रो माणवकः ॥

## मस्करमस्करिणौ वेणुपरिव्राजकयोः ॥१५४॥

मस्कर । मस्करिन् । इत्येतौ क्रमाद्वेणुपरिव्राजकयोर्वाच्ययोर्निपात्येते ॥ मस्करो वेणुः ॥ मस्करी परिव्राजकः ॥ डुकृञ् माङ्पूर्वः । तस्मात् करणे ऽच् । माङो ह्रस्वः । सुडिनिप्रत्ययश्च निपातनात् ॥ वेणुपरिव्राजकयोः किं । मकरो ग्राहः । मकरी समुद्रः ॥

## कास्तीराजस्तुन्दे नगरे ॥१५५॥

कास्तीर । अजस्तुन्द । इत्येतयोर्नगरे वाच्ये सुण्निपात्यते ॥ कास्तीरं । अजस्तुन्दं नगरं ॥ नगरे किं । कातीरं । अजतुन्दं ॥

## कारस्करो वृक्षः ॥१५६॥

कारस्कर । इति सुण्निपात्यते वृक्षश्चेद्वाच्यः ॥ कारस्करो विषवृक्षः ॥ वृक्षः किं । कारकरो ऽन्यः ॥

## पारस्करप्रभृतीनि च संज्ञायां ॥१५७॥

पारस्कर । इत्येवमादीनि संज्ञाविषये ससुट्कानि निपात्यन्ते ॥ पारस्करः । तस्करः । बृहस्पतिः । प्रस्तुम्पति । प्रायश्चित्तिः । प्रायश्चित्तं । प्रायचित्तिः । प्रायचित्तं ॥

## अनुदात्तं पदमेकवर्जं ॥१५८॥

परिभाषेयं स्वरविधिविषया ॥ यस्मिन्नुदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा शेषं तत् पदमनुदात्ताच्कं भवति । इत्युपदिष्टं शेषं ॥ पचति धातोरन्त उदात्तः । गोपायति ॥

## कर्षात्वतो घञो ऽन्त उदात्तः ॥१५९॥

कर्ष । इत्येतस्य धातोः । आकारवतो घञ्प्रत्ययान्तस्य चान्त उदात्तः स्यात् ॥ कृष भ्वादिः । कर्षः । तुदादेः कृषतेस्तु कर्ष इत्याद्युदात्त एव ॥ घञः । पाकः । त्यागः । रागः । दायः । धायः ॥ ञित्स्वरबाधको ऽयं ॥

## उञ्छादीनां च ॥ १६० ॥

उञ्छ । इत्येवमादीनामन्त उदात्तः स्यात् ॥ उञ्छः । म्लेच्छः । जञ्जः । जल्पः ॥ घञन्तत्वाञ्ञित्स्वरे प्राप्ते सूत्रं ॥

## अनुदात्तस्य च यत्रोदात्तलोपः ॥ १६१ ॥

यस्मिन्ननुदात्ते उदात्तो लुप्यते तस्यानुदात्तस्यादिरुदात्तः स्यात् ॥ कुमारी । पयः । पया । कुमुद्वान् । नड्वान् । वेतस्वान् ॥ अनुदात्तस्येति किं । प्रासङ्ग्यः । यति स्वरित उदात्तो लुप्यते ॥

## धातोः ॥ १६२ ॥

धातुमात्रस्यान्त उदात्तः स्यात् ॥ पचति । गोपायति । याति । ऊर्णोति ॥

## चितः ॥ १६३ ॥

च् । इत्येष इत्संज्ञको यस्य तस्यान्त उदात्तः स्यात् ॥ भञ्जभासमिदो घुरच् । भङ्गुरं । भासुरं । मेदुरं ॥ कुण्डिनच् । कुण्डिनाः ॥ बहुच् । बहुपटवः ॥ अकच् । उच्चकैः ॥

## तद्धितस्य ॥ १६४ ॥

चितस्तद्धितस्यान्त उदात्तः स्यात् ॥ च्फञ् । कौञ्जायनाः । मौञ्जायनाः ॥ परस्य ञित्स्वरस्य बाधनार्थमेतत् ॥

## कितः ॥ १६५ ॥

क् । इत्संज्ञको यस्य तद्धितस्य तस्यान्त उदात्तः स्यात् ॥ फक् । नाडायनः ॥ ठक् । आक्षिकः ॥

## तिसृभ्यो जसः ॥ १६६ ॥

तिसृ । इत्येतस्मात् परस्य जस् । इत्येतस्यान्त उदात्तः स्यात् ॥ तिस्रस्तिष्ठ-न्ति ॥ जसः किं । तिसृभ्यः ॥ उदात्तस्वरितयोर्यणः इति स्वरिते प्राप्ते वचनं ॥

## चतुरः शसि ॥१६७॥

चतुर् । इत्यतस्यान्त उदात्तः स्यात् । शसि परे ॥ चतुरः पश्य ॥ चतसादेश आद्युदात्तनिपातनान्नेह भवति । चतस्रः पश्य ॥

## सावेकाचस्तृतीयादिर्विभक्तिः ॥१६८॥

सप्तमीबहुवचने य एकाच् तस्मात् परा तृतीयादिर्विभक्तिरुदात्ता स्यात् ॥ वाचा । वाग्भ्यां । वाग्भिः ॥ सौ किं । राज्ञा । राज्ञे ॥ एकाचः किं । हरिणा ॥ तृतीयादिः किं । वाचौ ॥ विभक्तिः किं । वाक्तरा ॥

## अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ॥१६९॥

अनित्यसमासे यदुत्तरपदमन्तोदात्तमेकाच् तस्मात् परा तृतीयादिर्विभक्तिरुदात्ता वा स्यात् ॥ परमवाचा । परमवाचे ॥ पक्षे समासान्तोदात्तत्वं ॥ अन्तोदात्तात् किं । अवाचा । तत्पुरुषे तुल्यार्थ इति पूर्वपदप्रकृतिस्वरः ॥ अनित्यसमासे किं । अग्निचित् । अत्रोपपदसमासो नित्याधिकारविहितस्तत्र कृदुत्तरपदप्रकृतिस्वरो भवति ॥

## अञ्चेश्छन्दस्यसर्वनामस्थानं ॥१७०॥

अञ्चु । इत्यतस्मात् परासर्वनामस्थानविभक्तिर्वेदे ऽनुदात्ता स्यात् ॥ इन्द्रो दधीचो अस्थिभिः ॥

## ऊडिदंपदाद्यप्पुम्रैद्युभ्यः ॥१७१॥

ऊठ् । इदं । पदादि । अप् । पुम् । रै । दिव् । इत्येतेभ्यो ऽसर्वनामस्थानविभक्तिरुदात्ता स्यात् ॥ ऊठ् । प्रष्ठौहः । प्रष्ठौहा ॥ इदं । आभ्यां । एभिः ॥ पद्दन्नोमास्हृन्निश् । इत्येते पदादयस्तेभ्यः । पदः । पदा । दतः । दता । नसः । नसा । मासः । मासा । हृदः । हृदा । निशः । निशा ॥ असन्प्रभृतिभ्यो विभक्तिरनुदात्तैव ॥ अप् । अपः । अद्भिः ॥ पुम् । पुंसा । पुंभ्यां ॥ रायः पश्य । राभ्यां । राभिः ॥ दिवः । दिवा ॥

## अष्टनो दीर्घात् ॥१७२॥

अष्टन् । इत्यतस्माद्दीर्घान्तादसर्वनामस्थानविभक्तिरुदात्ता स्यात् ॥ अष्टाभिः ।

अष्टाभ्यः ॥ दीर्घात् किं । अष्टसु ॥ दीर्घग्रहणमष्टन आत्वविकल्पं कृतात्वस्य पदसंज्ञां च ज्ञापयति । वाल्युपोत्तममिति प्राप्ते वचनं ॥

## शतुरनुमो नद्यजादी ॥ १७३ ॥

अनुम् यः शतृ । इत्येष प्रत्ययस्तदन्तादन्तोदात्तात् परा नदी । अजादिरसर्वनामस्थानविभक्तिश्चोदात्ता स्यात् ॥ नदी । तुदती । नुदती ॥ अजादिः । तुदता । नुदता ॥ अनुमः किं । तुदन्ती ॥ नद्यजादी किं । तुद्भ्यां ॥ अन्तोदात्तात् किं । ददती । दधती । अभ्यस्तानामादिरित्याद्युदात्तावेतौ ॥

## उदात्तयणो हल्पूर्वात् ॥ १७४ ॥

उदात्तस्य स्थाने यो यण् हल्पूर्वस्तस्मात् परा नदी । अजादिरसर्वनामस्थानविभक्तिश्चोदात्ता स्यात् ॥ तृच् । कर्त्री । प्रलवित्री । प्रसवित्री । कर्त्रा । हर्त्रा । प्रलवित्रा ॥ एते तृजन्तत्वादन्तोदात्ताः ॥ उदात्तग्रहणं किं । कर्ता । तृन् ॥ हल्पूर्वात् किं । बहुतितवा ब्राह्मण्या ॥

## नोङ्धात्वोः ॥ १७५ ॥

ऊङो धातोश्च य उदात्तस्थानिको यण् हल्पूर्वस्तस्मात् परानादिरसर्वनामस्थानविभक्तिरुदात्ता न स्यात् ॥ ऊङः । ब्रह्मबन्ध्वा । ब्रह्मबन्ध्वै ॥ धातोः । खलप्वा । खलप्वे ॥

## ह्रस्वनुड्भ्यां मतुप् ॥ १७६ ॥

ह्रस्वान्तादन्तोदात्तात् । नुडागमाच्च परो मतुबुदात्तः स्यात् ॥ अग्निमान् । कर्तृमान् ॥ नुटः । अक्षण्वान् । शीर्षण्वान् ॥ अन्तोदात्तात् किं । वसुमान् । वसुशब्द आद्युदात्तः ॥

## नामन्यतरस्यां ॥ १७७ ॥

मतुपि यो ह्रस्वस्तदन्तादन्तोदात्तात् परो नाम् । इत्येष उदात्तो वा स्यात् ॥ तिसृणां । चतसृणां ॥ मतुपा ह्रस्वविशेषणाद्धतपूर्वे ऽपि ह्रस्वे भवति । अग्नीनां । वायूनां । कर्तृणां ॥ नुड्ग्रहणं किं । धेन्वां ॥ ह्रस्वात् किं । कुमारीणां ॥ अन्तोदात्तात् किं । त्रपूणां ॥

## आ छन्दसि बहुलं ॥ १७८ ॥

ङी । इत्येतदन्तादेदे बहुलं नाम् । इत्येष उदात्तः स्यात् ॥ देवसेनानामभिभञ्जतीनां । न च भवति । नदीनां पारे । जयन्तीनां मरुतः ॥

## षट्त्रिचतुर्भ्यो हलादिः ॥१७९॥

षट्संज्ञकेभ्यः । त्रि । चतुर् । इत्येताभ्यां च परा हलादिर्विभक्तिरुदात्ता स्यात् ॥ षट् । षड्भ्यां । षड्भिः । पञ्चानां । सप्तानां ॥ त्रिभिः । त्रिभ्यः । त्रयाणां ॥ चतुर्भिः । चतुर्भ्यः । चतुर्णां ॥ हलादिः किं॰ । चतस्रः ॥

## झल्युपोत्तमं ॥१८०॥

षट्संज्ञकाः । त्रि । चतुर् । इत्येतेषां झलादिविभक्त्यन्तानां त्र्यादीनामन्त्यसमीपमुदात्तं स्यात् ॥ षट् । पञ्चभिस्तपत्याप्यति । सप्तभिः परावयति ॥ त्रि । तिसृभिश्च ॥ चतुर् । त्रिंशता च चतुर्भिः ॥ झलि किं । पञ्चानां ॥ उपोत्तमं किं । षड्भिः । षड्भ्यः ॥

## विभाषा भाषायां ॥१८१॥

षट् । त्रि । चतुर् । इत्येतेषां झलादिविभक्त्यन्तानां लोके उपोत्तममुदात्तं वा स्यात् ॥ पञ्चभिः । पञ्चभिः ॥ तिसृभिः । तिसृभिः ॥ चतसृभिः । चतसृभिः ॥

## न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः ॥१८२॥

गो । श्वन् । सौ प्रथमैकवचने यदवर्णान्तं । राट् । अङ् । क्रुङ् । कृत् । इत्येतेभ्यो या विभक्तिः सोदात्ता न स्यात् ॥ गो । गवा । गवे । सुगुना । सुगवे ॥ सावेकाचस्तृतीयादिरन्तोदात्तादुत्तरपदादित्यनयोः प्रतिषेधः ॥ श्वन् । शुना । शुने । परमशुना । परमशुने ॥ साववर्णं । येभ्यः । तेभ्यः । केभ्यः ॥ राट् क्विबन्तः । राजा । परमराजा ॥ अङ् क्विबन्तः । प्राचा । प्राग्भ्यां ॥ नलोपादलोपानुलोपेऽपि निषेधो न । किं तु विभक्त्युदात्तत्वं भवति । प्राचा । प्राचे । प्राग्भ्यां ॥ क्रुङ् क्विबन्तः । क्रुञ्चा । क्रुङ्भ्यां । परमक्रुञ्चा ॥ कृत् । करोतेः क्विबन्तः । कृता । परमकृता ॥

## दिवो झल् ॥१८३॥

दिव् । इत्येतस्मात् परा झलादिर्विभक्तिरुदात्ता न स्यात् ॥ द्युभ्यां । द्युभिः ॥ ऊडिदंपदाद्यप्पुम्रैद्युभ्य इति प्राप्तस्य प्रतिषेधः ॥ झल् किं । दिवा । दिवे ॥

## नृ चान्यतरस्यां ॥ १८४ ॥

नृ । इत्येतस्मात् परा कलादिर्विभक्तिरुदात्ता वा न स्यात् ॥ नृभिः । नृभिः ॥ झल् किं । न्रा । न्रे ॥

## तित् स्वरितं ॥ १८५ ॥

त् । इत्संज्ञको यस्य स स्वरितः स्यात् ॥ यत् । चिकीर्ष्यं । जिहीर्ष्यं ॥ ण्यत् । कार्यं । हार्यं ॥

## तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः ॥ १८६ ॥

तासेः । अनुदात्तेतः । ङितः । अकारान्तोपदेशाच्च परं लस्थानिकं सार्वधातुकमनुदात्तं स्यात् ॥ ह्नुङ् । इङ् । इत्येताभ्यां परं वर्जयित्वा ॥ प्रत्ययस्वरापवादोऽयं ॥ तासेः । डुकृञ् । कर्ता । कर्तारौ ॥ अनुदात्तेतः । आस । आस्ते । वस । वस्ते ॥ ङितः । षूङ् । सूते । शीङ् । शेते ॥ अदुपदेशात् । तुदतः । नुदतः । पचतः । पचमानः । यजमानः ॥ उपदेशग्रहणं किं । शिश्याते ॥ अह्न्विङोः किं । ह्नुते । अधीते ॥

## आदिः सिचोऽन्यतरस्यां ॥ १८७ ॥

सिच् । इत्येतदन्तस्यादिरुदात्तो वा स्यात् ॥ मा हि कार्ष्टां । मा हि कार्ष्टां । द्वितीयोऽन्तोदात्तः ॥ मा हि लाविष्टां । मा हि लाविष्टां । द्वितीयो मध्योदात्तः ॥

## स्वपादिहिंसामच्यनिटि ॥ १८८ ॥

आ वृत्करणात् स्वपादिः ॥ ञिष्वप् । इत्येवमादीनां हिंसि । इत्येतस्य च धातोरजादावनिटि लस्थानिके सार्वधातुके परे आदिरुदात्तो वा स्यात् ॥ स्वपन्ति । स्वपन्ति ॥ श्वसन्ति । श्वसन्ति ॥ हिंसि । हिंसन्ति । हिंसन्ति ॥ प्रत्ययस्वरेण द्वितीयो मध्योदात्तः ॥ अचि किं । स्वप्यात् । हिंस्यात् ॥ अनिटि किं । स्वपितः । श्वसितः ॥

## अभ्यस्तानामादिः ॥ १८९ ॥

अभ्यस्तसंज्ञकानां धातूनामजादावनिटि लसार्वधातुके परे आदिरुदात्तः स्यात् ॥ ददति । दधति । जक्षति । जाग्रति ॥ अचि किं । दद्यात् ॥ अनिटि किं । जक्षितः ॥ आदिरिति वर्तमाने पुनरादिग्रहणं नित्यार्थं ॥

## अनुदात्ते च ॥११०॥

अविद्यमानोदात्ते च लस्यानिकसार्वधातुके परे ऽभ्यस्तानामादिरुदात्तः स्यात् ॥ ददाति । दधाति । जिहीते । मिमीते ॥

## सर्वस्य सुपि ॥१११॥

सर्व । इत्येतस्य सुपि परे आदिरुदात्तः स्यात् ॥ सर्वेः । सर्वे ॥ सुपि किं । सर्वतरः ॥ प्रत्ययलक्षणेनाप्ययं स्वरः । सर्वस्तोमः ॥

## भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात् पूर्वं पिति ॥११२॥

ञिभी । ह्री । डुभृञ् । हु । मद । जन । धन । दरिद्रा । जागृ । इत्येतेषामभ्यस्तानां लसार्वधातुके पिति प्रत्यये परे प्रत्ययात् पूर्वमुदात्तं स्यात् ॥ बिभेति ॥ जिह्रेति ॥ बिभर्ति ॥ जुहोति ॥ ममत्तु नः परिज्मा । मदेर्व्यत्ययेन श्लुः ॥ जजनदिन्द्रं । लेटो रूपं ॥ दधनत् ॥ दरिद्राति ॥ जागर्ति ॥ भी । इत्यादि किं । ददाति ॥ पिति किं । दरिद्रति ॥

## लिति ॥११३॥

ल् । इत्संज्ञा यस्य तस्मिन् परे प्रत्ययात् पूर्वमुदात्तं स्यात् ॥ ण्वुल् । चिकीर्षकः ॥ भिन्दुः । भीरुरित्यविधं ॥

## आदिर्णमुल्यन्यतरस्यां ॥११४॥

णमुल् । इत्संज्ञेऽस्मिन् परे आदिरुदात्तो वा स्यात् ॥ लोलूयं । लोलूयं ॥ पक्षेऽनुदात्तत्वे कृते लोलूयशब्द एकतानुदात्तः । तत्पदं लित्स्वरेण मध्योदात्तः ॥

## अचः कर्तृयकि ॥११५॥

उपदेशे अजन्तानां धातूनां कर्तृवाचिनि यकि परे आदिरुदात्तो वा स्यात् ॥ लूयते केदारः स्वयमेव । लूयते केदारः स्वयमेव ॥ लिति सार्वधातुक-

निघाते कृते यक्स्वरः ॥ ज्ञनादीनामुपदेश एवात्वं । तत्राप्ययं स्वरः । ज्ञायते स्वयमेव । ज्ञायते स्वयमेव ॥ अचः किं । भिद्यते स्वयमेव ॥ कर्तृ । इति किं । लूयते केदारो देवदत्तेन ॥

## थलि च सेटीडन्तो वा ॥ १९६ ॥

सेटि थलि इडुदात्तः स्यात् । अन्तो वोदात्तः स्यात् । आदिर्वा ॥ लुलविथ । लुलविथ । लुलविथ ॥ यदा नैते त्रयः स्वरास्तदा लित्स्वरः ॥ सेटीति किं । ययाथ । लित्स्वरो भवति ॥

## ञ्नित्यादिर्नित्यं ॥ १९७ ॥

ञ् । न् । इत्येताावित्संज्ञकौ यस्य तस्मिन् प्रत्यये परे नित्यमादिरुदात्तः स्यात् ॥ यञ् । गार्ग्यः । वात्स्यः ॥ वुन् । वासुदेवकः । अर्जुनकः ॥ प्रत्ययस्वरापवादो ऽयं । नायं स्वरः प्रत्ययलक्षणेन भवति । तेन गर्गाः । विदाः । चञ्चा । इत्यत्र यञ्यञि कनि च लुप्ते न भवति ॥

## आमन्त्रितस्य च ॥ १९८ ॥

संबोधनप्रथमान्तस्यादिरुदात्तः स्यात् ॥ देवदत्त । देवदत्तौ । देवदत्ताः ॥ कारकादुदत्तेति प्राप्तिर्बाध्यते । प्रत्ययलक्षणेनाप्ययं स्वरो भवति । सर्पिरागच्छति ॥

## पथिमथोः सर्वनामस्थाने ॥ १९९ ॥

पथिन् । मथिन् । इत्येतयोः सर्वनामस्थाने पर आदिरुदात्तः स्यात् ॥ पन्थाः । पन्थानौ । पन्थानः । पन्थानं । पन्थानौ ॥ मन्थाः । मन्थानौ ॥ सर्वनामस्थाने किं । पथः पश्य । उदात्तनिवृत्तिस्वरेणान्तोदात्तो ऽयं । प्रत्ययलक्षणेनायं स्वरो न भवति । पथिप्रियः । पूर्वपदप्रकृतिस्वरेण पथिशब्दो ऽन्तोदात्तः ॥

## अन्तश्च तवै युगपत् ॥ २०० ॥

तवैप्रत्ययान्तस्यान्त आदिश्चैककाल उदात्तः स्यात् ॥ कृ । कर्तवै । हृ । हर्तवै ॥ प्रत्ययाद्युदात्तत्वापवादः । युगपदिति पर्यायनिवृत्त्यर्थं ॥

## क्षयो निवासे ॥ २०१ ॥

क्षय । इत्येतन्निवासे ऽर्थ आद्युदात्तं स्यात् ॥ क्षयः । क्षयन्ति निवसन्त्यस्मि-

न्निति विग्रहे पुंसि संज्ञायां घः ॥ निवासे किं । क्षयो दस्यूनां । एरजित्यच् ॥

## जयः करणं ॥२०२॥

जय । इत्येतत् करणवाच्याद्युदात्तं स्यात् ॥ जयः । जयन्त्यनेनेति विग्रहे पुंसि संज्ञायां घः ॥ करणं किं । जयो वर्तते । एरजित्यच् ॥

## वृषादीनां च ॥२०३॥

वृष । इत्येवमादीनामादिरुदात्तः स्यात् ॥ वृषः । जनः ॥

## संज्ञायामुपमानं ॥२०४॥

उपमानवाची शब्दः संज्ञायामाद्युदात्तः स्यात् ॥ चञ्चा । वर्ध्रिका । खरकुटी । दासी ॥ कनो लुप्युपमानशब्दा एत उपमेयस्य संज्ञाः ॥ संज्ञायां किं । अग्निर्माणवकः ॥ उपमानं किं । देवदत्तः ॥

## निष्ठा च द्व्यजनात् ॥२०५॥

निष्ठान्तं द्व्यच्कं संज्ञायामाद्युदात्तं स्यात् । न चेदादिराकारो न भवति ॥ दत्तः । गुप्तः । बुद्धः ॥ प्रत्ययस्वरापवादः ॥ निष्ठेति किं । भीमः ॥ द्व्यच् किं । चिन्तितः ॥ अनात् किं । त्रातः । आप्तः ॥ संज्ञायां किं । कृतं ॥

## शुष्कधृष्टौ ॥२०६॥

शुष्क । धृष्ट । इत्येतावाद्युदात्तौ भवतः ॥ शुष्कः । धृष्टः ॥ असंज्ञार्थं सूत्रं ॥

## आशितः कर्ता ॥२०७॥

आशित । इत्ययं कर्तृवाच्याद्युदात्तः स्यात् ॥ आशितो देवदत्तः । अश । इत्यस्मादाङ्पूर्वादविवक्षितकर्मणः कर्तरि क्तः ॥ कर्तेति किं । आशित ओदनः । आशितं देवदत्तेन । कर्मणि भावे च क्तः ॥

## रिक्ते विभाषा ॥२०८॥

रिक्त । इत्यस्यादिरुदात्तो वा स्यात् ॥ रिक्तः । रिक्तः ॥ अप्राप्तविभाषेयं । संज्ञायां तु निष्ठा च द्व्यजनादिति पूर्वविप्रतिषेधेन नित्यमाद्युदात्तो रिक्तशब्दः ॥

## जुष्टार्पिते च छन्दसि ॥२०९॥

जुष्ट । अर्पित । इत्येते छन्दसि वाद्युदात्ते भवतः ॥ जुष्टः । अर्पितः ॥ छन्दसि किं । जुष्टः । अर्पितः । भाषायां प्रत्ययस्वरेणान्तोदात्तावेतौ ॥

## नित्यं मन्त्रे ॥२१०॥

जुष्ट । अर्पित । इत्येते मन्त्रविषये नित्यमाद्युदात्ते भवतः ॥ जुष्टं देवानां । अर्पितं पितॄणां ॥ केचिदर्पितशब्दं नानुवर्तयन्ति । अन्तोदात्तो ऽप्ययं मन्त्रे पठ्यते । शङ्खो ऽर्पिता इति ॥

## युष्मदस्मदोर्ङसि ॥२११॥

युष्मद् । अस्मद् । इत्येतयोर्ङसि पर आदिरुदात्तः स्यात् ॥ तव स्वं । मम स्वं ॥

## ङयि च ॥२१२॥

युष्मद् । अस्मद् । इत्येतयोर्ङे । इत्येतस्मिंश्च पर आदिरुदात्तः स्यात् ॥ तुभ्यं । मह्यं ॥ यथासंख्यनिवृत्त्यर्थं पृथक्सूत्रकरणं ॥

## यतो ऽनावः ॥२१३॥

यत् । इत्येतदन्तस्य द्व्यच्कस्यादिरुदात्तः स्यात् । स चेन्नौ । इत्येतस्मात् परो न भवति ॥ चेयं । जेयं । दन्त्यं । कण्ठ्यं ॥ अनावः किं । नाव्यं ॥

## ईडवन्दवृशंसदुहां ण्यतः ॥२१४॥

ईड । वदि । वृङ् । शंसु । दुह । इत्येतेभ्यः परो यो ण्यत् तस्यादिरुदात्तः स्यात् ॥ ईड्यं । वन्द्यं । वार्यं । शंस्यं । दोह्या धेनुः ॥

## विभाषा वेण्विन्धानयोः ॥२१५॥

वेणु । इन्धान । इत्येतयोरादिरुदात्तो वा स्यात् ॥ वेणुः । वेणुः । नित्यप्राप्नितस्वरविकल्पाद्द्वितीयः प्रत्ययस्वरेणान्तोदात्तः ॥ इन्धानः । इन्धानः । द्वितीयो मध्योदात्तः ॥ वेणुशब्दे नित्यत्वान्नित्यमाद्युदात्तत्वे प्राप्ते विकल्पः । इन्धाने पूर्वेणाप्राप्तमाद्युदात्तत्वं पक्षे विधीयते ॥ यदा तूपमानवाची वेणुशब्दस्तदा संज्ञायामुपमानमिति नित्यमाद्युदात्ततेष्यते ॥

## त्यागरागहासकुहश्वठक्रथानां ॥२१६॥

त्याग । राग । हास । कुह । श्वठ । क्रथ । इत्येतेषामादिरुदात्तो वा स्यात् ॥ त्यागः । त्यागः । कर्षात्वत इति घञ्स्वरेण द्वितीयो ऽन्तोदात्तः ॥ रागः । रागः । द्वितीयो ऽन्तोदात्तः ॥ हासः । हासः । द्वितीयो ऽन्तोदात्तः ॥ कुहः । कुहः । पचाद्यचि पक्षे ऽन्तोदात्तः ॥ श्वठः । श्वठः । पक्षे ऽन्तोदात्तः ॥ क्रथः । क्रथः । पक्षे ऽन्तोदात्तः ॥

## उपोत्तमं रिति ॥२१७॥

र् । इत्संज्ञको यस्य तदन्तस्य शब्दस्य त्रिप्रभृतीनामन्त्यस्तस्योपस्थो वर्ण उदात्तः स्यात् ॥ अनीयर् । करणीयं । हरणीयं ॥ जातीयर् । पटुजातीयः । मृदुजातीयः ॥ प्रत्ययस्वरापवादः ॥

## चङ्यन्यतरस्यां ॥२१८॥

चङ् । इत्येतदन्त उपोत्तममुदात्तं वा स्यात् ॥ मा हि चीकरतां । मा हि चीकरतां । प्रथमे धात्वकार उदात्तः । द्वितीये चटो ऽकारः ॥ उपोत्तमग्रहणाद्द्वयोर्न भवति । मा हि स्म दधत् ॥

## मतोः पूर्वमात् संज्ञायां स्त्रियां ॥२१९॥

मतुप् । इत्येतस्मात् पूर्व आकार उदात्तः स्यात् । तच्चेन्मत्वन्तं स्त्रीलिङ्गस्य संज्ञा भवति ॥ उदुम्बरावती । शरावती । पुष्करावती । वीणावती ॥ आत् किं । इक्षुमती ॥

## अन्तो ऽवत्याः ॥२२०॥

अवती । इत्येतदन्तस्य संज्ञाविषये ऽन्त उदात्तः स्यात् । स्त्रीलिङ्गे ॥ अजिरवती । खदिरवती । हंसवती । कारण्डवती ॥ ङिप्स्वरप्राप्तौ वचनं ॥ अवत्या इति निर्देशादिह न । राजवती । स्वरविधौ नलोपस्यासिद्धत्वान्ना-सावत्यन्तः ॥

## ईवत्याः ॥२२१॥

ईवती । इत्येतदन्तस्य संज्ञाविषये ऽन्त उदात्तः स्यात् । स्त्रीलिङ्गे ॥ अही-वती । मुनीवती ॥

## चौ ॥२२२॥

अञ्चु । इत्येतस्मिन् धातौ लुप्तनकाराकारे परतः पूर्वस्यान्त उदात्तः स्यात् ॥ दधीचः पश्य । दधीचा । दधीचे । मधूचः । मधूचा । मधूचे ॥ उदात्तनिवृत्तिस्वरप्राप्तौ वचनं ॥

## समासस्य ॥ २२३ ॥

समाससंज्ञकस्यान्त उदात्तः स्यात् ॥ राजपुरुषः । ब्राह्मणकम्बलः । कन्यास्वनः ॥ स्वरविधौ व्यञ्जनस्याविद्यमानवद्भावाद्धलन्ते ऽपि भवति । राजदृषत् । ब्राह्मणसमित् ॥

॥ इति सूत्रपाठे षष्ठाध्यायस्य प्रथमः पादः ॥

---

## बहुव्रीहौ प्रकृत्या पूर्वपदं ॥ १ ॥

बहुव्रीहौ समासे पूर्वपदस्य यः स्वर उदात्तः स्वरितो वा स प्रकृत्या स्यात् ॥ कार्ष्णोत्तरासङ्गः । प्राणिरजतादिभ्यो ऽञ् । इत्यञन्तः कार्ष्णशब्दो ञित्स्वरेणाद्युदात्तो बहुव्रीहौ स एव स्वरः स्वभावेन तिष्ठति ॥ स्नातकपुत्रः । कन्यत्वयान्तः स्नातकशब्दो नित्स्वरेणाद्युदात्तः ॥ मनुष्यनाथः । यत्प्रत्ययान्तो मनुष्यशब्दस्तित्स्वरेण स्वरितान्तः ॥ उदात्तस्वरितग्रहणानुवृत्त्या सर्वानुदात्ते पूर्वपदे ऽयं स्वरो न । किं तु समासान्तोदात्तत्वमेव भवति । समभागः । सर्वानुदात्तः समशब्दः ॥

## तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ॥ २ ॥

तुल्यार्थं । तृतीयान्तं । सप्तम्यन्तं । उपमानवाचि । अव्ययं । द्वितीयान्तं । कृत्यप्रत्ययान्तं च । यत् पूर्वपदं तत्पुरुषे समासे तत् प्रकृत्या स्यात् ॥ तुल्यार्थः । तुल्यश्वेतः । सदृशश्वेतः । तुल्यशब्दो यतो ऽनाव इत्याद्युदात्तः ।

सदृशशब्दः कञ्प्रत्ययान्तो ञित्स्वरेण मध्योदात्तः ॥ तृतीया । शङ्कुलाखण्डः । गिरिकाणः । शङ्कुलाशब्दश्चित्स्वरेण प्रत्ययस्वरेण वान्तोदात्तः । गिरिशब्दो किदौणादिक इप्रत्ययान्तो ऽन्तोदात्तः ॥ सप्तमी । अक्षशौण्डः । पानशौण्डः । सप्रत्ययान्तो ऽक्षशब्दो ऽन्तोदात्तः । ल्युडन्तः पानशब्दो लित्स्वरेणाद्युदात्तः ॥ उपमाने ।-शस्त्रीश्यामा । कुमुदश्येनी । शस्त्रीकुमुदशब्दावन्तोदात्तौ ॥ अव्ययं । अब्राह्मणः । निष्कौशाम्बिः । अतिखट्वः । एषु पूर्वपदान्यव्ययान्याद्युदात्तानि ॥ द्वितीया । मुहूर्तसुखं । मुहूर्तरमणीयं । मुहूर्तशब्दः पृषोदरादिरन्तोदात्तः ॥- कृत्याः । भोज्योष्णं । पानीयशीतं । भोज्यशब्दस्तित्स्वरेण स्वरितान्तः । पानीयशब्दो रित्स्वरेण मध्योदात्तः ॥

## वर्णो वर्णेष्वनेते ॥३॥

वर्णवाचि पूर्वपदं वर्णवाचिषूत्तरपदेष्वेतशब्दवर्जितेषु परेषु तत्पुरुषे प्रकृत्या स्यात् ॥ कृष्णसारंगः । लोहितकल्माषः । कृष्णशब्दो ऽन्तोदात्तः । लोहितशब्दो नित्स्वरेणाद्युदात्तः ॥ वर्णः किं । परमकृष्णः ॥ वर्णेषु किं । कृष्णतिलाः ॥ अनेते किं । कृष्णैतः । लोहितैतः ॥

## गाधलवणयोः प्रमाणे ॥४॥

गाध । लवण । इत्येतयोरुत्तरपदयोः परयोः प्रमाणवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या स्यात् ॥ शम्बगाधमुदकं । तत्प्रमाणमित्यर्थः ॥ गोलवणं । यावद्गवे दीयते तावदित्यर्थः ॥ शम्ब । गो । इत्येतावाद्युदात्तौ ॥ प्रमाणमियत्तापरिच्छेदमात्रं । न पुनरायाम एव ॥ प्रमाणे किं । परमगाधं । परमलवणं ॥

## दायाद्यं दायादे ॥५॥

दायाद । इत्येतस्मिन्नुत्तरपदे परे दायाद्यवाचि पूर्वपदं तत्पुरुषे प्रकृत्या स्यात् ॥ विद्यादायादः । धनदायादः । विद्याशब्दः संज्ञायां समजनिषदेत्युदात्तक्यबन्तो ऽन्तोदात्तः । धनशब्दो कुधाञः क्युप्रत्ययेनाद्युदात्तः ॥ दायाद्यं किं । परमदायादः ॥ दायादे किं । धनदः ॥

## प्रतिबन्धि चिरकृच्छ्रयोः ॥६॥

चिर । कृच्छ्र । इत्येतयोरुत्तरपदयोः प्रतिबन्धिवाचि पूर्वपदं तत्पुरुषे प्रकृत्या स्यात् ॥ गमनचिरं । गमनकृच्छ्रं । चिरप्रागमनं सगुरुव्यंसकादिनाशं वा

ल्युडन्तो गमनशब्दो लित्स्वरेण मध्योदात्तः ॥ कारणवैकल्याच्चिरकालभावि कृच्छ्रयोगि वा गमनं प्रतिबन्धि जायते ॥ प्रतिबन्धि किं । मूत्रकृच्छ्रं ॥

## पदे ऽपदेशे ॥ ७ ॥

पद । इत्येतस्मिन्नुत्तरपदे परे । व्याजवाचिनि तत्पुरुषे । पूर्वपदं प्रकृत्या स्यात् ॥ मूत्रपदेन प्रस्थितः । उच्चारपदेन प्रस्थितः ॥ ष्ट्रन्प्रत्ययान्तो घञन्तो वा मूत्रशब्द आद्युदात्तः । घञन्त उच्चारशब्दो ऽपि थाथघञित्यन्तोदात्तः ॥ अपदेशे किं । विष्णुपदं ॥

## निवाते वातत्राणे ॥ ८ ॥

निवात । इत्येतस्मिन्नुत्तरपदे वातत्राणवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या स्यात् ॥ कुटीनिवातं । शमीनिवातं ॥ वातस्याभावो निवातं । अर्थाभावे ऽव्ययीभावः । कुट्यादिहेतुको निवात इत्यर्थः । विशेषणसमासे कुटीशमीशब्दौ गौरादिङीषन्तावन्तोदात्तौ ॥ वातत्राणे किं । मातृनिवातं । निवातशब्दो ऽयं पार्श्वे रूढः ॥

## शारदे ऽनार्तवे ॥ ९ ॥

शारद । इत्येतस्मिन्ननार्तववाचिन्युत्तरपदे परे तत्पुरुषे पूर्वपदं प्रकृत्या स्यात् ॥ रज्जुशारदमुदकं । शारदशब्दो नूतनार्थः । रज्जोः सद्यो गृहीतमित्यर्थः । दृषच्छारदाः सक्तवः । सद्यः संपादिता इत्यर्थः । उप्रत्ययान्तो रज्जुशब्द आद्युदात्तः । अदिप्रत्ययान्तो दृषच्छब्दो ऽन्तोदात्तः ॥ अनार्तवे किं । उत्तमशारदं । ऋतुविशेषे शरदि भवं यत् तदिह शारदं ॥

## अध्वर्युकषाययोर्जातौ ॥ १० ॥

अध्वर्यु । कषाय । इत्येतयोरुत्तरपदयोर्जातिवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या स्यात् ॥ प्राच्याध्वर्युः । उमापुष्पकषायं ॥ प्राच्यशब्दो यतो ऽनाव इत्याद्युदात्तः । उमापुष्पशब्दः समासस्वरेणान्तोदात्तः ॥ जातौ किं । परमाध्वर्युः । परमकषायः ॥

## सदृशप्रतिरूपयोः सादृश्ये ॥ ११ ॥

सदृश । प्रतिरूप । इत्येतयोरुत्तरपदयोः सादृश्यवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या

स्यात् ॥ पितृसदृशः । मातृप्रतिरूपः । पितृमातृशब्दावुणादिष्वन्तोदात्तौ ॥ सादृश्ये किं । परमसदृशः । उत्तमप्रतिरूपः । अत्र पूज्यमानता गम्यते ॥

## द्विगौ प्रमाणे ॥१२॥

द्विगुसंज्ञक उत्तरपदे प्रमाणवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या स्यात् ॥ प्राच्यसप्तसमः । गान्धारिसप्तसमः । सप्तसमाः प्रमाणमस्येति विगृह्य प्रमाणे विहितस्य मात्रचः प्रमाणे ल इति लुक् । प्राच्यशब्दो यतो ऽनाव इत्याद्युदात्तः । गान्धारिशब्दः कर्दमादित्वादाद्युदात्तः ॥ द्विगौ किं । व्रीहिप्रस्थः ॥ प्रमाणे किं । परमसप्तसमः ॥

## गन्तव्यपण्यं वाणिजे ॥१३॥

वाणिज । इत्येतस्मिन्नुत्तरपदे परे तत्पुरुषे गन्तव्यवाचि पण्यवाचि च पूर्वपदं प्रकृत्या स्यात् ॥ गन्तव्य । मद्रवाणिजाः । कश्मीरवाणिजाः । सप्तमीसमासावेतौ । मद्रादिषु गत्वा व्यवहरन्तीत्यर्थः । मद्रशब्दो ऽन्तोदात्तः । कश्मीरशब्दः पृषोदरादिषु मध्योदात्तः ॥ पण्य । गोवाणिजाः । अश्ववाणिजाः । गो । अश्व । इत्येतावाद्युदात्तौ ॥ गन्तव्यपण्यं किं । उत्तमवाणिजाः ॥

## मात्रोपज्ञोपक्रमच्छाये नपुंसके ॥१४॥

मात्र । उपज्ञा । उपक्रम । छाया । इत्येतेषूत्तरपदेषु नपुंसकवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या स्यात् ॥ मात्र । भिक्षामात्रं । समुद्रमात्रं । मात्रशब्दो वृत्तिमात्रविषयस्तुल्यप्रमाणवाची । भिक्षा । समुद्र । इत्येतावन्तोदात्तौ ॥ उपज्ञा । पाणिनोपज्ञं व्याकरणं । व्याड्युपज्ञं दुष्करणं । पाणिनशब्दो ऽणन्तो ऽन्तोदात्तः । व्याडिशब्दस्त्विञन्तो ञित्स्वरेणाद्युदात्तः ॥ उपक्रम । आढ्योपक्रमं । नन्दोपक्रमाणि मानानि । आढ्यनन्दशब्दावन्तोदात्तौ ॥ छाया । इषुच्छायं । धनुश्छायं । इषुधनुःशब्दावाद्युदात्तौ ॥ नपुंसके किं । कुड्यच्छाया ॥

## सुखप्रिययोर्हिते ॥१५॥

सुख । प्रिय । इत्येतयोरुत्तरपदयोर्हितवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या स्यात् ॥ गमनसुखं । गमनप्रियं । सुखप्रियशब्दौ तदेकान्तायत्यां प्रीतिकरे वर्त्तेते । लित्स्वरेण गमनशब्द आद्युदात्तः ॥ हिते किं । परमसुखं । परमप्रियं ॥

## प्रीतौ च ॥ १६ ॥

सुख । प्रिय । इत्येतयोरुत्तरपदयोः प्रीतौ च गम्यमानायां तत्पुरुषे पूर्वपदं प्रकृत्या स्यात् ॥ ब्राह्मणसुखं पायसं । छात्रप्रियोऽनध्यायः । सुखप्रिययोः प्रीत्यव्यभिचारादिह प्रीतिग्रहणं तदतिशयप्रतिपत्त्यर्थं । ब्राह्मणच्छात्रशब्दौ प्रत्ययस्वरेणान्तोदात्तौ ॥ प्रीतौ किं । राजसुखं । राजप्रियं ॥

## स्वं स्वामिनि ॥ १७ ॥

स्वामिन् । इत्येतस्मिन्नुत्तरपदे तत्पुरुषे स्ववाचि पूर्वपदं प्रकृत्या स्यात् ॥ गोस्वामी । अश्वस्वामी । गोऽश्वशब्दावाद्युदात्तौ ॥ स्वं किं । परमस्वामी ॥

## पत्यावैश्वर्ये ॥ १८ ॥

पति । इत्येतस्मिन्नुत्तरपद ऐश्वर्यवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या स्यात् ॥ गृहपतिः । नरपतिः । गृहशब्दोऽन्तोदात्तः । नरशब्दस्त्वाद्युदात्तः ॥ ऐश्वर्ये किं । ब्राह्मणो वृषलीपतिः । वृषल्यां गन्तेत्यर्थः ॥

## न भूवाक्चिद्दिधिषु ॥ १९ ॥

भू । वाच् । चित् । दिधिषू । इत्येतान्यैश्वर्यवाचिनि तत्पुरुषे पतिशब्द उत्तरपदे प्रकृत्या न भवन्ति ॥ भूपतिः । वाक्पतिः । चित्पतिः । दिधिषूपतिः ॥ समासान्तोदात्तत्वं भवति ॥

## वा भुवनं ॥ २० ॥

भुवन । इत्येतत् पूर्वपदं तत्पुरुषे पतिशब्द उत्तरपदे प्रकृत्या वा न स्यात् ॥ भुवनपतिः । भुवनपतिः । भुवनशब्दः क्युन्नन्तः । पक्ष आद्युदात्तः ॥

## आशङ्काबाधनेदीयःसु संभावने ॥ २१ ॥

आशङ्क । आबाध । नेदीयस् । इत्येतेषूत्तरपदेषु संभावनवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या स्यात् ॥ संभावनमस्तित्वाध्यवसायः ॥ आशङ्क । गमनमाशङ्क्यं वर्तते । गमनाशङ्कं । वचनाशङ्कं ॥ आबाध । गमनाबाधं । वचनाबाधं ॥ नेदीयस् । गमननेदीयः । वचननेदीयः ॥ गमनवचनशब्दौ लित्स्वरेणाद्युदात्तौ ॥ संभावने किं । परमनेदीयः ॥

## पूर्वे भूतपूर्वे ॥ २२ ॥

पूर्व । इत्येतस्मिन्नुत्तरपदे भूतपूर्ववाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या स्यात् ॥ आढ्यो भूतपूर्वः । आढ्यपूर्वः । दर्शनीयपूर्वः । दर्शनीयपूर्वः । वृत्तौ पूर्वशब्दो भूतपूर्वे वर्तते ॥ भूतपूर्वे किं । परमश्चासौ पूर्वश्च । परमपूर्वः ॥

## सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये ॥२३॥

सविध । सनीड । समर्याद । सवेश । सदेश । इत्येतेषूत्तरपदेषु सामीप्यवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या स्यात् ॥ मद्रसविधं । मद्रसनीडं । मद्रसमर्यादं । मद्रसवेशं । मद्रसदेशं ॥ समीपवाचिनस्त्वेते समुदायाः । मद्रशब्दो ऽन्तोदात्तः ॥ सविधादिषु किं । देवदत्तस्य समया ॥ सामीप्ये किं । मर्यादया सह वर्तते समर्यादं क्षेत्रं । देवदत्तस्य समर्यादं देवदत्तसमर्यादं ॥

## विस्पष्टादीनि गुणवचनेषु ॥२४॥

विस्पष्ट । इत्येवमादीनि पूर्वपदानि गुणवचनेषूत्तरपदेषु प्रकृत्या भवन्ति ॥ विस्पष्टं पटुः । विस्पष्टपटुः । विस्पष्टशब्दो गतिरनन्तर इत्याद्युदात्तः ॥ विस्पष्टादीनीति किं । परमलवणः ॥ गुणवचनेषु किं । विस्पष्टब्राह्मणः ॥

## श्रज्यावमकन्पापवत्सु भावे कर्मधारये ॥२५॥

श्र । ज्य । अवम । कन् । इत्येतेषूत्तरपदेषु पापशब्दवति चोत्तरपदे कर्मधारयसमासे भाववाचि पूर्वपदं प्रकृत्या स्यात् ॥ श्र । गमनश्रेष्ठः । गमनश्रेयः ॥ ज्य । वचनज्येष्ठः । वचनज्यायान् ॥ अवम । गमनावमं ॥ कन् । वचनकनिष्ठं । वचनकनीयः ॥ पापवत् । गमनपापिष्ठं । गमनपापीयः ॥ लित्स्वरेण पूर्वपदान्याद्युदात्तानि ॥ आदिषु किं । गमनशोभनं ॥ भावे किं । गमनश्रेयः । करणे ल्युट् ॥ कर्मधारये किं । गमनश्रेयः । षष्ठीतत्पुरुषो ऽयं ॥

## कुमारश्च ॥२६॥

कुमार । इत्येतत् पूर्वपदं कर्मधारये समासे प्रकृत्या स्यात् ॥ कुमारश्रमणा । कुमारशब्दो ऽन्तोदात्तः ॥ केचित् कुमार श्रमणादिभिरिति प्रतिपदोक्तसमासे स्वरमिच्छन्ति ॥

## आदिः प्रत्येनसि ॥२७॥

प्रत्येनस् । इत्येतस्मिन्नुत्तरपदे कर्मधारये कुमार । इत्येतस्यादिरुदात्तः स्यात् ॥ प्रतिगतमेनो यस्य स प्रत्येनाः ॥ कुमारप्रत्येनाः ॥

## पूगेष्वन्यतरस्यां ॥ २८ ॥

पूगा गणास्तद्वाचिपूत्तरपदेषु कर्मधारये कुमार । इत्येतस्यादिरुदात्तो वा स्यात् ॥ कुमारचातकाः । कुमारलोहध्वजाः ॥ पक्षे समासान्तोदात्तत्वं ॥

## इगन्तकालकपालभगालशरावेषु द्विगौ ॥ २९ ॥

इगन्तेषु । काल । कपाल । भगाल । शराव । इत्येतेषु चोत्तरपदेषु द्विगुसमासे पूर्वपदं प्रकृत्या स्यात् ॥ इगन्त । पञ्चारत्निः ॥ काल । पञ्च मासान् भृतः । पञ्चमास्यः ॥ कपाल । पञ्चकपालः ॥ भगाल । पञ्चभगालः ॥ शराव । पञ्चशरावः ॥ न्नः संख्याया इति पञ्चन्शब्द आद्युदात्तः ॥ इगन्तेत्यादि किं । पञ्चाश्वः ॥ द्विगौ किं । परमारत्निः ॥

## बह्वन्यतरस्यां ॥ ३० ॥

बहु । इत्येतत् पूर्वपदमिगन्तादिपूत्तरपदेषु द्विगौ प्रकृत्या वा स्यात् ॥ बह्वरत्निः । बह्वरत्निः । बहुमास्यः । बहुमास्यः । बहुकपालः । बहुकपालः । बहुभगालः । बहुभगालः । बहुशरावः । बहुशरावः ॥ बहुशब्दो ऽन्तोदात्तः । तस्य यणि सत्युदात्तस्वरितयोरिति स्वरितः ॥

## दिष्टिवितस्त्योश्च ॥ ३१ ॥

दिष्टि । वितस्ति । इत्येतयोरुत्तरपदयोर्द्विगौ पूर्वपदं प्रकृत्या वा स्यात् ॥ पञ्चदिष्टिः । पञ्चदिष्टिः ॥ पञ्चवितस्तिः । पञ्चवितस्तिः ॥ पञ्चन्शब्द आद्युदात्तः ॥

## सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात् ॥ ३२ ॥

सिद्ध । शुष्क । पक्व । बन्ध । इत्येतेपूत्तरपदेष्वकालवाचि सप्तम्यन्तं प्रकृत्या स्यात् ॥ सांकाश्यसिद्धः । आतपशुष्कः । भ्राष्ट्रपक्वः । चक्रबन्धः ॥ अकालात् किं । पूर्वाह्णसिद्धः ॥

## परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु ॥ ३३ ॥

परि । प्रति । उप । अप । इत्येतानि पूर्वपदानि वर्ज्यमानवाचिन्यहोरात्रावयववाचिनि चोत्तरपदे प्रकृत्या भवन्ति ॥ परित्रिगर्तं वृष्टो देवः । प्रतिपूर्वाह्णं । उपपूर्वरात्रं । अपत्रिगर्तं ॥ उपसर्गा आद्युदात्ता अभिवर्जमित्याद्युदा-

त्तानि पूर्वपदानि ॥ अव्ययीभावार्थं सूत्रं । बहुव्रीहितत्पुरुषयोस्तु बहुव्रीहौ प्रकृत्या तत्पुरुषे तुल्यार्थेति सूत्राभ्यामेव सिद्धं ॥ वर्ज्यंत्यादि किं । अग्निं प्रति । प्रत्यग्नि ॥

## राजन्यबहुवचनद्वन्द्वे ऽन्धकवृष्णिषु ॥३४॥

राजन्यवाचिनां बहुवचनान्तानामन्धकवृष्णिषु वर्तमाने द्वन्द्वसमासे पूर्वपदं प्रकृत्या स्यात् ॥ श्वाफल्कचैत्रकाः । शिनिवासुदेवाः ॥ श्वाफल्कशब्दो ऽन्तोदात्तः । शिनिशब्द आद्युदात्तः ॥ राजन्येति किं । द्वैप्यभैमायनाः । अन्धकवृष्णय एते न त्वभिषिक्तवंश्या राजन्याः ॥ राजन्यग्रहणमभिषिक्तवंश्यानां क्षत्रियाणां ग्रहणार्थं ॥ बहुवचनेति किं । संकर्षणवासुदेवौ ॥ द्वन्द्वे किं । वृष्णीनां कुमाराः । वृष्णिकुमाराः ॥ अन्धकवृष्णिषु किं । कुरुपञ्चालाः ॥

## संख्या ॥३५॥

द्वन्द्वे संख्यावाचि पूर्वपदं प्रकृत्या स्यात् ॥ एकादश । त्रयोदश । एकशब्दो नित्स्वरेणाद्युदात्तः । त्रिशब्दस्य त्रयसादेशो ऽन्तोदात्तो निपात्यते ॥

## आचार्योपसर्जनश्चान्तेवासी ॥३६॥

आचार्योपसर्जनानामन्तेवासिनां द्वन्द्वे पूर्वपदं प्रकृत्या स्यात् ॥ आपिशलपाणिनीयाः । पाणिनीयरौहिणाः ॥ द्वन्द्वविशेषणमाचार्योपसर्जनग्रहणं । सर्वो द्वन्द्व आचार्योपसर्जनो यथा विज्ञायेत ॥ आचार्योपसर्जनः किं । पाणिनीयदेवदत्तौ ॥ उपसर्जनग्रहणं किं । छान्दसवैयाकरणाः ॥ अन्तेवासी किं । आपिशलपाणिनीये शास्त्रे ॥

## कार्तकौजपादयश्च ॥३७॥

कार्तकौजप । इत्येवमादीनां द्वन्द्वानां पूर्वपदं प्रकृत्या स्यात् ॥ कार्तकौजपौ । सावर्णिमाण्डूकेयौ । अणन्तो ऽन्तोदात्तः कार्तशब्दः । ञित्स्वरेण सावर्णिशब्द आद्युदात्तः ॥ वचनविवक्षार्थं विभक्त्यन्तानां पाठः ॥ द्वन्द्वाधिकारनिवृत्त्यर्थं चकारः ॥

## महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु ॥३८॥

महत् । इत्येतत् पूर्वपदं व्रीहि । अपराह्ण । गृष्टि । इष्वास । जाबाल । भार । भारत । हैलिहिल । रौरव । प्रवृद्ध । इत्येतेषु दशसूत्तरपदेषु प्रकृत्या स्यात् ॥ महाव्रीहिः । महापराह्णः । महागृष्टिः । महेष्वासः । महाजाबालः । महाभारः । महाभारतः । महाहैलिहिलः । महारौरवः । महाप्रवृद्धः ॥ महच्छब्दो ऽन्तोदात्तः । तस्य सन्महदिति प्रतिपदोक्तसमास एवायं स्वरः । षष्ठीसमासे त्वन्तोदात्तत्वं । महतो व्रीहिर्महद्व्रीहिः ॥

## क्षुल्लकश्च वैश्वदेवे ॥ ३९ ॥

क्षुल्लक । महत् । इत्येते पूर्वपदे वैश्वदेव । इत्येतस्मिन्नुत्तरपदे परतः प्रकृत्या भवतः ॥ क्षुल्लकवैश्वदेवं । महावैश्वदेवं ॥ क्षुधं लातीति क्षुल्लः । इवार्थे कः । क्षुल्लकः । अन्तोदात्तो ऽयं ॥

## उष्ट्रः सादिवाम्योः ॥ ४० ॥

उष्ट्र । इत्येतत् पूर्वपदं सादि । वामि । इत्येतयोरुत्तरपदयोः प्रकृत्या स्यात् ॥ उष्ट्रसादिः । उष्ट्रवामिः । उष्ट्रशब्दो नित्स्वरेणाद्युदात्तः ॥

## गौः सादसादिसारथिषु ॥ ४१ ॥

गो । इत्येतत् पूर्वपदं सादं । सादि । सारथि । इत्येतेषूत्तरपदेषु प्रकृत्या स्यात् ॥ गोसादः । गोसादिः । गोसारथिः । गोशब्द उदात्तः ॥

## कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलो दासीभाराणां च ॥ ४२ ॥

कुरुगार्हपत । रिक्तगुरु । असूतजरती । अश्लीलदृढरूपा । पारेवडवा । तैतिलकद्रू । पण्यकम्बल । इत्येतेषां सप्तानां दासीभारादीनां च पूर्वपदं प्रकृत्या स्यात् ॥ कुरूणां गार्हपतं । कुरुगार्हपतं । कुरुशब्दो ऽन्तोदात्तः ॥ रिक्तो गुरुः । रिक्तगुरुः । रिक्ते विभाषेति रिक्तशब्द आद्युदात्तो ऽन्तोदात्तो वा ॥ असूतजरती । असूतशब्द आद्युदात्तः ॥ अश्लीलदृढरूपा । श्रीर्यस्यास्ति तत् श्लीलं । सिध्मादित्वाल्लच् । कपिलकादित्वाल्लत्वं । अश्लीलशब्द आद्युदात्तो नञ्समासत्वात् ॥ पारे वडवेव । पारेवडवा । निपातनादिवार्थे समासो विभक्त्यलोपश्च । पारशब्दो घृतादिरन्तोदात्तः ॥ तैतिलकद्रूः ।

तैतिलशब्दो ऽणन्त आद्युदात्तः ॥ पण्यकम्बलः । पण्यशब्दो यदन्त आद्युदात्तः ॥ दासीभारादेः । दासीभारः । देवहूतिः । पूर्वपदमन्तोदात्तं ॥

## चतुर्थी तदर्थे ॥४३॥

चतुर्थ्यन्तं पूर्वपदं चतुर्थ्यन्तार्थाय यत् तद्वाचिन्युत्तरपदे परे प्रकृत्या स्यात् ॥ यूपदारु । रथदारु । यूपरथशब्दावाद्युदात्तौ ॥ तदर्थे किं । कुबेरवल्ली ॥ चतुर्थ्यन्तस्यार्थस्तदित्यनेन परामृश्यते ॥

## अर्थे ॥४४॥

चतुर्थ्यन्तं पूर्वपदमर्थ । इत्येतस्मिन्नुत्तरपदे परे प्रकृत्या स्यात् ॥ मात्रर्थं । पित्रर्थं । मातृपितृशब्दावन्तोदात्तौ ॥ अतदर्थो ऽयमारम्भः ॥

## क्ते च ॥४५॥

क्त । इत्येतदन्ते चोत्तरपदे पूर्वपदं प्रकृत्या स्यात् ॥ अश्वहितं । अश्वरक्षितं । अश्वशब्दो नित्स्वरेणाद्युदात्तः ॥

## कर्मधारये ऽनिष्ठा ॥४६॥

कर्मधारये समासे क्तप्रत्ययान्त उत्तरपदे परे ऽनिष्ठान्तं पूर्वपदं प्रकृत्या स्यात् ॥ श्रेणिकृताः । पूगकृताः ॥ श्रेणिशब्द आद्युदात्तः । पूगशब्दो ऽन्तोदात्तः ॥ कर्मधारये किं । श्रेण्याः कृतं । श्रेणिकृतं ॥ अनिष्ठा किं । कृताकृतं ॥

## अहीने द्वितीया ॥४७॥

अहीनवाचिनि समासे क्तप्रत्ययान्त उत्तरपदे परे द्वितीयान्तं पूर्वपदं प्रकृत्या स्यात् ॥ कष्टश्रितः । त्रिशकलपतितः । कष्टशब्दो ऽन्तोदात्तः । त्रिशकलशब्दो बहुव्रीहिस्वरेणाद्युदात्तः ॥ अहीने किं । कान्तारातीतः ॥ शायेतयग्यापत्रादो ऽयं ॥

## तृतीया कर्मणि ॥४८॥

तृतीयान्तं पूर्वपदं कर्मवाचिनि क्तान्त उत्तरपदे परे प्रकृत्या स्यात् ॥ अहिहतः । नखनिर्भिन्नः । अहिनखशब्दावन्तोदात्तौ ॥ कर्मणि किं । रथयातः ॥

## गतिरनन्तरः ॥४९॥

कर्मवाचिनि क्तान्त उत्तरपदे परे ऽनन्तरो गतिः प्रकृत्या स्यात् ॥ प्रकृतः । प्रहृतः । प्रशब्द आद्युदात्तः ॥ अनन्तरः किं । अभ्युद्धृतः । अत्राभिशब्दस्य व्यवहितस्यायं स्वरो न भवति ॥ कर्मणि किं । प्रकृतः कटं देवदत्तः । अत्र थाथादिस्वरो भवति ॥

## तादौ च निति कृत्यतौ ॥५०॥

तकारादौ नकारेत्संज्ञके तुशब्दवर्जिते कृति परे ऽनन्तरो गतिः प्रकृत्या स्यात् ॥ प्रभृतिः । संगतिः ॥ कृत्स्वरापवादो ऽयं ॥ तादौ किं । प्रजल्पाकः ॥ निति किं । प्रकर्ता । तृजन्तः ॥ अतौ किं । आगन्तुः ॥

## तवै चान्तश्च युगपत् ॥५१॥

तवै । इत्येतस्य प्रत्ययस्यान्त उदात्तो ऽनन्तरो गतिश्च प्रकृत्या । युगपच्चैतद्द्वयं स्यात् ॥ परिस्तरितवै । अन्वेतवै । उपसर्ग आद्युदात्तः । कृत्स्वरबाधकमिदं ॥

## अनिगन्तो ऽञ्चतौ वप्रत्यये ॥५२॥

इगन्तभिन्नो गतिर्वप्रत्ययान्ते ऽञ्चुधातौ परे प्रकृत्या स्यात् ॥ प्राङ् । प्राञ्चौ ॥ अनिगन्तः किं । प्रत्यङ् । प्रत्यञ्चौ । कृदुत्तरपदप्रकृतिस्वर इह भवति ॥ वप्रत्यये किं । उदञ्चनः ॥

## न्यधी च ॥५३॥

नि । अधि । इत्येताविगन्तावपि वप्रत्ययान्ते ऽञ्चुधातौ परे प्रकृत्या भवतः ॥ न्यङ् । न्यञ्चौ । अध्यङ् । अध्यञ्चौ ॥ उदात्तस्वरितयोर्यण इति धात्वकारः स्वरितः ॥

## ईषदन्यतरस्यां ॥५४॥

ईषत् । इत्येतत् पूर्वपदं प्रकृत्या वा स्यात् ॥ ईषत्कडारः । ईषत्कडारः । ईषदित्ययमन्तोदात्तः ॥ ईषद्भेद इत्यादौ तु कृत्स्वर एव ॥

## हिरण्यपरिमाणं धने ॥५५॥

धन । इत्येतस्मिन्नुत्तरपदे परे सुवर्णपरिमाणवाचि पूर्वपदं प्रकृत्या वा स्यात् ॥

द्विसुवर्णधनं । द्विसुवर्णधनं ॥ हिरण्यग्रहणं किं । प्रस्थधनं ॥ परिमाणग्रहणं किं । काञ्चनधनः ॥ धने किं । निष्कमाला ॥

## प्रथमो ऽचिरोपसंपत्तौ ॥५६॥

प्रथम । इत्येतत् पूर्वपदमभिनवतायां गम्यमानायां प्रकृत्या वा स्यात् ॥ प्रथमवैयाकरणः । प्रथमवैयाकरणः । इदानीं व्याकरणमध्येतुं प्रवृत्त इत्यर्थः । प्रथमशब्दश्चित्स्वरेणान्तोदात्तः ॥ अचिरोपसंपत्तौ किं । प्रथमवैयाकरणः । वैयाकरणानामाद्यो मुख्यो यः स नित्यमन्तोदात्त एव ॥

## कतरकतमौ कर्मधारये ॥५७॥

कतर । कतम । इत्येते पूर्वपदे कर्मधारये समासे वा प्रकृत्या स्तः ॥ कतरकठः । कतरकठः । कतमकठः । कतमकठः । कतर कतम । इत्येतौ चित्स्वरेणान्तोदात्तौ ॥ कर्मधारय इत्युत्तरार्थं । प्रतिपदोक्तत्वादिह सिद्धं ॥

## आर्यो ब्राह्मणकुमारयोः ॥५८॥

आर्य । इत्येतत् पूर्वपदं ब्राह्मणकुमारयोरुत्तरपदयोः परयोः कर्मधारये प्रकृत्या वा स्यात् ॥ आर्यब्राह्मणः । आर्यब्राह्मणः । आर्यकुमारः । आर्यकुमारः । आर्य । इत्येष तित्स्वरेण स्वरितान्तः ॥ आर्यः किं । परमब्राह्मणः ॥ ब्राह्मणकुमारयोः किं । आर्यक्षत्रियः ॥ कर्मधारय इत्येव । नेह । आर्यस्य ब्राह्मणः । आर्यब्राह्मणः । अत्र समासान्तोदात्तत्वं ॥

## राजा च ॥५९॥

राजन् । इत्येतत् पूर्वपदं ब्राह्मणकुमारयोः परयोः कर्मधारये प्रकृत्या वा स्यात् ॥ राजब्राह्मणः । राजब्राह्मणः । राजकुमारः । राजकुमारः । राजशब्द आद्युदात्तः ॥ योगविभाग उत्तरार्थः ॥

## षष्ठी प्रत्येनसि ॥६०॥

राजन् । इत्येतत् षष्ठ्यन्तं पूर्वपदं प्रत्येनस् । इत्येतस्मिन् परे प्रकृत्या वा स्यात् ॥ राजप्रत्येनाः । राजप्रत्येनाः ॥ षष्ठी किं । कर्मधारये मा भूत् । राजप्रत्येनाः ॥

## क्ते नित्यार्थे ॥६१॥

क्तप्रत्ययान्त उत्तरपदे परे नित्यार्थे समासे पूर्वपदं प्रकृत्या वा स्यात् ॥ नित्यप्रहसितः । नित्यप्रहसितः । नित्य । इत्येष त्यबन्त आद्युदात्तः । हसित । इति थाथादिस्वरेणान्तोदात्तं ॥ नित्यार्थे किं । मुहूर्तप्रहसितः ॥

## ग्रामः शिल्पिनि ॥ ६२ ॥

ग्राम । इत्येतत् पूर्वपदं शिल्पिनि वाचिन्युत्तरपदे प्रकृत्या वा स्यात् ॥ ग्रामनापितः । ग्रामनापितः । ग्रामकुलालः । ग्रामकुलालः । ग्रामशब्द आद्युदात्तः ॥ ग्रामः किं । परमनापितः ॥ शिल्पिनि किं । ग्रामरथ्या ॥

## राजा च प्रशंसायां ॥ ६३ ॥

राजन् । इत्येतत् पूर्वपदं शिल्पिन्युत्तरपदे प्रशंसायां प्रकृत्या वा स्यात् ॥ राजनापितः । राजनापितः । राजसंबन्धान्नापितस्य प्रशंसा ॥ राजा किं । परमनापितः ॥ प्रशंसायां किं । राजनापितः ॥ शिल्पिनि किं । राजहस्ती ॥

## आदिरुदात्तः ॥ ६४ ॥

पदद्वयाधिकारोऽयं ॥ इत उत्तरं यद्वक्ष्यामस्तत्र पूर्वोत्तरपदयोरादिरुदात्त इत्येवं तद्वेदितव्यं ॥ वक्ष्यति सप्तमीहारिणौ । इत्यादि । सूपशाणः । मुकुटेकार्षापणं ॥

## सप्तमीहारिणौ धर्म्येऽहरणे ॥ ६५ ॥

सप्तम्यन्तं हारिवाचि च पूर्वपदं हरण । इत्येतद्भिन्ने धर्म्यवाचिन्युत्तरपदे पर आद्युदात्तं स्यात् ॥ मुकुटेकार्षापणं । हलेद्विपदिका । संज्ञायामिति सप्तमीसमासः । कारनाम्नि चेति विभक्त्यलुक् ॥ याज्ञिकाश्वः । वैयाकरणहस्ती ॥ क्वचिद्यमाचारो मुकुटादिषु कार्षापणादि दातव्यं । याज्ञिकादीनामश्वादिरिति । देयं यः स्वीकरोति स हारीत्युच्यते । धर्म्यमाचारनियतं देयमुच्यते ॥ धर्म्ये किं । स्तम्बेरमः ॥ अहरणे किं । वाडवहरणं । वडवाया अयं वाडवः । तस्य बीजनिषेकोत्तरं शरीरपुष्ट्यर्थं दीयमानं भक्ष्यं हरणमुच्यते ॥ अहरण इति निषेधसामर्थ्यात् परमपि कृत्स्वरं बाधित्वायमत्र स्वरः । वडवाहार्यं ॥

## युक्ते च ॥ ६६ ॥

युक्तवाचिनि समासे पूर्वपदमाद्युदात्तं स्यात् ॥ गोसंख्यः ॥ कर्तव्ये तत्परो युक्त इत्युच्यते ॥

## विभाषाध्यक्षे ॥६७॥

अध्यक्ष । इत्येतस्मिन्नुत्तरपदे परे पूर्वपदमाद्युदात्तं वा स्यात् ॥ गवाध्यक्षः । गवाध्यक्षः । अश्वाध्यक्षः । अश्वाध्यक्षः ॥

## पापं च शिल्पिनि ॥६८॥

पाप । इत्येतत् पूर्वपदं शिल्पिन्युत्तरपदे पर आद्युदात्तं वा स्यात् ॥ पापनापितः । पापनापितः ॥ पापाणके इति प्रतिपदोक्तः समासो गृह्यते । तेनेह न भवति । पापस्य नापितः । पापनापितः ॥

## गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे ॥६९॥

गोत्रवाचिन् । अन्तेवासिवाचिन् । माणव । ब्राह्मण । इत्येतेषूत्तरपदेषु निन्दावाचिनि समासे पूर्वपदमाद्युदात्तं स्यात् ॥ गोत्र । भार्यासौश्रुतः । भार्याप्राधान्येन सौश्रुतस्य निन्दा ॥ अन्तेवासिन् । कुमारीदाक्षाः । ओदनपाणिनीयाः । कुमार्यादिलाभकामा ये दाक्ष्यादिप्रोक्तशास्त्राण्यधीयन्ते त एवं क्षिप्यन्ते ॥ माणव । भिक्षामाणवः । भिक्षालाभाय माणवो भवति ॥ ब्राह्मण । भयब्राह्मणाः ॥ गोत्रेत्यादि किं । दासीश्रोत्रियः ॥ क्षेपे किं । परमब्राह्मणः ॥

## अङ्गानि मैरेये ॥७०॥

मैरेय । इत्येतस्मिन्नुत्तरपदे परे तदङ्गवाचि पूर्वपदमाद्युदात्तं स्यात् ॥ गुडमैरेयः । मधुमैरेयः ॥ मैरेयो गुडादिविकारो मद्यं । तस्य गुडादिरङ्गं भवति ॥ अङ्गानि किं । परममैरेयः ॥ मैरेये किं । पुष्पासवः ॥

## भक्ताख्यास्तदर्थेषु ॥७१॥

अन्नवाचीनि पूर्वपदानि तदर्थेषूत्तरपदेषु परेष्वाद्युदात्तानि भवन्ति ॥ भक्तकंसः । भिक्षाकंसः । भाजीकंसः । भक्तादयो ऽन्नविशेषाः ॥ भक्ताख्याः किं । समाशशालयः । समशनं समाशः । क्रियामात्रवाची ॥ तदर्थेषु किं । भिक्षाप्रियः । बहुव्रीहौ पूर्वपदमन्तोदात्तं ॥

## गोविडालसिंहसैन्धवेषूपमाने ॥ ७२ ॥

गो । विडाल । सिंह । सैन्धव । इत्येतेषूपमानवाचिषु परेषु पूर्वपदमाद्युदात्तं स्यात् ॥ धान्यगवः । धान्यं गौरिवेति विग्रहः । व्याघ्रादित्वात् समासः । उपमानार्थो ऽपि यथासंभवं योज्यः । गवाकृत्या व्यवस्थितं धान्यं धान्यगवश-ब्देनोच्यते ॥ भिक्षाविडालः । तृणसिंहः । प्रक्लसैन्धवः ॥ उपमाने किं । परमसिंहः ॥

## अके जीविकार्थे ॥ ७३ ॥

अक । इत्येतदन्त उत्तरपदे परे जीविकावाचिनि समासे पूर्वपदमाद्युदात्तं स्यात् ॥ दन्तलेखकः । नखलेखकः । दन्तलेखनादिभिर्येषां जीविका त एवमुच्यन्ते । नित्यं क्रीडेति समासः ॥ अके किं । रमणीयकर्ता ॥ जीविकार्थे किं । इक्षुभक्षिकां मे धारयसि ॥

## प्राचां क्रीडायां ॥ ७४ ॥

अक । इत्येतदन्त उत्तरपदे परे प्राग्देशवर्तिक्रीडावाचिनि समासे पूर्वपदमाद्यु-दात्तं स्यात् ॥ उद्दालकपुष्पभञ्जिका । शालपुष्पभञ्जिका ॥ प्राचां किं । जीवपत्रप्रचायिका । इयमुदीचां क्रीडा ॥ क्रीडायां किं । तव पुष्पप्रचायि-का । पर्याये ण्वुच्प्रत्ययः ॥

## अणि नियुक्ते ॥ ७५ ॥

अण् । इत्येतदन्त उत्तरपदे परे नियुक्तवाचिनि समासे पूर्वपदमाद्युदात्तं स्यात् ॥ छत्रधारः । तृणधारः ॥ नियुक्तो ऽधिकृत उच्यते ॥ नियुक्ते किं । काण्डलावः ॥

## शिल्पिनि चाकृञः ॥ ७६ ॥

अण् । इत्येतदन्त उत्तरपदे परे शिल्पिवाचिनि समासे पूर्वपदमाद्युदात्तं स्यात् । सो ऽण् डुकृञ्धातोः परो न चेत् ॥ तन्तुवायः । वालवायः ॥ शिल्पिनि किं । काण्डलावः ॥ अकृञः किं । कुम्भकारः ॥

## संज्ञायां च ॥ ७७ ॥

अण् । इत्येतदन्त उत्तरपदे परे संज्ञाविषये पूर्वपदमाद्युदात्तं स्यात् । स चाण् उकृञ्धातोः परो न चेत् ॥ तन्तुवायो नाम कीटः । वालवायो नाम पर्वतः ॥ अकृञः किं । रथकारो नाम ब्राह्मणः ॥

## गोतन्तियवं पाले ॥७८॥

गो । तन्ति । यव । इत्येतानि पाल । इत्येतस्मिन्नुत्तरपदे पर आद्युदात्तानि भवन्ति ॥ गोपालः । तन्तिपालः । यवपालः ॥ गोतन्तियवं किं । वत्स-पालः ॥ पाले किं । गोरक्षः ॥ अनियमार्थ आरम्भः ॥

## णिनि ॥७९॥

णिन् । इत्येतदन्त उत्तरपदे परे पूर्वपदमाद्युदात्तं स्यात् ॥ पुष्पहारी । फलहारी ॥

## उपमानं शब्दार्थप्रकृतावेव ॥८०॥

णिन् । इत्येतदन्त उत्तरपदे पर उपमानवाचि पूर्वपदं शब्दार्थप्रकृतावेवाद्यु-दात्तं स्यात् ॥ उष्ट्रक्रोशी । ध्वाङ्क्षरावी । खरनादी ॥ उपमानं किं । पूर्वसूत्रेण सह विषयविभागो यथा स्यात् ॥ शब्दार्थप्रकृतौ किं । वृकवञ्ची ॥ प्रकृतिग्रहणं सोपसर्गनिरासार्थं । कोकिलाभिव्याहारी ॥

## युक्तारोह्यादयश्च ॥८१॥

युक्तारोही । इत्येवमादयः समासा आद्युदात्ता भवन्ति ॥ युक्तारोही । आ-गतारोही ॥

## दीर्घकाशतुषभ्राष्ट्रवटं जे ॥८२॥

दीर्घ । काश । तुष । भ्राष्ट्र । वट । इत्येतानि ज । इत्येतस्मिन्नुत्तरपदे पर आद्युदात्तानि भवन्ति ॥ दीर्घ । कुटीजः । शमीजः ॥ काशजः । तुषजः । भ्राष्ट्रजः । वटजः ॥

## अन्त्यात् पूर्वं बह्वचः ॥८३॥

ज । इत्येतस्मिन्नुत्तरपदे परे बह्वचः पूर्वपदस्यान्त्यात् पूर्वमुदात्तं स्यात् ॥ उपसरजः । मन्दुरजः ॥ बह्वचः किं । दक्षजानि तृणानि ॥

## ग्रामे ऽनिवसन्तः ॥ ८४ ॥

ग्राम । इत्येतस्मिन्नुत्तरपदे परे पूर्वपदमाद्युदात्तं स्यात् । तच्चेन्निवासद्वाचि न भवति ॥ मल्लग्रामः । वणिग्ग्रामः । देवग्रामः । समूहवाच्यत्र ग्रामशब्दः ॥ अनिवसन्तः किं । दाक्षिग्रामः । दाक्षिनिवास इत्यर्थः ॥

## घोषादिषु च ॥ ८५ ॥

घोष । इत्येवमादिषु चोत्तरपदेषु पूर्वपदमाद्युदात्तं स्यात् ॥ दाक्षिघोषः । दाक्षिकटः ॥

## छात्र्यादयः शालायां ॥ ८६ ॥

छात्रि । इत्येवमादयः शाला । इत्येतस्मिन्नुत्तरपदे पर आद्युदात्ता भवन्ति ॥ छात्रिशाला । पेलिशाला ॥

## प्रस्थे ऽवृद्धमकर्क्यादीनां ॥ ८७ ॥

प्रस्थ । इत्येतस्मिन्नुत्तरपदे परे कर्क्यादिभिन्नमवृद्धं पूर्वपदमाद्युदात्तं भवति ॥ इन्द्रप्रस्थः । कुण्डप्रस्थः ॥ अवृद्धं किं । दाक्षिप्रस्थः ॥ अकर्क्यादीनां किं । कर्कीप्रस्थः ॥

## मालादीनां च ॥ ८८ ॥

प्रस्थ । इत्येतस्मिन्नुत्तरपदे परे माला । इत्येवमादीनामादिरुदात्तः स्यात् ॥ मालाप्रस्थः । शालाप्रस्थः ॥

## अमहन्नवं नगरे ऽनुदीचां ॥ ८९ ॥

महत् । नवन् । इत्येतद्भिन्नं पूर्वपदं नगर उत्तरपदे पर आद्युदात्तं स्यात् । तच्चेदुदीचां न भवति ॥ सुह्मनगरं । विराटनगरं ॥ अमहन्नवं किं । महानगरं । नवनगरं ॥ अनुदीचां किं । कान्तीनगरी ॥

## अर्मे चावर्णं द्व्यच्त्र्यच् ॥ ९० ॥

अर्म । इत्येतस्मिन्नुत्तरपदे परे द्व्यच्कं त्र्यच्कं च पूर्वपदमवर्णान्तमाद्युदात्तं स्यात् ॥ द्व्यच् । गुप्तार्मं ॥ त्र्यच् । कुक्कुटार्मं ॥ अवर्णं किं । वृहदर्मं ॥ द्व्यच्त्र्यच् किं । कपिञ्जलार्मं ॥ अमहन्नवमित्येव । महार्मं । नवार्मं ॥

## न भूताधिकसंजीवमद्राश्मकज्जलं ॥ ११ ॥

भूत । अधिक । संजीव । मद्र । अश्म । कज्जल । इत्येते ऽर्म । इत्येतस्मिन्नुत्तरपदे परे आद्युदात्ता न भवन्ति ॥ भूतार्म । अधिकार्म । संजीवार्म ॥ मद्राश्मग्रहणं संघातविगृहीतार्थं । इति काशिका ॥ मद्रार्म । अश्मार्म । मद्राश्मार्म । कज्जलार्म ॥

## अन्तः ॥ १२ ॥

अधिकारो ऽयमुत्तरपदादिरित्यतः प्राक् ॥ इत उत्तरं पूर्वपदस्यान्त उदात्तो वेदितव्यः ॥ वक्ष्यति सर्वं गुणकार्त्स्न्ये । इत्यादि । सर्वश्वेतः । सर्वकृष्णः ॥

## सर्वं गुणकार्त्स्न्ये ॥ १३ ॥

सर्व । इत्येतत् पूर्वपदं गुणकार्त्स्न्ये वर्तमानमन्तोदात्तं स्यात् ॥ सर्वश्वेतः । सर्वकृष्णः । सर्वमहान् ॥ सर्व किं । परमश्वेतः ॥ गुणग्रहणं किं । सर्वसौवर्णः ॥ कार्त्स्न्ये किं । सर्वेषां श्वेततरः । सर्वश्वेतः ॥

## संज्ञायां गिरिनिकाययोः ॥ १४ ॥

गिरि । निकाय । इत्येतयोरुत्तरपदयोः संज्ञायां पूर्वपदमन्तोदात्तं स्यात् ॥ अञ्जनागिरिः । मौण्डनिकायः ॥ संज्ञायां किं । परमगिरिः । ब्राह्मणनिकायः ॥

## कुमार्यां वयसि ॥ १५ ॥

कुमारी । इत्येतस्मिन्नुत्तरपदे वयसि गम्ये पूर्वपदमन्तोदात्तं स्यात् ॥ वृद्धकुमारी । जरत्कुमारी ॥ कुमारीशब्दः पुंसा सहासंप्रयोगमात्रं प्रवृत्तिनिमित्तमुपादाय प्रयुक्तो वृद्धादिभिर्विशेषणैः सह समानाधिकरणः । तत्र वय इह गम्यते । न कुमारत्वमेव ॥ वयसि किं । परमकुमारी ॥

## उदके ऽकेवले ॥ १६ ॥

उदक । इत्येतस्मिन्नुत्तरपदे मिश्रवाचिनि समासे पूर्वपदमन्तोदात्तं स्यात् ॥ गुडोदकं । तिलोदकं ॥ स्वरे कृते एकादेशः स्वरितो वानुदात्ते पदादाविति पक्षे स्वरितः ॥ अकेवले किं । शीतोदकं ॥

## द्विगौ क्रतौ ॥ ९७ ॥

द्विगुसंज्ञक उत्तरपदे परे क्रतुवाचिनि समासे पूर्वपदमन्तोदात्तं स्यात् ॥ गर्गत्रिरात्रः । चारकत्रिरात्रः ॥ द्विगौ किं । अतिरात्रः ॥ क्रतौ किं । बिल्वहोमस्य सप्तरात्रो बिल्वसप्तरात्रः ॥

## सभायां नपुंसके ॥ ९८ ॥

सभा । इत्येतस्मिन्नुत्तरपदे परे नपुंसकलिङ्गे समासे पूर्वपदमन्तोदात्तं स्यात् ॥ गोपालसभं । स्त्रीसभं ॥ सभायां किं । ब्राह्मणसेनं ॥ नपुंसके किं । राजसभा ॥ सभा राजेत्यादिप्रतिपदोक्तनपुंसकग्रहणाद्रमणीयसभं ब्राह्मणकुलमित्यत्र नान्तोदात्तत्वं ॥

## पुरे प्राचां ॥ ९९ ॥

पुर । इत्येतस्मिन्नुत्तरपदे परे प्राचां देशे वाच्ये पूर्वपदमन्तोदात्तं स्यात् ॥ शिवदत्तपुरं । नान्दीपुरं ॥ प्राचां किं । काञ्चीपुरं ॥

## अरिष्टगौडपूर्वे च ॥ १०० ॥

अरिष्ट । गौड । इत्येतत्पूर्वके समासे पुर । इत्येतस्मिन्नुत्तरपदे परे पूर्वपदमन्तोदात्तं स्यात् ॥ अरिष्टपुरं । गौडपुरं ॥ पूर्वग्रहणादिहापि भवति । अरिष्टाश्रितपुरं ॥

## न हास्तिनफलकमार्देयाः ॥ १०१ ॥

हास्तिन । फलक । मार्देय । इत्येते पुर । इत्येतस्मिन्नुत्तरपदे परे ऽन्तोदात्ता न भवन्ति ॥ हास्तिनपुरं । फलकपुरं । मार्देयपुरं ॥ पुरे प्राचामित्यस्य निषेधः ॥

## कुशूलकूपकुम्भशालं बिले ॥ १०२ ॥

कुशूल । कूप । कुम्भ । शाला । इत्येते बिल । इत्येतस्मिन्नुत्तरपदे परे ऽन्तोदात्ता भवन्ति ॥ कुशूलबिलं । कूपबिलं । कुम्भबिलं । शालाबिलं ॥ कुशूलेत्यादि किं । सर्पबिलं ॥ बिले किं । कुशूलस्वामी ॥

## दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु ॥ १०३ ॥

दिक्शब्दा ग्रामजनपदाख्यानवाचिषूत्तरपदेषु चानराटे । इत्येतस्मिंश्चोत्तरपदे परे ऽन्तोदात्ता भवन्ति ॥ ग्राम । पूर्वेषुकामशमी । अपरकृष्णमृत्तिका ॥ जनपद । पूर्वपञ्चालाः । अपरपञ्चालाः ॥ आख्यान । पूर्वाधिरामं । अपरयायातं ॥ चानराट । पूर्वचानराटं ॥ कालवाचिनो ऽपि दिक्छब्दस्य परिग्रहार्थं शब्द-ग्रहणं ॥

## आचार्योपसर्जनश्चान्तेवासिनि ॥१०४॥

आचार्योपसर्जनान्तेवासिवाचिन्युत्तरपदे परे दिक्शब्दा अन्तोदात्ता भवन्ति ॥ पूर्वपाणिनीयाः । अपरकाशकृत्स्नाः ॥ आचार्योपसर्जनः किं । पूर्वशिष्याः ॥ अन्तेवासिनि किं । पूर्वपाणिनीयं शास्त्रं ॥

## उत्तरपदवृद्धौ सर्वं च ॥१०५॥

उत्तरपदस्येत्यधिकृत्य विहिता या वृद्धिस्तद्वत्युत्तरपदे परे दिक्छब्दाः सर्वशब्द-श्चान्तोदात्ता भवन्ति ॥ पूर्वपाञ्चालकः । सर्वपाञ्चालकः ॥ उत्तरपदाधिकार-ग्रहणादिह न भवति । सर्वभासः । सर्वकारकः ॥

## बहुव्रीहौ विश्वं संज्ञायां ॥१०६॥

विश्व । इत्येतत् पूर्वपदं बहुव्रीहिसमासे संज्ञायामन्तोदात्तं स्यात् ॥ विश्व-देवाः । विश्वयशाः ॥ पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वे प्राप्ते वचनं ॥ बहुव्रीहौ किं । विश्वे देवाः । विश्वदेवाः ॥ संज्ञायां किं । विश्वे देवा अस्य । विश्वदेवः ॥ प्रागव्ययीभावसंशब्दनाद्बहुव्रीह्यधिकारः ॥

## उदराश्वेषुषु ॥१०७॥

उदर । अश्व । इषु । इत्येतेषूत्तरपदेषु बहुव्रीहौ पूर्वपदमन्तोदात्तं स्यात् ॥ दामोदरः । यौवनाश्वः । महेषुः ॥

## क्षेपे ॥१०८॥

उदर । अश्व । इषु । इत्येतेषूत्तरपदेषु निन्दाविषये बहुव्रीहौ पूर्वपदमन्तो-दात्तं स्यात् ॥ कुण्डोदरः । स्पन्दिताश्वः । चलेषुः ॥ अनुदरः । सूदर इत्यत्र नञ्सुभ्यामित्येतद्भवति विप्रतिषेधेन ॥

## नदी बन्धुनि ॥१०९॥

बन्धु । इत्येतस्मिन्नुत्तरपदे बहुव्रीहौ नदीसंज्ञकं पूर्वपदमन्तोदात्तं स्यात् ॥ गार्गीबन्धुः । वात्सीबन्धुः ॥ नदी किं । ब्रह्मबन्धुः । ब्रह्मन् । इत्येतदाद्युदात्तं ॥ बन्धुनि किं । गार्गीप्रियः ॥

## निष्ठोपसर्गपूर्वमन्यतरस्यां ॥ ११० ॥

उपसर्गपूर्वपदकं निष्ठान्तं पूर्वपदं बहुव्रीहावन्तोदात्तं वा स्यात् ॥ प्रधौतमुखः । प्रक्षालितपादः ॥ निष्ठेति किं । प्रसवैकमुखः ॥ उपसर्गपूर्वं किं । शुष्कमुखः ॥

## उत्तरपदादिः ॥ १११ ॥

अधिकारो ऽयं ॥ इत ऊर्ध्वमुत्तरपदस्यादिरुदात्तो वेदितव्यः ॥ वक्ष्यति कर्णो वर्णलक्षणादिति । शुक्लकर्णः । कृष्णकर्णः ॥

## कर्णो वर्णलक्षणात् ॥ ११२ ॥

कर्ण । इत्येतदुत्तरपदं वर्णवाचिनो लक्षणवाचिनश्च परं बहुव्रीहावाद्युदात्तं स्यात् ॥ वर्णात् । शुक्लकर्णः ॥ लक्षणात् । शङ्कुकर्णः ॥ पशूनां विभागार्थं दात्राद्याकारं कर्णादिषु यच्चिह्नं क्रियते तदिह लक्षणं ॥ कर्णः किं । शुक्लपादः ॥ वर्णलक्षणात् किं । शोभनकर्णः ॥

## संज्ञौपम्ययोश्च ॥ ११३ ॥

कर्ण । इत्येतदुत्तरपदं संज्ञायामौपम्ये च यो बहुव्रीहिस्तत्राद्युदात्तं स्यात् ॥ संज्ञायां । मणिकर्णः ॥ औपम्ये । गोकर्णः ॥

## कण्ठपृष्ठग्रीवाजङ्घं च ॥ ११४ ॥

कण्ठ । पृष्ठ । ग्रीवा । जङ्घा । इत्येतान्युत्तरपदानि संज्ञायामौपम्ये च यो बहुव्रीहिस्तत्राद्युदात्तानि भवन्ति ॥ शितिकण्ठः । खरकण्ठः ॥ नाकपृष्ठः । अन्नपृष्ठः ॥ दशग्रीवः । अश्वग्रीवः ॥ तालजङ्घः । अश्वजङ्घः ॥

## शृङ्गमवस्थायां च ॥ ११५ ॥

शृङ्ग । इत्येतदुत्तरपदमवस्थायां संज्ञौपम्ययोश्च बहुव्रीहावाद्युदात्तं स्यात् ॥ अवस्थायां । उद्गतशृङ्गः ॥ संज्ञायां । ऋष्यशृङ्गः ॥ औपम्ये । गोशृङ्गः ॥ अवस्थादिषु किं । स्थूलशृङ्गः ॥

## नञो जरमरमित्रमृताः ॥११६॥

जर । मर । मित्र । मृत । इत्येतान्युत्तरपदानि नञः पराणि बहुव्रीहावा-द्युदात्तानि भवन्ति ॥ अजरः । अमरः । अमित्रः । अमृतः ॥ नञः किं । ब्राह्मणामित्रः ॥ जरेत्यादि किं । अशत्रुः ॥

## सोर्मन्नसी अलोमोषसी ॥११७॥

सु । इत्येतस्मात् परं मन् । अस् । इत्येतदन्तमुत्तरपदं बहुव्रीहावाद्युदात्तं स्यात् । लोमन् । उषस् । इत्येतौ वर्जयित्वा ॥ मन् । सुकर्मा । सुधर्मा ॥ अस् । सुपयाः । सुयशाः ॥ सोः किं । कृतकर्मा । कृतयशाः ॥ मन्नसी किं । सुराजा ॥ अलोमोषसी किं । सुलोमा । सूषाः ॥ नञ्सुभ्यामित्य-स्यापवादो ऽयं ॥

## क्रत्वादयश्च ॥११८॥

क्रतु । इत्येवमादयः सु । इत्येतस्मात् परा बहुव्रीहावाद्युदात्ता भवन्ति ॥ सुक्रतुः । सुदृशीकः ॥

## आद्युदात्तं द्व्यच् छन्दसि ॥११९॥

सु । इत्येतस्मात् परमाद्युदात्तं द्व्यच्कं यदुत्तरपदं तद्बहुव्रीहौ वेद आद्युदा-त्तमेव स्यात् ॥ स्वश्वाः । सुरथाः ॥ अश्व रथ । इत्येतौ नित्स्वरेणाद्युदात्तौ ॥ आद्युदात्तं किं । या सुबाहुः । बाहु । इत्येतत् प्रत्ययस्वरेणान्तोदात्तं ॥ द्व्यच् किं । सुहिरण्यः ॥ नञ्सुभ्यामित्यस्यापवादो ऽयं ॥

## वीरवीर्यौ च ॥१२०॥

वीर । वीर्य । इत्येतौ च सु । इत्येतस्मात् परौ बहुव्रीहौ छन्दस्याद्युदात्तौ भवतः ॥ सुवीरेण ते । सुवीर्यस्य पतयः स्याम ॥

## कूलतीरतूलमूलशालाक्षसममव्ययीभावे ॥१२१॥

कूल । तीर । तूल । मूल । शाला । अक्ष । सम । इत्येतान्युत्तरपदा-न्यव्ययीभावसमास आद्युदात्तानि भवन्ति ॥ उपकूलं । उपतीरं । उपतूलं । उपमूलं । उपशालं । उपाक्षं ॥ सम । निःसमं । विषमं । दुःषमं ॥ कूले-त्यादि किं । उपकुम्भं ॥ अव्ययीभावे किं । परमकूलं ॥

## कंसमन्थशूर्पपाय्यकाण्डं द्विगौ ॥१२२॥

कंस । मन्थ । शूर्प । पाय्य । काण्ड । इत्येतान्युत्तरपदानि द्विगौ समासे आद्युदात्तानि भवन्ति ॥ द्विकंसः । द्विमन्थः । द्विशूर्पः । द्विपाय्यः । द्विकाण्डः ॥ द्विगौ किं । परमकंसः ॥

## तत्पुरुषे शालायां नपुंसके ॥१२३॥

तत्पुरुषे नपुंसकलिङ्गे शाला । इत्येतदुत्तरपदमाद्युदात्तं स्यात् ॥ ब्राह्मणशालं । क्षत्रियशालं ॥ तत्पुरुषे किं । दृढशालं ॥ शालायां किं । ब्राह्मणसेनं ॥ नपुंसके किं । ब्राह्मणशाला ॥

## कन्था च ॥१२४॥

कन्था । इत्येतदुत्तरपदं तत्पुरुषे नपुंसकलिङ्गे आद्युदात्तं स्यात् ॥ सौशमिकन्थं । आह्वरकन्थं ॥ नपुंसके किं । दाक्षिकन्था ॥

## आदिश्चिहणादीनां ॥१२५॥

कन्था । इत्येतदन्ते तत्पुरुषे चिहण । इत्येवमादीनां पूर्वपदानामादिरुदात्तः स्यात् ॥ चिहणकन्थं । मडरकन्थं ॥ आदिरिति वर्तमाने पुनरादिग्रहणं पूर्वपदाद्युदात्तार्थं ॥

## चेलखेटकटुककाण्डं गर्हायां ॥१२६॥

चेल । खेट । कटुक । काण्ड । इत्येतान्युत्तरपदानि निन्दायां तत्पुरुषे आद्युदात्तानि भवन्ति ॥ भार्याचेलं । नगरखेटं । दधिकटुकं । भूतकाण्डं ॥ चेलादिसादृश्येन भार्यादीनां निन्दा । उपमितं व्याघ्रादिभिरिति समासः ॥ गर्हायां किं । परमचेलं ॥

## चीरमुपमानं ॥१२७॥

चीर । इत्येतदुपमानवाचि तत्पुरुषे आद्युदात्तं स्यात् ॥ वस्त्रं चीरमिव । वस्त्रचीरं । कम्बलचीरं ॥ उपमानं किं । परमचीरं ॥

## पललसूपशाकं मिश्रे ॥१२८॥

पलल । सूप । शाक । इत्येतान्युत्तरपदानि मिश्रवाचिनि तत्पुरुषे आद्युदा-

त्तानि भवन्ति ॥ गुडपललं । मूलकसूपः । मुद्गशाकं ॥ भक्ष्येण मिश्रीकरणमिति समासः ॥ मिश्रे किं । परमपललं ॥

## कूलसूदस्थलकर्षाः संज्ञायां ॥१२९॥

कूल । सूद । स्थल । कर्ष । इत्येतान्युत्तरपदानि तत्पुरुषे संज्ञायामाद्युदात्तानि भवन्ति ॥ दाक्षिकूलं । देवसूदं । दाण्डायनस्थली ॥ लिङ्गविशिष्टपरिभाषया स्थालीशब्दो गृह्यते ॥ दाक्षिकर्षः ॥ ग्रामनामान्येतानि ॥ संज्ञायां किं । उत्तमकूलं ॥

## अकर्मधारये राज्यं ॥१३०॥

राज्य । इत्येतदुत्तरपदं कर्मधारयभिन्ने समास आद्युदात्तं स्यात् ॥ ब्राह्मणराज्यं । क्षत्रियराज्यं ॥ अकर्मधारये किं । परमराज्यं ॥

## वर्ग्यादयश्च ॥१३१॥

वर्ग्य । इत्येवमादीन्युत्तरपदानि कर्मधारयभिन्ने तत्पुरुष आद्युदात्तानि भवन्ति ॥ अर्जुनवर्ग्यः । अर्जुनपक्ष्यः ॥ दिगादिषु ये वर्ग्य । इत्येवमादयः पठितास्त एव यत्प्रत्ययान्ता वर्ग्यादयः ॥

## पुत्रः पुम्भ्यः ॥१३२॥

पुत्र । इत्येतदुत्तरपदं पुंलिङ्गेभ्यः परमाद्युदात्तं स्यात् ॥ दाशकपुत्रः । माहिषकपुत्रः ॥ पुत्रः किं । माहिषकमातुलः ॥ पुम्भ्यः किं । गार्गीपुत्रः ॥

## नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः ॥१३३॥

आचार्य । राजन् । ऋत्विज् । संयुक्त । ज्ञाति । इत्येतदाख्येभ्यः परः पुत्र । इत्येत आद्युदात्तो न स्यात् ॥ आख्याग्रहणात् पर्यायाणां तद्विशेषणानां च ग्रहणं ॥ आचार्यपुत्रः । उपाध्यायपुत्रः । शाकटायनपुत्रः ॥ राजपुत्रः । ईश्वरपुत्रः । नन्दपुत्रः ॥ ऋत्विक्पुत्रः । याजकपुत्रः । होतुःपुत्रः ॥ संयुक्तपुत्रः । संबन्धिपुत्रः । श्यालपुत्रः ॥ ज्ञातिपुत्रः । भ्रातुःपुत्रः ॥ एषु समासान्तोदात्तत्वं ॥

## चूर्णादीन्यप्राणिषष्ठ्याः ॥१३४॥

चूर्ण । इत्येवमादीन्युत्तरपदान्यप्राणिवाचिनः षष्ठ्यन्तात् पराणि तत्पुरुषे आद्यु-

दात्तानि भवन्ति ॥ मुद्गचूर्णं ॥ अप्राणिषष्ठ्याः किं । मत्स्यचूर्णं ॥ षष्ठ्याः किं । परमचूर्णं ॥

## षट् च काण्डादीनि ॥१३५॥

काण्ड । इत्येवमादीनि षडुत्तरपदान्यप्राणिवाचिनः षष्ठ्यन्तात् पराण्याद्युदात्तानि भवन्ति ॥ दर्भकाण्डं । दर्भचीरं । तिलपललं । मुद्गसूपः । मूलकशाकं । नदीकूलं ॥ षडिति किं । राजसूदः ॥

## कुण्डं वनं ॥१३६॥

कुण्ड । इत्येतदुत्तरपदं वनवाचि तत्पुरुष आद्युदात्तं स्यात् ॥ दर्भकुण्डं । शरकुण्डं ॥ कुण्डशब्दो ऽत्र कुण्डसादृश्येन वने वर्तते ॥ वनं किं । मृत्कुण्डं ॥

## प्रकृत्या भगालं ॥१३७॥

भगालवाच्युत्तरपदं तत्पुरुषे प्रकृत्या स्यात् ॥ कुम्भीभगालं । कुम्भीकपालं । कुम्भीनदालं ॥ भगालादीनि मध्योदात्तानि ॥ प्रकृत्या । इत्यधिकारो ऽन्त इति यावत् ॥

## शितेर्नित्याबह्वज्बहुव्रीहावभसत् ॥१३८॥

शिति । इत्येतस्मात् परमुत्तरपदं नित्याबह्वच्कं बहुव्रीहौ प्रकृत्या स्यात् । भसत् । इत्येतं वर्जयित्वा ॥ शितिपादः । शित्यंसः । शित्योष्ठः ॥ पादशब्दो वृषादिराद्युदात्तः । अंस । ओष्ठ । इत्येतौ नित्स्वरेणाद्युदात्तौ ॥ शितेः किं । दर्शनीयपादः ॥ नित्येति किं । शितिककुत् । शितिककुदः ॥ अबह्वच्च किं । शितिललाटः ॥ बहुव्रीहौ किं । शितेः पादः । शितिपादः ॥ अभसत् किं । शितिभसत् । शितिशब्द आद्युदात्तः ॥ पूर्वपदप्रकृतिस्वरापवादो ऽयं ॥

## गतिकारकोपपदात् कृत् ॥१३९॥

गतिसंज्ञकात् । कारकात् । उपपदाच्च परं कृदन्तमुत्तरपदं तत्पुरुषे प्रकृत्या स्यात् ॥ गतेः । प्रकारकः । प्रहारकः ॥ कारकात् । इध्मप्रव्रश्चनः । पलाशशातनः ॥ उपपदात् । ईषत्करः । दुष्करः ॥ सर्वत्र लित्स्वरः ॥ शेषे षष्ठीयं । कृदन्तं त्रिपदार्थं ॥ गतिकारकोपपदात् किं । देवदत्तकारकः ।

## उभे वनस्पत्यादिषु युगपत् ॥१४०॥

वनस्पति । इत्येवमादिषूभे पूर्वोत्तरपदे युगपत् प्रकृत्या भवत ॥ वनस्पति । बृहस्पति । पूर्वोत्तरपदे आद्युदात्ते ॥

## देवताद्वन्द्वे च ॥१४१॥

देवतावाचिनां द्वन्द्वे पूर्वोत्तरपदे युगपत् प्रकृत्या भवत ॥ इन्द्रासोमौ । इन्द्राबृहस्पती । पूर्वोत्तरपदे आद्युदात्ते ॥ देवता किं । प्लक्षन्यग्रोधौ ॥ द्वन्द्वे किं । अग्निष्टोम ॥

## नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु ॥१४२॥

पृथिवी । रुद्र । पूषन् । मन्थिन् । इत्येतद्भिन्नेऽनुदात्तादावुत्तरपदे सति देवताद्वन्द्वे पूर्वोत्तरपदे प्रकृत्या न भवत ॥ इन्द्राग्नी । इन्द्रवायू । अग्निवायुशब्दावन्तोदात्तौ ॥ उत्तरपदग्रहणमनुदात्तादाविति तद्विशेषणं यथा विज्ञायेत । द्वन्द्वविशेषणं मा भूत् ॥ अनुदात्तादिग्रहणं विधिप्रतिषेधयोर्विषयविभागार्थं ॥ अपृथिवीत्यादि किं । द्यावापृथिव्यौ । सोमरुद्रौ । इन्द्रापूषणौ । शुक्रमन्थिनौ ॥ पृथिव्यादिषूभे युगपत् प्रकृतिस्वरे भवत एव ॥

## अन्तः ॥१४३॥

अधिकारोऽयं ॥ इत ऊर्ध्वं यदनुक्रमिष्यामस्तत्र समासस्योत्तरपदस्यान्त उदात्तो भवतीत्येवं वेदितव्यं ॥ वक्ष्यति थाथघञ्क्ताजबित्रकाणामिति । सुनीथ । अवभृथ ॥

## थाथघञ्क्ताजबित्रकाणां ॥१४४॥

थ । अथ । घञ् । क्त । अच । अप् । इत्र । क । इत्येवमन्तानामुत्तरपदानां गतिकारकोपपदात् परेषामन्त उदात्त स्यात् ॥ थ । सुनीथ । अवभृथ । थथन्प्रत्ययान्तावेतौ ॥ अथ । आवसथ । उपवसथ ॥ घञ् । प्रभेद । काष्ठभेद ॥ क्त । दूरादागत । विशुष्क । आतपशुष्क ॥ अच् । प्रक्षय । प्रजय ॥ अप् । प्रलव । प्रसव ॥ इत्र । प्रलवित्र । प्रसवित्र ॥ क । गोवृष । सर्षप ॥ गतिकारकोपपदादित्येव । सुस्तुत । अतिस्तुतं भवता । धर्मप्रवचनीयत्वादव्ययस्वर ॥

## सूपमानात् क्तः ॥ १४५ ॥

सु । इत्येतस्मादुपमानाच्च परं क्त । इत्येतदन्तमुत्तरपदमन्तोदात्तं स्यात् ॥ सुकृतं । सुभुक्तं ॥ उपमानात् । वृकावलुप्तं । शशप्लुतं ॥ गतिकारकोपपदादित्येव । सुस्तुतं भवता ॥ गतिरनन्तर इत्येतस्य तृतीया कर्मणीत्येतस्य च बाधकमिदं ॥

## संज्ञायामनाचितादीनां ॥ १४६ ॥

गतिकारकोपपदात् परं क्तप्रत्ययान्तमुत्तरपदं संज्ञायामन्तोदात्तं स्यात् । आचित । इत्येवमादीन् वर्जयित्वा ॥ संभूतः । उपहूतः । परिजग्धः । धनुःखाता । कुद्दालकखातं । हस्तिमृदिता ॥ गतिरनन्तर इति तृतीया कर्मणीति च प्राप्तः स्वरो बाध्यते ॥ अनाचितादीनां किं । आचितं । पर्याचितं ॥

## प्रवृद्धादीनां च ॥ १४७ ॥

प्रवृद्ध । इत्येवमादीनां क्तप्रत्ययान्तमुत्तरपदमन्तोदात्तं स्यात् ॥ प्रवृद्धः । प्रयुक्तः ॥ असंज्ञार्थो ऽयमारम्भः ॥

## कारकाद्दत्तश्रुतयोरेवाशिषि ॥ १४८ ॥

दत्त । श्रुत । इत्येतयोरेवोत्तरपदयोः कारकात् परयोः संज्ञायामाशिषि गम्यमानायामन्त उदात्तः स्यात् ॥ देवा एनं देयासुः । देवदत्तः ॥ विष्णुरेनं श्रूयात् । विष्णुश्रुतः ॥ कारकात् किं । अकारकान्नियमो मा भूत् । संश्रुतः ॥ दत्तश्रुतयोः किं । देवपालितः । अस्मान्नियमादत्र संज्ञायामनाचितेति न । तृतीया कर्मणीति तु भवति ॥ एवेति किं । कारकनियमो यथा स्यात् । दत्तश्रुतनियमो मा भूत् । अकारकादपि हि दत्तश्रुतयोर्भवति । संश्रुतः ॥ आशिषि किं । देवैः खाता । देवखाता ॥

## इत्थंभूतेन कृतमिति च ॥ १४९ ॥

इत्थंभूतेन कृतमित्येतस्मिन्नर्थे यः समासस्तत्र क्तप्रत्ययान्तमुत्तरपदमन्तोदात्तं स्यात् ॥ सुप्तप्रलपितं । उन्मत्तप्रलपितं । प्रमत्तगीतं ॥ कृतमिति क्रियासामान्ये करोतिः । न त्वभूतप्रादुर्भाव एव । तेन प्रलपितादपि कृतं भवति ॥ तृतीया कर्मणीत्यस्य बाधकमिदं ॥

## अनो भावकर्मवचनः ॥१५०॥

अनप्रत्ययान्तं भाववाचि कर्मवाचि चोत्तरपदं कारकात् परमन्तोदात्तं स्यात् ॥ भाववचनः । ओदनभोजनं सुखं । पयःपानं सुखं ॥ कर्मवचनः । राजभोजनाः शालयः ॥ अनः किं । हस्तादायः ॥ भावकर्मवचनः किं । दन्तधावनं । करणे ल्युट् ॥ कारकात् किं । निदर्शनं ॥ सर्वेषु प्रत्युदाहरणेषु प्रकृतिस्वरो भवति ॥

## मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः ॥१५१॥

मन्प्रत्ययान्तं । क्तिन्प्रत्ययान्तं । व्याख्यान । शयन । आसन । स्थान । याजकादि । क्रीत । इत्येतच्चोत्तरपदं तत्पुरुषे कारकात् परमन्तोदात्तं स्यात् ॥ मन् । रथवर्त्म ॥ क्तिन् । पाणिनिकृतिः ॥ व्याख्यान । छन्दोव्याख्यानं ॥ शयन । राजशयनं ॥ आसन । राजासनं ॥ स्थान । गोस्थानं ॥ याजकादिभिश्चेति सूत्रे ये याजकादयः षष्ठीसमासाः पूर्वं पठिता इहापि त एव गृह्यन्ते ॥ ब्राह्मणयाजकः । क्षत्रिययाजकः ॥ क्रीत । अश्वक्रीतः ॥ कारकादित्येव । प्रकृतिः ॥ कृत्स्वरापवादोऽयं ॥ क्रीतशब्दे तु तृतीया कर्मणीत्यस्यापवादः ॥

## सप्तम्याः पुण्यं ॥१५२॥

पुण्य । इत्येतदुत्तरपदं सप्तम्यन्तात् परं तत्पुरुषेऽन्तोदात्तं स्यात् ॥ अध्ययनपुण्यं ॥ सप्तम्याः किं । वेदेन पुण्यं । वेदपुण्यं । तत्पुरुषे तुल्यार्थ इति स्वरः ॥

## ऊनार्थकलहं तृतीयायाः ॥१५३॥

ऊनार्थानि । कलहशब्दश्च । इत्येतान्युत्तरपदानि तृतीयान्तात् पराण्यन्तोदात्तानि भवन्ति ॥ माषोन । माषविकलं ॥ असिकलहः । वाक्कलहः ॥ अत्र केचिदर्थ । इति स्वरूपग्रहणमिच्छन्ति । धान्यार्थः ॥ प्रतिपदोक्तत्वात् तृतीयासमासपरिग्रहे सिद्धे तृतीयाया इति विस्पष्टार्थं ॥

## मिश्रं चानुपसर्गमसंधौ ॥१५४॥

मिश्र । इत्येतदुत्तरपदमनुपसर्गं रहितमसंधौ गम्यमाने तृतीयान्तात् परमन्तोदात्तं

स्यात् ॥ गुडमिश्राः ॥ मिश्रं किं । गुडधानाः ॥ अनुपसर्गे किं । गुडसंमिश्राः ॥ इहानुपसर्गग्रहणं ज्ञापकं । अन्यत्र मिश्रग्रहणे सोपसर्गग्रहणस्य ॥ पपाबन्धेनै- कार्थ्यं संधिः ॥ असंधौ किं । ब्राह्मणमिश्रो राजा । ब्राह्मणैः सह संहित ऐकार्थ्यमापन्न इत्यर्थः ॥

## नञो गुणप्रतिषेधे संपाद्यर्हहितालमर्थास्तद्धिताः ॥ १५५ ॥

संपादिन् । अर्ह । हित । अलं । इत्येवमर्था ये तद्धितास्तदन्तान्युत्तरपदानि गुणप्रतिषेधार्थनञः पराण्यन्तोदात्तानि भवन्ति ॥ संपादिन् । अकार्णवेष्टकिकं ॥ अर्ह । अच्छेदिकः ॥ हित । अवत्सीयः ॥ अलं । असांतापिकः ॥ नञः किं । विगार्दभरथिकः ॥ गुणो हि तद्धितार्थप्रवृत्तिनिमित्तं संपादित्वाद्युच्यते । तत्प्र- तिषेधो यत्रोच्यते तत्रायं विधिः ॥ गुणप्रतिषेधे किं । गार्दभरथिकादन्यः । अगार्दभरथिकः ॥ संपादीत्यादि किं । अपाणिनीयः ॥ तद्धिताः किं । अवोढा । अर्हे तृच् ॥

## ययतोश्चातदर्थे ॥ १५६ ॥

य । यत् । इत्येतौ वा तद्धितावतदर्थे वर्तमानौ तदन्तयोरुत्तरपदयोर्गुणप्रतिषेधा- र्थनञः परयोरन्त उदात्तः स्यात् ॥ य । अपाश्या । अतृण्या ॥ यत् । अदन्त्यं । अकपर्य ॥ अतदर्थे किं । अपाद्यं । तदर्थे यत् ॥ तद्धित इत्येव । अदेयं ॥ गुणप्रतिषेध इत्येव । दन्त्यादन्यत् । अदन्त्यं ॥ निरनुबन्धकैकानुबन्धकयोरेव ग्रहणं । वामदेवाड्ड्यड्ड्यौ । अवामदेव्यं । अत्र न भवति ॥

## अच्कावशक्तौ ॥ १५७ ॥

अच् । क । इत्येवमन्तमुत्तरपदं नञः परमशक्तौ गम्यमानायामन्तोदात्तं स्यात् ॥ अच् । अपचः । अपठः ॥ क । अविक्षिपः । अविलिखः ॥ अशक्तौ किं । अपचः परिव्राजकः ॥ गुणप्रतिषेध इत्येव । अन्यो ऽयं पचादपचः ॥

## आक्रोशे च ॥ १५८ ॥

अच् । क । इत्येवमन्तमुत्तरपदं नञः परमाक्रोशे च गम्ये ऽन्तोदात्तं स्यात् ॥ अच् । अपचः । अपठो जाल्मः ॥ क । अविक्षिपः । अविलिखः ॥

## संज्ञायां ॥ १५९ ॥

नञः परमुत्तरपदं संज्ञाबोधकमाक्रोशे गम्ये ऽन्तोदात्तं स्यात् ॥ अदेवदत्तः । अयज्ञदत्तः ॥

## कृत्योकेष्णुच्चार्वादयश्च ॥ १६० ॥

कृत्य । उक । इष्णुच् । इत्येवमन्ताश्चार्वादयश्च नञः परे ऽन्तोदात्ता भवन्ति ॥ कृत्य । अकर्तव्यं । अकरणीयं ॥ उक । अनागामुकं । अनपलाषुकं ॥ इष्णुच् । अनलंकरिष्णुः । अनिराकरिष्णुः । इष्णुज्ग्रहणे खिष्णुच्छूयनुबन्धको ऽपि गृह्यते । इकारादेर्विधानसामर्थ्यात् । अनाढ्यंभविष्णुः । असुभगंभविष्णुः ॥ चार्वादयः । अचारुः । असाधुः ॥

## विभाषा तृन्नन्नतीक्ष्णशुचिषु ॥ १६१ ॥

तृन् । अन्न । तीक्ष्ण । शुचि । इत्येतेषु नञः परेष्वन्त उदात्तो वा स्यात् ॥ तृन् । अकर्ता ॥ अन्न । अनन्नं ॥ तीक्ष्ण । अतीक्ष्णं ॥ शुचि । अशुचि ॥ पक्षे ऽव्ययस्वरो भवति ॥

## बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने ॥ १६२ ॥

इदं । एतद् । तद् । इत्येतेभ्यः परस्य प्रथम । इत्येतस्य पूरणार्थप्रत्ययान्तस्य च क्रियागणने वर्तमानस्य बहुव्रीहावन्त उदात्तः स्यात् ॥ इदं गमनं भोजनं वा प्रथमं यस्य सः । इदंप्रथमः । इदंद्वितीयः । इदंतृतीयः ॥ एतत्प्रथमः । एतद्द्वितीयः । एतत्तृतीयः ॥ तत्प्रथमः । तद्द्वितीयः । तत्तृतीयः ॥ बहुव्रीहौ किं । अनेन प्रथमः । इदंप्रथमः ॥ इदमेतत्तद्भ्यः किं । यत्प्रथमः ॥ प्रथमपूरणयोः किं । तद्बहुः ॥ क्रियागणने किं । अयं प्रथमः प्रधानमेषां । इदंप्रथमाः । द्रव्यगणनमेतत् ॥ गणने किं । इदंप्रथमाः । इदंप्रधाना इत्यर्थः ॥ उत्तरपदस्य कार्यित्वात् कपि पूर्वमन्तोदात्तं भवति । इदंप्रथमकाः ॥ [illegible] प्राग्बहुव्रीहावित्यधिकारः ॥

## संख्यायाः स्तनः ॥ १६३ ॥

स्तन । संख्याया उत्तरपदं संख्यावाचिनः परं बहुव्रीहावन्तोदात्तं स्यात् ॥ द्विस्तना । चतुःस्तना ॥ संख्यायाः किं । दर्शनीयस्तना ॥ स्तनः किं । द्विशिराः ॥

## विभाषा छन्दसि ॥ १६४ ॥

स्तन । इत्येतदुत्तरपदं संख्यावाचिनः परं बहुव्रीहौ समासे वेदे वान्तोदात्तं स्यात् ॥ द्विस्तनां कुर्याद्वामदेवः । द्विस्तनां करोति ॥

## संज्ञायां मित्राजिनयोः ॥ १६५ ॥

मित्र । अजिन । इत्येतयोरुत्तरपदयोर्बहुव्रीहौ संज्ञायामन्त उदात्तः स्यात् ॥ मित्र । देवमित्रः । ब्रह्ममित्रः ॥ अजिन । वृकाजिनः । कृष्णाजिनः ॥ संज्ञायां किं । प्रियमित्रः ॥

## व्यवायिनो ऽन्तरं ॥ १६६ ॥

अन्तर । इत्येतदुत्तरपदं व्यवधानवाचिनः परं बहुव्रीहावन्तोदात्तं स्यात् ॥ वस्त्रान्तरः ॥ व्यवायिनः किं । आत्मा स्वभावो ऽन्तरो ऽन्यो यस्य स आत्मान्तरः ॥

## मुखं स्वाङ्गं ॥ १६७ ॥

मुख । इत्येतदुत्तरपदं स्वाङ्गवाचि बहुव्रीहावन्तोदात्तं स्यात् ॥ गौरमुखः । भद्रमुखः ॥ स्वाङ्गं किं । दीर्घमुखा शाला । पारिभाषिकमिह स्वाङ्गं ॥

## नाव्ययदिक्छब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः ॥ १६८ ॥

अव्यय । दिक्छब्द । गो । महत् । स्थूल । मुष्टि । पृथु । वत्स । इत्येतेभ्यः परं मुख । इत्येतदुत्तरपदं स्वाङ्गवाचि बहुव्रीहौ समासे ऽन्तोदात्तं न स्यात् ॥ उच्चैर्मुखः । नीचैर्मुखः ॥ प्राङ्मुखः । प्रत्यङ्मुखः ॥ गोमुखः ॥ महामुखः ॥ स्थूलमुखः ॥ मुष्टिमुखः ॥ पृथुमुखः ॥ वत्समुखः ॥ एषु पूर्वपदप्रकृतिस्वरो भवति । गोमुष्टिवत्सपूर्वस्योपमानलक्षणो विकल्पो ऽनेन बाध्यते ॥

## निष्ठोपमानादन्यतरस्यां ॥ १६९ ॥

निष्ठान्तात् । उपमानवाचिनश्च परं मुख । इत्येतदुत्तरपदं स्वाङ्गवाचि बहुव्रीहावन्तोदात्तं वा स्यात् ॥ प्रक्षालितमुखः । प्रक्षालितमुखः । प्रक्षालितमुखः । पक्षे निष्ठोपसर्गपूर्वमन्यतरस्यामिति पूर्वपदान्तोदात्तत्वं । तदभावे पूर्वपदप्रकृतिस्वरत्वेन निपातस्वर इति त्रैरूप्यं ॥ उपमानात् । सिंहमुखः । व्याघ्रमुखः ॥

## ज्ञातिकालसुखादिभ्यो ऽनाच्छादनात् क्तो ऽकृतमितप्रतिपन्नाः ॥१७०॥

आच्छादनवर्जिताज्जातिवाचिनः । कालवाचिनः । सुखादिभ्यश्च परं क्तप्रत्ययान्तमुत्तरपदं बहुव्रीहावन्तोदात्तं स्यात् । कृत । मित । प्रतिपन्न । इत्येतान् वर्जयित्वा ॥ जाति । सारंगजग्धः । सुरापीतः ॥ काल । मासजातः । द्व्यहजातः ॥ सुखादि । सुखजातः । दुःखजातः ॥ जातीत्यादि किं । पुत्रजातः ॥ अनाच्छादनात् किं । वस्त्रच्छन्नः ॥ अकृतेत्यादि किं । कुण्डकृतः । कुण्डमितः । कुण्डप्रतिपन्नः ॥ अस्मादेव ज्ञापकान्निष्ठान्तस्य परनिपातः ॥ सुखादयस्तृतीयाध्याय उक्ताः ॥

## वा जाते ॥१७१॥

जात इत्येतदुत्तरपदं जातिकालसुखादिभ्यः परं बहुव्रीहावन्तोदात्तं वा स्यात् ॥ दन्तजातः । दन्तजातः ॥ मासजातः । मासजातः ॥ सुखजातः । सुखजातः । दुःखजातः । दुःखजातः ॥

## नञ्सुभ्यां ॥१७२॥

नञ् । सु । इत्येताभ्यां परमुत्तरपदं बहुव्रीहावन्तोदात्तं स्यात् ॥ अव्रीहिः । सुमाषः ॥

## कपि पूर्वं ॥१७३॥

नञ् । सु । इत्येताभ्यां परमुत्तरपदं बहुव्रीहौ कपि परे ऽन्तोदात्तं स्यात् ॥ अब्रह्मबन्धुकः । सुकुमारीकः ॥

## ह्रस्वान्ते ऽन्त्यात् पूर्वं ॥१७४॥

नञ् । सु । इत्येताभ्यां परं बहुव्रीहौ यद्ध्रस्वान्तमुत्तरपदं तत्र कपि परे ऽन्त्यात् पूर्वमुदात्तं स्यात् ॥ अव्रीहिकः । सुमाषकः ॥ पुनः पूर्वग्रहणं प्रवृत्तिभेदेन नियमार्थं । ह्रस्वान्ते ऽन्त्यादेव पूर्वमुदात्तं भवति । न तु कपि पूर्वं । अज्ञकः । अत्र कबन्तस्यान्तोदात्तत्वं भवति ॥

## बहोर्नञ्वदुत्तरपदभूम्नि ॥१७५॥

बहु । इत्येतस्मादुत्तरपदार्थबहुत्ववाचिनः परस्य नञः परस्य च स्वरः स

एव स्वरः स्यात् ॥ तत्सुभ्यामित्युक्तं । बहोरपि तथा । बहुयवः । बहुव्रीहिः । अत्रोत्तरपदस्यान्त उदात्तः ॥ कपि पूर्वमित्युक्तं । तदिह भवति । बहुकुमारीकः ॥ ह्रस्वान्ते ऽन्त्यात् पूर्वमित्युक्तं । तदिह भवति । बहुजरः । बहुमित्रः ॥ उत्तरपदभूम्नि किं । बहुपु मनो ऽस्य । बहुमनाः ॥

## न गुणादयो ऽवयवाः ॥ १७६ ॥

गुण । इत्येवमादयो ऽवयववाचका बहु । इत्येतस्मात् परे बहुव्रीहावन्तोदात्ता न भवन्ति ॥ बहुगुणा रज्जुः । बह्वक्षरं पदं । बहुच्छन्दो मानः । बहुसूक्तकः । बह्वध्यायः ॥ अवयवाः किं । बहुगुणो ब्राह्मणः । अध्ययनश्रुतसमुदाचारादयो ऽत्र गुणाः ॥

## उपसर्गात् स्वाङ्गं ध्रुवमपर्शु ॥ १७७ ॥

उपसर्गसंज्ञकात् परं स्वाङ्गं ध्रुवं पर्शुवर्जितं बहुव्रीहावन्तोदात्तं स्यात् ॥ प्रपृष्ठः । प्रललाटः ॥ ध्रुवमेकरूपं ॥ उपसर्गात् किं । दर्शनीयललाटः ॥ स्वाङ्गं किं । प्रशाखो वृक्षः ॥ ध्रुवं किं । उद्बाहुः ॥ अपर्शु किं । उत्पर्शुः ॥

## वनं समासे ॥ १७८ ॥

वन । इत्येतदुत्तरपदमुपसर्गसंज्ञकात् परं समासमात्रे ऽन्तोदात्तं स्यात् ॥ प्रवणे यष्टव्यं । निर्वणे प्रणिधीयते ॥ समासमात्रपरिग्रहार्थं समासग्रहणं ॥

## अन्तः ॥ १७९ ॥

अन्तर् । इत्येतस्मात् परं वन । इत्येतदुत्तरपदं समासे ऽन्तोदात्तं स्यात् ॥ अन्तर्वणो देशः ॥ अनुपसर्गार्थं सूत्रं ॥

## अन्तश्च ॥ १८० ॥

अन्त । इत्येतदुत्तरपदमुपसर्गात् परं समासे ऽन्तोदात्तं स्यात् ॥ पर्यन्तः । समन्तः ॥

## न निविभ्यां ॥ १८१ ॥

नि । वि । इत्येताभ्यां परमन्त । इत्येतदुत्तरपदमन्तोदात्तं न स्यात् ॥ न्यन्तः । व्यन्तः ॥ अत्र पूर्वपदप्रकृतिस्वरत्वे यणि च कृते उदात्तस्वरितयोर्यणः स्वरितो ऽनुदात्तस्येति स्वरितो भवति ॥

## परेरभितोभाविमण्डलं ॥१८२॥

परि । इत्येतस्मात् परमुभयतोभाविवाचकं यत् कूलादुत्तरपदं मण्डलं । इत्येतच्चोत्तरपदमन्तोदात्तं स्यात् ॥ परिकूलं । परितीरं ॥ परिमण्डलं ॥

## प्रादस्वाङ्गं संज्ञायां ॥१८३॥

प्र । इत्येतस्मादस्वाङ्गवाच्युत्तरपदं संज्ञायामन्तोदात्तं स्यात् ॥ प्रकोष्ठः । प्रद्वारं ॥ अस्वाङ्गं किं । प्रहस्तं ॥ संज्ञायां किं । प्रपीठं ॥

## निरुदकादीनि च ॥१८४॥

निरुदक । इत्येवमादीनि शब्दरूपाण्यन्तोदात्तानि भवन्ति ॥ निरुदकं । निरुपलं ॥

## अभेर्मुखं ॥१८५॥

अभि । इत्येतस्मात् परं मुख । इत्येतदुत्तरपदमन्तोदात्तं स्यात् ॥ अभिमुखः । अभिमुखा शाला ॥ अबहुव्रीह्यर्थमव्ययार्थमस्वाङ्गार्थं च वचनं ॥

## अपाच्च ॥१८६॥

अप । इत्येतस्मात् परं मुख । इत्येतदुत्तरपदमन्तोदात्तं स्यात् ॥ अपमुखं ॥ योगविभाग उत्तरार्थः ॥

## स्फिगपूतवीणाञ्जोध्वकुक्षिसीरनामनाम च ॥१८७॥

स्फिग । पूत । वीणा । अञ्जस् । अध्वन् । कुक्षि । सीरनामन् । नामन् । इत्येतान्युत्तरपदान्यप । इत्येतस्मात् पराण्यन्तोदात्तानि भवन्ति ॥ अपस्फिगं । अपपूतं । अपवीणं । अपाञ्जः । अपाध्वा । अपकुक्षिः ॥ सीरनामन् । अपसीरं । अपहलं ॥ नामन् । अपनाम ॥

## अधेरुपरिस्थं ॥१८८॥

अधि । इत्येतस्मात् परमुपरिस्थवाचकमुत्तरपदमन्तोदात्तं स्यात् ॥ अध्यारूढो दन्तः । अधिदन्तः । दन्तस्योपरि जातो दन्त उच्यते ॥ उपरिस्थं किं । अधिकरणं ॥

## अनोरप्रधानकनीयसी ॥१८९॥

अनु । इत्येतस्मात् परमप्रधानवाचि कनीयस् । इत्येतच्चोत्तरपदमन्तोदात्तं स्यात् ॥ अनुगतो ज्येष्ठं । अनुज्येष्ठः । अनुमध्यमः ॥ पूर्वपदार्थप्रधानः प्रादिसमासः ॥ अनुगतः कनीयान् । अनुकनीयान् ॥ प्रधानार्थं च कनीयोग्रहणं ॥ अप्रधाने-त्यादि किं । अनुगतो ज्येष्ठो ऽनुज्येष्ठः ॥

## पुरुषश्चान्वादिष्टः ॥ १९० ॥

अनु । इत्येतस्मात् परं पुरुष । इत्येतदुत्तरपदमन्वादिष्टवाच्यन्तोदात्तं स्यात् ॥ अन्वादिष्टः पुरुषः । अनुपुरुषः ॥ कथितानुकथितो ऽन्वादिष्टः ॥ अन्वादिष्टः किं । अनुगतः पुरुषः । अनुपुरुषः ॥

## अतेरकृत्पदे ॥ १९१ ॥

अति । इत्येतस्मात् परमकृदन्तं पद । इत्येतच्चोत्तरपदमन्तोदात्तं स्यात् ॥ अत्यङ्कुशो नागः । अतिकशो ऽश्वः ॥ पद । अतिपदा गायत्री ॥ अकृत्पद इति किं । अतिकालः ॥

## नेरनिधाने ॥ १९२ ॥

नि । इत्येतस्मात् परमुत्तरपदं प्रकाशने ऽर्थे ऽन्तोदात्तं स्यात् ॥ निमूलं । न्यक्षं ॥ अप्रकाशता निधानं ॥ अनिधाने किं । निहितो दण्डः । निदण्डः ॥

## प्रतेरंश्वादयस्तत्पुरुषे ॥ १९३ ॥

प्रति । इत्येतस्मात् परे । अंशु । इत्येवमादयस्तत्पुरुषे ऽन्तोदात्ता भवन्ति ॥ प्रत्यंशुः । प्रतिजनः ॥ तत्पुरुषे किं । प्रत्यंशुः । बहुव्रीहिरयं ॥

## उपाद्द्व्यजजिनमगौरादयः ॥ १९४ ॥

उप । इत्येतस्मात् परं द्व्यच्कमुत्तरपदमजिन । इत्येतच्च तत्पुरुषे ऽन्तोदात्तं स्यात् । गौरादीन् वर्जयित्वा ॥ उपदेवः । उपसोमः ॥ अजिन । उपाजिनः ॥ अगौरादयः किं । उपगौरः ॥ तत्पुरुषे किं । उपगतः सोमो ऽस्य । उपसोमः ॥

## सोरवक्षेपणे ॥ १९५ ॥

सु । इत्येतस्मात् परमुत्तरपदं निन्दायां गम्यमानायां तत्पुरुषे ऽन्तोदात्तं स्यात् ॥

सुप्रत्यवसितः । सुशब्दो ऽत्र पूजायां । असूयया तथाकथनादक्षेपणं वाक्यार्थः ॥
सोः किं । कुब्राह्मणः ॥ अक्षेपणे किं । सुतृणं ॥

## विभाषोत्पुच्छे ॥११६॥

उत्पुच्छ । इत्येतस्मिन् तत्पुरुषे ऽन्त उदात्तो वा स्यात् ॥ उत्क्रान्तः पुच्छात् ।
उत्पुच्छः । उत्पुच्छः ॥ यदा तु पुच्छमुदस्यति । उत्पुच्छयतीति णिजन्तादच् ।
उत्पुच्छस्तदा थाथादिसूत्रेण नित्ये प्राप्ते विकल्पो ऽयं । सेयमुभयत्र विभाषा ॥
तत्पुरुषे किं । उत्पुच्छः । बहुव्रीहिरयं ॥

## द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ॥११७॥

द्वि । त्रि । इत्येताभ्यां परेषु पाद् । दत् । मूर्धन् । इत्येतेषु सत्सु बहुव्रीहावन्त उदात्तो वा स्यात् ॥ द्विपात् । द्विपात् ॥ द्विदन् । द्विदन् ॥ द्विमूर्धा ।
द्विमूर्धा ॥ त्रिपात् । त्रिपात् ॥ त्रिदन् । त्रिदन् ॥ त्रिमूर्धा । त्रिमूर्धा ॥
मूर्धन्नित्यकृतसमासान्तनिर्देशात् समासान्तो ऽनित्यः । समासान्तपक्षे ऽप्ययं स्वरः ।
द्विमूर्धः । द्विमूर्धः । त्रिमूर्धः । त्रिमूर्धः ॥ द्वित्रिभ्यां किं । कल्याणमूर्धा ॥
पादित्यादि किं । द्विहस्तः ॥ बहुव्रीहौ किं । द्वयोर्मूर्धा । द्विमूर्धा ॥

## सक्थं चाक्रान्तात् ॥११८॥

सक्थ । इत्येतदुत्तरपदं बहुव्रीहावक्रान्तात् परमन्तोदात्तं वा स्यात् ॥ गौरसक्थः । गौरसक्थः ॥ अक्रान्तात् किं । चक्रसक्थः । पक्षश्चित्वान्नित्यमन्तोदात्तत्वं ॥

## परादिश्छन्दसि बहुलं ॥११९॥

सक्थ । इत्येतस्य परस्यादिर्वेदे उदात्तो वा स्यात् ॥ अञ्जिसक्थमालभेत ।
त्वष्ट्रे लोमशसक्थौ ॥

॥ इति सूत्रपाठे षष्ठाध्यायस्य द्वितीयः पादः ॥

## अलुगुत्तरपदे ॥ १ ॥

अधिकारोऽयं ॥ यदित ऊर्ध्वमनुक्रमिष्यामोऽलुगुत्तरपद इत्येवं तद्वेदितव्यं ॥ वक्ष्यति पञ्चम्याः स्तोकादिभ्यः । स्तोकान्मुक्तः ॥ उत्तरपदे किं । निष्क्रान्तः स्तोकात् । निःस्तोकः ॥ अलुगित्येतत् प्रागानङः । उत्तरपद इत्येतदा पादपरिसमाप्तेः ॥

## पञ्चम्याः स्तोकादिभ्यः ॥ २ ॥

स्तोकार्थ । अन्तिकार्थ । दूरार्थ । कृच्छ्र । इत्येतेभ्यः परस्याः पञ्चम्या उत्तरपदे परेऽलुक् स्यात् ॥ स्तोकान्मुक्तः । अल्पान्मुक्तः ॥ अन्तिकादागतः । अभ्यासादागतः ॥ दूरादागतः । विप्रकृष्टादागतः ॥ कृच्छ्रान्मुक्तः ॥ समासे कृते प्रातिपदिकावयवत्वात् प्राप्तो लुग्निषिध्यते । द्विबहुवचनान्तानां स्तोकादीनामनभिधानान्न समासः । तेनात्र समासफलमैकपद्यमैकस्वर्यं च न भवति ॥

## ओजःसहोम्भस्तमसस्तृतीयायाः ॥ ३ ॥

ओजस् । सहस् । अम्भस् । तमस् । इत्येतेभ्य उत्तरपदे परे तृतीयाया अलुक् स्यात् ॥ ओजसाकृतं । सहसाकृतं । अम्भसाकृतं । तमसाकृतं ॥

## मनसः संज्ञायां ॥ ४ ॥

मनस् । इत्येतस्मात् संज्ञायां तृतीयाया अलुक् स्यात् ॥ मनसागुप्ता । मनसादत्ता ॥ संज्ञायां किं । मनोदत्ता कन्या ॥

## आज्ञायिनि च ॥ ५ ॥

मनस् । इत्येतस्मादाज्ञायिन्युत्तरपदे परे तृतीयाया अलुक् स्यात् ॥ मनसाज्ञातुं शीलमस्य । मनसाज्ञायी ॥

## आत्मनश्च पूरणे ॥ ६ ॥

आत्मन् । इत्येतस्मात् पूरणप्रत्ययान्त उत्तरपदे परे तृतीयाया अलुक् स्यात् ॥ आत्मनापञ्चमः । आत्मनाष्टमः ॥ आत्मचतुर्थ इति तु बहुव्रीहिः ॥

## वैयाकरणाख्यायां चतुर्थ्याः ॥ ७ ॥

आत्मन् । इत्येतस्माद्वैयाकरणाकृतसंज्ञायां चतुर्थ्या अलुक् स्यात् ॥ आत्मनेपदं । आत्मनेभाषा ॥ तादर्थ्ये चतुर्थी ॥ चतुर्थीति योगविभागात् समासः ॥

## परस्य च ॥८॥

पर । इत्येतस्माद्वैयाकरणाख्यायां चतुर्थ्या अलुक् स्यात् ॥ परस्मैपदं । परस्मैभाषा ॥

## हलदन्तात् सप्तम्याः संज्ञायां ॥९॥

हल्प्रत्याहारान्तात् । अ । इत्येतदन्ताच्च संज्ञाविषये सप्तम्या अलुक् स्यात् ॥ युधिष्ठिरः । त्वचिसारः ॥ अदन्तात् । अरण्येतिलकाः । वनेकिंशुकाः ॥ हलदन्तात् किं । नदीकुक्कुटिका ॥ संज्ञायां किं । अक्षशौण्डः ॥

## कारनाम्नि च प्राचां हलादौ ॥१०॥

प्राचां देशे यत् कारनाम तत्र हलादावुत्तरपदे हलदन्तात् सप्तम्या अलुक् स्यात् ॥ दृषदिमाषकः । मुकुटेकार्षापणं । कारविशेषस्य संज्ञे एते ॥ पूर्वेण सिद्धे नियमार्थमिदं । कारनाम्न्येव । प्राचामेव । हलादावेवेति नियमत्रयमत्रेष्यते ॥ कारनाम्नि किं । अभ्याहितपशुः । कारादन्यस्य देयस्यैतन्नाम ॥ प्राचां किं । यूथपशुः ॥ हलादौ किं । अविकटोरणः ॥ हलदन्तादित्येव । नदीदोहः ॥

## मध्याद्गुरौ ॥११॥

मध्य । इत्येतस्मात् सप्तम्या गुरु । इत्येतस्मिन्नुत्तरपदे परे ऽलुक् स्यात् ॥ मध्येगुरुः ॥

## अमूर्धमस्तकात् स्वाङ्गादकामे ॥१२॥

मूर्धन् । मस्तक । इत्येतद्भिन्नात् स्वाङ्गवाचकाद्धलदन्तात् काम । इत्येतद्भिन्न उत्तरपदे परे सप्तम्या अलुक् स्यात् ॥ कण्ठेकालः । उरसिलोमा ॥ अमूर्धमस्तकात् किं । मूर्धशिखः । मस्तकशिखः ॥ स्वाङ्गात् किं । अक्षशौण्डः ॥ अकामे किं । मुखकामः ॥ हलदन्तादित्येव । अङ्गुलित्राणः । जङ्घावलिः ॥

## बन्धे च विभाषा ॥१३॥

बन्ध । इत्येतस्मिन् घञन्त उत्तरपदे परे हलदन्तात् सप्तम्या अलुग्वा स्यात् ॥

हस्तेबन्धः । हस्तबन्धः ॥ हलदन्तादित्येव । गुप्तिबन्धः ॥ स्वाङ्गाद्बहुव्रीहौ पूर्वेण नित्ये ऽलुकि प्राप्ते तत्पुरुषे चाप्राप्त इयं विभाषा ॥

## तत्पुरुषे कृति बहुलं ॥ १४ ॥

तत्पुरुषे समासे कृदन्त उत्तरपदे सप्तम्या बहुलमलुक् स्यात् ॥ स्तम्बेरमः । कर्णेजपः ॥ न च भवति । कुरुचरः । मद्रचरः ॥

## प्रावृट्शरत्कालदिवां जे ॥ १५ ॥

प्रावृष् । शरद् । काल । दिव् । इत्येतेभ्यो ज । इत्येतस्मिन्नुत्तरपदे परे सप्तम्या अलुक् स्यात् ॥ प्रावृषिजः । शरदिजः । कालेजः । दिविजः ॥ पूर्वसूत्रस्यैवायं प्रपञ्चः ॥

## विभाषा वर्षक्षरशरवरात् ॥ १६ ॥

वर्ष । क्षर । शर । वर । इत्येतेभ्यो ज । इत्येतस्मिन्नुत्तरपदे परे सप्तम्या अलुग्वा स्यात् ॥ वर्षेजः । वर्षजः ॥ क्षरेजः । क्षरजः ॥ शरेजः । शरजः ॥ वरेजः । वरजः ॥

## घकालतनेषु कालनाम्नः ॥ १७ ॥

घसंज्ञके प्रत्यये परे काल । तन । इत्येतयोश्च परयोः कालनाम्नः सप्तम्या अलुग्वा स्यात् ॥ घ । पूर्वाह्णेतरे । पूर्वाह्णतरे । पूर्वाह्णेतमे । पूर्वाह्णतमे ॥ काल । पूर्वाह्णेकाले । पूर्वाह्णकाले ॥ तन । पूर्वाह्णेतनः । पूर्वाह्णतनः ॥ कालनाम्नः किं । शुक्लतमे ॥ हलदन्तादित्येव । रात्रितरायां ॥ काल इति स्वरूपस्य ग्रहणं नार्थस्य ॥

## शयवासवासिष्वकालात् ॥ १८ ॥

शय । वास । वासिन् । इत्येतेषूत्तरपदेष्वकालवाचिनः सप्तम्या अलुग्वा स्यात् ॥ खेशयः । खशयः ॥ ग्रामेवासः । ग्रामवासः ॥ ग्रामेवासी । ग्रामवासी ॥ अकालात् किं । पूर्वाह्णशयः ॥ हलदन्तादित्येव । भूमिशयः ॥

## नेन्सिद्धबध्नातिषु च ॥ १९ ॥

इन्नन्त उत्तरपदे सिद्ध । इत्येतस्मिन् बध्नातौ चोत्तरपदे परे सप्तम्या अलुग्न

आत्मन् । इत्येतस्माद्वैयाकरणकृतसंज्ञायां चतुर्थ्या अलुक् स्यात् ॥ आत्मनेपदं । आत्मनेभाषा ॥ तादर्थ्ये चतुर्थी ॥ चतुर्थीति योगविभागात् समासः ॥

## परस्य च ॥८॥

पर । इत्येतस्माद्वैयाकरणाख्यायां चतुर्थ्या अलुक् स्यात् ॥ परस्मैपदं । परस्मैभाषा ॥

## हलदन्तात् सप्तम्याः संज्ञायां ॥९॥

हल्प्रत्याहारान्तात् । अ । इत्येतदन्ताच्च संज्ञाविषये सप्तम्या अलुक् स्यात् ॥ युधिष्ठिरः । त्वचिसारः ॥ अदन्तात् । अरण्येतिलकाः । वनेकिंशुकाः ॥ हलदन्तात् किं । नदीकुक्कुटिका ॥ संज्ञायां किं । अक्षशौण्डः ॥

## कारनाम्नि च प्राचां हलादौ ॥१०॥

प्राचां देशे यत् कारनाम तत्र हलादावुत्तरपदे हलदन्तात् सप्तम्या अलुक् स्यात् ॥ दृषदिमाषकः । मुकुटेकार्षापणं । कारविशेषस्य संज्ञे एते ॥ पूर्वेण सिद्धे नियमार्थमिदं । कारनाम्न्येव । प्राचामेव । हलादावेवेति नियमत्रयमत्रेष्यते ॥ कारनाम्नि किं । अभ्याहितपशुः । कारादन्यस्य देयस्यैतन्नाम ॥ प्राचां किं । यूथपशुः ॥ हलादौ किं । अविकटोरणः ॥ हलदन्तादित्येव । नदीदोहः ॥

## मध्याद्गुरौ ॥११॥

मध्य । इत्येतस्मात् सप्तम्या गुरु । इत्येतस्मिन्नुत्तरपदे परे ऽलुक् स्यात् ॥ मध्येगुरुः ॥

## अमूर्धमस्तकात् स्वाङ्गादकामे ॥१२॥

मूर्धन् । मस्तक । इत्येतद्भिन्नात् स्वाङ्गवाचकाद्धलदन्तात् काम । इत्येतद्भिन्न उत्तरपदे परे सप्तम्या अलुक् स्यात् ॥ कण्ठेकालः । उरसिलोमा ॥ अमूर्धमस्तकात् किं । मूर्धशिखः । मस्तकशिखः ॥ स्वाङ्गात् किं । अक्षशौण्डः ॥ अकामे किं । मुखकामः ॥ हलदन्तादित्येव । अङ्गुलित्राणः । जङ्घावलिः ॥

## बन्धे च विभाषा ॥१३॥

बन्ध । इत्येतस्मिन् घजन्त उत्तरपदे परे हलदन्तात् सप्तम्या अलुग्वा स्यात् ॥

हस्तेबन्धः । हस्तबन्धः ॥ हलदन्तादित्येव । गुप्तिबन्धः ॥ स्वाङ्गाद्बहुव्रीहौ पूर्वेण नित्ये ऽलुकि प्राप्ते तत्पुरुषे चाप्राप्त इयं विभाषा ॥

## तत्पुरुषे कृति बहुलम् ॥ १४ ॥

तत्पुरुषे समासे कृदन्त उत्तरपदे सप्तम्या बहुलमलुक् स्यात् ॥ स्तम्बेरमः । कर्णेजपः ॥ न च भवति । कुरुचरः । मद्रचरः ॥

## प्रावृट्शरत्कालदिवां जे ॥ १५ ॥

प्रावृष् । शरद् । काल । दिव् । इत्येतेभ्यो ज । इत्येतस्मिन्नुत्तरपदे परे सप्तम्या अलुक् स्यात् ॥ प्रावृषिजः । शरदिजः । कालेजः । दिविजः ॥ पूर्वसूत्रस्यैवायं प्रपञ्चः ॥

## विभाषा वर्षक्षरशरवरात् ॥ १६ ॥

वर्ष । क्षर । शर । वर । इत्येतेभ्यो ज । इत्येतस्मिन्नुत्तरपदे परे सप्तम्या अलुग्वा स्यात् ॥ वर्षेजः । वर्षजः ॥ क्षरेजः । क्षरजः ॥ शरेजः । शरजः ॥ वरेजः । वरजः ॥

## घकालतनेषु कालनाम्नः ॥ १७ ॥

घसंज्ञके प्रत्यये परे काल । तन । इत्येतयोश्च परयोः कालनाम्नः सप्तम्या अलुग्वा स्यात् ॥ घ । पूर्वाह्णेतरे । पूर्वाह्णतरे । पूर्वाह्णेतमे । पूर्वाह्णतमे ॥ काल । पूर्वाह्णेकाले । पूर्वाह्णकाले ॥ तन । पूर्वाह्णेतनः । पूर्वाह्णतनः ॥ कालनाम्नः किं । शुक्लतमे ॥ हलदन्तादित्येव । रात्रितरायां ॥ काल इति स्वरूपस्य ग्रहणं नार्थस्य ॥

## शयवासवासिष्वकालात् ॥ १८ ॥

शय । वास । वासिन् । इत्येतेषूत्तरपदेष्वकालवाचिनः सप्तम्या अलुग्वा स्यात् ॥ खेशयः । खशयः ॥ ग्रामेवासः । ग्रामवासः ॥ ग्रामेवासी । ग्रामवासी ॥ अकालात् किं । पूर्वाह्णशयः ॥ हलदन्तादित्येव । भूमिशयः ॥

## नेन्सिद्धबध्नातिषु च ॥ १९ ॥

इन्नन्त उत्तरपदे सिद्ध । इत्येतस्मिन् बध्नातौ चोत्तरपदे परे सप्तम्या अलुग्न

स्यात् ॥ इन् । स्थण्डिलवर्ती । स्थण्डिलशायी ॥ सिद्ध । सांकाश्यसिद्धः ॥ बध्नाति । चक्रबद्धः ॥

## स्थे च भाषायां ॥२०॥

स्थ । इत्येतस्मिन्नुत्तरपदे परे लोके सप्तम्या अलुग्न स्यात् ॥ समस्थः । कूटस्थः ॥ भाषायां किं । कृष्णोऽस्याखरेष्ठः ॥

## षष्ठ्या आक्रोशे ॥२१॥

उत्तरपदे पर आक्रोशे गम्ये षष्ठ्या अलुक् स्यात् ॥ चौरस्यकुलं । दासस्यकुलं ॥ आक्रोशे किं । ब्राह्मणकुलं ॥

## पुत्रेऽन्यतरस्यां ॥२२॥

पुत्र । इत्येतस्मिन्नुत्तरपदे पर आक्रोशे गम्ये षष्ठ्या अलुग्वा स्यात् ॥ दास्याः-पुत्रः । दासीपुत्रः । वृषल्याःपुत्रः । वृषलीपुत्रः ॥ आक्रोशे किं । ब्राह्मणपुत्रः ॥

## ऋतो विद्यायोनिसंबन्धेभ्यः ॥२३॥

ऋ । इत्येतदन्तेभ्यो विद्यासंबन्धवाचिभ्यो योनिसंबन्धवाचिभ्यश्चोत्तरपदे परे षष्ठ्या अलुक् स्यात् ॥ होतुरन्तेवासी । पितुःपुत्रः ॥ ऋतः किं । आचार्यपुत्रः । मातुलपुत्रः ॥

## विभाषा स्वसृपत्योः ॥२४॥

स्वसृ । पति । इत्येतयोरुत्तरपदयोर्ऋकारान्तेभ्यो विद्यायोनिसंबन्धवाचिभ्यः षष्ठ्या अलुग्वा स्यात् ॥ स्वसृ । मातुःष्वसा । मातुःस्वसा । मातृष्वसा ॥ पितुःष्वसा । पितुःस्वसा । पितृष्वसा ॥ अलुकि विकल्पेन षत्वं । लुकि च नित्यं वक्ष्यति ॥ पति । दुहितुःपतिः । दुहितृपतिः । ननान्दुःपतिः । ननान्दृपतिः ॥

## आनङृतो द्वन्द्वे ॥२५॥

ऋ । इत्येतदन्तानां विद्यायोनिसंबन्धवाचिनां यो द्वन्द्वस्तत्रोत्तरपदे परे पूर्वपदस्य । आनङ् । इत्येष आदेशः स्यात् ॥ विद्यासंबन्धवाचिभ्यः । होतापोतारौ ।

नेष्टोद्गातारौ ॥ योनिसंबन्धवाचिभ्यः । मातापितरौ । याताननान्दरौ ॥ आ-ङित्येव कर्तव्ये नकारोच्चारणं परत्वनिवृत्त्यर्थं ॥ ऋतः किं । पितृपितामहौ ॥

## देवताद्वन्द्वे च ॥ २६ ॥

देवतावाचिनां द्वन्द्व उत्तरपदे परे पूर्वपदस्यानङ् । इत्येष आदेशः स्यात् ॥ इन्द्रावरुणौ । इन्द्रासोमौ ॥ पुनर्द्वन्द्वग्रहणं लोके प्रसिद्धसाहचर्याणां वेदे सह-दाननिर्दिष्टानां यो द्वन्द्वस्तत्परिग्रहार्थं । तेन ब्रह्मप्रजापती इत्यादिषु न भवति । नैतौ लोके प्रसिद्धसाहचर्यौ । नापि वेदे सहदाननिर्दिष्टौ ॥

## ईदग्नेः सोमवरुणयोः ॥ २७ ॥

सोम । वरुण । इत्येतयोः परतो देवताद्वन्द्वे ऽग्नि । इत्येतस्य । ई । इत्येष आदेशः स्यात् ॥ अग्नीषोमौ । अग्नीवरुणौ ॥

## इद्वृद्धौ ॥ २८ ॥

कृतवृद्धावुत्तरपदे परे देवताद्वन्द्वे ऽग्नि । इत्येतस्य । इ । इत्येष आदेशः स्यात् ॥ अग्नीवरुणौ देवते अस्याः । आग्निवारुणीं । अग्नामरुतौ देवते अस्य । आग्निमारुतं कर्म । अण् । इहोभयत्र ईत्वमानङं च बाधित्वा इकारः । देवताद्वन्द्वे चेत्युभयपदवृद्धिः ॥ वृद्धौ किं । आग्नेन्द्रः । नेन्द्रस्य परस्येति वृद्धिनिषेधः ॥

## दिवो द्यावा ॥ २९ ॥

दिव् । इत्येतस्योत्तरपदे परे देवताद्वन्द्वे द्यावा । इत्येष आदेशः स्यात् ॥ द्यावाभूमी । द्यावाक्षमे ॥

## दिवसश्च पृथिव्यां ॥ ३० ॥

पृथिवी । इत्येतस्मिन्नुत्तरपदे परे दिव् । इत्येतस्य दिवस । द्यावा । इत्येतावादेशौ स्यातां ॥ द्यौश्च पृथिवी च । दिवस्पृथिव्यौ । द्यावापृथिव्यौ ॥ सकारे ऽकारो रुत्वादिवारणार्थः ॥

## उषासोषसः ॥ ३१ ॥

उषस् । इत्येतस्य देवताद्वन्द्व उत्तरपदे परे उषासा । इत्येष आदेशः स्यात् ॥ उषासानूर्यं ॥

## मातरपितरावुदीचां ॥३२॥

मातरपितरौ । इत्येतदुदीचामाचार्याणां मतेन द्वन्द्वे निपात्यते ॥ मातरपितरौ ॥ पूर्वपद ऋकारस्य अरङादेशः ॥ उदीचां किं । मातापितरौ । अत्रानङृतो द्वन्द्व इति पूर्वपद आनङादेशः ॥

## पितरामातरा चच्छन्दसि ॥३३॥

पितरामातरा । इत्येतच्छन्दसि द्वन्द्वे निपात्यते ॥ आ मा गन्तां पितरामातरा च ॥ पूर्वपद ऋकारस्य अरङादेशः । उत्तरपदे विभक्तेः सुपां सुलुगित्याकारादेशः । ऋतो ङीति गुणः ॥ छन्दसि किं । मातापितरौ ॥

## स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ॥३४॥

स्त्रीलिङ्गस्य भाषितपुंस्कस्य ऊङ्प्रत्ययान्तभिन्नस्य समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे परतः पुंवद्रूपं स्यात् । न तु पूरणप्रत्ययान्ते प्रियादौ चोत्तरपदे परे ॥ रूपवद्भार्यः । शोभनभार्यः । दीर्घजङ्घः ॥ स्त्रियाः किं । ग्रामणि कुलं दृष्टिरस्य । ग्रामणिदृष्टिः ॥ भाषितपुंस्कात् किं । गङ्गाभार्यः ॥ अनूङ् किं । वामोरूभार्यः ॥ समानाधिकरणे किं । कल्याण्या माता । कल्याणीमाता ॥ स्त्रियां कि । कल्याणी प्रधानं यस्य । कल्याणीप्रधानः ॥ अपूरणीप्रियादिषु किं । कल्याणीपञ्चमा रात्रयः । कल्याणीप्रियः । कल्याणीमनोज्ञः ॥

## तसिलादिष्वा कृत्वसुचः ॥३५॥

तसिल् । इत्येवमादिष्वा कृत्वसुचः प्रत्ययेषु परेषु स्त्रीलिङ्गस्य भाषितपुंस्कस्य ऊङ्प्रत्ययान्तभिन्नस्य पुंवद्रूपं स्यात् ॥ तस्याः । ततः ॥ तस्यां । तत्र ॥ परिगणनं कर्तव्यमव्याप्त्यतिव्याप्तिवारणाय ॥ तसिल् । त्रल् । तरप् । तमप् । चरट् । जातीयर् । कल्पप् । देशीयर् । रूपप् । पाशप् । थम् । थाल् । दा । र्हिल् । तिल् । थ्यन् । इत्येते तसिलादयः ॥

## क्यङ्मानिनोश्च ॥३६॥

क्यङ् । मानिन् । इत्येतयोर्भाषितपुंस्कस्योऽनङ्भिन्नस्य स्त्रीलिङ्गस्य पुंवद्रूपं स्यात् ॥

श्येनी । श्येतायते । रोहिणी । रोहितायते ॥ मानिन् । दर्शनीयां मन्यते । दर्शनीयमानी देवदत्तः ॥

## न कोपधायाः ॥ ३७ ॥

क् । इत्येतदुपधा यस्यास्तस्याः स्त्रिया न पुंवत् स्यात् ॥ पाचिकाभार्यः । मद्रिकाभार्यः । मद्रिकाकल्पा । मद्रिकायते । मद्रिकामानी ॥

## संज्ञापूरण्योश्च ॥ ३८ ॥

संज्ञाभूतस्य पूरणप्रत्ययान्तस्य च स्त्रीलिङ्गस्य न पुंवत् स्यात् ॥ दत्ताभार्यः । दत्तापाशा । पञ्चमीयते । पञ्चमीमानी ॥

## वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे ॥ ३९ ॥

रक्तार्थविकारार्थभिन्नो यो वृद्धिनिमित्तस्तद्धितस्तदन्तस्य स्त्रीलिङ्गस्य पुंवद्भावो न स्यात् ॥ स्रौघ्नीभार्यः । स्रौघ्नीपाशा । स्रौघ्नीयते । स्रौघ्नीमानिनी ॥ वृद्धिनिमित्तस्येति किं । मध्यमभार्यः ॥ तद्धितस्येति किं । काण्डलावभार्यः ॥ अरक्तविकारे किं । काषायीकन्थः । लौहेयी रथः ॥

## स्वाङ्गाच्चेतः ॥ ४० ॥

स्वाङ्गात् परो य ईकारस्तदन्तायाः स्त्रियाः पुंवद्भावो न स्यात् ॥ दीर्घकेशीभार्यः । दीर्घकेशीपाशा । दीर्घकेशीयते ॥ स्वाङ्गात् किं । पटुभार्यः ॥ ईतः किं । अकेशभार्यः ॥

## जातेश्च ॥ ४१ ॥

जातिवाचिनः स्त्रीलिङ्गस्य पुंवद्भावो न स्यात् ॥ कठीभार्यः । कठीपाशा । कठीयते ॥

## पुंवत् कर्मधारयजातीयदेशीयेषु ॥ ४२ ॥

कर्मधारयसमासे । जातीयर् । देशीयर् । इत्येतयोः प्रत्यययोः परतः पूर्वस्य भाषितपुंस्कादनूङ्प्रत्ययान्तभिन्नस्य स्त्रीलिङ्गस्य पुंवद्भावः स्यात् ॥ पाचकवृन्दारिका । पाचकजातीया । पाचकदेशीया । पचद्वृन्दारिका । पचज्जातीया । पचद्देशीया । सौघ्नवृन्दारिका । सौघ्नजातीया । सौघ्नदेशीया । दीर्घजङ्घ-

न्दारिका । दीर्घकेशजातीया । दीर्घकेशदेशीया । कठवृन्दारिका । कठजातीया । कठदेशीया ॥ भाषितपुंस्कात् किं । गङ्गावृन्दारिका ॥ अनूङित्येव । ब्रह्मबन्धूवृन्दारिका ॥ प्रतिषिद्धार्थो ऽयमारम्भः ॥

## घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्यो ऽनेकाचो ह्रस्वः ॥४३॥

घ । रूपप् । कल्पप् । इत्येतेषु प्रत्ययेषु चेलट् । ब्रुव । गोत्र । मत । हत । इत्येतेषु चोत्तरपदेषु परेषु भाषितपुंस्कात् परो यो ङीप् । ङीष् । ङीन् । तदन्तस्यानेकाचो ह्रस्वः स्यात् ॥ घ । ब्राह्मणितरा । ब्राह्मणितमा ॥ रूपप् । ब्राह्मणिरूपा ॥ कल्पप् । ब्राह्मणिकल्पा ॥ चेलट् । ब्राह्मणिचेली ॥ ब्रुव । ब्राह्मणिब्रुवा ॥ गोत्र । ब्राह्मणिगोत्रा ॥ मत । ब्राह्मणिमता ॥ हत । ब्राह्मणिहता ॥ एवं ङीष्ङीनोरप्युदाहार्यं ॥ चेलडादीनि वृत्तिविषये कुत्सनवाचीनि । तैः कुत्सितानि कुत्सनैरिति समासः ॥ ङ्यः किं । दत्तातरा ॥ अनेकाच इत्युत्तरसूत्रेण सह विषयविभागार्थं ॥ भाषितपुंस्कात् किं । आमलकीतरा । कुवलीतरा ॥

## नद्याः शेषस्यान्यतरस्यां ॥४४॥

अङ्यन्तस्य नदीसंज्ञकस्य ङ्यन्तस्यैकाचश्च घरूपादिषु ह्रस्वो वा स्यात् ॥ ब्रह्मबन्धुतरा । ब्रह्मबन्धूतरा । ब्रह्मबन्धुतमा । ब्रह्मबन्धूतमा । इत्यादि ॥ ङ्यन्तस्यैकाचः । स्त्रितरा । स्त्रीतरा । स्त्रितमा । स्त्रीतमा ॥

## उगितश्च ॥४५॥

उगितः परयोर्नदीसंज्ञकयोरीदूतोर्घरूपादिषु ह्रस्वो वा स्यात् ॥ श्रेयसितरा । श्रेयसीतरा । श्रेयस्तरा । विदुषितमा । विदुषीतमा । विद्वत्तमा । इत्यादि ॥

## आन्महतः समानाधिकरणजातीययोः ॥४६॥

महत् । इत्येतस्य समानाधिकरणे उत्तरपदे जातीयप्रत्यये च परे । आ । इत्ययमादेशः स्यात् ॥ महादेवः । महाबाहुः ॥ महाजातीयः ॥ समानाधिकरणेत्यादि किं । महतः पुत्रः । महत्पुत्रः ॥ तपरकरणं स्पष्टार्थं ॥ लक्षणप्रतिपदोक्तपरिभाषा तु नेह प्रवर्तते समानाधिकरणग्रहणसामर्थ्यात् ॥

## अष्टनः संख्यायामबहुव्रीह्यशीत्योः ॥ ४७ ॥

द्वि । अष्टन् । इत्येतयोः संख्यावाचिन्युत्तरपदे । आ । इत्ययमादेशः स्यात् । न तु बहुव्रीहावशीतिशब्दे च ॥ द्वादश । द्वाविंशतिः ॥ अष्टादश । अष्टाविंशतिः ॥ द्व्यष्टनः किं । पञ्चदश ॥ संख्यायां किं । द्वैमातुरः । आष्टमातुरः ॥ अबहुव्रीह्यशीत्योः किं । द्वित्राः । द्विदशाः । द्व्यशीतिः ॥

## त्रेस्त्रयः ॥ ४८ ॥

त्रि । इत्येतस्य संख्यावाचिन्युत्तरपदे परे त्रयस् । इत्ययमादेशः स्यात् । न तु बहुव्रीहौ । अशीतिशब्दे च ॥ त्रयोदश । त्रयोविंशतिः ॥ संख्यायां किं । त्रैमातुरः ॥ अबहुव्रीह्यशीत्योः किं । त्रिदशाः । त्र्यशीतिः ॥ प्राक् शतादित्येव । त्रिशतं ॥

## विभाषा चत्वारिंशत्प्रभृतौ सर्वेषां ॥ ४९ ॥

द्वि । अष्टन् । त्रि । इत्येतेषां चत्वारिंशत्प्रभृतौ संख्यायामुत्तरपदे परे ऽबहुव्रीह्यशीत्योः पूर्वोक्तं कार्यं वा स्यात् ॥ द्विचत्वारिंशत् । द्वाचत्वारिंशत् ॥ अष्टचत्वारिंशत् । अष्टाचत्वारिंशत् ॥ त्रिचत्वारिंशत् । त्रयश्चत्वारिंशत् ॥ एवं द्विपञ्चाशत् । द्वापञ्चाशत् । इत्यादि ॥ प्राक् शतादित्येव । द्विशतं । अष्टशतं । त्रिशतं ॥

## हृदयस्य हृल्लेखयदण्लासेषु ॥ ५० ॥

हृदय । इत्येतस्य लेख । यत् । अण् । लास । इत्येतेषु परेषु हृद् । इत्ययमादेशः स्यात् ॥ लेख । हृल्लेखः ॥ यत् । हृद्यं ॥ अण् । हार्दं ॥ लास । हृल्लासः ॥

## वा शोकष्यञ्रोगेषु ॥ ५१ ॥

हृदय । इत्येतस्य शोक । ष्यञ् । रोग । इत्येतेषु परेषु हृद् । इत्ययमादेशो वा स्यात् ॥ शोक । हृच्छोकः । हृदयशोकः ॥ ष्यञ् । सौहार्द्यं । सौहृदय्यं ॥ रोग । हृद्रोगः । हृदयरोगः ॥ हृदयशब्दपर्यायो हृच्छब्दो ऽप्यस्ति । तेनैव सिद्धे प्रपञ्चार्थमिदं सूत्रं ॥

## पादस्य पदाज्यातिगोपहतेषु ॥ ५२ ॥

पाद । इत्येतस्य । आजि । आति । ग । उपहत । इत्येतेषूत्तरपदेषु परेषु पद । इत्ययमादेशः स्यात् ॥ पदाजिः । अजेर्व्यभावो निपातनात् ॥ पदातिः । पदगः । पदोपहतः ॥

## पद्यत्यतदर्थे ॥५३॥

पाद । इत्येतस्यातदर्थे यत्प्रत्यये परे पद् । इत्ययमादेशः स्यात् ॥ पादौ विध्यन्ति । पद्याः शर्कराः । पद्याः कण्टकाः ॥ अतदर्थे किं । पादार्थमुदकं । पाद्यं । पादार्घाभ्यां चेति यत् ॥

## हिमकाषिहतिषु च ॥५४॥

पाद । इत्येतस्य हिम । काषिन् । हति । इत्येतेषु परेषु पद् । इत्ययमादेशः स्यात् ॥ पद्धिमं । पत्काषी । पद्धतिः ॥

## ऋचः शे ॥५५॥

पाद । इत्येतस्य । ऋचो ऽवयवस्य शस्प्रत्यये परे पद् । इत्ययमादेशः स्यात् ॥ पच्छो गायत्रीं शंसति । पादं पादमित्यर्थः ॥ ऋचः किं । पादशः कार्षापणं ददाति ॥

## वा घोषमिश्रशब्देषु ॥५६॥

पाद । इत्येतस्य घोष । मिश्र । शब्द । इत्येतेषूत्तरपदेषु परेषु पद् । इत्ययमादेशो वा स्यात् ॥ पद्घोषः । पादघोषः ॥ पन्मिश्रः । पादमिश्रः ॥ पच्छब्दः । पादशब्दः ॥

## उदकस्योदः संज्ञायां ॥५७॥

उदक । इत्येतस्य संज्ञाविषय उत्तरपदे परे उद । इत्ययमादेशः स्यात् ॥ उदमेघः । उदवाहः ॥ संज्ञायां किं । उदकगिरिः ॥

## पेषंवासवाहनधिषु च ॥५८॥

पेषं । वास । वाहन । धि । इत्येतेषूत्तरपदेषु परेषु । उदक । इत्येतस्य । उद । इत्ययमादेशः स्यात् ॥ उदपेषं पिनष्टि । उदवासः । उदवाहनः । उदधिः ॥

## एकहलादौ पूरयितव्ये ऽन्यतरस्यां ॥ ५९ ॥

असंयुक्तहलादिके पूरयितव्यवाचिन्युत्तरपदे पर उदक । इत्येतस्य । उद । इत्ययमादेशो वा स्यात् ॥ उदकुम्भः । उदककुम्भः । उदपात्रं । उदकपात्रं ॥ एकहलादौ किं । उदकस्थाली ॥ पूरयितव्ये किं । उदकपर्वतः ॥

## मन्थौदनसक्तुविन्दुवज्रभारहारवीवधगाहेषु च ॥ ६० ॥

मन्थ । ओदन । सक्तु । विन्दु । वज्र । भार । हार । वीवध । गाह । इत्येतेषु चोत्तरपदेषु उदक । इत्येतस्य उद । इत्ययमादेशो वा स्यात् ॥ मन्थ । उदमन्थः । उदकमन्थः ॥ ओदन । उदौदनः । उदकौदनः ॥ सक्तु । उदसक्तुः । उदकसक्तुः ॥ विन्दु । उदविन्दुः । उदकविन्दुः ॥ वज्र । उद-वज्रः । उदकवज्रः ॥ भार । उदभारः । उदकभारः ॥ हार । उदहारः । उदकहारः ॥ वीवध । उदवीवधः । उदकवीवधः ॥ गाह । उदगाहः । उदकगाहः ॥

## इको ह्रस्वो ऽङ्यो गालवस्य ॥ ६१ ॥

ङीप् । ङीन् । ङीष् । इत्येतदन्तभिन्नस्य इक्प्रत्याहारान्तस्य पूर्वपदस्योत्तरपदे परे ह्रस्वो वा स्यात् ॥ ग्रामणिपुत्रः । ग्रामणीपुत्रः । ब्रह्मबन्धुपुत्रः । ब्रह्मबन्धूपुत्रः ॥ इकः किं । खट्वापादः ॥ अङ्यः किं । गार्गीपुत्रः ॥ व्यवस्थित-विभाषाश्रयणात् क्वचिन्न भवति । कारीषगन्धीपुत्रः । कारीषगन्धीपतिः ॥ गालवग्रहणं पूजार्थं । अन्यतरस्यामित्यनुवृत्तेः ॥

## एक तद्धिते च ॥ ६२ ॥

एक । इत्येतस्य तद्धित उत्तरपदे च परे ह्रस्वः स्यात् ॥ एकस्या आगतं । एकरूप्यं ॥ उत्तरपदे । एकस्याः क्षीरं । एकक्षीरं ॥ लिङ्गविशिष्टग्रहणमेक-शब्दस्य ह्रस्वत्वं प्रयोजयति ॥

## ङ्यापोः संज्ञाछन्दसोर्बहुलं ॥ ६३ ॥

ङीप् । ङीन् । ङीष् । टाप् । डाप् । चाप् । इत्येतदन्तस्य पूर्वपदस्योत्तरपदे परे संज्ञायां छन्दसि च बहुलं ह्रस्वः स्यात् ॥ संज्ञायां । रेवतिपुत्रः । रोहिणिपुत्रः । शिलवाहं । प्रस्थवाहमित्यादि ॥ न च भवति । नान्दीघोषः ।

लोमकागृहं ॥ छन्दसि । कुमारिदा । अजक्षीरेण जुहोति ॥ न च भवति । फाल्गुणीपौर्णमासी । ऊर्णासूत्रेण कवयो वयन्ति ॥

## त्वे च ॥ ६४ ॥

त्व । इत्येतस्मिन् प्रत्यये परे ङ्यापोः संज्ञाछन्दसोर्ह्रस्वो वा स्यात् ॥ अजत्वं । अजात्वं ॥ रोहिणित्वं । रोहिणीत्वं ॥

## इष्टकेषीकामालानां चिततूलभारिषु ॥ ६५ ॥

इष्टका । इषीका । माला । इत्येतेषां क्रमेण चित । तूल । भारिन् । इत्येतेषूत्तरपदेषु परेषु ह्रस्वः स्यात् ॥ इष्टकाभिश्चितं । इष्टकचितं ॥ इषीकतूलं । मालभारी ॥ इष्टकादिभिस्तदन्तस्यापि ग्रहणं । पक्वेष्टकचितं । मुञ्जेषीकतूलं । उत्पलमालभारिणी ॥

## खित्यनव्ययस्य ॥ ६६ ॥

खि इत्संज्ञको यस्य तदन्त उत्तरपदे परे ऽनव्ययस्य ह्रस्वः स्यात् ॥ कालिंमन्या ॥ अनव्ययस्य किं । दोषामन्यमहः । दिवामन्या रात्रिः ॥

## अरुर्द्विषदजन्तस्य मुम् ॥ ६७ ॥

अरुस् । द्विषत् । इत्येतयोरजन्तस्य च पूर्वपदस्याव्ययभिन्नस्य खिदन्त उत्तरपदे परे मुम् । इत्ययमागमः स्यात् ॥ अरुंतुदः । द्विषंतपः ॥ अजन्तस्य । कालिंमन्या ॥ अरुर्द्विषदजन्तस्य किं । विद्वन्मन्यः ॥ अनव्ययस्येत्येव । दोषामन्यमहः ॥ कृताजन्तकार्यप्रतिपत्त्यर्थमन्तग्रहणं । अतो ह्रस्वत्वे कृते मुम् भवति ॥

## इच एकाचो ऽम् प्रत्ययवच्च ॥ ६८ ॥

इच्प्रत्याहारान्तस्यैकाचः पूर्वपदस्य खिदन्त उत्तरपदे परे ऽमागमः स्यात् । स चाम् द्वितीयैकवचनप्रत्ययवद्भवति ॥ गांमन्यः । स्त्रींमन्यः । स्त्रियंमन्यः । नरंमन्यः । भुवंमन्यः ॥ मध्ये ऽपवादन्यायेनायं सुपो धात्विति लुको बाधकः । स्वमोर्नपुंसकादिति लुक् तु भवति । श्रिमन्यं कुलं ॥ इचः किं । वाङ्मन्यः ॥ एकाचः किं । लेखाभ्रमन्यः ॥

## वाचंयमपुरंदरौ च ॥ ६९ ॥

वाचंयम । पुरंदर । इत्येतौ निपात्येते ॥ वाचं यच्छति । वाचंयमः ॥ पुरं दारयति । पुरंदरः ॥

## कारे सत्यागदस्य ॥ ७० ॥

सत्य । अगद । इत्येतयोः कार । इत्येतस्मिन्नुत्तरपदे परे मुमागमः स्यात् ॥ सत्यंकारः । अगदंकारः ॥

## श्येनतिलस्य पाते ञे ॥ ७१ ॥

श्येन । तिल । इत्येतयोर्ञप्रत्ययान्ते पातशब्द उत्तरपदे परे मुम् स्यात् ॥ श्यैनंपाता । तैलंपाता ॥ पतनं पातः । कर्तृषष्ठ्या समासः । ततो घञः सास्यामिति ञप्रत्ययः ॥ ञे किं । श्येनपातः । तिलपातः ॥

## रात्रेः कृति विभाषा ॥ ७२ ॥

रात्रि । इत्येतस्य कृदन्त उत्तरपदे परे वा मुम् स्यात् ॥ रात्रिंचरः । रात्रि-चरः ॥ खिति तु नित्यमेव । रात्रिंमन्यमहः ॥

## नलोपो नञः ॥ ७३ ॥

नञ् । इत्येतस्य नकारस्योत्तरपदे परे लोपः स्यात् ॥ अब्राह्मणः । अनश्वः । अवृषलः ॥

## तस्मान्नुडचि ॥ ७४ ॥

नञ् । इत्येतस्माल्लुप्तनकारात् परस्याजादेरुत्तरपदस्य नुट् स्यात् ॥ अनश्वः । अनुष्ट्रः ॥ अचि किं । अब्राह्मणः ॥

## नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या ॥ ७५ ॥

नभ्राज् । नपात् । नवेदस् । नासत्या । नमुचि । नकुल । नख । नपुंसक । नक्षत्र । नक्र । नाक । इत्येतेषु नञो नकारस्य लोपो न स्यात् ॥ न भ्राजते । नभ्राट् । क्विबन्तः ॥ न पाति । नपात् । शत्रन्तं ॥ न वेत्ति ।

नर्मदाः । असुन्प्रत्ययान्तो ऽयं ॥ न असत्या । नासत्या ॥ न मुञ्चति । नमुचिः । औणादिकः किः ॥ नास्ति कुलमस्य । नकुलः ॥ नास्ति खमस्य । नखः ॥ न स्त्री पुमान् । नपुंसकं । स्त्रीपुंसयोः पुंसक आदेशो निपात्यते ॥ न क्षरति क्षीयते वा । नक्षत्रं । क्षरतेः क्षीयतेर्वा क्षत्रमिति निपात्यते ॥ न क्रामति । नक्रः । निपातनाड्डप्रत्ययः ॥ न अकमस्मिन् । नाकः । स्वर्गः ॥

## एकादिश्चैकस्य चादुक् ॥७६॥

एक । इत्येवमादिर्यस्य नञः स प्रकृत्या स्यात् । एक । इत्येतस्य च अदुक् । इत्येष आगमः स्यात् ॥ एकेन न विंशतिः । एकान्नविंशतिः । एकाद्विंशतिः ॥ नञो विंशत्या समासे कृते एकशब्देन तृतीयेति योगविभागात् समासः । अनुनासिकविकल्पः ॥

## नगो ऽप्राणिष्वन्यतरस्यां ॥७७॥

नग । इत्येतस्मिन् प्राणिभिन्नेषु वाच्येषु नञ् वा प्रकृत्या स्यात् ॥ नगाः । अगाः पर्वताः ॥ अप्राणिषु किं । अगो वृषलः शीतेन ॥

## सहस्य सः संज्ञायां ॥७८॥

सह । इत्येतस्य संज्ञायामुत्तरपदे परे स । इत्येष आदेशः स्यात् ॥ सपलाशं । सशिंशपं ॥ संज्ञायां किं । सहकृत्वा ॥

## ग्रन्थान्ताधिके च ॥७९॥

सह । इत्येतस्य ग्रन्थान्ते ऽधिके च वर्तमानस्योत्तरपदे परे स । इत्ययमादेशः स्यात् ॥ ग्रन्थान्ते । सकलं ज्योतिषमधीते । समंग्रहं व्याकरणमधीते । अन्तवचनेन सहशब्देनाव्ययीभावसमासः ॥ अधिके । सद्रोणा खारी ॥

## द्वितीये चानुपाख्ये ॥८०॥

द्वितीये ऽनुमेये सहस्य सः स्यात् ॥ साग्निः कपोतः । सपिशाचा वात्या ॥ उपाख्यायते प्रत्यक्षत उपलभ्यते यः स उपाख्यस्तदन्यो ऽनुपाख्यो ऽनुमेय इत्यर्थः । साक्षादनुपलभ्यमानावग्निपिशाचौ कपोतवात्याभ्यामनुमीयेते ॥

## अव्ययीभावे चाकाले ॥८१॥

अकालवाचिन्युत्तरपदे परे ऽव्ययीभावसमासे सह । इत्येतस्य स । इत्येष आदेशः स्यात् ॥ सचक्रं । सधुरं ॥ अकाले किं । सहपूर्वाह्णं ॥

## वोपसर्जनस्य ॥ ८२ ॥

बहुव्रीहेरवयवस्य सह । इत्येतस्य स । इत्ययमादेशो वा स्यात् ॥ सपुत्रः । सहपुत्रः ॥ उपसर्जनस्य किं । सहकृत्वा ॥ उपसर्जनशब्देनोपसर्जनसर्वावयवो बहुव्रीहिर्गृह्यते ॥

## प्रकृत्याशिषि ॥ ८३ ॥

सह । इत्येतदुत्तरपदे पर आशीर्विषये प्रकृत्या स्यात् ॥ सहपुत्राय स्वस्ति भूयात् । सहामात्याय ॥

## समानस्यच्छन्दस्यमूर्धप्रभृत्युदर्केषु ॥ ८४ ॥

समान । इत्येतस्योत्तरपदे परे वेदे स । इत्ययमादेशः स्यात् । मूर्धन् । प्रभृति । उदर्क । इत्येतेषु न भवति ॥ अनुभ्राता सगर्भ्यः । अनुसखा सयूथ्यः । यो ऽनः सनुत्यः ॥ अमूर्धप्रभृत्युदर्केषु किं । समानमूर्धा । समानप्रभृतयः । समानोदर्काः ॥

## ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु ॥ ८५ ॥

ज्योतिस् । जनपद । रात्रि । नाभि । नामन् । गोत्र । रूप । स्थान । वर्ण । वयस् । वचन । बन्धु । इत्येतेषु परेषु समानस्य स । इत्ययमादेशः स्यात् ॥ सज्योतिः । सजनपदः । सरात्रिः । सनाभिः । सनामा । सगोत्रः । सरूपः । सस्थानः । सवर्णः । सवयाः । सवचनः । सबन्धुः ॥

## चरणे ब्रह्मचारिणि ॥ ८६ ॥

समान । इत्येतस्य स । इत्ययमादेशः स्यात् । शाखायां गम्यमानायां ब्रह्मचारिन् । इत्येतस्मिन्नुत्तरपदे परे ॥ चरणः शाखा । ब्रह्म वेदः । तदध्ययनार्थं व्रतमपि ब्रह्म । तच्चरतीति ब्रह्मचारी ॥ समानो ब्रह्मचारी । सब्रह्मचारी । चरणेन तुल्य उच्यते ॥

## तीर्थे ये ॥८७॥

समान॰ । इत्येतस्य तीर्थ । इत्येतस्मिन्नुत्तरपदे परे यत्प्रत्यये विवक्षिते स । इत्ययमादेशः स्यात् ॥ सतीर्थ्यः । समानतीर्थे वासीति यत्प्रत्ययः ॥

## विभाषोदरे ॥८८॥

समान । इत्येतस्योदर । इत्येतस्मिन्नुत्तरपदे परे यत्प्रत्यये विवक्षिते स । इत्ययमादेशो वा स्यात् ॥ सोदर्यः । समानोदर्यः ॥ समानोदरे शयित इति यत्प्रत्ययः ॥

## दृग्दृश्वतुषु ॥८९॥

दृक् । दृश् । वतु । इत्येतेषु परेषु समानस्य सः स्यात् ॥ सदृक् । सदृशः ॥ वतुग्रहणमुत्तरार्थं ॥

## इदंकिमोरीश्की ॥९०॥

इदं । किं । इत्येतयोः क्रमेण । ईश् । की । इत्येतावादेशौ भवतः । दृग्दृश्वतुषु परेषु ॥ ईदृक् । ईदृशः । इयान् ॥ कीदृक् । कीदृशः । कियान् ॥ किमिदम्भ्यामिति वतुप् । वस्य च घादेशः ॥

## आ सर्वनाम्नः ॥९१॥

सर्वनामसंज्ञकस्य दृग्दृश्वतुषु परेषु । आ । इत्ययमादेशः स्यात् ॥ तादृक् । तादृशः । तावान् । यादृक् । यादृशः । यावान् ॥

## विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये ॥९२॥

विष्वच् । देव । इत्येतयोः सर्वनामसंज्ञकस्य च टेः स्थाने ऽद्रि । इत्ययम् आदेशः स्यात् । वप्रत्ययान्ते ऽञ्चुधातावुत्तरपदे परतः ॥ विष्वद्र्यङ् । देवद्र्यङ् ॥ सर्वनाम्नः । तद्र्यङ् । यद्र्यङ् ॥ विष्वग्देवयोश्चेति किं । अश्वाची ॥ अञ्चतौ किं । विष्वग्युक् ॥ वप्रत्यये किं । विष्वगञ्चनं ॥

## समः समि ॥९३॥

सं । इत्येतस्य वप्रत्ययान्ते ऽञ्चतौ परे समि । इत्ययमादेशः स्यात् ॥ सम्यङ् । सम्यञ्चौ । सम्यञ्चः ॥

## तिरसस्तिर्यलोपे ॥ ९४ ॥

तिरस् । इत्येतस्यालुप्ताकारके वप्रत्ययान्ते ऽञ्चतौ परे तिरि । इत्ययमादेशः स्यात् ॥ तिर्यङ् । तिर्यञ्चौ । तिर्यञ्चः ॥ अलोपे किं । तिरश्चः । तिरश्चा ॥

## सहस्य सध्रिः ॥ ९५ ॥

सह । इत्येतस्य वप्रत्ययान्ते ऽञ्चतावुत्तरपदे परे सध्रि । इत्ययमादेशः स्यात् ॥ सध्र्यङ् । सध्र्यञ्चौ । सध्र्यञ्चः । सध्रीचः ॥

## सध मादस्थयोश्छन्दसि ॥ ९६ ॥

सह । इत्येतस्य माद । स्थ । इत्येतयोः परयोर्वेदे सध । इत्ययमादेशः स्यात् ॥ सधमादो द्युम्निनीः । एतं सधस्थं ॥

## द्व्यन्तरुपसर्गेभ्यो ऽप ईत् ॥ ९७ ॥

द्वि । अन्तर् । इत्येताभ्यामुपसर्गसंज्ञकाच्च परस्य अप । इत्येतस्य ई । इत्येष आदेशः स्यात् ॥ द्वीपं । अन्तरीपं ॥ उपसर्गात् । नीपं । समीपं ॥ उपसर्गग्रहणं प्रायुपलक्षणं ॥

## ऊदनोर्देशे ॥ ९८ ॥

अनु । इत्येतस्मात् परस्य अप । इत्येतस्य ऊ । इत्ययमादेशः स्यात् समुदायेन देशे वाच्ये ॥ अनूपो देशः ॥ देशे किं । अन्वीपं ॥ दीर्घोच्चारणफलमवग्रहे । अनु ऊपः । अनूप इति ॥

## अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागछेषु ॥ ९९ ॥

अन्य । इत्येतस्यापष्ठीस्थस्यातृतीयास्थस्य च दुक् । इत्येष आगमः स्यात् । आशिस् । आशा । आस्था । आस्थित । उत्सुक । ऊति । कारक । राग । छ । इत्येतेषु परेषु ॥ अन्यदाशीः । अन्यदाशा । अन्यदास्था । अन्यदास्थितः । अन्यदुत्सुकः । अन्यदूतिः । अन्यत्कारकः । अन्यद्रागः ॥ छ । अन्यदीयः ॥ अषष्ठ्यतृतीयास्थस्य किं । अन्यस्याशीः । अन्येन वाशीः । अन्याशीः ॥

## अर्थे विभाषा ॥१००॥

अन्य । इत्येतस्य अर्थ । इत्येतस्मिन् परे दुक् । इत्येष आगमो वा स्यात् ॥ अन्यदर्थः । अन्यार्थः ॥

## कोः कत् तत्पुरुषे ऽचि ॥१०१॥

कु । इत्येतस्य तत्पुरुषे समासे ऽजादावुत्तरपदे परे कत् । इत्येष आदेशः स्यात् ॥ कुत्सितो ऽश्वः । कदश्वः ॥ कदुष्ट्रः । कदन्नं ॥ तत्पुरुषे किं । कूष्ट्रो राजा ॥ अचि किं । कुब्राह्मणाः ॥

## रथवदयोश्च ॥१०२॥

रथ । वद । इत्येतयोः परयोः कु । इत्येतस्य कत् स्यात् ॥ कद्रथः । कद्वदः ॥

## तृणे च जातौ ॥१०३॥

तृण । इत्येतस्मिन् परे जातौ वाच्यायां कु । इत्येतस्य कत् स्यात् ॥ कत्तृणं ॥ जातौ किं । कुतृणानि ॥

## का पथ्यक्षयोः ॥१०४॥

पथिन् । अक्ष । इत्येतयोः परयोः कु । इत्येतस्य का । इत्येष आदेशः स्यात् ॥ कापथः । काक्षः ॥

## ईषदर्थे ॥१०५॥

कु । इत्येतस्येषदर्थे वर्तमानस्य का । इत्येष आदेशः स्यात् ॥ कामधुरं । कालवणं ॥ अजादावपि परत्वात् कादेशः । काम्लं ॥

## विभाषा पुरुषे ॥१०६॥

पुरुष । इत्येतस्मिन् परे कु । इत्येतस्य का । इत्येष आदेशो वा स्यात् ॥ कापुरुषः । कुपुरुषः ॥ यथाप्राप्तविभाषेयं । ईषदर्थे पूर्वविप्रतिषेधान्नित्यमेव । ईषत्पुरुषः । कापुरुषः ॥

## च्वं चोष्णे ॥१०७॥

उष्ण । इत्येतस्मिन् परे कु । इत्येतस्य कव । का । इत्येतावादेशौ वा भवतः ॥ कवोष्णं । कोष्णं । कदुष्णं ॥

## पथि चच्छन्दसि ॥१०८॥

पथिन् । इत्येतस्मिन् परे वेदे कु । इत्येतस्य कव । का । इत्येतावादेशौ वा भवतः ॥ कवपथः । कापथः । कुपथः ॥

## पृषोदरादीनि यथोपदिष्टं ॥१०९॥

पृषोदर । इत्येवमादीनि शब्दस्वरूपाणि यथा पठितानि तथा साधूनि भवन्ति ॥ पृषदुदरं यस्य सः । पृषोदरः । तकारलोपो निपातनात् ॥

## संख्याविसायपूर्वस्याह्नस्याह्नन्यतरस्यां ङौ ॥११०॥

संख्यापूर्वस्य । वि । साय । इत्येवंपूर्वस्य च अह्न । इत्येतस्य ङिविभक्तौ परतो ऽहन् । इत्येष आदेशो वा स्यात् ॥ संख्या । द्व्यह्नि । द्व्यहनि । द्व्यह्ने ॥ वि । व्यह्नि । व्यहनि । व्यह्ने ॥ साय । सायाह्नि । सायाहनि । सायाह्ने ॥ संख्येत्यादि किं । पूर्वाह्ने ॥

## ढ्रलोपे पूर्वस्य दीर्घो ऽणः ॥१११॥

ढ् । र् । इत्येतल्लोपनिमित्तयोर्ढ्र । र् । इत्येतयोः परयोः पूर्वस्य अ । इ । उ । इत्येतस्य दीर्घः स्यात् ॥ ढलोपे । लीढः । मूढः ॥ रलोपे । पुना रमते । भूपती रम्यः । प्रभू राजते ॥ पूर्वग्रहणमुत्तरपद इत्यस्यासंबन्धार्थं । तेनानुत्तरपदे ऽपि दीर्घः । अजर्घाः ॥ अणः किं । तृढः । वृढः ॥

## सहिवहोरोदवर्णस्य ॥११२॥

षह । वह । इत्येतयोरवर्णस्य ओ । इत्येष आदेशः स्यात् । ढ्रलोपनिमित्तयोर्ढ्रयोः परतः ॥ सोढा । सोढुं । सोढव्यं ॥ वोढा । वोढुं । वोढव्यं ॥ अवर्णस्य किं । ऊढः ॥ वर्णग्रहणं किं । कृतायामपि वृद्धौ यथा स्यात् । उदवोढां ॥

## साढ्यै साढ्वा साढेति निगमे ॥११३॥

साढ्यै । साढ्वा । साढा । इत्येते वेदे निपात्यन्ते ॥ षह । साढ्यै सपत्नान् ।

साढ्वा शत्रून् । साढा ॥ ओत्वाभावः । क्त्वाप्रत्ययस्य ध्वैभावविकल्पः ॥ निगमे किं । सोढ्वा । सोढा ॥

## संहितायां ॥११४॥

अधिकारो ऽयं ॥ इत ऊर्ध्वं यद्वक्ष्यामः संहितायामित्येवं तद्वेदितव्यं ॥ वक्ष्यति द्व्यचो ऽतस्तिङः ॥ विद्मा हि त्वा सत्पतिं ॥ संहितायां किं । विद्म हि त्वा ॥

## कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य ॥११५॥

कर्ण । इत्येतस्मिन्नुत्तरपदे परे लक्षणवाचकस्य संहितायां विषये दीर्घः स्यात् । विष्ट । अष्टन् । पञ्चन् । मणि । भिन्न । छिन्न । छिद्र । स्रुव । स्वस्तिक । इत्येतान् वर्जयित्वा ॥ द्विगुणाकर्णः । त्रिगुणाकर्णः ॥ पशूनां स्वामिविशेषसंबन्धज्ञापनार्थं यच्चिह्नं क्रियते तदिह लक्षणं ॥ लक्षणस्य किं । शोभनकर्णः ॥ अविष्टादीनां किं । विष्टकर्णः । अष्टकर्णः । पञ्चकर्णः । मणिकर्णः । भिन्नकर्णः । छिन्नकर्णः । छिद्रकर्णः । स्रुवकर्णः । स्वस्तिककर्णः ॥

## नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ॥११६॥

णह । वृतु । वृषु । व्यध । रुच । षह । तनु । इत्येतेषु क्विप्रत्ययान्तेषूत्तरपदेषु परेषु पूर्वपदस्य संहितायां विषये दीर्घः स्यात् ॥ णह । उपानत् ॥ वृतु । नीवृत् ॥ वृषु । प्रावृट् ॥ व्यध । मर्माविध् ॥ रुच । नीरुक् ॥ षह । ऋतीषहं ॥ तनु । परीतत् ॥ क्वौ किं । परिणहनं ॥

## वनगिर्योः संज्ञायां कोटरकिंशुलुकादीनां ॥११७॥

वन । गिरि । इत्येतयोरुत्तरपदयोः परयोः क्रमात् कोटरादीनां किंशुलुकादीनां च संज्ञायां विषये दीर्घः स्यात् ॥ वने कोटरादीनां । कोटरावणं । मिश्रकावणं ॥ गिरौ किंशुलुकादीनां । किंशुलुकागिरिः । अञ्जनागिरिः ॥ कोटरकिंशुलुकादीनां किं । असिपत्रवनं । कृष्णगिरिः ॥

## वले ॥११८॥

वलच् । इत्येतस्मिन् प्रत्यये परे पूर्वस्य दीर्घः स्यात् ॥ कृषीवलः । दन्तावलः ॥

## मतौ बह्वचोऽनजिरादीनां ॥ ११९ ॥

मतुप्प्रत्यये परे संज्ञाविषये ऽजिरादिवर्जितस्य बह्वच्कस्य दीर्घः स्यात् ॥ अमरावती । पुष्करावती ॥ बह्वचः किं । व्रीहिमती ॥ अनजिरादीनां किं । अजिरवती ॥ संज्ञायां किं । बलवती ॥

## शरादीनां च ॥ १२० ॥

शर । इत्येवमादीनां च मतुप्प्रत्यये परे संज्ञायां विषये दीर्घः स्यात् ॥ शरावती । वंशावती ॥

## इको वहे ऽपीलोः ॥ १२१ ॥

इगन्तस्य पूर्वपदस्य पीलुवर्जितस्य वह । इत्येतस्मिन्नुत्तरपदे परे दीर्घः स्यात् ॥ ऋषीवहं । कपीवहं । मुनीवहं ॥ इकः किं । पिण्डवहं ॥ अपीलोः किं । पीलुवहं ॥

## उपसर्गस्य घञ्यमनुष्ये बहुलं ॥ १२२ ॥

उपसर्गसंज्ञकस्य घञ्प्रत्ययान्त उत्तरपदे परे ऽमनुष्ये वाच्ये बहुलं दीर्घः स्यात् ॥ नीक्लेदः । वीमार्गः ॥ न च भवति । प्रसेवः । प्रकाशः ॥ भवति न भवति च । प्रतिकाशः । प्रतीकाशः ॥ अमनुष्ये किं । निषादः ॥

## इकः काशे ॥ १२३ ॥

काश । इत्येतस्मिन्नच्प्रत्ययान्त उत्तरपदे पर इगन्तस्योपसर्गस्य दीर्घः स्यात् ॥ नीकाशः । वीकाशः ॥ इकः किं । प्रकाशः ॥

## दस्ति ॥ १२४ ॥

डुदाञ् । देङ् । दो । इत्येतस्य यस्तकारादेशस्तदादावुत्तरपदे पर इगन्तस्योपसर्गस्य दीर्घः स्यात् ॥ नीत्तं । परीत्तं ॥ दः किं । वितीर्णं ॥ ति किं । सुदत्तं ॥ इगन्तस्य किं । प्रत्तं ॥

## अष्टनः संज्ञायां ॥ १२५ ॥

अष्टन् । इत्येतस्योत्तरपदे परे संज्ञायां विषये दीर्घः स्यात् ॥ अष्टावक्रः । अष्टापदं ॥ संज्ञायां किं । अष्टपुत्रः ॥

## छन्दसि च ॥१२६॥

अष्टन् । इत्येतस्योत्तरपदे परे वेदे दीर्घः स्यात् ॥ आग्नेयमष्टाकपालं निर्वपेत् । अष्टाहिरण्या दक्षिणा । अष्टापदी ॥

## चितेः कपि ॥१२७॥

चिति । इत्येतस्य कप्प्रत्यये परे दीर्घः स्यात् ॥ एकचितीकः । द्विचितीकः । त्रिचितीकः ॥

## विश्वस्य वसुराटोः ॥१२८॥

वसु । राट् । इत्येतयोः परयोर्विश्व । इत्येतस्य दीर्घः स्यात् ॥ विश्वावसुः । विश्वाराट् ॥ राडिति विकृतग्रहणादिह न भवति । विश्वराजौ । विश्वराजः ॥

## नरे संज्ञायां ॥१२९॥

नर । इत्येतस्मिन्नुत्तरपदे परे संज्ञायां विश्व । इत्येतस्य दीर्घः स्यात् ॥ विश्वानरः ॥ संज्ञायां किं । विश्वे नरा यस्य स विश्वनरः ॥

## मित्रे चर्षौ ॥१३०॥

मित्र । इत्येतस्मिन्नुत्तरपदे परे ऋषौ वाच्ये विश्व । इत्येतस्य दीर्घः स्यात् ॥ विश्वामित्रः ॥ ऋषौ किं । विश्वमित्रो माणवकः ।

## मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ ॥१३१॥

सोम । अश्व । इन्द्रिय । विश्वदेव्य । इत्येतेषां मन्त्रविषये मतुप्प्रत्यये परे दीर्घः स्यात् ॥ सोमावती । अश्वावती । इन्द्रियावती । विश्वदेव्यावती ॥

## ओषधेश्च विभक्तावप्रथमायां ॥१३२॥

ओषधि । इत्येतस्य मन्त्रविषये प्रथमाभिन्नविभक्तौ परतो दीर्घः स्यात् ॥ ओषधीभिः । ओषधीभ्यः ॥ विभक्तौ किं । ओषधिपते ॥ अप्रथमायां किं । ओषधिः ॥

## ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणां ॥ १३३ ॥

तु । नु । घ । मक्षु । तङ् । कु । त्र । उरुष्य । इत्येतेषामृचि विषये दीर्घः स्यात् ॥ तु । आतू न इन्द्रः ॥ नु । नू रणे ॥ घ । उत वा घा स्यालात् ॥ मक्षु । मक्षू गोमन्तमीमहे ॥ तङ् । भरता जातवेदसं । तङिति थादेशस्य ङित्वपक्षे ग्रहणं । तेनेह न भवति । शृणोत ग्रावाणः ॥ कु । कूमनाः ॥ त्र । अत्रा ते जातवेदसं ॥ उरुष्य । उरुष्या णो ऽभिशस्तेः ॥

## इकः सुञि ॥ १३४ ॥

इगन्तस्य सुञ् । इत्येतस्मिन् निपाते परे मन्त्रविषये दीर्घः स्यात् ॥ अभी षु णः सखीनां । सुञ इति षत्वं । नश्च धातुस्थोरुषुभ्य इति णत्वं ॥

## द्व्यचो ऽतस्तिङः ॥ १३५ ॥

अ । इत्येतदन्तस्य द्व्यच्कस्य तिङन्तस्य मन्त्रविषये दीर्घः स्यात् ॥ विद्मा हि त्वा सत्पतिं ॥ द्व्यचः किं । अश्वाभवत वाजिनः ॥ अतः किं । आ देवान् वक्षि यक्षि च ॥

## निपातस्य च ॥ १३६ ॥

निपातसंज्ञकस्य मन्त्रविषये दीर्घः स्यात् ॥ एवा ते ॥

## अन्येषामपि दृश्यते ॥ १३७ ॥

निपातादन्येषामपि दीर्घः स्यात् ॥ केशाकेशि । जलाषाट् । पूरुषः । नारकः ॥

## चौ ॥ १३८ ॥

लुप्तनकाराकारे ऽञ्चुधातौ परे पूर्वपदस्य दीर्घः स्यात् ॥ दधीचः । दधीचा । दधीचे । मधूचः । मधूचा । मधूचे ॥

## संप्रसारणस्य ॥ १३९ ॥

संप्रसारणसंज्ञकस्योत्तरपदे परे दीर्घः स्यात् ॥ कारीषगन्धीपुत्रः । कारीषगन्धीपतिः ॥

॥ इति सूत्रपाठे षष्ठाध्यायस्य द्वितीयः पादः ॥

---

## अङ्गस्य ॥१॥

अधिकारो ऽयमा सप्तमाध्यायपरिसमाप्तेः ॥ यदित ऊर्ध्वमनुक्रमिष्यामो ऽङ्गस्य तद्वेदितव्यं ॥ वक्ष्यति हल इत्यादि । हूतः । जीनः । अग्नीनां । वायूनां । वृत्तैः । स्नत्तेः ॥ अङ्गस्येति किं । निरुतं । अङ्गनां पश्य । व्राह्मणाभिः सा ॥

## हलः ॥२॥

अङ्गावयवाद्धलः परं यत् संप्रसारणं तदन्तस्याङ्गस्य दीर्घः स्यात् ॥ ह्वञ् । हूतः ॥ ज्या । जीनः ॥ हलः किं । वेञ् । उतं ॥ अङ्गावयवात् किं । निरुतं ॥ तदन्तग्रहणं किं । विद्धिः ॥

## नामि ॥३॥

नाम् । इत्येतस्मिन् षष्ठीबहुवचने परे ऽजन्तस्याङ्गस्य दीर्घः स्यात् ॥ अग्नीनां । वायूनां । कर्तृणां ॥

## न तिसृचतसृ ॥४॥

तिसृ । चतसृ । इत्येतयोर्नामि परे दीर्घो न स्यात् ॥ तिसृणां । चतसृणां ॥

## छन्दस्युभयथा ॥५॥

तिसृ । चतसृ । इत्येतयोर्वेदे नामि परे दीर्घो वा स्यात् ॥ तिसृणां । तिसॄणां ॥ चतसृणां । चतसॄणां ॥

## नृ च ॥६॥

नृ । इत्येतस्य नामि परे दीर्घो वा स्यात् ॥ नृणां । नॄणां ॥

## नोपधायाः ॥७॥

न् । इत्येतदन्तस्याङ्गस्योपधाया नामि परे दीर्घ स्यात् ॥ पञ्चानां । सप्तानां । अष्टानां ॥ नः किं । चतुर्णां ॥ नामि किं । चर्मणां ॥

## सर्वनामस्थाने चासंबुद्धौ ॥८॥

न् । इत्येतदन्तस्याङ्गस्योपधायाः संबुद्धिवर्जिते सर्वनामस्थाने परे दीर्घः स्यात् ॥ राजा । राजानौ । राजानः । राजानं । राजानौ ॥ असंबुद्धौ किं । हे राजन् ॥

## वा षपूर्वस्य निगमे ॥ ९ ॥

न् । इत्येतदन्तस्याङ्गस्योपधासंज्ञकस्य ष् । इत्येतत्पूर्वस्याचो वेदे संबुद्धिवर्जित सर्वनामस्थाने परे दीर्घो वा स्यात् ॥ स तक्षाणं तिष्ठन्तमब्रवीत् । स तक्षणं । ऋभुक्षणं । ऋभुंक्षाणं ॥ निगमे किं । तक्षाणौ ॥

## सान्तमहतः संयोगस्य ॥ १० ॥

न् । इत्येतदन्तस्य संयोगस्य यो नकारः । महत् । इत्येतस्य च यो नकारस्तस्योपधाया दीर्घः स्यात् । असंबुद्धौ सर्वनामस्थाने परे ॥ श्रेयान् । श्रेयांसौ । श्रेयांसः । श्रेयांसं । श्रेयांसौ । श्रेयांसि ॥ पयांसि ॥ महतः । महान् । महान्तौ । महान्तः ॥ असंबुद्धौ किं । हे श्रेयन् । हे महन् ॥

## अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणां ॥ ११ ॥

अप् । तृन् । तृच् । स्वसृ । नप्तृ । नेष्टृ । त्वष्टृ । क्षत्तृ । होतृ । पोतृ । प्रशास्तृ । इत्येतेषामङ्गानामुपधाया दीर्घः स्यात् । असंबुद्धौ सर्वनामस्थाने परे ॥ अप् । इत्येतन्नित्यं बहुवचनान्तं । आपः । स्वाम्पि तडागानि ॥ तृन् । कर्ता ज्ञनापवादान् । कर्तारौ । कर्तारः ॥ तृच् । कर्ता कटस्य । कर्तारौ । कर्तारः ॥ स्वसृ । स्वसा । स्वसारौ । स्वसारः ॥ नप्तृ । नप्ता । नप्तारौ ॥ नेष्टृ । नेष्टा । नेष्टारौ ॥ त्वष्टृ । त्वष्टा । त्वष्टारौ ॥ क्षत्तृ । क्षत्ता । क्षत्तारौ ॥ होतृ । होता । होतारौ ॥ पोतृ । पोता । पोतारौ ॥ प्रशास्तृ । प्रशास्ता । प्रशास्तारौ । प्रशास्तारः । प्रशास्तारं । प्रशास्तारौ ॥ नप्त्रादयस्तृन्नन्तास्तृजन्ताश्च । तेषां ग्रहणं नियमार्थं । उणादिव्युत्पन्नसंज्ञाशब्दानां यद्युपधादीर्घो भवति तर्हि नप्त्रादीनामेव । न त्वन्येषां । तेनात्र न दीर्घः । पितरौ । पितरः । मातरौ । मातरः ॥ असंबुद्धौ किं । हे कर्तः ॥

## इन्हन्पूषार्यम्णां शौ ॥ १२ ॥

इन् । हन् । पूषन् । अर्यमन् । इत्येवमन्तानामङ्गानामुपधाया दीर्घः स्यात् । शि । इत्येतस्मिन् परे ॥ इन् । बहुदण्डीनि । बहुच्छत्रीणि ॥ हन् । बहुब्रह्महाणि । बहुवृत्रहाणि ॥ पूषन् । बहुपूषाणि ॥ अर्यमन् । बह्वर्यमाणि ॥ एषामुपधायाः शावेव दीर्घो भवति नान्यत्र । बहुदण्डिनौ । इत्यादि ॥

## सौ च ॥१३॥

इन् । हन् । पूषन् । अर्यमन् । इत्येतेषां संबुद्धिभिन्ने सु । इत्येतस्मिन् परे उपधाया दीर्घः स्यात् ॥ दण्डी । वृत्रहा । पूषा । अर्यमा ॥ असंबुद्धाविन्त्येव । हे दण्डिन् । हे वृत्रहन् । हे पूषन् । हे अर्यमन् ॥

## अत्वसन्तस्य चाधातोः ॥१४॥

अतु । अस् । इत्येवमन्तस्याधातोरङ्गस्योपधाया दीर्घः स्यात् । असंबुद्धौ सौ परे ॥ अत्वन्तस्य । भवान् । भुक्तवान् । गोमान् ॥ असन्तस्य । सुपयाः । सुयशाः ॥ अधातोः किं । पिण्डं ग्रसते । पिण्डग्रः ॥ असंबुद्धौ किं । हे गोमन् । हे सुपयः ॥

## अनुनासिकस्य क्विझलोः क्ङिति ॥१५॥

अनुनासिकान्तस्याङ्गस्योपधाया दीर्घः स्यात् । क्विप्रत्यये परे झलादौ किति ङिति च प्रत्यये परे ॥ क्विप् । प्रशान् । प्रशामौ । प्रतान् । प्रतामौ ॥ झलादौ किति । शान्तः । शान्तवान् । शान्त्वा । शान्तिः ॥ झलादौ ङिति । शंशान्तः । यङ्लुगन्तात् तस् ॥ अनुनासिकस्येति किं । ओदनपक् । पक्वः । ओदनपक्तिः ॥ क्विझलोः किं । गम्यते ॥ क्ङिति किं । गन्ता ॥

## अज्झनगमां सनि ॥१६॥

अजन्तानामङ्गानां । हन् । गम् । इत्येतयोश्च झलादौ सन्प्रत्यये परे दीर्घः स्यात् ॥ अजन्तानां । चिचीषति । तुष्टूषति ॥ हन । जिघांसति ॥ गम । अधिजिगांसते ॥

## तनोतेर्विभाषा ॥१७॥

तनु । इत्येतस्याङ्गस्य झलादौ सनि दीर्घो वा स्यात् ॥ तितांसति ॥ झलादौ किं । तितनिषति ॥

## क्रमश्च क्त्वि ॥१८॥

क्रमु । इत्येतस्योपधाया झलादौ क्त्वाप्रत्यये परे दीर्घो वा स्यात् ॥ क्रान्त्वा । क्रन्त्वा ॥ झलादौ किं । क्रमित्वा ॥

## च्छ्वोः शूडनुनासिके च ॥१९॥

च्छ् । व् । इत्येतयोर्यथाक्रमं श् । ऊठ् । इत्येतावादेशौ भवतः । अनुनासिकादौ प्रत्यये क्वौ झलादौ क्ङिति च प्रत्यये परतः ॥ विच्छ । विश्नः ॥ प्रच्छ् । प्रश्नः ॥ अन्तरङ्गत्वात् तुकि कृते सतुक्कस्यायमादेशः ॥ षिवु । स्योनः । औणादिको नप्रत्ययः ॥ क्वौ । शब्दप्राट् । अक्षद्यूः ॥ झलादौ क्ङिति । पृष्टः । पृष्टवान् । द्यूनः । द्यूनवान् ॥ क्ङिति किं । द्युम्यां ॥

## ज्वरत्वरस्रिव्यविमवामुपधायाश्च ॥२०॥

ज्वर । ञित्वरा । स्रिवि । अवि । मव । इत्येतेषामङ्गानामुपधावकारयोः स्थाने ऊठ् । इत्ययमादेशः स्यात् । क्वौ झलादौ क्ङिति च प्रत्यये परे ॥ क्वौ । ज्वर । जूः । जूरौ ॥ त्वर । तूः । तूरौ ॥ स्रिवि । स्रूः । स्रुवौ ॥ अव । ऊः । उवौ ॥ मव । मूः । मुवौ ॥ झलादौ क्ङिति । जूर्णः । तूर्णः । स्रूतः । ऊतः । मूतः ॥ ज्वरत्वरोरुपधा वकारात् परा । स्रिव्यविमवां तु वकारात् पूर्वा ॥

## राल्लोपः ॥२१॥

र । इत्येतस्मात् परयोः । च्छ् । व् । इत्येतयोर्लोपः स्यात् । क्वौ झलादौ क्ङिति च प्रत्यये परे ॥ च्छ् । मुर्च्छा । मूः । मुरौ । मूर्तः । मूर्तवान् । मूर्त्वा । मूर्तिः ॥ व् । तुर्वी । तूः । तुरौ । तूर्णः ॥

## असिद्धवदत्रा भात् ॥२२॥

अधिकारो ऽयं ॥ इत ऊर्ध्वमा पादपरिसमाप्तेराभीयं ॥ समानाश्रय आभीये कर्तव्ये समानाश्रयमभीयमसिद्धवत् स्यात् ॥ एधि । शाधि । अत्र एत्वशादेशयोरसिद्धत्वाज्झलन्तलक्षणो धिभावो भवति ॥ आ भात् किं । अभाजि । अत्रेति किं । पपुषः पश्य । वसोः संप्रसारणमालोपे नासिद्धं ॥

## श्नान्नलोपः ॥२३॥

श्नम् । इत्येतस्मात् परस्य न् । इत्येतस्य लोपः स्यात् ॥ अञ्ज् । अनक्ति ॥ भञ्जो । भनक्ति ॥ शकारवतो ग्रहणं किं । यज्ञानां । यत्नानां ॥

## अनिदितां हल उपधायाः क्ङिति ॥२४॥

इ । इत्येतदित्संज्ञकं येषां नास्ति तेषां हलन्तानामङ्गानामुपधासंज्ञकस्य न् । इत्येतस्य लोपः स्यात् । किति ङिति च प्रत्यये परे ॥ स्रंसु । स्रस्तः । स्रस्यते । सनीस्रस्यते ॥ ध्वंसु । ध्वस्तः । ध्वस्यते । दनीध्वस्यते ॥ अनिदितां किं । टुनदि । नन्द्यते । नानन्द्यते ॥ हलः किं । णीञ् । नीयते । नेनीयते ॥ उपधायाः किं । णह् । नह्यते । नानह्यते ॥ क्ङिति किं । स्रंसिता । ध्वंसिता ॥

## दंशसञ्जस्वञ्जां शपि ॥२५॥

दंश । षञ्ज । ष्वञ्ज । इत्येतेषामुपधासंज्ञकस्य न् । इत्येतस्य लोपः स्यात् । शप्प्रत्यये परे ॥ दशति । सजति । परिष्वजते ॥

## रञ्जेश्च ॥२६॥

रञ्ज । इत्येतस्योपधासंज्ञकस्य न् । इत्येतस्य शपि परे लोपः स्यात् ॥ रजति । रजतः । रजन्ति ॥ योगविभाग उत्तरार्थः ॥

## घञि च भावकरणयोः ॥२७॥

रञ्ज । इत्येतस्योपधासंज्ञकस्य न् । इत्येतस्य भावकरणवाचिनि घञ्प्रत्यये परे लोपः स्यात् ॥ रज्यत इति । रागः । रज्यते ऽनेनेति । रागः ॥ भावकरणयोः किं । रज्यते ऽस्मिन् रङ्गः ॥

## स्यदो जवे ॥२८॥

स्यद । इत्येतद्वेगे ऽभिधेये निपात्यते ॥ स्यन्दू । गोस्यदः । अश्वस्यदः । घञि नलोपो वृद्ध्यभावश्च निपातनात् ॥ जवे किं । घृतस्यन्दः ॥

## अवोदैधौद्मप्रश्रथहिमश्रथाः ॥२९॥

अवोद । एध । ओद्म । प्रश्रथ । हिमश्रथ । इत्येते घञन्ता निपात्यन्ते ॥ अवपूर्व उन्दी । अवोदः । अत्र घञि नलोपः ॥ ञिइन्धी । एधः । घञि नलोपो गुणश्च ॥ उन्दी । ओद्मः । औणादिके मन्प्रत्यये नलोपो गुणश्च ॥ श्रन्थ प्र । हिमपूर्वः । प्रश्रथः । हिमश्रथः । घञि नलोपो वृद्ध्यभावश्च ॥

## नाञ्चेः पूजायां ॥ ३० ॥

अञ्चु । इत्येतस्य पूजार्थस्य न् । इत्येतस्य लोपो न स्यात् ॥ अञ्चितः शिवः । अञ्चेः पूजायामितीट् ॥ प्रत्यङ् । प्रत्यञ्चौ ॥ पूजायां किं । उदक्तमुदकं कूपात् । यस्य विभाषेतीट्प्रतिषेधः । उद्धृतमित्यर्थः ॥

## क्त्वि स्कन्दिस्यन्दोः ॥ ३१ ॥

स्कन्दिर् । स्यन्दू । इत्येतयोः क्त्वाप्रत्यये परे न् । इत्येतस्य लोपो न स्यात् ॥ स्कन्त्वा । स्यन्त्वा ॥

## जान्तनशां विभाषा ॥ ३२ ॥

ज् । इत्येतदन्तानां णश् । इत्येतस्य च क्त्वाप्रत्यये परे न् । इत्येतस्य लोपो वा स्यात् ॥ रञ्ज । रक्त्वा । रङ्क्त्वा ॥ णश । नष्ट्वा । नंष्ट्वा ॥

## भञ्जेश्च चिणि ॥ ३३ ॥

भञ्जो । इत्येतस्यावयवस्य न् । इत्येतस्य चिण्प्रत्यये परे लोपो वा स्यात् ॥ अभाजि । अभञ्जि ॥

## शास इदङ्हलोः ॥ ३४ ॥

शासु । इत्येतस्योपधासंज्ञकस्य इ । इत्ययमादेशः स्यात् । अङि हलादौ च क्ङिति प्रत्यये परे ॥ अङि । अन्वशिषत् । अन्वशिषतां । अन्वशिषन् ॥ हलादौ क्ङिति । शिष्टः । शिष्टवान् ॥ ङिति । तौ शिष्टः । आवां शिष्वः ॥ अङ्हलोः किं । प्रशशासतुः ॥ क्ङिति किं । शास्ति ॥

## शा हौ ॥ ३५ ॥

शासु । इत्येतस्य हिप्रत्यये परे शा । इत्येष आदेशः स्यात् ॥ शाधि ॥

## हन्तेर्जः ॥ ३६ ॥

हन । इत्येतस्य धातोर्हौ परे ज । इत्येष आदेशः स्यात् ॥ जहि शत्रून् ॥

## अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ॥ ३७ ॥

अनुदात्तोपदेशानां वन । इत्येतस्य तनोत्यादीनां च झलादौ किति ङिति च प्रत्यये परे ऽनुनासिकलोपः स्यात् ॥ यम । रम । णम । हन । गम्लृ । मन । इत्येते ऽनुनासिकान्ता अनुदात्तोपदेशाः ॥ यम् । यतः । यतवान् । यत्वा । यतिः । इत्यादि ॥ वन । वतिः ॥ तनु । क्षणु । ऋणु । तृणु । घृणु । वनु । मनु । इत्येते तनोत्यादयः । ततः । ततवान् । तत्वा । ततिः । इत्यादि ॥ ङिति । अतत । अतथाः । इत्यादि ॥ अनुदात्तेत्यादि किं । शान्तः ॥ अनुनासिकस्य किं । पक्वः ॥ झलि किं । गम्यते ॥ क्ङिति किं । यन्ता ॥ उपदेशग्रहणं किं । इह यथा स्यात् । यतिः । गतिः । इह च मा भूत् । शान्तः ॥

## वा ल्यपि ॥३८॥

अनुदात्तोपदेशानां वन । इत्येतस्य तनोत्यादीनां च ल्यप्प्रत्यये परे ऽनुनासिकलोपो वा स्यात् ॥ व्यवस्थितो ऽयं विकल्पः । मकारान्ते विकल्पः । अन्यत्र तु नित्यं ॥ प्रयत्य । प्रयम्य । प्ररत्य । प्ररम्य । प्रणत्य । प्रणम्य । आगत्य । आगम्य ॥ आहत्य । प्रमत्य । प्रतत्य ॥

## न क्तिचि दीर्घश्च ॥३९॥

अनुदात्तोपदेशानां वन । इत्येतस्य तनोत्यादीनां च क्तिच्प्रत्यये परे ऽनुनासिकलोपो दीर्घश्च न स्यात् ॥ यन्तिः । रन्तिः । मन्तिः । वन्तिः । तन्तिः ॥ अनुनासिकस्य क्विझलोरिति दीर्घः प्राप्तः सो ऽपि निषिध्यते ॥

## गमः क्वौ ॥४०॥

गम्लृ । इत्येतस्य क्विप्प्रत्यये परे ऽनुनासिकलोपः स्यात् ॥ अध्वगत् । अध्वगतौ । अध्वगतः ॥

## विड्वनोरनुनासिकस्यात् ॥४१॥

विट् । वन् । इत्येतयोः परयोरनुनासिकस्य आ । इत्ययं आदेशः स्यात् ॥ विट् । जनी । अब्जाः । षन । गोषाः ॥ वनिप् । विजावा । ओण । अवावा ॥

## जनसनखनां सञ्झलोः ॥४२॥

जन । षणु । खनु । इत्येतेषां झलादौ सन्प्रत्यये झलादौ क्ङिति च परे । आ । इत्ययमादेशः स्यात् ॥ जन । जातः । जातवान् । जातिः ॥ षणु । सिषासति । सातः । सातवान् । सातिः ॥ खनु । खातः । खातवान् । खा-तिः ॥ झलादौ किं । जिजनिषति । सिसनिषति । चिखनिषति ॥

## ये विभाषा ॥ ४३ ॥

ये । इत्येतदादिके क्ङिति च प्रत्यये परे जनसनखनामात्वं वा स्यात् ॥ जायते । जन्यते । जाजायते । जञ्जन्यते । जनेः श्यनि ज्ञाजनोर्जेति नित्यं जा-देशः ॥ सायते । सन्यते । सासायते । संसन्यते ॥ खायते । खन्यते । चाखायते । चङ्खन्यते ॥

## तनोतेर्यकि ॥ ४४ ॥

तनु । इत्येतस्य धातोर्यक्प्रत्यये परे । आ । इत्ययमादेशो वा स्यात् ॥ तायते । तन्यते ॥ यकि किं । तन्तन्यते ॥

## सनः क्तिचि लोपश्चास्यान्यतरस्यां ॥ ४५ ॥

षणु । इत्येतस्य क्तिच्प्रत्यये परे । आ । इत्ययमादेशो लोपश्च वा स्यात् ॥ सातिः । सतिः । सन्तिः ॥

## आर्धधातुके ॥ ४६ ॥

अधिकारोऽयं । न ल्यपीत्यतः प्राक् ॥ इत ऊर्ध्वं यदनुक्रमिष्याम आर्धधा-तुक इत्येवं तद्वेदितव्यं ॥ वक्ष्यति अतो लोपः । चिकीर्षिता । जिहीर्षिता ॥ आर्धधातुके किं । भवति ॥

## भ्रस्जो रोपधयो रमन्यतरस्यां ॥ ४७ ॥

भ्रस्ज । इत्येतस्य यो रेफ उपधा च तयोः स्थाने आर्धधातुकविषये रम् । इत्येष आगमो वा स्यात् ॥ भर्ष्टा । भ्रष्टा । भर्ष्टुं । भ्रष्टुं । भर्ष्टव्यं । भ्रष्टव्यं । भर्ज्जनं । भ्रज्जनं ॥ उपदेश इत्येव । बरीभृज्ज्यते ॥

## अतो लोपः ॥ ४८ ॥

अ । इत्येतदन्तस्याङ्गस्यार्धधातुकविषये लोपः स्यात् ॥ चिकीर्षिता । चिकी-

र्षितुं । चिकीर्षितव्यं ॥ अतः किं । चेता । स्तोता ॥ तपरकरणं किं । याता । वाता ॥ आर्धधातुके किं । वृक्षत्वं ॥

## यस्य हलः ॥४९॥

य । इत्येतस्य हलः परस्यार्धधातुके परे लोपः स्यात् ॥ बेभिदिता । बेभिदितुं । बेभिदितव्यं ॥ अत्रादेः परस्येति यमात्रलोपे कृते ऽतो लोपः ॥ य इत्यकारान्तग्रहणं किं । ईर्ष्यिता । मव्यिता ॥ हलः किं । लोलूयिता ॥

## क्यस्य विभाषा ॥५०॥

क्यच् । क्यङ् । इत्येतस्य हलः परस्यार्धधातुके परे लोपो वा स्यात् ॥ क्यच् । समिधिता । समिध्यिता ॥ क्यङ् । दृषदिता । दृषयिता ॥

## णेरनिटि ॥५१॥

णिङ् । णिच् । इत्येतयोरनिडादावार्धधातुके परे लोपः स्यात् ॥ उद्पुपुच्छत । अचूचुरत् ॥ अनिटि किं । कारयिता ॥

## निष्ठायां सेटि ॥५२॥

इट्सहिते निष्ठासंज्ञके प्रत्यये परे णेर्लोपः स्यात् ॥ कारितं । हारितं । गारितं । भक्षितं ॥ सेटि किं । संज्ञपितः पशुः ॥ सेड्ग्रहणसामर्थ्यात् पूर्वसूत्रेणापि णिलोपो न भवति । सनीवन्तेति विकल्पायस्य विभाषेति निष्ठायामिटो निषेधः ॥

## जनिता मन्त्रे ॥५३॥

जनितृ । इत्येतन्मन्त्रविषये निपात्यते ॥ जनी । यो नः पिता जनिता । इडादौ प्रत्यये णिलोपः ॥ मन्त्रे किं । जनयिता ॥

## शमिता यज्ञे ॥५४॥

शमितृ । इत्येतद्यज्ञकर्मणि मन्त्रे निपात्यते ॥ शम । शृतं हविः शमितः । तृचीडादौ णिलोपे संबुद्ध्यन्तं ॥ यज्ञे किं । शृतं हविः शमयितः ॥

## अयामन्ताल्वाय्येत्न्विष्णुषु ॥५५॥

आम् । अन्त । आलु । आय्य । इत्नु । इष्णु । इत्येतेषु परेषु णि । इत्ये-

तस्य अय् । इत्येष आदेशः स्यात् ॥ आम् । कारयांचकार ॥ अन्त । गण्डयन्तः ॥ आलु । स्पृहयालुः ॥ आय्य । स्पृहयाय्यः ॥ इत्नु । स्तनयित्नुः ॥ इष्णु । पोषयिष्णुः ॥

## ल्यपि लघुपूर्वात् ॥ ५६ ॥

ल्यप् । इत्येतस्मिन् परे लघुपूर्वस्य णि । इत्येतस्य अय् । इत्येष आदेशः स्यात् ॥ प्रगणय्य गतः । प्रकथय्य गतः ॥ लघुपूर्वात् किं । प्रपाच्य गतः ॥

## विभाषापः ॥ ५७ ॥

आप्लृ । इत्येतस्मात् परस्य णि । इत्येतस्य ल्यपि परे ऽयादेशो वा स्यात् ॥ प्रापय्य । प्राप्य गतः ॥ इङादेशस्य लाक्षणिकत्वान्न भवति । अध्याप्य गतः ॥

## युप्लुवोर्दीर्घश्छन्दसि ॥ ५८ ॥

यु । प्लु । इत्येतयोर्ल्यपि परे वेदे दीर्घः स्यात् ॥ यथादान्त्यनुपूर्वं वियूय । अत्रापो दक्षिणाः परिप्लूय ॥ छन्दसि किं । संयुत्य । आप्लुत्य ॥

## क्षियः ॥ ५९ ॥

क्षि । इत्येतस्य ल्यपि परे दीर्घः स्यात् ॥ प्रक्षीय । उपक्षीय ॥

## निष्ठायामण्यदर्थे ॥ ६० ॥

क्षि । इत्येतस्याभावकर्मार्थे निष्ठासंज्ञके परे दीर्घः स्यात् ॥ प्रक्षीणः । उपक्षीणः । अकर्मकत्वात् कर्तरि क्तः । क्षियो दीर्घादिति नत्वं ॥ प्रक्षीणमिदं देवदत्तस्य । अधिकरणे क्तः ॥ अण्यदर्थे किं । अक्षितं । भावे क्तः ॥

## वाक्रोशदैन्ययोः ॥ ६१ ॥

क्षि । इत्येतस्याभावकर्मार्थे निष्ठासंज्ञके परे निन्दादैन्ययोरर्थयोर्दीर्घो वा स्यात् ॥ आक्रोशे । क्षितायुः । क्षीणायुर्जाल्मः ॥ दैन्ये । क्षितः । क्षीणो ऽयं तपस्वी ॥

## स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशे ऽज्झनग्रहदृशां वा चिण्वदिट् च ॥ ६२ ॥

स्य । सिच् । सीयुट् । तासि ।' इत्येतेषु भावकर्मविषयेषु परेषूपदेशे ऽजन्तानामङ्गानां हन । ग्रह । दृशिर् । इत्येतेषां च चिणवत् कार्यं वा स्यात् । स्यसिच्सीयुट्तासीनामिट् । इत्येष आगमश्च भवति ॥

उपदेशे ऽजन्तानां स्ये । चिञ् । चायिष्यते । चेष्यते । अचायिष्यत । अचेष्यत ॥ शम । शामिष्यते । शमिष्यते । शमयिष्यते । अशामिष्यत । अशमिष्यत । अशमयिष्यत ॥ हन । घानिष्यते । हनिष्यते । अघानिष्यत । अहनिष्यत ॥ ग्रह । ग्राहिष्यते । ग्रहीष्यते । अग्राहिष्यत । अग्रहीष्यत । ग्रहो ऽलिटीति प्रत्ययस्येटो दीर्घो न चिणवदिटः ॥ दृशिर् । दर्शिष्यते । द्रक्ष्यते । अदर्शिष्यत । अद्रक्ष्यत ॥

सिचि । अदायिषातां । अदिषातां । अशामिषातां । अशमिषातां । अशमयिषातां ॥ हन । अघानिषातां । अवधिषातां । अहसातां ॥ ग्रह । अग्राहिषातां । अग्रहीषातां ॥ दृशिर् । अदर्शिषातां । अद्रक्षातां ॥

सीयुटि । दायिसीष्ट । दासीष्ट । शामिषीष्ट । शमिषीष्ट । शमयिषीष्ट ॥ घानिषीष्ट । वधिषीष्ट ॥ ग्राहिषीष्ट । ग्रहीषीष्ट ॥ दर्शिषीष्ट । दृक्षीष्ट ॥

तासौ ॥ शामिता । शमिता । शमयिता ॥ घानिता । हन्ता ॥ ग्राहिता । ग्रहीता ॥ दर्शिता । द्रष्टा ॥

स्यसिच्सीयुट्तासिषु किं । चेतव्यं ॥ भावकर्मणोः किं । चेष्यति ॥ उपदेशे किं । कारिष्यते । अत्र गुणे रपरत्वे कृते ऽपि यथा स्यात् ॥ अज्झनग्रहदृशां किं । पठिष्यते ॥

## दीङो युडचि क्ङिति ॥६३॥

दीङ् । इत्येतस्मात् परस्याजादेः कितो ङितश्च प्रत्ययस्य युट् । इत्येष आगमः स्यात् ॥ दिदीये । दिदीयाते । दिदीयिरे ॥ यणादेशे कर्तव्ये विधानसामर्थ्याद्युटो नासिद्धत्वं ॥ अचि किं । उपदानं ॥

## आतो लोप इटि च ॥६४॥

आ । इत्येतदन्तस्याङ्गस्याजाद्योरार्धधातुकयोरिट्क्ङितोः परयोर्लोपः स्यात् ॥ इटि । पा । पपिथ ॥ क्ङिति । पपतुः । पपुः ॥ ङिति । प्रदा । प्रधा ॥ आर्धधातुके किं । व्यतये । इतेर्लङोरिति रूपं । यान्ति ॥ अचीत्येव । ग्लायते । दासीय ॥

## ईर्यति ॥ ६५ ॥

आ । इत्येतदन्तस्याङ्गस्य यत्प्रत्यये परे । ई । इत्येष आदेशः स्यात् ॥ गेयं । पेयं । स्तेयं । देयं । धेयं ॥

## घुमास्थागापाजहातिसां हलि ॥ ६६ ॥

घुसंज्ञकानां । मा । ष्ठा । गा । पा । ओहाक् । षो । इत्येतेषां च हलादौ क्ङिति परे । ई । इत्येष आदेशः स्यात् ॥ घु । दीयते । देदीयते । धीयते । देधीयते ॥ मा । मीयते । मेमीयते ॥ ष्ठा । स्थीयते । तेष्ठीयते ॥ इणादेशो गा न त्वन्यः । गीयते । जेगीयते । अध्यगीष्ट । अध्यगीषातां ॥ पानार्थः पा न त्वन्यः । पीयते । पेपीयते ॥ ओहाक् । हीयते । जेहीयते ॥ षो । अवसीयते । अवसेषीयते ॥ हलि किं । दधतुः ॥ क्ङिति किं । दाता ॥

## एर्लिङि ॥ ६७ ॥

घु । मा । ष्ठा । गा । पा । ओहाक् । षो । इत्येतेषां क्ङिति लिङ्प्रत्यये परे । ए । इत्येष आदेशः स्यात् ॥ देयात् । धेयात् ॥ मेयात् ॥ स्थेयात् ॥ गेयात् ॥ पेयात् ॥ हेयात् ॥ अवसेयात् ॥ क्ङिति किं । दासीष्ट ॥

## वान्यस्य संयोगादेः ॥ ६८ ॥

घुमास्थादेरन्यस्य संयोगादेराकारान्तस्याङ्गस्यार्धधातुके किति लिङि परे । ए । इत्येष आदेशो वा स्यात् ॥ ग्लेयात् । ग्लायात् ॥ अन्यस्य किं । स्थेयात् ॥ संयोगादेः किं । पायात् ॥ किति किं । ग्लासीष्ट ॥

## न ल्यपि ॥ ६९ ॥

घु । मा । ष्ठा । गा । पा । ओहाक् । षो । इत्येतेषां ल्यप्प्रत्यये परे । ई । इत्येष आदेशो न स्यात् ॥ प्रदाय । प्रधाय ॥ प्रमाय ॥ प्रस्थाय ॥ प्रगाय ॥ प्रपाय ॥ प्रहाय ॥ प्रसाय ॥

## मयतेरिदन्यतरस्यां ॥ ७० ॥

मेङ् । इत्येतस्य ल्यपि परे । इ । इत्येष आदेशो वा स्यात् ॥ अपमित्य । अपमाय ॥

## लुङ्लङ्लृङ्क्ष्वडुदात्तः ॥७१॥

लुङ् । लङ् । लृङ् । इत्येतेषु परेष्वङ्गस्य । अट् । इत्येष आगमः स्यात् । स चोदात्तः ॥ डुकृञ् । लुङ् । अकार्षीत् ॥ लङ् । अकरोत् ॥ लृङ् । अकरिष्यत् ॥

## आडजादीनां ॥७२॥

लुङ् । लङ् । लृङ् । इत्येतेषु परेष्वजादेरङ्गस्य । आट् । इत्येष आगमः स्यात् । स चोदात्तः ॥ ईह । ऐहिष्ट । ऐहत । ऐहिष्यत ॥

## छन्दस्यपि दृश्यते ॥७३॥

यत्रोक्तस्ततोऽन्यत्रापि वेद आट् स्यात् ॥ वृञ् । सुरुचोवेन आवः । लुङि मन्त्रे घसेत्यादिना च्लेर्लुक् ॥ णश । आनक् । नशेर्वेति कुत्वं ॥

## न माङ्योगे ॥७४॥

माङ् । इत्येतस्य योगेऽट् । आट् । इत्येतावागमौ न भवतः ॥ मा भवान् कार्षीत् । मास्म करोत् ॥ मा भवानीहिष्ट । मास्म भवानीहत ॥

## बहुलं छन्दस्यमाङ्योगेऽपि ॥७५॥

अमाङ्योगे । माङ्योगेऽपि वेदे बहुलमडाटौ न भवतः ॥ जनिष्ठा उग्रः । काममूनयीत् । धीनयीत् ॥ माङ्योगे । मा वः क्षेत्रे परबीजान्यवाप्सुः ॥

## इरयो रे ॥७६॥

इरे । इत्येतस्य वेदे बहुलं रे । इत्येष आदेशः स्यात् ॥ डुधाञ् । दध्रे । आभीयत्वेन रेभावस्यासिद्धत्वादाल्लोपः ॥ न च भवति । पत्यानिधर्माणि धारिरे ॥ इरयोरिति द्विवचनं तु रे । इत्येतस्य इडागमे कृते पुनरादेशवि-धानार्थं ॥

## अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ॥७७॥

श्नुप्रत्ययान्तस्य । इ । उ । इत्येवमन्तस्य धातोः । भ्रू । इत्येतस्य चाङ्गस्याजादौ प्रत्यये परे इयङ् । उवङ् । इत्येतावादेशौ भवतः ॥ श्नु । आप्नुवन्ति । शक्नुवन्ति ॥ धातु । क्षि । चिक्षियतुः । लूञ् । लुलुवतुः । णीञ् । निन्यौ ।

नियः । पूज् । पुत्रौ । पुत्रः ॥ भ्रू । भ्रुवौ । भ्रुवः ॥ अचि किं । आप्यात् ॥ श्नुधातुभ्रुवां किं । लक्ष्म्या । वध्वा ॥ य्वोः किं । चक्रतुः ॥

## अभ्यासस्यासवर्णे ॥ ७८ ॥

इ । उ । इत्येतयोरभ्यासावयवयोरसवर्णे ऽचि पर इयङ् । उवङ् । इत्येतावादेशौ भवतः ॥ इयेष । उवोष ॥ असवर्णे किं । ईषतुः । ईषुः । ऊषतुः । ऊषुः ॥ अचि किं । इयाज । उवाच ॥

## स्त्रियाः ॥ ७९ ॥

स्त्री । इत्येतस्याजादौ प्रत्यये पर इयङ् । इत्येष आदेशः स्यात् ॥ स्त्रियौ । स्त्रियः ॥ स्त्रीणामित्यत्र परत्वान्नुट् ॥

## वाम्शसोः ॥ ८० ॥

अम् । शस् । इत्येतयोः परयोः स्त्रिया इयङ् । इत्येष आदेशो वा स्यात् ॥ स्त्रियं । स्त्रीं ॥ स्त्रियः । स्त्रीः ॥

## इणो यण् ॥ ८१ ॥

इण् । इत्येतस्य धातोरजादौ प्रत्यये परे यण् स्यात् ॥ यन्ति । यन्तु । आयन् ॥ इयङो ऽयं बाधकः । गुणवृद्धिभ्यां तु परत्वादयमेव बाध्यते । अयनं । आयकः ॥

## एरनेकाचो ऽसंयोगपूर्वस्य ॥ ८२ ॥

धात्ववयवसंयोगपूर्वो न भवति य इकारस्तदन्तो यो धातुस्तदन्तस्यानेकाचो ऽङ्गस्याजादौ प्रत्यये परे यण् स्यात् ॥ निन्यतुः । निन्युः । ग्रामण्यौ । ग्रामण्यः ॥ एः किं । लुलुवतुः ॥ अनेकाचः किं । नियौ । नियः ॥ असंयोगपूर्वस्य किं । यवक्रियौ । धातुना संयोगविशेषणादिह यण् । उन्न्यौ । उन्न्यः ॥

## ओः सुपि ॥ ८३ ॥

धात्ववयवसंयोगपूर्वो न भवति य उकारस्तदन्तो यो धातुस्तदन्तस्यानेकाचो ऽङ्गस्याजादौ सुपि प्रत्यये परे यण् स्यात् ॥ खलप्वौ । खलप्वः । सकृल्ल्वौ ।

सकृल्ल्वः ॥ सुपि किं । लुलुवतुः ॥ अनेकाचः किं । लुवौ । लुवः ॥ धात्ववयवसंयोगेति किं । उल्ल्वौ । उल्ल्वः ॥ असंयोगपूर्वस्य किं । कटप्रुवौ ॥

## वर्षाभ्वश्च ॥८४॥

वर्षाभू । इत्येतस्योवर्णान्तस्याजादौ सुपि परे यण् स्यात् ॥ वर्षाभ्वौ । वर्षाभ्वः ॥

## न भूसुधियोः ॥८५॥

भू । सुधी । इत्येतयोरजादौ सुपि परे यण् न स्यात् ॥ प्रतिभुवौ । प्रतिभुवः ॥ सुधियौ । सुधियः ॥

## छन्दस्युभयथा ॥८६॥

भू । सुधी । इत्येतयोर्वेदेऽजादौ सुपि प्रत्यये परे यण् भवति न भवति च ॥ वनेषु चित्रं विभ्वं । विभुवं ॥ सुधियो हव्यमग्ने । सुध्यो हव्यमग्ने ॥

## हुश्नुवोः सार्वधातुके ॥८७॥

हु । इत्येतस्य श्नुप्रत्ययान्तस्य चाङ्गस्यानेकाचोऽसंयोगपूर्वस्याजादौ सार्वधातुके परे यण् स्यात् ॥ जुह्वति । जुह्वतु ॥ सुन्वन्ति ॥ हुश्नुवोः किं । योयुवति ॥ सार्वधातुके किं । जुहुवतुः ॥ असंयोगपूर्वस्य किं । आप्नुवन्ति ॥

## भुवो वुग्लुङ्लिटोः ॥८८॥

भू । इत्येतस्य लुङ्लिटोरचि परे वुक् । इत्ययमागमः स्यात् ॥ लुङि । अभूवन् । अभूवं ॥ लिटि । बभूव । बभूवतुः । बभूवुः ॥

## ऊदुपधाया गोहः ॥८९॥

गोह् । इत्येतस्याङ्गस्योपधाया अजादौ प्रत्यये परे । ऊ । इत्ययमादेशः स्यात् ॥ गूहं । निगूहयति । निगूहकः ॥ उपधायाः किं । यनस्य मा भूत् ॥ गोहः इति विकृतनिर्देशादिह न भवति । निजुगुहतुः । निजुगुहुः ॥ अचि किं । निगोढा ॥

## दोषो णौ ॥९०॥

दोष् । इत्येतस्याङ्गस्योपधाया णिच्प्रत्यये परे । ऊ । इत्ययमादेशः स्यात् ॥ दुष । दूषयति । दूषयतः । दूषयन्ति ॥ णौ किं । दोषः ॥

## वा चित्तविरागे ॥ ९१ ॥

दोष् । इत्येतस्याङ्गस्योपधाया णिचि परे चित्तविरागेऽर्थे । ऊ । इत्ययमादेशो वा स्यात् ॥ चित्तं दूषयति । दोषयति वा कामः ॥ चित्तविरागे किं । साधनं दूषयति ॥

## मितां ह्रस्वः ॥ ९२ ॥

मित्संज्ञकानां धातूनामुपधाया णौ परे ह्रस्वः स्यात् ॥ घटादयो मितः ॥ घटयति । व्यथयति । जनयति । रजयति । शमयति । ज्ञपयति ॥

## चिण्णमुलोर्दीर्घोऽन्यतरस्यां ॥ ९३ ॥

चिण् । णमुल् । इत्येतत्परके णौ परे मित्संज्ञकानां धातूनामुपधाया दीर्घो वा स्यात् ॥ चिण् । अशमि । अशामि । अतमि । अतामि ॥ णमुल् । शमं शमं । शामं शामं । तमं तमं । तामं तामं ॥ दीर्घः किं । अशमि । अशामि । अत्र णिजन्तायिण्याचि ह्रस्वविकल्पो न स्यात् । णिलोपस्य स्थानिवत्वात् । दीर्घविधाने तु स्थानिवत्वनिषेधोऽस्तीति दीर्घविकल्पो भवति ॥

## खचि ह्रस्वः ॥ ९४ ॥

खच्प्रत्ययपरके णौ परे मितां धातूनामुपधाया ह्रस्वः स्यात् ॥ द्विषंतपः । परंतपः । पुरंदरः ॥

## ह्लादो निष्ठायां ॥ ९५ ॥

ह्लादी । इत्येतस्य निष्ठासंज्ञके परे उपधाया ह्रस्वः स्यात् ॥ प्रह्लन्नः । प्रह्लन्नवान् ॥ निष्ठायां किं । प्रह्लादयति ॥ ह्लाद इति योगविभागः क्रियते । क्तिन् । प्रह्लत्तिः ॥

## छादेर्घेऽद्व्युपसर्गस्य ॥ ९६ ॥

छद । इत्येतस्य ण्यन्तस्याङ्गस्योपसर्गद्वयरहितस्य घप्रत्यये परे उपधाया ह्रस्वः स्यात् ॥ छद । प्रच्छदः । तनुच्छदः । दन्तच्छदः ॥ अद्व्युपसर्गस्य किं । समुपच्छादः ॥

## इस्मन्त्रन्क्विषु च ॥९७॥

इस् । मन् । त्रन् । क्विप् । इत्येतेषु परेषु । छादेरुपधाया ह्रस्वः स्यात् ॥ छद । इस् । छदिः ॥ मन् । छद्म ॥ त्रन् । छत्रं ॥ क्विप् । धामच्छत् ॥

## गमहनजनखनघसां लोपः क्ङित्यनङि ॥९८॥

गम्लृ । हन । जन । खनु । घस्लृ । इत्येतेषां धातूनामङ्भिन्नेऽजादौ किति ङिति च प्रत्यये परे उपधाया लोपः स्यात् ॥ गम्लृ । जग्मतुः । जग्मुः ॥ हन । जघ्नतुः । जघ्नुः ॥ जन । जज्ञतुः । जज्ञुः । जज्ञे । जज्ञाते । जज्ञिरे ॥ खनु । चख्नतुः । चख्नुः ॥ घस् । जक्षतुः । जक्षुः ॥ क्ङिति किं । गमनं ॥ अनङि किं । अगमत् । अघसत् ॥ अजादौ किं । गम्यते ॥

## तनिपत्योश्छन्दसि ॥९९॥

तनु । पत्लृ । इत्येतयोर्वेदेऽङ्भिन्नेऽजादौ क्ङिति प्रत्यये परे उपधाया लोपः स्यात् ॥ वितत्निरे कवयः । शकुना इव पप्तिम ॥ वितेनिरे । पेतिम । इति लोके भवति ॥

## घसिभसोर्हलि च ॥१००॥

घस्लृ । भस । इत्येतयोर्वेदे हलादावजादौ च क्ङिति प्रत्यये परे उपधाया लोपः स्यात् ॥ अद । सग्धिश्च मे । क्तिन् । बहुलं छन्दसीति घस्लादेशः । उपधालोपः । झलो झलीति सलोपः । धत्वं । घकारस्य जश्त्वेन गकारः । ग्धि । समाना ग्धिः । सग्धि ॥ भस । बब्धां । लोट् । ताम् । श्लाविति द्वित्वं । उपधालोपः । सलोपः । धत्वं । भकारस्य जश्त्वेन बकारः ॥ अजादौ । बप्सति ॥ क्ङिति किं । बभस्ति ॥

## हुझल्भ्यो हेर्धिः ॥१०१॥

हु । इत्येतस्माज्झलन्तेभ्यश्च धातोः परस्य हेर्धिः । इत्येतस्य धि । इत्येष धादेशः स्यात् ॥ हु । जुहुधि ॥ झलन्तेभ्यः । छिदिर् । छिन्द्धि ॥ भिदिर् । भिन्द्धि ॥ हुझल्भ्यः किं । क्रीणीहि । प्रीणीहि ॥ हेः किं । जुहुतां । छिन्तां ॥ रुदादेः किं । रुदिहि । स्वपिहि ॥

## श्रुशृणुपृकृवृभ्यश्छन्दसि ॥१०२॥

श्रु । शृणु । पृ । कृञ् । वृञ् । इत्येतेभ्यः परस्य हि । इत्येतस्य वेदे धि । इत्येष आदेशः स्यात् ॥ श्रु । श्रुधी एवं ॥ शृणु । शृणुधी ॥ पृ । पूर्धि ॥ कृञ् । उरुणस्कृधि । नश्च धातुस्थ इति णत्वं ॥ वृञ् । उपावृधि ॥ शृणुधीत्यत्र उतश्चेति न हेर्लुक् । धित्वविधानसामर्थ्यात् । अन्येषामपि दृश्यत इति दीर्घः । अन्येषु व्यत्ययो बहुलमिति शप् । बहुलं छन्दसीति तस्य लुक् ॥

## अङितश्च ॥ १०३ ॥

अङितश्च हि । इत्येतस्य वेदे धि । इत्येष आदेशः स्यात् ॥ सोम रारन्धि । रमेर्व्यत्ययेन परस्मैपदं । शपः श्लुः । अभ्यासदीर्घत्वं ॥ प्रयन्धि । यमेः शपो लुक् ॥ युयोध्यस्मत् । यौतेः शपः श्लुः । वा छन्दसीति विकल्पेन ङित्त्वं ॥ अङितः किं । प्रीणीहि ॥

## चिणो लुक् ॥ १०४ ॥

चिण् । इत्येतस्मात् परस्य प्रत्ययस्य लुक् स्यात् ॥ अकारि । अहारि । अलावि ॥

## अतो हेः ॥ १०५ ॥

अ । इत्येतदन्तात् परस्य हि । इत्येतस्य लुक् स्यात् ॥ पच । पठ । गच्छ । धाव ॥ अतः किं । युहि । रुहि ॥ तपरकरणं किं । लुनीहि । ईत्वस्यासिद्धत्वादाकारान्तमेतत् ॥

## उतश्च प्रत्ययादसंयोगपूर्वात् ॥ १०६ ॥

उकारो यः प्रत्ययावयवो ऽसंयोगपूर्वस्तदन्तादङ्गात् परस्य हि । इत्येतस्य लुक् स्यात् ॥ तनु । चिनु । कृणु । कुरु ॥ उतः किं । लुनीहि ॥ प्रत्ययात् किं । युहि ॥ असंयोगपूर्वात् किं । आप्नुहि ॥

## लोपश्चास्यान्यतरस्यां म्वोः ॥ १०७ ॥

उकारो यः प्रत्ययावयवो ऽसंयोगपूर्वस्तदन्तस्य प्रत्ययस्य लोपो वा स्यात् । म् । व् । इत्येतयोः प्रत्यययोः परतः ॥ चिन्वः । चिनुवः । सुन्वः । सुनुवः ॥ चिन्मः । चिनुमः । सुन्मः । सुनुमः ॥ प्रत्ययावयवः किं । युवः । युमः ॥ असंयोगपूर्वः किं । शक्नुवः । शक्नुमः ॥ लोपग्रहणमुत्तरार्थं ॥

## नित्यं करोतेः ॥१०८॥

डुकृञ् । इत्येतस्मात् परस्य उ । इत्येतस्य प्रत्ययस्य नित्यं लोपः स्यात् । म् । व् । इत्येतयोः प्रत्यययोः परतः ॥ कुर्वः । कुर्मः । न भकुर्छुरामिति दीर्घनिषेधः ॥

## ये च ॥१०९॥

डुकृञ् । इत्येतस्मात् परस्य उ । इत्येतस्य प्रत्ययस्य यकारादौ सार्वधातुके क्ङिति प्रत्यये परे नित्यं लोपः स्यात् ॥ कुर्यात् । कुर्यातां । कुर्युः ॥

## अत उत् सार्वधातुके ॥११०॥

उप्रत्ययान्तस्य डुकृञो ऽकारस्य उ । इत्येष आदेशः स्यात् । सार्वधातुके क्ङिति परे ॥ कुरुतः । कुर्वन्ति । कुरुथः । कुरुथ । कुर्वः । कुर्मः ॥ उदिति तपरकरणं लघूपधगुणनिवृत्त्यर्थं ॥ सार्वधातुके किं । भूतपूर्वे ऽपि सार्वधातुके यथा स्यात् । कुरु । इति ॥ क्ङिति किं । करोति । करोषि ॥

## श्नसोरल्लोपः ॥१११॥

श्नम् । अस् । इत्येतयोरकारस्य लोपः स्यात् । सार्वधातुके क्ङिति प्रत्यये परे ॥ श्नम् । रुधिर् । रुन्धः । रुन्धन्ति । भिदिर् । भिन्तः । भिन्दन्ति ॥ अस् । स्तः । सन्ति ॥ क्ङिति किं । छिनत्ति । भिनत्ति ॥

## श्नाभ्यस्तयोरातः ॥११२॥

श्ना । अभ्यस्तसंज्ञक । इत्येतयोर्य आकारस्तस्य लोपः स्यात् । सार्वधातुके क्ङिति प्रत्यये परे ॥ श्ना । लूञ् । लुनते । लुनतां । अलुनत ॥ अभ्यस्तानां । डुमिञ् । मिमते । मिमतां । अमिमत ॥ ओहाङ् । संजिहते । संजिहतां । समजिहत ॥ श्नाभ्यस्तयोः किं । यान्ति ॥ आतः किं । बिभ्यति ॥ क्ङिति किं । अलुनात् ॥

## ई हल्यघोः ॥११३॥

श्ना । इत्येतस्य घुसंज्ञकभिन्नानामभ्यस्तसंज्ञकानां चाकारस्य ई । इत्येष आदेशः स्यात् । हलादौ क्ङिति सार्वधातुके परे ॥ श्ना । लुनीतः । लुनीथः । लुनीथ । लुनीव । लुनीमः । पुनीतः । पुनीथः । पुनीथ । पुनीवः । पुनीमः ॥

अभ्यस्तानां । मिमीते । मिमीषे । मिमीध्वे । मिमीवहे । मिमीमहे । संजिहीते । संजिहीषे । संजिहीध्वे । संजिहीवहे । संजिहीमहे ॥ हलि किं । लुनते । लुनन्ति । मिमते ॥ अघोः किं । दत्तः । धत्तः ॥ क्ङिति किं । लुनाति । पुनाति ॥

## इद्दरिद्रस्य ॥ ११४ ॥

दरिद्रा । इत्येतस्याकारस्य इ । इत्येष आदेशः स्यात् । हलादौ क्ङिति सार्वधातुके परे ॥ दरिद्रितः । दरिद्रिथः । दरिद्रिथ । दरिद्रिवः । दरिद्रिमः ॥ हलादौ किं । दरिद्रति ॥ क्ङिति किं । दरिद्राति ॥

## भियो ऽन्यतरस्यां ॥ ११५ ॥

ञिभी । इत्येतस्य इ । इत्येष आदेशो वा स्यात् । हलादौ क्ङिति सार्वधातुके परे ॥ बिभितः । बिभीतः । बिभियः । बिभीथः । बिभिथ । बिभीथ । बिभिवः । बिभीवः । बिभिमः । बिभीमः ॥ हलादौ किं । बिभ्यति ॥ क्ङिति किं । बिभेति ॥ सार्वधातुके किं । भीयते । बेभीयते ॥

## जहातेश्च ॥ ११६ ॥

ओहाक् । इत्येतस्य इ । इत्येष आदेशो वा स्यात् । हलादौ क्ङिति सार्वधातुके परे ॥ जहितः । जहीतः । जहिथः । जहीथः । जहिथ । जहीथ । जहिवः । जहीवः । जहिमः । जहीमः ॥ पक्ष ई हल्यघोरितीकारः ॥ हलादौ किं । जहति ॥ क्ङिति किं । जहाति ॥ सार्वधातुके किं । हीयते । जेहीयते ॥

## आ च हौ ॥ ११७ ॥

ओहाक् । इत्येतस्य आ । इत्येष आदेशः । इ । इत्येष आदेशश्च वा स्यात् । हि । इत्येतस्मिन् प्रत्यये परे ॥ जहाहि । जहिहि । जहीहि । पक्ष ईत्वं ॥

## लोपो यि ॥ ११८ ॥

ओहाक् । इत्येतस्य यकारादौ सार्वधातुके परे लोपः स्यात् ॥ जह्यात् । जह्यातां । जह्युः ॥ सार्वधातुके किं । हेयात् ॥

## घ्वसोरेद्धावभ्यासलोपश्च ॥ ११९ ॥

घुसंज्ञकानां । अस । इत्येतस्य च ए । इत्येष आदेशः स्यात् । हिप्रत्यये परे तत्संनियोगेनाभ्यासस्य लोपश्च भवति ॥ देहि । धेहि ॥ अस । एधि । श्नसोरित्यकारलोपः । लोपश्चेति शकारः सर्वादेशार्थः ॥

## अत एकहल्मध्ये ऽनादेशादेर्लिटि ॥१२०॥

लिटिनिमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्य अ । इत्येतस्य ए । इत्येष आदेशः स्यात् । तत्संनियोगेनाभ्यासलोपश्च किति लिटि परे ॥ रण । रेणतुः । रेणुः ॥ डुपचष् । पेचतुः । पेचुः ॥ अत किं । दिदिवतुः ॥ तपरः किं । ररासे ॥ एकहल्मध्ये किं । शश्रयतुः । ततक्षतुः ॥ अनादेशादेः किं । चकणतुः । बभणतुः ॥ लिटादेशविशेषणादिह भवति । णम । नेमतुः । षह । सेहे ॥ किति किं । अहं पपच ॥

## थलि च सेटि ॥१२१॥

इडागमे थलि परे ऽनादेशादेरेकहल्मध्यस्थस्य अ । इत्येतस्य ए । इत्येष आदेशः स्यात् । अभ्यासलोपश्च ॥ डुपचष् । पेचिथ ॥ णम । नेमिथ ॥ सेटि किं । पपक्थ ॥ थल्ग्रहणं विस्पष्टार्थं ॥ अत इत्येव । दिदेविथ ॥ एकहल्मध्य इत्येव । ततरिथ ॥ अनादेशादेरित्येव । बभणिथ ॥

## तॄफलभजत्रपश्च ॥१२२॥

तॄ । फल । भज । त्रप । इत्येतेषां अ । इत्येतस्य ए । इत्येष आदेशः स्यात् । अभ्यासलोपश्च किति लिटि सेटि थलि च परे ॥ तॄ । तेरतुः । तेरुः । तेरिथ ॥ फल । फेलतुः । फेलुः । फेलिथ ॥ भज । भेजतुः । भेजुः । भेजिथ ॥ त्रप । त्रेपे । त्रेपाते । त्रेपिरे ॥

## राधो हिंसायां ॥१२३॥

राध । इत्येतस्य धा । इत्येतस्य हिंसायामर्थे । ए । इत्येष आदेशः स्यात् । अभ्यासलोपश्च किति लिटि सेटि थलि च परे ॥ रेधतुः । रेधुः । रेधिथ ॥ हिंसायां किं । आरराधतुः ॥

## वा जॄभ्रमुत्रसां ॥१२४॥

जॄ । भ्रमु । त्रसी । इत्येतेषां धातूनां अ । इत्येतस्य स्थाने । ए । इत्येष

आदेशो वा स्यात् । अभ्यासलोपश्च किति लिटि सेटि थलि च परे ॥ त्रप् । त्रेपतुः । तत्रपतुः । त्रेपुः । तत्रपुः । त्रेपिथ । तत्रपिथ ॥ भ्रमु । भ्रेमतुः । बभ्रमतुः । भ्रेमुः । बभ्रमुः । भ्रेमिथ । बभ्रमिथ ॥ त्रसी । त्रेसतुः । तत्रसतुः । त्रेसुः । तत्रसुः । त्रेसिथ । तत्रसिथ ॥

## फणां च सप्तानां ॥ १२५ ॥

फण । इत्येवमादीनां सप्तानां धातूनामेत्वाभ्यासलोपौ भवतः । किति लिटि सेटि थलि च परतः ॥ फण । फेणतुः । पफणतुः । फेणुः । पफणुः । फेणिथ । पफणिथ ॥ राजृ । रेजतुः । रराजतुः । रेजुः । रराजुः । रेजिथ । रराजिथ ॥ टुभ्राजृ । भ्रेजे । बभ्राजे । भ्रेजाते । बभ्राजाते । भ्रेजिरे । बभ्राजिरे ॥ टुभ्राशृ । भ्रेशे । बभ्राशे । भ्रेशाते । बभ्राशाते । भ्रेशिरे । बभ्राशिरे ॥ टुभ्लाशृ । भ्लेशे । बभ्लाशे । भ्लेशाते । बभ्लाशाते । भ्लेशिरे । बभ्लाशिरे ॥ स्यमु । स्येमतुः । सस्यमतुः । स्येमुः । सस्यमुः । स्येमिथ । सस्यमिथ ॥ स्वन । स्वेनतुः । सस्वनतुः । स्वेनुः । सस्वनुः । स्वेनिथ । सस्वनिथ ॥ सप्तानां किं । ध्वन । दध्वनतुः । दध्वनुः । दध्वनिथ ॥

## न शसददवादिगुणानां ॥ १२६ ॥

शसु । दद । इत्येतयोः । व् । इत्येतदादिर्यो धातुः । कृतगुणो यो धातुः । तयोश्च एत्वाभ्यासलोपौ न भवतः ॥ शस । विशशसतुः । विशशसुः । विशशसिथ ॥ दद । ददे । ददाते । ददिरे ॥ वादि । टुवम् । ववमतुः । ववमुः । ववमिथ ॥ कृतगुणस्य । शॄ । विशशरतुः । विशशरुः । विशशरिथ ॥ दॄ । विददरतुः । विददरुः । विददरिथ ॥ लूञ् । लुलविथ ॥ यु । युयविथ ॥ गुणशब्देनाभिनिर्वृत्तस्याकारस्य गुणशब्देनात्र ग्रहणं ॥

## अर्वणस्त्रसावनञः ॥ १२७ ॥

अर्वन् । इत्येतस्याङ्गस्य नञा रहितस्य तृ । इत्येष आदेशः स्यात् । न तु सौ परतः ॥ अर्वन्तौ । अर्वन्तः । अर्वन्तं । अर्वन्तौ । अर्वतः । अर्वता । अर्वद्भ्यां । स्त्रियां । अर्वती ॥ असौ किं । अर्वा ॥ अनञः किं । अनर्वाणौ ॥

## मघवा बहुलं ॥ १२८ ॥

मघवन् । इत्येतस्याङ्गस्य तृ । इत्येष आदेशो वा स्यात् ॥ मघवान् । मघवन्तौ ...

न्तौ । मघवन्तः । मघवन्तं । मघवन्तौ । मघवतः । मघवता । मघवतां ॥ न च भवति । मघवा । मघवानौ । मघवानः । मघवानं । मघवानौ । मघोनः । मघोना । मघवभ्यामित्यादि ॥ स्त्रियां । मघवती । मघोनी ॥ अणि । माघवतं । माघवनं ॥

## भस्य ॥१२९॥

अधिकारोऽयं ॥ इत ऊर्ध्वमा पादपरिसमाप्तेर्यदुच्यते तद्भसंज्ञकस्य वेदितव्यं ॥ वक्ष्यति पादः पत् ॥ द्विपदः । द्विपदा । द्विपदे ॥ भस्य किं । द्विपात् । द्विपादौ । द्विपादः । द्विपादं । द्विपादौ ॥

## पादः पत् ॥१३०॥

पाद् । इत्येतदन्तस्य भस्याङ्गस्य पद् । इत्ययमादेशः स्यात् ॥ द्विपदः । द्विपदा । द्विपदे । द्विपदः । द्विपदः । द्विपदोः । द्विपदां । द्विपदि । द्विपदोः ॥ स्त्रियां । द्विपदी ॥ भस्येति किं । द्विपात् । द्विपादौ ॥

## वसोः संप्रसारणं ॥१३१॥

वसुप्रत्ययान्तस्य भस्याङ्गस्य संप्रसारणसंज्ञक आदेशः स्यात् ॥ विदेः शतुर्वसुः । विदुषः । विदुषा । विदुषे ॥ वसुग्रहणे लिटः क्वसुरपि गृह्यते ॥ पेचुषः । पेचुषा ॥ स्त्रियां । विदुषी । पेचुषी ॥

## वाह ऊठ् ॥१३२॥

वाह । इत्येतदन्तस्य भस्याङ्गस्य संप्रसारणसंज्ञक ऊठ् । इत्ययमादेशः स्यात् ॥ विश्वौहः । विश्वौहा । प्रष्ठौहः । प्रष्ठौहा । दित्यौहः । दित्यौहा ॥ स्त्रियां । विश्वौही । प्रष्ठौही । दित्यौही ॥

## श्वयुवमघोनामतद्धिते ॥१३३॥

श्वन् । युवन् । मघवन् । इत्येतेषां भसंज्ञकानामतद्धिते प्रत्यये परे संप्रसारणं स्यात् ॥ शुनः । शुना । शुने ॥ यूनः । यूना । यूने ॥ मघोनः । मघोना । मघोने ॥ अतद्धित इति किं । शौवनं मांसं । यौवनं । माघवनं ॥ भस्य किं । श्वा । युवा । मघवा ॥

## अल्लोपोऽनः ॥१३४॥

भस्याङ्गस्यानो ऽवयवस्य अ । इत्येतस्य लोपः स्यात् प्रत्यये परे ॥ राज्ञः । राज्ञा । राज्ञे ॥ तक्ष्णः । तक्ष्णा । तक्ष्णे ॥ भस्य किं । राजा । तक्षा ॥

## षपूर्वहन्धृतराज्ञामणि ॥१३५॥

ष् । इत्येतत्पूर्वो यो ऽन् । हन् । धृतराजन् । इत्येतेषामनो ऽवयवस्य अ । इत्येतस्याणप्रत्यये परे लोपः स्यात् ॥ षपूर्व । औक्ष्णः । ताक्ष्णः ॥ हन् । भ्रौणघ्नः । वार्त्रघ्नः ॥ धृतराज्ञो ऽपत्यं । धार्तराज्ञः ॥ षपूर्वेत्यादि किं । सामनः ॥ अणि किं । ताक्षण्यः ॥

## विभाषा ङिश्योः ॥१३६॥

ङि । शी । इत्येतयोः परतो भस्याङ्गस्यानो ऽवयवस्याकारस्य लोपो वा स्यात् ॥ ङि । राज्ञि । राजनि ॥ शी । साम्नी । सामनी ॥

## न संयोगाद्वमन्तात् ॥१३७॥

व् । म् । इत्येतदन्तात् संयोगात् परस्यानो ऽकारस्य लोपो न स्यात् ॥ व् । सुपर्वणः । सुपर्वणा । सुपर्वणे ॥ म् । चर्मणः । चर्मणा । चर्मणे ॥ संयोगात् किं । प्रतिदीव्ना । साम्ना ॥ वमन्तात् किं ॥ तक्ष्णः ॥

## अचः ॥१३८॥

अञ्चु । इत्येतस्य लुप्तनकारकस्य भस्य अ । इत्येतस्य लोपः स्यात् ॥ दधीचः । दधीचा । दधीचे ॥

## उद ईत् ॥१३९॥

उद् । इत्येतस्मात् परस्य लुप्तनकारस्य । अञ्चु । इत्येतस्य भस्य अ । इत्येतस्य ई । इत्येष आदेशः स्यात् ॥ उदीचः । उदीचा । उदीचे ॥

## आतो धातोः ॥१४०॥

आ । इत्येतदन्तस्य धातोर्भस्याङ्गस्य लोपः स्यात् ॥ विश्वपः । विश्वपा । विश्वपे ॥ आतः किं । नियः ॥ धातोः किं । खट्वाः ॥ आत इति योगविभागः । तेनाधातोरप्याकारः क्वचिल्लुप्यते । क्त्वः । स्नः ॥

## मन्त्रेष्वाङ्यादेरात्मनः ॥ १४१ ॥

आत्मन् । इत्येतस्य मन्त्रविषय आङि परे आदेर्लोपः स्यात् ॥ त्मना सोमेभ्यः । त्मना देवेभ्यः ॥ मन्त्रेषु किं । आत्मना कृतं ॥ आङि किं । यदात्मनस्तनूोपतिष्ठते ॥

## ति विंशतेर्डिति ॥ १४२ ॥

ति । इत्येतस्य भस्य विंशतेरवयवस्य डिति प्रत्यये परे लोपः स्यात् ॥ ड्वुन् । विंशकः ॥ ड । विंशः ॥ डट् । द्वाविंशः ॥ डिति किं । विंशत्या ॥

## टेः ॥ १४३ ॥

डिति प्रत्यये परे भस्याङ्गस्य टेर्लोपः स्यात् ॥ ड्मतुप् । कुमुद्वान् । नड्वान् । वेतस्वान् ॥

## नस्तद्धिते ॥ १४४ ॥

न् । इत्येतदन्तस्य भस्य टेर्लोपः स्यात् तद्धिते परे ॥ आग्निशर्मिः । भाद्रशर्मिः ॥ नः किं । सात्वतः ॥ तद्धिते किं । शर्मणा ॥

## अह्नष्टखोरेव ॥ १४५ ॥

अहन् । इत्येतस्य ट । ख । इत्येतयोः प्रत्यययोः परयोष्टिलोपः स्यात् ॥ ट । द्व्यहः । त्र्यहः । टच् समासान्तः ॥ ख । द्व्यहीनः । त्र्यहीनः ॥

## ओर्गुणः ॥ १४६ ॥

उ । इत्येतदन्तस्य भस्य गुणः स्यात् तद्धिते परे ॥ बभ्रु । बाभ्रव्यः ॥ उपगु । औपगवः ॥

## ढे लोपोऽकद्र्वाः ॥ १४७ ॥

उ । इत्येतदन्तस्य भस्य कद्रूभिन्नस्य ढप्रत्यये परे लोपः स्यात् ॥ कमण्डलु । कामण्डलेयः ॥ शैतिबाहेयः ॥ अकद्र्वाः किं । काद्रवेयः ॥

## यस्येति च ॥ १४८ ॥

इ । ई । इत्येतदन्तयोर्भस्याल्लोपः स्यात् । ईकारे तद्धिते च परे ॥

इवर्णस्य ईति । दाक्षी । सखी ॥ इवर्णस्य तद्धिते । दौलेयः । आत्रेयः ॥ अवर्णस्य ईकारे । कुमारी । गौरी ॥ अवर्णस्य तद्धिते । दाक्षिः । गार्ग्यः ॥

## सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ॥ १४९ ॥

सूर्य । तिष्य । अगस्त्य । मत्स्य । इत्येतेषां भसंज्ञकानामुपधासंज्ञकस्य य् । इत्येतस्य लोपः स्यात् । ईकारे तद्धिते च परे ॥ सूर्य । सौरी ॥ तिष्य । तैषमहः । तैषी रात्रिः ॥ अगस्त्यस्यापत्यं स्त्री । आगस्ती ॥ मत्स्य । मत्सी ॥ उपधायाः किं । मत्स्यचरी ॥ यग्रहणमुत्तरार्थं ॥

## हलस्तद्धितस्य ॥ १५० ॥

हलः परस्य तद्धितावयवस्योपधासंबन्धिनो य् । इत्येतस्येकारे परे लोपः स्यात् ॥ गार्गी । वात्सी ॥ हलः किं । कारिकेयी ॥ तद्धितस्य किं । वैश्यस्य स्त्री । वैश्यी ॥

## आपत्यस्य च तद्धितेऽनाति ॥ १५१ ॥

हलः परस्यापत्यार्थस्य य् । इत्येतस्य लोपः स्यात् तद्धिते परे । न त्वाकारे ॥ गार्गकं । वात्सकं ॥ आपत्यस्य किं । सांकाश्यकं ॥ तद्धितग्रहणं पूर्वेणानापत्यस्यापि लोपो यथा स्यात् । सौमीष्टिः ॥ अनाति किं । गार्ग्यायणः ॥ हल इत्येव । कारिकेयिः ॥ तद्धिते किं । गार्ग्ययोः ॥

## क्यच्व्योश्च ॥ १५२ ॥

क्यच् । क्यङ् । च्वि । इत्येतेषु परेषु हलः परस्यापत्यार्थस्य य् । इत्येतस्य लोपः स्यात् ॥ क्यच् । गार्गीयति ॥ क्यङ् । गार्गीयते ॥ च्वि । गार्गीभूतः ॥ आपत्यस्येति किं । सांकाश्यीयति । सांकाश्यीयते । सांकाश्यीभूतः ॥ हलः किं । कारिकेयीयति ॥

## बिल्वकादिभ्यश्छस्य लुक् ॥ १५३ ॥

बिल्वक । इत्येवमादिभ्यः परस्य भस्य छप्रत्ययस्य तद्धिते परे लुक् स्यात् ॥ बिल्वा अस्यां सन्तीति बिल्वकीया । तस्यां भवाः । बैल्वकाः ॥ वेणुकीया । वैणुकाः ॥ वेत्रकीया । वैत्रकाः ॥ वेतसकीया । वैतसकाः ॥ तृणकीया । तार्णकाः ॥ इक्षुकीया । ऐक्षुकाः ॥ काष्ठकीया । काष्ठकाः ॥

कपोतकीया । कापोतकाः ॥ क्रुञ्चा ह्रस्वत्वं च । क्रुञ्चकीया । क्रौञ्चकाः ॥ तक्षन् नलोपश्च । तक्षकीया । ताक्षकाः ॥ छग्रहणं छमात्रस्य लुग्यथा स्यात् कुको निवृत्तिर्मा भूत् ॥ लुग्ग्रहणं सर्वलोपार्थं । लोपो हि यमात्रस्य स्यात् ॥

## तुरिष्ठेमेयःसु ॥१५४॥

इष्ठन् । इमन् । ईयसुन् । इत्येतेषु परेषु भसंज्ञकस्याङ्गस्य तृ । इत्येतस्य लोपः स्यात् ॥ इष्ठन् । आसुतिंकरिष्ठः । विजयिष्ठः ॥ इमनिज्ग्रहणमुत्तरार्थं ॥ ईयसुन् । दोहीयसी धेनुः ॥

## टेः ॥१५५॥

इष्ठन् । इमन् । ईयसुन् । इत्येतेषु परेषु भसंज्ञकस्याङ्गस्य टेर्लोपः स्यात् ॥ पटिष्ठः । पटिमा । पटीयान् ॥

## स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादि परं पूर्वस्य च गुणः ॥१५६॥

स्थूल । दूर । युवन् । ह्रस्व । क्षिप्र । क्षुद्र । इत्येतेषां यणादि परं लुप्यत इष्ठेमेयःसु परेषु । पूर्वस्य च गुणो भवति ॥ इष्ठन् । स्थविष्ठः । दविष्ठः । यविष्ठः । ह्रसिष्ठः । क्षेपिष्ठः । क्षोदिष्ठः ॥ ह्रस्व । क्षिप्र । इत्येताभ्यां पृथ्वादिपाठादिमनिच् । ह्रसिमा । क्षेपिमा ॥ ईयसुन् । स्थवीयान् । दवीयान् । यवीयान् । ह्रसीयान् । क्षेपीयान् । क्षोदीयान् ॥ परं किं । यविष्ठः । ह्रसिष्ठः । पूर्वस्य यणादेर्लोपो मा भूत् ॥ पूर्वग्रहणं विस्पष्टार्थं ॥

## प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः ॥१५७॥

प्रिय । स्थिर । स्फिर । उरु । बहुल । गुरु । वृद्ध । तृप्र । दीर्घ । वृन्दारक । इत्येतेषां स्थाने क्रमात् प्र । स्थ । स्फ । वर् । बंहि । गर् । वर्षि । त्रप् । द्राघि । वृन्द । इत्येते आदेशा भवन्ति । इष्ठेमेयःसु परेषु ॥ इष्ठन् । प्रेष्ठः । स्थेष्ठः । स्फेष्ठः । वरिष्ठः । बंहिष्ठः । गरिष्ठः । वर्षिष्ठः । त्रपिष्ठः । द्राघिष्ठः । वृन्दिष्ठः ॥ प्रिय । स्थिर । स्फिर । उरु ।

बहुल । गुरु । दीर्घ । इत्येतेभ्यः पृथ्वादिपाठादिमनिच् । प्रेमा । स्थेमा । स्फेमा । वरिमा । बंहिमा । गरिमा । द्राघिमा ॥ ईयसुन् । प्रेयान् । स्थेयान् । स्फेयान् । वरीयान् । बंहीयान् । गरीयान् । वर्षीयान् । त्रपीयान् । द्राघीयान् । वृन्दीयान् ॥

## बहोर्लोपो भू च बहोः ॥ १५८ ॥

बहु । इत्येतस्मात् परेषामिष्ठेमेयसां लोपः स्यात् । बहोः स्थाने भू । इत्येष आदेशश्च ॥ भूमा । भूयान् ॥ पृथ्वादिषु बहुशब्दपाठादिमनिच् ॥

## इष्ठस्य यिट् च ॥ १५९ ॥

इष्ठ । इत्येतस्य बहोः परस्य यिट् । इत्येष आगमः स्यात् । बहोः स्थाने भू । इत्येष आदेशश्च ॥ भूयिष्ठः ॥ इकार उच्चारणार्थः ॥

## ज्यादादीयसः ॥ १६० ॥

ज्य । इत्येतस्मात् परस्य ईयस् । इत्येतस्य आ । इत्येष आदेशः स्यात् ॥ ज्यायान् । ज्यायांसौ ॥

## र ऋतो हलादेर्लघोः ॥ १६१ ॥

ऋ । इत्येतस्य हलादेर्लघो र । इत्येष आदेशः स्यात् । इष्ठेमेयःसु परेषु ॥ पृथु । प्रथिष्ठः । प्रथिमा । प्रथीयान् ॥ मृदु । म्रदिष्ठः । म्रदिमा । म्रदीयान् ॥ ऋतः किं । पटिष्ठः ॥ हलादेः किं । ऋजीयान् ॥ लघोः किं । कृष्णिमा ॥

## विभाषर्जोश्छन्दसि ॥ १६२ ॥

ऋजु । इत्येतदवयवस्य ऋ । इत्येतस्य वेदे र । इत्येष आदेशो वा स्यात् । इष्ठेमेयःसु परेषु ॥ रजिष्ठमेति पन्थानं । त्वमृजिष्ठः ॥

## प्रकृत्यैकाच् ॥ १६३ ॥

एको ऽच्यस्मिन् स इष्ठेमेयःसु परेषु प्रकृत्या स्यात् ॥ अतिशयेन स्रग्वी । स्रजिष्ठः । स्रजीयान् ॥ अतिशयेन त्वग्वान् । त्वचिष्ठः । त्वचीयान् ॥ एकाच् किं । वसुमान् । वसिष्ठः ॥

## इनण्यनपत्ये ॥ १६४ ॥

इन् । इत्येतदन्तमनपत्यार्थे ऽणि प्रत्यये परे प्रकृत्या स्यात् ॥ सांकूटिनं । सांराविणं । साविणं ॥ अणि किं । दाण्डं । अनुदात्तादित्वादञ् ॥ अनपत्ये किं । मेधाविनो ऽपत्यं । मैधावः ॥ इन् किं । सौश्रुतं ॥

## गाथिविदथिकेशिगणिपणिनश्च ॥१६५॥

गाथिन् । विदथिन् । केशिन् । गणिन् । पणिन् । इत्येते चाणि परे प्रकृत्या भवन्ति ॥ गाथिनो ऽपत्यं । गाथिनः ॥ वैदथिनः । कैशिनः । गाणिनः । पाणिनः ॥ अपत्यार्थके ऽणि प्रकृतिभावार्थो ऽयमारम्भः ॥

## संयोगादिश्च ॥१६६॥

इन् । इत्येवः संयोगादिरणि परे प्रकृत्या स्यात् ॥ शङ्खिणो ऽपत्यं । शाङ्खिणः ॥ शाङ्गिनः । चाक्रिणः ॥

## अन् ॥१६७॥

अन् । इत्येतदन्तमणि परे प्रकृत्या स्यात् ॥ सामनः । वैमनः । सौत्वनः ॥

## ये चाभावकर्मणोः ॥१६८॥

य् । इत्येतदादौ च तद्धिते परे ऽन् प्रकृत्या स्यात् । न तु भावकर्मणोः ॥ सामसु साधुः । सामन्यः ॥ वैमन्यः । ब्रह्मण्यः ॥ अभावकर्मणोः किं । राज्ञः कर्म भावो वा राज्यं । राजन्शब्दस्य पुरोहितादिगणे पाठात् पत्यन्तपुरोहितेति यक् ॥

## आत्माध्वानौ खे ॥१६९॥

आत्मन् । अध्वन् । इत्येतौ खप्रत्यये परे प्रकृत्या भवतः ॥ आत्मनीनः । अध्वनीनः ॥ खे किं । प्रत्यात्मं । प्राध्वं ॥ अनका । उपसर्गादध्वन इत्यच्प्रत्ययान्तावेतौ ॥

## न मपूर्वो ऽपत्ये ऽवर्मणः ॥१७०॥

म् । इत्येतत्पूर्वो ऽन् । अपत्यार्थे ऽणि परे प्रकृत्या न स्यात् । न तु वर्मन् । इत्येतस्य ॥ सुसाम्नो ऽपत्यं । सौसामः ॥ भाद्रसामः ॥ मपूर्वः किं । सौत्वनः ॥ अपत्ये किं । चर्मणा परिवृतः । चार्मणो रथः ॥ अवर्मणः किं । चाक्रवर्मणः ॥

## ब्राह्मो ऽजातौ ॥ १७१ ॥

योगविभागो ऽत्र कर्तव्यः ॥ ब्राह्म । इत्येतन्निपात्यते । अणि टिलोपः । ब्राह्मो गर्भः । ब्राह्ममस्त्रं । ब्राह्मं हविः । ब्राह्म्योपधिः ॥ ततो ऽजातौ । अपत्यार्थे ऽणि जातौ वाच्यायां ब्रह्मणष्टिलोपो न स्यात् । ब्रह्मणो ऽपत्यं । ब्राह्मणः ॥

## कार्मस्ताच्छील्ये ॥ १७२ ॥

कार्म । इत्येतन्निपात्यते ताच्छील्ये ऽर्थे ॥ कर्मशीलः । कार्मः ॥ णप्रत्यये टिलोपः ॥ ताच्छील्ये किं । कार्मणः ॥

## औक्षमनपत्ये ॥ १७३ ॥

औक्ष । इत्येतदनपत्यार्थे ऽणि निपात्यते ॥ औक्षं पदं । टिलोपः ॥ अनपत्ये किं । उक्ष्णो ऽपत्यं । औक्ष्णः । वपूर्वहन्नित्यलोपः ॥

## दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवासिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ॥ १७४ ॥

दाण्डिनायन । हास्तिनायन । आथर्वणिक । जैह्माशिनेय । वासिनायनि । भ्रौणहत्य । धैवत्य । सारव । ऐक्ष्वाक । मैत्रेय । हिरण्मय । इत्येतानि निपात्यन्ते ॥ दण्डिन् । दाण्डिनायनः । हस्तिन् । हास्तिनायनः । नडादित्वात् फक् । टिलोपाभावो निपात्यते ॥ अथर्वन् । वसन्तादिषु पठ्यते । आथर्वणिकः । टिलोपाभावः ॥ जिह्माशिन् । जैह्माशिनेयः । शुभ्रादित्वाड्ढक् । टिलोपाभावः ॥ वासिन् । वासिनायनिः । उदीचां वृद्धादगोत्रादिति फिञ् । टिलोपाभावः ॥ भ्रूणहन् । भ्रूणघ्नो भावः । भ्रौणहत्यं । ष्यञ् । निपातनात् तकारादेशः ॥ धीवन् । धैवत्यं । ष्यञ् । तकारादेशः ॥ सरयू । सारवं जलं । तत्र भव इत्यण् । यू । इत्येतस्य लोपः ॥ इक्ष्वाकु । आद्युदात्तः । ऐक्ष्वाकः । जनपदशब्दात् क्षत्रियादञ् । अन्तोदात्तत्वपक्षे कोपधादण् । उ । इत्येतस्य लोपो निपात्यते ॥ मित्रयु । मैत्रेयः । गृष्ट्यादित्वाड्ढञ् । यु । इत्येतस्य लोपः ॥ हिरण्यस्य विकारः । हिरण्मयः । टिलोपः ॥

# ऋव्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानिच्छन्दसि ॥१७५॥

ऋव्य । वास्त्व्य । वास्त्व । माध्वी । हिरण्यय । इत्येतानि वेदे निपात्यन्ते ॥ ऋतौ भवः । ऋव्यः । यत्प्रत्यय उकारस्य वकारः ॥ वास्तुनि भवः । वास्त्व्यः । उकारस्य वकारः ॥ अण् । वास्त्वः ॥ मधु । अण् । माध्वीर्नः । उकारस्य वकारः ॥ हिरण्य । मयट् । हिरण्ययं । मकारलोपः ॥

॥ इति सूत्रपाठे षष्ठाध्यायस्य चतुर्थः पादो ऽध्यायश्च समाप्तः ॥

॥ अथ सप्तमोऽध्यायः ॥

## युवोरनाकौ ॥१॥

यु । वु । इत्येतयोरनुनासिकयणोः प्रत्यययोः क्रमेण । अन । अक । इत्येतावादेशौ भवतः ॥ ल्युः । नन्दनः ॥ ल्युट् । करणं ॥ ट्युट्युलौ । सायन्तनं । चिरन्तनं ॥ युच् । नन्दना ॥ ण्वुल् । कारकः ॥ वुन् । वासुदेवकः । अर्जुनकः ॥ वुञ् । आरोहणकं ॥ अनुनासिकयणोः किं । ऊर्णायुः । भुज्युः । मृत्युः । इत्यादीनां यणो ऽनुनासिकत्वं न प्रतिज्ञायते ॥

## आयन्नेयीनीयियः फढखछघां प्रत्ययादीनां ॥२॥

आयन् । एय् । ईन् । ईय् । इय् । इत्येत आदेशाः क्रमात् फ । ढ । ख । छ । घ । इत्येतेषां प्रत्ययादिभूतानां भवन्ति ॥ फ् आयन् । नाडायनः । आश्वायनः । कौञ्जायन्यः । आम्रगुप्तायनिः । तैकायनिः ॥ ढ् एय् । कामण्डलेयः । गाङ्गेयः । शैलेयः । छागलेयिनः ॥ ख् ईन् । कुलीनः । प्रातिजनीनः ॥ छ् ईय् । गार्गीयः । पैतृष्वस्रीयः ॥ घ् इय् । क्षत्रियः । शुक्रियं ॥ प्रत्यय इति किं । फक्कति । ढौकते । खनति । छिनत्ति । घूर्णते ॥ आदिग्रहणं किं । ऊरुदघ्नं ॥

## झो ऽन्तः ॥३॥

झ् । इत्येतस्य प्रत्ययावयवस्य स्थाने ऽन्त । इत्येष आदेशः स्यात् ॥ भवन्ति । पचन्ति । कुर्वन्ति । चिन्वन्ति । सुन्वन्ति । लुनन्ति । पुनन्ति ॥ प्रत्ययावयवस्य किं । उज्झिता ॥

## अदभ्यस्तात् ॥४॥

झ् । इत्येतस्याभ्यस्तसंज्ञकादङ्गात् परस्य अत् । इत्येष आदेशः स्यात् ॥ ददति । ददतु ॥ दधति । दधतु ॥ जक्षति । जक्षतु ॥ जाग्रति । जाग्रतु ॥ पूर्वसूत्रापवादो ऽयं । जुसादेशेन तु बाध्यते । अददुः । अदधुः ॥

## आत्मनेपदेष्वनतः ॥५॥

झ् । इत्येतस्याकारान्तभिन्नादङ्गात् परस्यात्मनेपदेष्वत् । इत्येष आदेशः स्यात् ॥ चिञ् । चिन्वते । चिन्वतां । अचिन्वत ॥ लूञ् । लुनते । लुनतां । अलुनत ॥ आत्मनेपदेषु किं । चिन्वन्ति ॥ अनतः किं । पचन्ते ॥

## शीङो रुट् ॥६॥

शीङ् । इत्येतस्मात् परस्य झादेशस्य अत् । इत्येतस्य रुट् । इत्येष आगमः स्यात् ॥ शेरते । शेरतां । अशेरत ॥ यङ्लुक्यप्रवृत्त्यर्थं सानुबन्धकग्रहणं ॥

## वेत्तेर्विभाषा ॥७॥

विद् । इत्येतस्माददादेः परस्य झादेशस्य अत् । इत्येतस्य वा रुट् स्यात् ॥ संविद्रते । संविदते । संविद्रतां । संविदतां । समविद्रत । समविदत ॥ वेत्तेरिति लुका निर्देशाद्रुधादेर्न भवति । विन्दते ॥

## बहुलं छन्दसि ॥८॥

वेदे बहुलं रुट् स्यात् ॥ गन्धर्वा अप्सरसो अदुह्र । दुह । लङ् । अत् । लोपस्त आत्मनेपदेष्विति तकारलोपः ॥ न च भवति । अदुह्रत ॥ बहुलग्रहणादन्यत्रापि । अदृश्रमस्य केतवः ॥

## अतो भिस ऐस् ॥९॥

अ । इत्येतदन्तादङ्गात् परस्य भिस् । इत्येतस्य ऐस् । इत्येष आदेशः स्यात् ॥ देवैः । वृक्षैः ॥ तपरकरणं किं । खट्वाभिः ॥

## बहुलं छन्दसि ॥ १० ॥

भिस् । इत्येतस्य बहुलं वेदे । ऐस् । इत्येष आदेशः स्यात् ॥ उक्तादन्यत्र भवति । नद्यैः ॥ उक्ते च न भवति । देवेभिः । सर्वेभिः प्रोक्तमिति ॥

## नेदमदसोरकोः ॥ ११ ॥

इदं । अदस् । इत्येतयोः ककाररहितयोर्भिस ऐस् न स्यात् ॥ एभिः । अमीभिः ॥ अकोः किं । इमकैः । अमुकैः ॥

## टाङसिङसामिनात्स्याः ॥ १२ ॥

टा । ङसि । ङस् । इत्येतेषामदन्तादङ्गात् परेषां क्रमेण इन । आत् । स्य । इत्येत आदेशा भवन्ति ॥ देवेन । वृक्षेण ॥ देवात् । वृक्षात् ॥ देवस्य । वृक्षस्य ॥ अत इत्येव । नद्या । सख्युः ॥

## ङेर्यः ॥ १३ ॥

ङे । इत्येतस्यादङ्गात् परस्य य । इत्येष आदेशः स्यात् ॥ देवाय । वृक्षाय ॥ कटायेति निर्देशात् संनिपातपरिभाषायानित्यत्वाद्दीर्घः ॥

## सर्वनाम्नः स्मै ॥ १४ ॥

ङे । इत्येतस्यादन्तात् परस्य सर्वनामसंज्ञकादङ्गाद्विहितस्य स्मै । इत्येष आदेशः स्यात् ॥ सर्वस्मै । विश्वस्मै । यस्मै । तस्मै ॥ सर्वनाम्नः किं । देवाय ॥ अदन्तात् किं । भवते ॥

## ङसिङ्योः स्मात्स्मिनौ ॥ १५ ॥

ङसि । ङि । इत्येतयोरदन्तात् परयोः सर्वनाम्नो ऽङ्गाद्विहितयोः क्रमात् स्मात् । स्मिन् । इत्येतावादेशौ भवतः ॥ सर्वस्मात् । विश्वस्मात् । यस्मात् । तस्मात् ॥ सर्वस्मिन् । विश्वस्मिन् । यस्मिन् । तस्मिन् ॥ अतः किं । भवतः । भवति ॥ सर्वनाम्नः किं । वृक्षात् । वृक्षे ॥

## पूर्वादिभ्यो नवभ्यो वा ॥ १६ ॥

पूर्व । इत्येवमादिभ्यो नवभ्यः परयोर्ङसिङ्योः स्मात्स्मिनौ वा भवतः ॥ पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् । पूर्वे ॥ परस्मात् । परात् । परस्मिन् । परे ॥ अवरस्मात् । अवरात् । अवरस्मिन् । अवरे ॥ दक्षिणस्मात् । दक्षिणात् । दक्षिणस्मिन् । दक्षिणे ॥ उत्तरस्मात् । उत्तरात् । उत्तरस्मिन् । उत्तरे ॥ अपरस्मात् । अपरात् । अपरस्मिन् । अपरे ॥ अधरस्मात् । अधरात् । अधरस्मिन् । अधरे ॥ स्वस्मात् । स्वात् । स्वस्मिन् । स्वे ॥ अन्तरस्मात् । अन्तरात् । अन्तरस्मिन् । अन्तरे ॥ नवभ्यः किं । तस्मात् । तस्मिन् ॥

## जसः शी ॥१७॥

जस् । इत्येतस्यादन्तादङ्गात् परस्य सर्वनाम्नो विहितस्य शी । इत्येष आदेशः स्यात् ॥ सर्वे । विश्वे । ये । ते । के ॥ दीर्घोच्चारणं नपुंसकाच्चेत्युत्तरसूत्रेऽनुवृत्त्यर्थं । त्रपुणी । जतुनी ॥

## औङ आपः ॥१८॥

टाप् । डाप् । चाप् । इत्येतदन्तादङ्गात् परस्यौङः स्थाने शी । इत्येष आदेशः स्यात् ॥ टाप् । खट्वे तिष्ठतः । खट्वे पश्य ॥ डाप् । बहुराजे ॥ चाप् । कारीषगन्ध्ये ॥ औङिति औ । औट् । इत्येतयोः संज्ञा प्राचां ॥

## नपुंसकाच्च ॥१९॥

नपुंसकादङ्गात् परस्य औङ् । इत्येतस्य शी । इत्येष आदेशः स्यात् ॥ कुण्डे तिष्ठतः । कुण्डे पश्य ॥ दधिनी । मधुनी । त्रपुणी । जतुनी ॥ नपुंसकात् किं । देवौ ॥

## जश्शसोः शिः ॥२०॥

जस् । शस् । इत्येतयोर्नपुंसकादङ्गात् परयोः शि । इत्येष आदेशः स्यात् ॥ कुण्डानि तिष्ठन्ति । कुण्डानि पश्य ॥ दधीनि । मधूनि । त्रपूणि । जतूनि ॥ नपुंसकात् किं । देवाः । देवान् ॥ शस् सुप्गृह्यते न तु तद्धितो जश्साहचर्यात् । तेन तद्धिते न भवति । कुण्डशः ॥

## अष्टाभ्य औश् ॥२१॥

जस् । शस् । इत्येतयोः कृताकारादष्टन् । इत्येतस्मात् परयोरौश् । इत्येष आदेशः स्यात् ॥ अष्टौ तिष्ठन्ति । अष्टौ पश्य । परमाष्टौ ॥ कृतात्वनिर्देशो

जःशसोर्वैकल्पिकमात्वं ज्ञापयति । तच्च प्राधान्य एव । न तु गौणे । तेन प्रियाष्टो हलादावेव वैकल्पिकमात्वं । शसि प्रियाष्टः ॥ कृतात्वनिर्देशादिह न भवति । अष्ट । अष्ट ॥

## षड्भ्यो लुक् ॥ २२ ॥

जस् । शस् । इत्येतयोः षट्संज्ञकात् परयोर्लुक् स्यात् ॥ षट् तिष्ठन्ति । षट् पश्य ॥ पञ्च । पञ्च ॥ परमषट् ॥ गौणे तु नायं लुक् । प्रियषषः ॥

## स्वमोर्नपुंसकात् ॥ २३ ॥

सु । अम् । इत्येतयोर्नपुंसकादङ्गात् परयोर्लुक् स्यात् ॥ त्रपु तिष्ठति । त्रपु पश्य ॥ जतु । मधु । वारि । तत् । यत् ॥

## अतो ऽम् ॥ २४ ॥

अ । इत्येतदन्तान्नपुंसकादङ्गात् परयोः स्वमोः स्थाने ऽम् । इत्येष आदेशः स्यात् ॥ कुण्डं तिष्ठति । कुण्डं पश्य ॥ वनं । ज्ञानं ॥ यदि म् इत्येष आदेशः क्रियेत । तदा सुपि चेति दीर्घे कुण्डामिति न सिध्येत् ॥

## अद्ड्डतरादिभ्यः पञ्चभ्यः ॥ २५ ॥

डतर । इत्येवमादिभ्यः सर्वादिगणपठितेभ्यः पञ्चभ्यो नपुंसकेभ्यः परयोः स्वमोः स्थाने ऽद्ड् । इत्येष आदेशः स्यात् ॥ कतरत् तिष्ठति । कतरत् पश्य ॥ कतमत् । अन्यत् । अन्यतरत् । इतरत् ॥ पञ्चभ्यः किं । नेमं तिष्ठति । नेमं पश्य ॥

## नेतराच्छन्दसि ॥ २६ ॥

इतर । इत्येतस्मात् परयोः स्वमोरद्ड् न स्याच्छन्दसि ॥ इतरमितरस्मापद्यते । वार्त्रघ्नमितरं ॥ छन्दसि किं । इतरत् ॥

## युष्मदस्मद्भ्यां ङसो ऽश् ॥ २७ ॥

युष्मद् । अस्मद् । इत्येताभ्यां परस्य ङस् । इत्येतस्य अश् । इत्येष आदेशः स्यात् ॥ तव । मम ॥

## ङेप्रथमयोरम् ॥२८॥

ङे । सु । औ । जस् । अम् । औट् । शस् । इत्येतेषां युष्मदस्मद्भ्यां परेषां स्थाने ऽम् । इत्येष आदेशः स्यात् ॥ ङे । तुभ्यं । मह्यं ॥ सु । त्वं । अहं ॥ औ । युवां । आवां ॥ जस् । यूयं । वयं ॥ अम् । त्वां । मां ॥ औट् । युवां । आवां ॥ ङे इत्यविभक्तिको निर्देशः । प्रथमयोरिति विभक्त्योर्ग्रहणं न प्रत्यययोः ॥

## शसो न ॥२९॥

शस् । इत्येतस्य युष्मदस्मद्भ्यां परस्य न् । इत्येष आदेशः स्यात् ॥ युष्मान् ब्राह्मणीः । अस्मान् ब्राह्मणीः ॥ पुंसि तस्माच्छस इत्येव सिद्धे स्त्रीनपुंसकलिङ्गयोर्नत्वविधानार्थं सूत्रं ॥

## भ्यसो ऽभ्यं ॥३०॥

भ्यस् । इत्येतस्य युष्मदस्मद्भ्यां परस्य । अभ्यं । इत्येष आदेशः स्यात् ॥ युष्मभ्यं । अस्मभ्यं ॥

## पञ्चम्या अत् ॥३१॥

भ्यस् । इत्येतस्य पञ्चम्या बहुवचनस्य युष्मदस्मद्भ्यां परस्य अत् । इत्येष आदेशः स्यात् ॥ युष्मत् । अस्मत् ॥

## एकवचनस्य च ॥३२॥

ङसि । इत्येतस्य पञ्चम्या एकवचनस्य युष्मदस्मद्भ्यां परस्य अत् । इत्येष आदेशः स्यात् ॥ त्वत् । मत् ॥

## साम आकं ॥३३॥

आम् । इत्येतस्य भाविसुडागमसहितस्य युष्मदस्मद्भ्यां परस्य आकं । इत्येष आदेशः स्यात् ॥ युष्माकं । अस्माकं ॥

## आत औ णलः ॥३४॥

णल् । इत्येतदन्तादङ्गात् परस्य णल् । इत्येतस्य औ । इत्येष आदेशः स्यात् ॥ पा । पपौ ॥ ग्ला । जग्लौ ॥

## तुह्योस्तातङ्ङाशिष्यन्यतरस्यां ॥ ३५ ॥

तु । हि । इत्येतयोराशिषि विषये तातङ् । इत्येष आदेशो वा स्यात् ॥ जीव । भवान् जीवतु । जीवतात् ॥ हि । त्वं जीव । जीवतात् ॥ पचतु । पचतात् । भवतु । भवतात् ॥ ङित्त्वं गुणवृद्धिप्रतिषेधार्थं । मृष्टात् । ब्रूतात् ॥ आशिषि किं । ग्रामं गच्छतु । गच्छ ॥ अनेकाल्त्वात् सर्वादेशः । स्थानिवद्भावात् प्राप्तं पित्त्वमादेशे ङित्करणान्निवर्तते । तेन ब्रूतादित्यत्र ब्रुव ईडितीट्त्वं न भवति ॥ इति काशिका ॥

## विदेः शतुर्वसुः ॥ ३६ ॥

विद । इत्येतस्माज्ज्ञानार्थात् परस्य शतृ । इत्येतस्य वसु । इत्येष आदेशः स्यात् ॥ विद्वान् । विद्वांसौ । विद्वांसः ॥ केचिदन्यतरस्यामित्यनुवर्तयन्ति । विदन् । विदन्तौ ॥ वसु । इत्युकारो वसोः संप्रसारणमित्यत्र वसुक्वस्वोः सामान्यग्रहणार्थः ॥ एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य ग्रहणमिति परिभाषात्र न प्रवर्तते । उकारकरणसामर्थ्यात् ॥

## समासे ऽनञ्पूर्वे क्त्वो ल्यप् ॥ ३७ ॥

अनञ्पूर्वे ऽव्ययपूर्वपदके समासे क्त्वा । इत्येतस्य ल्यप् । इत्येष आदेशः स्यात् ॥ प्रकृत्य । प्रहृत्य । द्विधाकृत्य । नानाकृत्य ॥ समासे किं । कृत्वा ॥ अनञ्पूर्वे किं । अकृत्वा ॥ अव्ययपूर्वे किं । परमकृत्वा ॥

## क्त्वापि छन्दसि ॥ ३८ ॥

अनञ्पूर्वे समासे क्त्वा । इत्येतस्य वेदे क्त्वा । इत्येष आदेशः स्यात् । ल्यप् च ॥ परिधापयित्वा । प्रत्यर्पयित्वा ॥ ल्यप् । उद्धृत्य जानु जुहोति ॥ असमासे ऽपि । अर्च्य तान् देवान् गतः ॥ छन्दोधिकार आज्जसेरसुगिति यावत् ॥

## सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ॥ ३९ ॥

सु । लुक् । पूर्वसवर्ण । आ । आत् । शे । या । डा । ड्या । याच् । आल् । इत्येत आदेशा वेदे सुपां स्थाने भवन्ति ॥ सु । अनृक्षरा ऋजवः सन्तु पन्थाः । पन्थान इति लोके ॥ लुक् । आर्द्रे चर्मन् । चर्मणि इति लोके ॥ पूर्वसवर्ण । धीती । मती । सुष्टुती । धीत्या । मत्या । सुष्टुत्या । इति

लोके ॥ आ । उभा यन्तारा । उभौ यन्तारौ इति लोके ॥ आत् । नतात् ब्राह्मणात् निन्दामि । नतान् ब्राह्मणानिति लोके ॥ शे । न युष्मे वाजबन्धवः । अस्मे इन्द्राबृहस्पती । यूयवयादेशश्छान्दसत्वान्न भवति । यूयं वयमिति लोके ॥ या । उरुया । धृष्णुया । उरुणा । धृष्णुना इति लोके ॥ डा । नाभा पृथिव्याः । नाभौ इति लोके ॥ ड्या । अनुष्ट्यो-च्यावयतात् । अनुष्टुभा इति लोके ॥ याच् । साधुया । साधु इति लोके ॥ आल् । वसन्ता यजेत । वसन्ते इति लोके ॥

## अमो मश् ॥४०॥

अम् । इत्येतस्योत्तमपुरुषैकवचनस्य वेदे मश् । इत्ययं आदेशः स्यात् ॥ वधीं वृत्रं । क्रमीं वृक्षस्य शाखान् ॥ लुङ् । बहुलं छन्दस्यमाङ्योगे ऽपीत्यडाग-माभावः ॥ मकार उच्चारणार्थो ऽकारः । शित्त्वं सर्वादेशार्थं । अनुस्वारनिवृ-त्त्यर्थं मकारस्य मकारवचनं ॥ इति काशिका ॥

## लोपस्त आत्मनेपदेषु ॥४१॥

त । इत्येतस्यात्मनेपदविषयस्य वेदे लोपः स्यात् ॥ देवा अदुह । गन्धर्वा अप्सरसो अदुह । अदुहत इति लोके ॥ दुहामश्विभ्यां पयः । दुग्धामिति लोके ॥ दक्षिणतः शये । शेत इति लोके ॥ अपीत्यधिकारात् क्वचिन्न भव-ति । कुर्वते ॥ आत्मनेपदेषु किं । दुहन्ति ॥

## ध्वमो ध्वात् ॥४२॥

ध्वम् । इत्येतस्य वेदे ध्वात् । इत्ययं आदेशः स्यात् ॥ अन्तरे चोष्माणं वार-यध्वात् । वारयध्वमिति लोके ॥

## यजध्वैनमिति च ॥४३॥

यजध्वैनं । इति वेदे निपात्यते ॥ यजध्वैनं । यजध्वमेनमिति लोके । एनंश-ब्दे परतो ध्वमो मलोपो निपात्यते ॥

## तस्य तात् ॥४४॥

खनत इति लोके ॥ संसृजतात् । संसृजत इति लोके ॥ सूर्यं चक्षुर्गमयतात् । गमयत इति लोके ॥

## तप्तनप्तनथनाश्च ॥४५॥

त । इत्येतस्य लोटो मध्यमपुरुषबहुवचनस्य वेदे तप् । तनप् । तन । थन । इत्येत आदेशा भवन्ति ॥ तप् । शृणोत ग्रावाणः । शृणुत इति लोके ॥ तनप् । संवरत्रा दधातन । धत्त इति लोके ॥ तन । जुजुष्टन । जुषध्वमिति लोके । व्यत्ययेन परस्मैपदं । श्लुश्छान्दसत्वात् ॥ थन । यदिष्ठन । यदि स्थ इति लोके ॥ पित्त्वं ङित्कार्यप्रतिबन्धार्थं ॥

## इदन्तो मसि ॥४६॥

मस् । इत्येतस्य वेदे इ । इत्ययमागमः स्यात् । स चान्तावयवः ॥ पुनस्त्वा दीपयामसि । लोके तु दीपयामः ॥ शलभं भ्रम्भयामसि । लोके तु भ्रम्भयामः ॥ त्वयि रात्रिं वासयामसि । वासयाम इति लोके ॥ नमो भरन्त एमसि । इम इति लोके ॥ त्वमस्माकं तव स्मसि । स्म इति लोके ॥

## क्त्वो यक् ॥४७॥

क्त्वा । इत्येतस्य वेदे यगागमो भवति ॥ दिवं सुपर्णो गत्वाय । गत्वेति लोके ॥ दत्वाय सविता धियः । दत्वेति लोके ॥

## इष्ट्वीनमिति च ॥४८॥

इष्ट्वीनं । इत्येतद्वेदे निपात्यते ॥ यज्ञ । इष्ट्वीनं देवान् । इष्ट्वेति लोके ॥ क्त्वाप्रत्ययस्यान्तस्य ईनमादेशः ॥ अनुनासानुस्वारयोर्विकारः । तेन पीत्वीनमिति सिद्धं ॥

## स्नात्व्यादयश्च ॥४९॥

स्नात्वी । इत्येवमादयः शब्दा वेदे निपात्यन्ते ॥ स्नात्वी मलादिव । स्नात्वेति लोके ॥ पीत्वी सोमस्य वावृधे । पीत्वेति लोके ॥ आदिशब्दः प्रकारार्थः ॥ स्नात्वी । पीत्वी । आकृतिगणोऽयं स्नात्व्यादिः ॥

## आज्जसेरसुक् ॥५०॥

अ । इत्येतदन्तादङ्गात् परस्य जस् । इत्येतस्य वेदे ऽसुक् । इत्येष आगमः स्यात् ॥ देवासः । ब्राह्मणासः । लोके तु देवाः । ब्राह्मणाः ॥ ये पूर्वासः । ये परास इत्यत्र परत्वादसुकि कृते पुनः प्रसङ्गविज्ञानाच्छीभावः प्राप्नोति । सकृद्गतिन्यायाश्रयणान्न भवति ॥

## अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ॥५१॥

अश्व । क्षीर । वृष । लवण । इत्येतेषामात्मप्रीतिविषये क्यच्प्रत्यये परे ऽसुक् । इत्येष आगमः स्यात् ॥ अश्वमात्मन इच्छति । अश्वस्यति वडवा ॥ क्षीरस्यति बालः । वृषस्यति गौः । लवणस्यत्युष्ट्रः ॥ आत्मप्रीतौ किं । अश्वीयति । क्षीरीयति । वृषीयति । लवणीयति ॥

## आमि सर्वनाम्नः सुट् ॥५२॥

अ । इत्येतदन्तादङ्गात् परस्य सर्वनाम्नो विहितस्य आम् । इत्येतस्य सुट् । इत्येष आगमः स्यात् ॥ सर्वेषां । विश्वेषां । येषां । तेषां । सर्वासां । यासां । तासां ॥ आम् षष्ठीबहुवचनमेव गृह्यते । न तु ङेराम् । तस्य परत्वादाड्याट्स्याटो भवन्ति ॥ किमेत्तिङ्डेति य आमुर्लिटि च य आम् न तौ सर्वनाम्नः परौ स्तः । सानुबन्धकत्वाद्वा न गृह्येते ॥ आमीति सप्तमीनिर्देश उत्तरार्थः । इह तु सर्वनाम्न इति पञ्चमी तस्मादित्युत्तरस्येति सप्तम्याः षष्ठीं कल्पयति ॥

## त्रेस्त्रयः ॥५३॥

त्रि । इत्येतस्यामि परे त्रय । इत्येष आदेशः स्यात् ॥ त्रयाणां । परमत्रयाणां ॥

## ह्रस्वनद्यापो नुट् ॥५४॥

ह्रस्वान्तात् । नदीसंज्ञकान्तात् । आबन्ताच्चाङ्गात् परस्य आम् । इत्येतस्य नुट् । इत्येष आगमः स्यात् ॥ ह्रस्व । देवानां । अग्नीनां । वायूनां । पितॄणां ॥ नदी । गौरीणां । कुमारीणां । शार्ङ्गरवीणां । ब्रह्मबन्धूनां । वीरबन्धूनां ॥ आप् । खट्वानां । बहुराजानां । कारीषगन्ध्यानां ॥

## षट्चतुर्भ्यश्च ॥५५॥

षट्संज्ञकेभ्यः । चतुर् । इत्येताभ्यां परस्य आम् । इत्येतस्य नुट् । इत्येष

आगमः स्यात् ॥ षण्णां । पञ्चानां । परमषण्णां । परमपञ्चानां ॥ चतुर्णां । परमचतुर्णां ॥ बहुवचननिर्देशात् संख्याप्राधान्य एव । उपसर्जने तु न भवति । प्रियषषां । प्रियपञ्चां । प्रियचतुरां ॥

## श्रीग्रामण्योश्छन्दसि ॥५६॥

श्री । ग्रामणी । इत्येताभ्यां परस्य आम् । इत्येतस्य वेदे नुट् । इत्येष आगमः स्यात् ॥ श्रीणामुदारो धरुणो रयीणां । श्रीणां । श्रियां । लोके वामीति वैकल्पिकं नदीत्वं । तदभाव इयङ् ॥ अन्यत्र सूतग्रामणीनां । सूतग्रामण्यां । इति लोके ॥

## गोः पादान्ते ॥५७॥

गो । इत्येतस्मादृक्पादान्ते वर्तमानात् परस्य आम् । इत्येतस्य नुट् । इत्येष आगमः स्यात् ॥ विद्मा हि त्वा सत्पतिं शूरगोनां ॥ पादान्ते किं । गवां गोत्रमुदसृजो यदङ्गिरः ॥ छन्दसि सर्वविधिविकल्पात् पादान्ते ऽपि क्वचिन्न भवति । विराजं गोपतिं गवां ॥

## इदितो नुम् धातोः ॥५८॥

इ । इत्येतदित्संज्ञकस्य धातोर्नुम् । इत्येष आगमः स्यात् ॥ कुडि । कुण्डति । चुकुण्ड । कुण्डिता । कुण्डितुं ॥ हुडि । हुण्डति ॥ इदितः किं । पचति ॥

## शे मुचादीनां ॥५९॥

मुच्लृ । इत्येवमादीनां धातूनां श । इत्येतस्मिन् प्रत्यये परे नुम् स्यात् ॥ मुच्लृ । मुञ्चति । मुञ्चतः ॥ लुप्लृ । लुम्पति ॥ विद्लृ । विन्दते । त्रिन्दति ॥ लिप । लिम्पति ॥ षिच । सिञ्चति ॥ कृती । कृन्तति ॥ खिद । खिन्दति ॥ पिश । पिंशति ॥ शे किं । मोक्ता । मोक्तुं ॥ मुचादीनां किं । तुदति ॥ तुदाद्यन्तर्गणो मुचादिः ॥

## मस्जिनशोर्झलि ॥६०॥

टुमस्जो । णश । इत्येतयोर्झलादौ प्रत्यये परे नुम् स्यात् ॥ मङ्क्ता । मङ्क्तुं । मङ्क्तव्यं ॥ नंष्टा । नंष्टुं । नंष्टव्यं ॥ झलि किं । मज्जनं । नशनं ॥

## रधिजभोरचि ॥६१॥

रध। जभी। इत्येतयोरजादौ प्रत्यये परे नुम् स्यात्॥ रन्धयति। रन्धकः॥ जम्भयति। जम्भकः॥ परामपि वृद्धिं बाधित्वा नित्यत्वान्नुम्॥ अचि किं। रद्धा। जब्धा॥

## नेट्यलिटि रधेः ॥६२॥

रध। इत्येतस्याङ्गस्य इडादौ लिड्भिन्ने प्रत्यये परे नुम् न स्यात्॥ रधिता। रधितुं॥ इटि किं। रन्धनं॥ अलिटि किं। ररन्धिव। ररन्धिम॥

## रभेरशब्लिटोः ॥६३॥

रभ। इत्येतस्याङ्गस्याजादौ प्रत्यये परे नुम् स्यात्। शप्। लिट्। इत्येतयोस्तु न भवति॥ आरम्भयति। आरम्भकः॥ अशब्लिटोः किं। आरभते। आरेभे॥

## लभेश्च ॥६४॥

डुलभष्। इत्येतस्याङ्गस्याजादौ प्रत्यये परे नुम् स्यात्। न तु शब्लिटोः॥ लम्भयति। लम्भकः॥ अशब्लिटोः किं। लभते। लेभे॥ अचि किं। लब्धा॥ उत्तरार्थं पृथग्योगकरणं॥

## आङो यि ॥६५॥

डुलभष्। इत्येतस्याङ्गस्याङः परस्य य्। इत्येतदादौ प्रत्यये विवक्षिते नुम् स्यात्॥ आलम्भ्यो गौः। आलम्भ्या वडवा। आलम्भ्यं धनं॥ प्रत्ययोत्पत्तेः प्रागेव नुमि कृते ऽदुपधत्वाभावान्न यत्। किं तु ण्यत्। कृदुत्तरपदप्रकृतिस्वरत्वेनान्तः स्वरितः। यति गत्युत्तरपदाद्युदात्तत्वं स्यात्॥ आङः किं। उपलभ्यः। पोरदुपधादिति यत्॥ यि किं। आलब्धा॥

## उपात् प्रशंसायां ॥६६॥

उप। इत्येतस्मात् परस्य लभ। इत्येतस्याङ्गस्य य्। इत्येतदादौ प्रत्यये विवक्षिते प्रशंसायां गम्यमानायां नुम् स्यात्॥ उपलम्भ्या विद्या। ण्यत्। उपलम्भ्यान्तः स्वरितः॥ प्रशंसायां किं। उपलभ्यमस्मात् किंचित्। यदुपलभ्यं। उत्तरपदाद्युदात्तं॥

## उपसर्गात् खल्घञोः ॥ ६७ ॥

खल् । घञ् । इत्येतयोः परयोरुपसर्गात् परस्यैव लभेर्नुम् स्यात् ॥ खल् । ईषत्प्रलम्भः । दुःप्रलम्भः । सुप्रलम्भः ॥ घञ् । प्रलम्भः । विप्रलम्भः ॥ लभेश्चेत्यनेन सिद्धे नियमार्थमिदं । खल्घञोर्लभेर्नुमुपसर्गात् परस्यैवेति । तेनेह न । ईषल्लाभः । लाभः ॥

## न सुदुर्भ्यां केवलाभ्यां ॥ ६८ ॥

सु । दुर् । इत्येताभ्यामुपसर्गान्तररहिताभ्यां परस्य लभेः खल्घञोः परतो नुम् न स्यात् ॥ खल् । सुलभं । दुर्लभं ॥ घञ् । सुलाभः । दुर्लाभः ॥ केवलाभ्यां किं । सुप्रलम्भः । दुःप्रलम्भः ॥

## विभाषा चिण्णमुलोः ॥ ६९ ॥

चिण् । णमुल् । इत्येतयोर्विषये लभेर्नुम् वा स्यात् ॥ अलम्भि । अलाभि ॥ लम्भं लम्भं । लाभं लाभं ॥ व्यवस्थितो ऽयं विकल्पः । सोपसर्गस्य तु नित्यं भवति । प्रलम्भि । प्रलम्भं ॥

## उगिदचां सर्वनामस्थाने ऽधातोः ॥ ७० ॥

अधातोरुगितो लुप्तनकारस्य अञ्चु । इत्येतस्य च सर्वनामस्थाने परे नुम् । इत्येष आगमः स्यात् ॥ भवतु । भवान् । भवन्तौ । भवन्तः । भवन्तं । भवन्तौ ॥ ईयसुन् । श्रेयान् । श्रेयांसौ ॥ शतृ । पचन् । पचन्तौ ॥ अञ्चु । प्राङ् । प्राञ्चौ ॥ उगिदचां किं । दृषद् । दृषदौ ॥ सर्वनामस्थाने किं । भवतः पश्य । श्रेयसः पश्य ॥ अञ्चुग्रहणं नियमार्थं । अञ्चतेरेव धातोरन्यस्य मा भूत् । उखास्रत् । पर्णध्वत् । अधातुग्रहणं त्वधातुभूतपूर्वस्य नुमर्थं । गोमन्तमिच्छति । गोमत्यति । गोमत्यतीति । गोमान् । गोमान्तौ ॥

## युजेरसमासे ॥ ७१ ॥

युजिर् । इत्येतस्यासमासे सर्वनामस्थाने परे नुम् । इत्येष आगमः स्यात् ॥ युजिरितीकारसहितग्रहणादिह न भवति । युज । युङ् । युञ्जौ । युञ्जः ॥ असमासे किं । अश्वयुक् । अश्वयुजौ ॥ सुयुक् । सुयुजौ ॥

## नपुंसकस्य झलचः ॥७२॥

नपुंसकस्य झल्प्रत्याहारान्तस्याच्प्रत्याहारान्तस्य चाङ्गस्य सर्वनामस्थाने परे नुम् । इत्येष आगमः स्यात् ॥ शकृन्ति । यशांसि । श्रेयांसि ॥ अजन्तस्य । कुण्डानि । त्रपूणि ॥ नपुंसकस्य किं । अग्निचिद्ब्राह्मणः ॥ झलचः किं । बहुपुरि । विमलदिवि । चत्वारि । अहानि ॥

## इकोऽचि विभक्तौ ॥७३॥

इक्प्रत्याहारान्तस्य नपुंसकस्याङ्गस्याच्प्रत्याहारादौ विभक्तौ परतो नुम् स्यात् ॥ वारिणी । त्रपुणी । वारिणे । त्रपुणे ॥ इकः किं । कुण्डे ॥

## तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ॥७४॥

अजादिषु तृतीयादिषु विभक्तिषु परतस्तुल्ये प्रवृत्तिनिमित्ते सति भाषितपुंस्कामिगन्तं नपुंसकं पुंवद्वा स्यात् ॥ ग्रामणीर्ब्राह्मणः । ग्रामणि ब्राह्मणकुलं । ग्रामण्या । ग्रामणिना । ग्रामण्ये । ग्रामणिने । ग्रामण्यः । ग्रामणिनः । ग्रामण्यः । ग्रामणिनः । ग्रामण्योः । ग्रामणिनोः । ग्रामण्यां । ग्रामणीनां । ग्रामण्यां । ग्रामणिनि । ग्रामण्योः । ग्रामणिनोः ॥ शुचिना । शुचये । शुचिने । शुचेः । शुचिनः । शुचेः । शुचिनः । शुच्योः । शुचिनोः । शुचीनां । शुचौ । शुचिनि । शुच्योः । शुचिनोः ॥ तृतीयादिषु किं । ग्रामणिनी । शुचिनी ॥ अजादिषु किं । शुचिभ्यां । शुचिभिः ॥ भाषितपुंस्कं किं । त्रपुणा । जतुने ॥ तुल्ये प्रवृत्तिनिमित्ते किं । पीलुर्वृक्षः । फलानां पीलु । तस्मै पीलुने । पीलवे इति न भवति ॥ इगन्तं किं । कीलालपेन ॥

## अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ॥७५॥

अस्थि । दधि । सक्थि । अक्षि । इत्येतेषां तृतीयादिष्वजादिषु विभक्तिषु परतोऽनङ् । इत्येष चादेशः स्यात् । स चानोदात्तः ॥ अस्थ्ना । अस्थ्ने ॥ दध्ना । दध्ने ॥ सक्थ्ना । सक्थ्ने ॥ अक्ष्णा । अक्ष्णे ॥ तदन्तस्याप्ययम् । प्रियास्थ्ना । प्रियदध्ना । प्रियसक्थ्ना । प्रियाक्ष्णा ॥ तृतीयादिषु किं । अस्थिनी ॥ अजादौ किं । अस्थिभ्यां ॥

## छन्दस्यपि दृश्यते ॥ ७६ ॥

अस्थि । दधि । सक्थि । अक्षि । इत्येतेषां यत्रानङुक्तस्ततोऽन्यत्रापि वेदेऽनङ् स्यात् ॥ इन्द्रो दधीचो अस्थभिः । भद्रं पश्येमाक्षभिः । अस्थान्युत्कृत्य जुहोति । अक्षण्वता लाङ्गलेन । अस्थन्वन्तं ॥

## ई च द्विवचने ॥ ७७ ॥

अस्थि । दधि । सक्थि । अक्षि । इत्येतेषां द्विवचने परे वेदे । ई । इत्येष आदेशः स्यात् । स चोदात्तः ॥ अक्षी ते इन्द्रपिङ्गले कपेरिव । अक्षीभ्यां ते नासिकाभ्यां ॥

## नाभ्यस्ताच्छतुः ॥ ७८ ॥

अभ्यस्तसंज्ञकात् परो यः शतृप्रत्ययस्तदन्तस्याङ्गस्य नुम् न स्यात् ॥ ददत् । ददतौ । ददतः ॥ जक्षत् । जाग्रत् ॥

## वा नपुंसकस्य ॥ ७९ ॥

अभ्यस्तात् परो यः शतृप्रत्ययस्तदन्तस्य नपुंसकस्याङ्गस्य सर्वनामस्थाने परे वा नुम् स्यात् ॥ ददति । ददन्ति कुलानि ॥ जक्षति । जक्षन्ति । जाग्रति । जाग्रन्ति ॥

## आच्छीनद्योर्नुम् ॥ ८० ॥

अ । इत्येतस्मात् परो यः शतृप्रत्ययावयवस्तदन्तस्याङ्गस्य वा नुम् स्यात् । शीनद्योः परतः ॥ शी । तुदती । तुदन्ती कुले ॥ नदी । तुदती । तुदन्ती ब्राह्मणी ॥ याती । यान्ती ॥ करिष्यती । करिष्यन्ती ॥ आत् किं । कुर्वती । सुन्वती ॥ शीनद्योः किं । तुदतां । तुदतां ॥

## शप्श्यनोर्नित्यं ॥ ८१ ॥

शप् । श्यन् । इत्येताभ्यां परो यः शतृप्रत्ययावयवस्तदन्तस्याङ्गस्य नित्यं नुम् स्यात् । शीनद्योः परतः ॥ शप् । पचन्ती कुले । पचन्ती ब्राह्मणी ॥ श्यन् । दीव्यन्ती कुले । दीव्यन्ती ब्राह्मणी ॥ इत उत्तरं वेत्यस्यानुवृत्तिर्ना भूदिति नित्यग्रहणं ॥

## सावनडुहः ॥ ८२ ॥

अनडुह्। इत्येतस्याङ्गस्य सौ परे नुम्। इत्येष आगमः स्यात्॥ अनड्वान्। हे अनड्वन्॥ आदित्यधिकारादमामोः कृतयोर्नुम् भवति॥

## दृक्स्ववःस्वतवसां छन्दसि ॥ ८३ ॥

दृश्। स्ववस्। स्वतवस्। इत्येतेषां सौ परे वेदे नुम्। इत्येष आगमः स्यात्॥ ईदृङ्। यादृङ्। तादृङ्। सदृङ्॥ स्ववान्। स्वतवान् पायुरग्ने॥

## दिव औत् ॥ ८४ ॥

दिव्। इत्येतस्य सौ परे। औत्। इत्येष आदेशः स्यात्॥ द्यौः॥ दिव्। इति प्रातिपदिकं गृह्यते। न तु दिवु। इति धातुः। तेनेह न भवति। अक्षद्यूः॥

## पथिमथ्यृभुक्षामात् ॥ ८५ ॥

पथिन्। मथिन्। ऋभुक्षिन्। इत्येतेषां सौ परे। आ। इत्येष आदेशः स्यात्॥ पन्थाः। मन्थाः। ऋभुक्षाः॥ अनुनासिक आकारस्तु न भवति। विधीयमानत्वेन सवर्णाग्राहकत्वात्॥

## इतो ऽत् सर्वनामस्थाने ॥ ८६ ॥

पथिन्। मथिन्। ऋभुक्षिन्। इत्येतेषामवयवस्य। इ। इत्येतस्य। अ। इत्येष आदेशः स्यात्। सर्वनामस्थाने परे॥ पन्थाः। पन्थानौ। पन्थानः। पन्थानं। पन्थानौ॥ मन्थाः। मन्थानौ॥ ऋभुक्षाः। ऋभुक्षाणौ॥ आदित्यनुवर्त्तमाने ऽकारविधानं। ऋभुक्षाणं। ऋभुक्षणं। इत्यत्र वा षपूर्वस्य निगम इति दीर्घविकल्पो यथा स्यात्॥

## थो न्थः ॥ ८७ ॥

पथिन्। मथिन्। इत्येतयोरवयवस्य थ्। इत्येतस्य न्थ्। इत्येष आदेशः स्यात्। सर्वनामस्थाने परे॥ पन्थाः। पन्थानौ। पन्थानः। पन्थानं। पन्थानौ॥ मन्थाः। मन्थानौ॥

## भस्य टेर्लोपः ॥८८॥

पथिन् । मथिन् । ऋभुक्षिन् । इत्येतेषां भसंज्ञकानां टिसंज्ञकस्य लोपः स्यात् ॥ पथः । पथा । पथे । पथः । पथः । पथोः । पथां । पथि । पथोः ॥ मथः । मथा ॥ ऋभुक्षः । ऋभुक्षा ॥ भस्य किं । पथिभ्यां । मथिभ्यां । ऋभुक्षिभ्यां ॥

## पुंसोऽसुङ् ॥८९॥

पुंस् । इत्येतस्य सर्वनामस्थाने परे ऽसुङ् । इत्येष आदेशः स्यात् ॥ पुमान् । पुमांसौ । पुमांसः । पुमांसं । पुमांसौ ॥ परमपुमान् ॥ सर्वनामस्थाने किं । पुंसः पश्य ॥

## गोतो णित् ॥९०॥

गो । इत्येतस्माद्विहितं सर्वनामस्थानं णिद्वत् स्यात् । णित्कार्यं तत्र भवति ॥ गौः । गावौ । गावः ॥ तपरकरणं किं । चित्रगुः ॥ गोत इत्योकारान्तोपलक्षणं । द्यौः । द्यावौ । द्यावः ॥

## णलुत्तमो वा ॥९१॥

णल् । उत्तमपुरुषस्थानिको वा णित् स्यात् ॥ अहं चकर । अहं चकार । अहं पपच । अहं पपाच ॥ उत्तमः किं । स पपाच ॥

## सख्युरसंबुद्धौ ॥९२॥

सखि । इत्येतस्मात् परं संबुद्धिवर्जं सर्वनामस्थानं णिद्वत् स्यात् ॥ सखा । सखायौ । सखायः ॥ असंबुद्धौ किं । हे सखे ॥

## अनङ् सौ ॥९३॥

सखि । इत्येतस्याङ्गस्यासंबुद्धौ सौ परे ऽनङ् । इत्येष आदेशः स्यात् ॥ सखा । परमसखा ॥ असंबुद्धौ किं । हे सखे ॥

## ऋदुशनस्पुरुदंसोऽनेहसां च ॥९४॥

ऋ । इत्येतदन्तानामङ्गानां । उशनस् । पुरुदंशस् । अनेहस् । इत्येतेषां चासंबुद्धौ सौ परे ऽनङ् । इत्येष आदेशः स्यात् ॥ ऋदन्तानां । कर्ता । माता ।

पिता ॥ उशना । पुरुदंशा । अनेहा ॥ असंबुद्धौ किं । हे कर्तः । हे मातः । हे पितः । हे उशनः । हे पुरुदंशः । हे अनेहः ॥ संबुद्धावपि पक्ष इष्यते । हे उशन । न ङिसंबुद्ध्योरिति नलोपप्रतिषेधो ऽपि पक्ष इष्यते । हे उशनन् ॥

## तृज्वत् क्रोष्टुः ॥९५॥

क्रोष्टु । इत्येषस्तुन्प्रत्ययान्तो ऽसंबुद्धौ सर्वनामस्थाने परे तृच्प्रत्ययान्तवत् स्वरूपं लभते ॥ क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । क्रोष्टारं । क्रोष्टारौ ॥ सर्वनामस्थाने किं । क्रोष्टून् ॥ असंबुद्धौ किं । हे क्रोष्टो ॥

## स्त्रियां च ॥९६॥

क्रोष्टु । इत्येष स्त्रियां तृज्वत् स्यात् ॥ ऋन्नेभ्यो ङीप् । क्रोष्ट्री । क्रोष्ट्र्यौ ॥ असर्वनामस्थानार्थमिदं ॥

## विभाषा तृतीयादिष्वचि ॥९७॥

तृतीयादिष्वजादिषु क्रोष्टुर्वा तृज्वत् स्यात् ॥ क्रोष्ट्रा । क्रोष्टुना । क्रोष्ट्रे । क्रोष्टवे । क्रोष्टुः । क्रोष्टोः । क्रोष्टुः । क्रोष्टोः । क्रोष्ट्रोः । क्रोष्ट्वोः । क्रोष्टरि । क्रोष्टौ । क्रोष्ट्रोः । क्रोष्ट्वोः ॥ तृतीयादिषु किं । क्रोष्टून् ॥ अचि किं । क्रोष्टुभिः ॥

## चतुरनडुहोरामुदात्तः ॥९८॥

चतुर् । अनडुह् । इत्येतयोः सर्वनामस्थाने परे । आम् । इत्येष आगमः स्यात् । स चोदात्तः ॥ चत्वारः । प्रियचत्वाः । प्रियचत्वारौ ॥ अनड्वान् । अनड्वाहौ । अनड्वाहः । अनड्वाहं । अनड्वाहौ ॥ प्रियानड्वान् ॥ सर्वनामस्थाने किं । अनडुहः । अनडुहा ॥

## अम् संबुद्धौ ॥९९॥

चतुर् । अनडुह् । इत्येतयोः संबुद्धौ परतो ऽम् । इत्येष आगमः स्यात् ॥ हे प्रियचत्वः । हे अनड्वन् ॥

## ॠत इद्धातोः ॥१००॥

ॠ । इत्येतदन्तस्य धात्वङ्गस्य । इ । इत्येष आदेशः स्यात् ॥ कॄ । किर-

ति ॥ गॄ । गिरति ॥ स्तॄञ् । स्तीर्णं । विस्तीर्णं ॥ लाक्षणिकस्याप्यत्र ग्रहणं । कॄ । चिकीर्षति ॥ धातोः किं । पितॄणां ॥

## उपधायाश्च ॥१०१॥

ॠ । इत्येतस्य धातोरुपधाभूतस्य । इ । इत्येष आदेशः स्यात् ॥ कॄत । कीर्तयति । कीर्तयतः । कीर्तयन्ति ॥

## उदोष्ठ्यपूर्वस्य ॥१०२॥

ॠकारो यो ऽङ्गावयव ओष्ठ्यवर्णपूर्वस्तदन्तस्य धातोरङ्गस्य । उ । इत्येष आदेशः स्यात् ॥ पॄ । पूर्तः । पुपूर्षति ॥ स्मॄ । सुस्मूर्षति ॥ मॄ । मुमूर्षति ॥ दन्त्यौष्ठ्यपूर्वो ऽप्योष्ठ्यपूर्वो भवति । वॄ । वुवूर्षति ॥ अङ्गावयवौष्ठ्यपूर्वत्वा-भावादिह न भवति । ॠ । समीर्णः ॥

## बहुलं छन्दसि ॥१०३॥

ॠ । इत्येतदन्तस्य धातोरङ्गस्य बहुलं वेदे । उ । इत्येष आदेशः स्यात् ॥ तॄ । मित्रावरुणौ ततुरिः ॥ गॄ । दूरे ऽह्यध्वा जगुरिः ॥ न च भवति । पॄ । पप्रितमं । क्वचिद्भवति । पपुरिः ॥

॥ इति सूत्रपाठे सप्तमाध्यायस्य प्रथमः पादः ॥

---

## सिचि वृद्धिः परस्मैपदेषु ॥१॥

इक्प्रत्याहारान्तस्याङ्गस्य परस्मैपदपरके सिचि परे वृद्धिः स्यात् ॥ चिञ् । अचैषीत् ॥ लूञ् । अलावीत् ॥ डुकृञ् । अकार्षीत् ॥ परस्मैपदेषु किं । प्लुङ् । अप्लोष्ट ॥

## अतो ल्रान्तस्य ॥२॥

ल् । र् । इत्येतौ यावकारसमीपवर्तिनौ तदन्तस्याङ्गस्यातो वृद्धिः स्यात् । सिचि परस्मैपदेषु ॥ ज्वल । अज्वालीत् ॥ ह्मल । अह्मालीत् ॥ चर ।

अक्षारीत्॥ त्सर। अत्सारीत्॥ अतः किं। पुर। न्यपोरीत्। मील। न्यमीलीत्॥ ल्रान्तस्य किं। मा भवानटीत्॥ अन्तग्रहणं किं। बभ्र। अबभ्रीत्। श्वल्ल। अश्वल्लीत्। अत्र यौ ल्रावकारसमीपौ न तदन्तमङ्गं। यावन्तौ ल्रौ न तावतः समीपौ॥

## वदव्रजहलन्तस्याचः ॥३॥

वद। व्रज। इत्येतयोर्हल्प्रत्याहारान्तस्य चाङ्गस्याचो वृद्धिः स्यात्। सिचि परस्मैपदेषु॥ वद। अवादीत्॥ व्रज। अव्राजीत्॥ हलन्तस्य। डुपचष्। अपाक्षीत्। भिदिर्। अभैत्सीत्॥ अतो हलादेर्लघोरिति विकल्पबाधनार्थं पृथग्वदव्रजग्रहणं॥

## नेटि ॥४॥

इडादौ सिचि परस्मैपदपरे हलन्तलक्षणा वृद्धिर्न स्यात्॥ देवृ। अदेवीत्॥ षेवृ। असेवीत्॥ कुष। अकोषीत्॥ मुष। अमोषीत्॥ हलन्तस्येत्येव। अलावीत्॥

## ह्म्यन्तक्षणश्वसजागृणिश्व्येदितां ॥५॥

ह्। म्। य्। इत्येतदन्तानां। क्षण। श्वस। जागृ। णि। टुओश्वि। इत्येतेषामेदितां च इडादौ सिचि परस्मैपदपरे हलो वृद्धिर्न स्यात्॥ ग्रह। अग्रहीत्॥ स्यम। अस्यमीत्॥ व्यय। अव्ययीत्॥ क्षण। अक्षणीत्॥ श्वस। अश्वसीत्॥ जागृ। अजागरीत्॥ ण्यन्तानां। औनयीत्। ऐलयीत्॥ टुओश्वि। अश्वयीत्॥ एदितां। रगे। अरगीत्। कखे। अकखीत्॥

## ऊर्णोतेर्विभाषा ॥६॥

ऊर्णुञ्। इत्येतस्येडादौ सिचि परस्मैपदेषु वृद्धिर्वा न स्यात्॥ प्रौर्णावीत्। प्रौर्णवीत्॥ विभाषोर्णोरिति ङित्पक्षे तु गुणवृद्धिनिषेधादुवङ् भवति। प्रौर्णुवीत्॥

## अतो हलादेर्लघोः ॥७॥

हलादेरङ्गस्य लघोरकारस्य च। इत्येतस्येडादौ सिचि परस्मैपदेषु वृद्धिर्वा

स्यात् ॥ कण । अकणीत् । अकाणीत् ॥ अतः किं । अदेवीत् ॥ हलादेः किं । मा भवानटीत् ॥ लघोः किं । अतक्षीत् ॥ इडादौ किं । अपाक्षीत् ॥

## नेड्वशि कृति ॥८॥

वशप्रत्याहारादेः कृत्प्रत्ययस्य । इट् । इत्येष आगमो न स्यात् ॥ ईश । ईशिता । ईशितुं । ईश्वरः ॥ दीपी । दीपिता । दीपितुं । दीप्रः ॥ भस । भसिता । भसितुं । भस्म ॥ टुयाचृ । याचिता । याचितुं । याच्ञा ॥ कृति किं । रुरुदिव । रुरुदिम ॥

## तितुत्रतथसिसुसरकसेषु च ॥९॥

ति । तुन् । ष्ट्रन् । तन् । क्थन् । क्सि । सुच् । सरन् । कन् । स । इत्येतेषां कृतामिड्न स्यात् ॥ ति । इति क्तिन्क्तिचोर्ग्रहणं । क्तिन् । दीपी । दीप्तिः । क्तिच् । तनु । तन्तिः ॥ तुन् । पच । सक्तुः ॥ ष्ट्रन् । पत्लृ । पत्त्रं । तनु । तन्त्रं ॥ तन् । हसे । हस्तः । लूञ् । लोतः । पूञ् । पोतः । धुर्वी । धूर्तः । औणादिकस्यैव तशब्दस्य ग्रहणमिष्यते । न पुनः क्तस्य । तेन हसितमित्यादौ निष्ठायामिड्भवत्येव ॥ क्थन् । कुश । कोष्ठं । काशृ । काष्ठं ॥ क्सि । कुष । कुक्षिः ॥ सुच् । इष । इक्षुः ॥ क्सरन् । अश । अक्षरं ॥ कन् । शल । शल्कः ॥ स । वद । वत्सः ॥ कृतां किं । रोदिति ॥

## एकाच उपदेशे ऽनुदात्तात् ॥१०॥

उपदेशे यो धातुरेकाजनुदात्तश्च ततः परस्य वल्प्रत्याहारादेरार्धधातुकस्य । इट् । इत्येष आगमो न स्यात् ॥ डुदाञ् । दाता ॥ डुधाञ् । धाता ॥ णीञ् । नेता ॥ चिञ् । चेता ॥ ष्टुञ् । स्तोता ॥ डुकृञ् । कर्ता ॥ हृञ् । हर्ता ॥ एकाचः किं । अवधीत् । अदन्तो ह्यर्थिर्वृद्धिनिवृत्त्यर्थमुपदिश्यते ॥ उपदेशे किं । इह च यथा स्यात् । लविष्यति । पविष्यति । इह च मा भूत् । कर्ता । कर्तुं ॥ अनुदात्तात् किं । भविता ॥

## श्र्युकः किति ॥११॥

श्रिञ् । इत्येतस्मादुपदेश उक्प्रत्याहारान्तादेकाचश्चानुदात्तात् परस्य किनः प्रत्ययस्य इट् । इत्येष आगमो न स्यात् ॥ श्रिञ् । श्रितः । श्रितवान् । श्रित्वा ॥

उञ् । यु । युतः । युतवान् । युत्वा ॥ लूञ् । लूनः । लूनवान् । लूत्वा ॥ वृङ् । वृञ् । वृतः । वृतवान् । वृत्वा ॥ तॄ । तीर्णः । तीर्णवान् । तीर्त्वा ॥ श्युकः किं । विदितः । विदितवान् ॥ किति किं । अविता ॥ एकाचः किं । जागरितः । जागरितवान् ॥ उपदेशे किं । तीर्णा इत्यत्र यथा स्यात् । इत्वे रपरत्वे च कृते न स्यात् ॥ किकतीति द्विककारकनिर्देशेन गितोऽपीटो निषेधः । भूष्णुः ॥ वाच्य ऊर्णोर्णुवद्भाव इत्युक्तं पुरस्तात् । प्रोर्णुतः । प्रोर्णुतवान् ॥

## सनि ग्रहगुहोश्च ॥१२॥

ग्रह । गुह । इत्येताभ्यामुक्प्रत्याहारान्ताद्कोचश्चाङ्गात् परस्य सन्प्रत्ययस्येड्न स्यात् ॥ ग्रह । जिघृक्षति ॥ गुह् । जुघुक्षति ॥ उञ् । बुभूषति । रुरुप- ति ॥ ग्रहेर्नित्यं प्राप्तः । गुहेरूदित्वाद्विकल्पेन प्राप्त इडनेन निषिध्यते ॥

## कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ॥१३॥

डुकृञ् । सृ । डुभृञ् । वृङ् । वृञ् । ष्टुञ् । द्रु । स्रु । श्रु । इत्येतेभ्यः परस्य लिट इडागमो न स्यात् ॥ डुकृञ् । चकृव । चकृम ॥ सृ । ससृव । ससृम ॥ डुभृञ् । बभृव । बभृम ॥ वृङ् । ववृवहे । ववृमहे ॥ वृञ् । ववृव । ववृम ॥ ष्टुञ् । तुष्टुव । तुष्टुम ॥ द्रु । दुद्रुव । दुद्रुम ॥ स्रु । सुस्रुव । सुस्रुम ॥ श्रु । शुश्रुव । शुश्रुम ॥

## आदितश्च ॥ १६ ॥

आ । इत्येतदित्संज्ञकाद्धातोर्निष्ठाया इडू न स्यात् ॥ ञिमिदा । मिन्नः । मिन्नवान् ॥ ञिक्ष्विदा । क्ष्विण्णः । क्ष्विण्णवान् ॥ ञिष्विदा । स्विन्नः । स्विन्नवान् ॥ चकारो ऽनुक्तसमुच्चयार्थः । अप्रवस्तो वान्तः ॥

## विभाषा भावादिकर्मणोः ॥ १७ ॥

भाव आदिकर्मणि च आ । इत्येतदित्संज्ञकाद्धातोर्वेडू न स्यात् ॥ भावे । मिन्नमनेन । मेदितमनेन ॥ आदिकर्मणि । प्रमिन्नः । प्रमेदितः ॥

## क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु ॥ १८ ॥

क्षुब्ध । स्वान्त । ध्वान्त । लग्न । म्लिष्ट । विरिब्ध । फाण्ट । बाढ । इत्येते क्रमान्मन्थ । मनस् । तमस् । सक्त । अविस्पष्ट । स्वर । अनायास । भृश । इत्येतेष्वर्थेष्विड्रहिता निपात्यन्ते ॥ द्रवद्द्रव्यसंयुक्ताः सक्तवो मन्थः । मन्थनद्रव्यश्च ॥ क्षुभ । क्षुब्धो मन्थः । क्षुभितमन्यत् ॥ स्वन । स्वान्तं मनः । स्वनितो ऽन्यः ॥ ध्वन । ध्वान्तं तमः । ध्वनितो ऽन्यः ॥ लगे । लग्नं सक्तं । निष्ठानत्वमपि निपातनात् । लगितमन्यत् ॥ म्लेच्छ । म्लिष्टमविस्पष्टं । इत्वमेकारस्य निपातनात् । म्लेच्छितमन्यत् ॥ रेभृ । विरिब्धः स्वरः । निपातनादेकारस्येत्वं । विरेभितो ऽन्यः । रेभृ इति सौत्रो धातुः । विरिभितमन्यत् । इत्यन्ये वर्णयन्ति । तन्मते रिभिधातुर्बोध्यः ॥ फण । फाण्टमनायासाध्यं । फाणितमन्यत् ॥ बाहृ । बाढं भृशं । बाहितमन्यत् ॥

## धृषिशसी वैयात्ये ॥ १९ ॥

ञिधृषा । शसु । इत्येतौ प्रागल्भ्ये गम्ये निष्ठायां सेटौ न भवतः ॥ धृष्टः । विशस्तः ॥ धृषेरादितश्चेति प्रसेहदित्त्वात्स्य विभाषेति सिद्धे निषेधे वैयात्य एवेति नियमार्थमिदं । तेनावैयात्य इड्भवति । धर्षितः । विशसितः ॥

## दृढः स्थूलबलयोः ॥ २० ॥

दृढ । इत्येतत् स्थूले बलवति चार्थे निपात्यते ॥ दृहि । दृढः स्थूलः । दृढ । इत्येतयोर्लोपः । प्रत्ययत- दृढो बलवान् ॥ सामत्यय दृढो ऽमात्यः । दृ न् इत्येतयोर्लोपः । प्रत्ययत-

कारस्य ढकारश्च निपात्यते । दृह । इत्येतस्याप्येतन्निपातनं नलोपश्च ॥ स्थूलबलयोः किं । दृंहितं । दृहितं ॥

## प्रभौ परिवृढः ॥२१॥

परिवृढ । इत्येतत् प्रभौ वाच्ये निपात्यते ॥ वृह । वृहि । परिवृढः कुटुम्बी ॥ निपातनं पूर्वसूत्रवदिहापि ॥ प्रभौ किं । परिवृहितं । परिवृंहितं ॥

## कृच्छ्रगहनयोः कषः ॥२२॥

कष । इत्येतस्माद्धातोः कृच्छ्रे गहने चार्थे निष्ठाया इड् न स्यात् ॥ कष्टो ऽग्निः । कष्टं व्याकरणं ॥ दुःखं तत्कारणं च कृच्छ्रमुच्यते ॥ गहने । कष्टानि वनानि । कष्टाः पर्वताः ॥ कृच्छ्रगहनयोः किं । कषितं सुवर्णं ॥

## घुषिरविशब्दने ॥२३॥

## वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ॥ २७ ॥

दान्त । शान्त । पूर्ण । दस्त । स्पष्ट । छन्न । ज्ञप्त । इत्येते णिजन्ता निष्ठायामनिटो वा निपात्यन्ते ॥ दम । दान्तः । दमितः ॥ शम । शान्तः । शमितः ॥ पूरी । पूर्णः । पूरितः ॥ दसु । दस्तः । दासितः ॥ स्पश । स्पष्ट । स्पाशितः ॥ छद । छन्न । छादितः ॥ ज्ञप । ज्ञप्तः । ज्ञपितः ॥ इटो निषेधो णिलुक् च निपातनात् ॥ ज्ञपेर्वस्य विभाषेति निषेधे प्राप्ते विकल्पार्थं निपातनं ॥

## रुष्यमत्वरसंघुषास्वनां ॥ २८ ॥

रुष । अम । ञित्वरा । घुषिर् संपूर्वः । स्वन आङ्पूर्वः । इत्येतेभ्यो निष्ठाया इड्वा न स्यात् ॥ रुष्टः । रुषितः ॥ आन्तः । अमितः ॥ तूर्णः । त्वरितः ॥ संघुष्टौ । संघुषितौ पादौ । संघुष्टं । संघुषितं वाक्यं ॥ आस्वान्तः । आस्वनितः । आस्वान्तं । आस्वनितं मनः ॥

## हृषेर्लोमसु ॥ २९ ॥

हृषु । हृष । इत्येताभ्यां पराया निष्ठाया लोमसु वाच्येष्विड्वा न स्यात् ॥ हृष्टाः । हृषिताः केशाः । हृष्टं । हृषितं केशैः ॥ लोमसु किं । हृषु । हृष्टः । हृष । हृषितः ॥ हृषु इत्युदित्त्वान्निष्ठायामनिट् । हृष तुष्टावयं सेट् ॥

## अपचितश्च ॥ ३० ॥

अपचित । इत्येतद्वा निपात्यते ॥ चिञ् अपपूर्वः । अपचितः । अपचायितः ॥ णिजन्तस्य चिभावो निष्ठायामनिट्त्वं च निपातनात् ॥

## ह्रु ह्वरेश्छन्दसि ॥ ३१ ॥

ह्वृ । इत्येतस्य धातोर्वेदे निष्ठायां ह्रु । इत्येष आदेशः स्यात् ॥ अह्रुतमसि ॥ छन्दसि किं । ह्वृतं ॥

## अपरिह्वृताश्च ॥ ३२ ॥

अपरिह्वृताः । इत्येतद्वेदे निपात्यते ॥ अपरिह्वृताः स नु यानजातं ॥ ह्रु इत्येष आदेशो न भवति निपातनात् ॥

केचित् क्षरितीत्यस्यानन्तरं क्षमितीत्यपि पठन्ति । तत्र क्षमूष्धातोः शप इकारादेशो निपातनात् ॥

## आर्धधातुकस्येड्वलादेः ॥ ३५ ॥

वल्प्रत्याहारादेरार्धधातुकसंज्ञकस्य इट् । इत्येष आगमः स्यात् ॥ भविता । भविष्यति । भवितव्यं ॥ आर्धधातुकस्य किं । आस्ते । वस्ते ॥ वलादेः किं । लव्यं ॥ इडित्यनुवृत्तौ पुनरिड्ग्रहणं प्रतिषेधनिवृत्त्यर्थं ॥

## स्नुक्रमोरनात्मनेपदनिमित्ते ॥ ३६ ॥

ष्णु । क्रमु । इत्येताभ्यां परस्य वलादेरार्धधातुकस्य इट् । इत्येष आगमः स्यात् । स्नुक्रमौ यत्रात्मनेपदनिमित्ते न भवतः ॥ प्रस्नविता । प्रस्नवितुं ॥ प्रक्रमिता । प्रक्रमितुं ॥ अनात्मनेपदनिमित्ते किं । भावकर्मकर्तृकर्मव्यतिहारेषु मा भूत् । क्रमेर्वृत्त्यादिषु च । प्रस्नोष्यते । प्रक्रंस्यते ॥ निमित्तग्रहणं किं । सीयुडेकादेशस्य तत्परपरस्य च प्रतिषेधार्थं ॥

## ग्रहो ऽलिटि दीर्घः ॥ ३७ ॥

ग्रह । इत्येतस्मात् परस्येटो ऽलिटि दीर्घः स्यात् ॥ ग्रहीता । ग्रहीतुं ॥ अलिटि किं । जगृहिव । जगृहिम ॥ चिण्वदिटो नायं दीर्घः । ग्राहिष्यते ॥

## वृतो वा ॥ ३८ ॥

वृङ् । वृञ् । इत्येताभ्यां । ॠ । इत्येतदन्ताच्च परस्येटो ऽलिटि दीर्घो वा स्यात् ॥ वरीता । वरिता । ॠदन्तात् । तरीता । तरिता । स्तॄञ् । स्तरीता । स्तरिता ॥ वृतः किं । करिष्यति ॥ अलिटि किं । ववरिथ । तेरिथ ॥

## न लिङि ॥ ३९ ॥

वृङ् । वृञ् । इत्येताभ्यां । ॠ । इत्येतदन्ताच्च परस्येटो लिङि दीर्घो न स्यात् ॥ वरिषीष्ट । तरिषीष्ट ॥

## सिचि च परस्मैपदेषु ॥ ४० ॥

वृङ् । वृञ् । इत्येताभ्यां । ॠ । इत्येतदन्ताच्च परस्येटः परस्मैपदपरे सिचि

दीर्घो न स्यात् ॥ अवारिष्टां । अवारिषुः । अस्तारिष्टां । अस्तारिषुः ॥ परस्मैपदेषु किं । अवरिष्ट । अवरीष्ट ॥

## इट् सनि वा ॥४१॥

वृङ् । वृञ् । इत्येताभ्यां । ॠ । इत्येतदन्ताच्च परस्य सन इट् । इत्येष आगमो वा स्यात् ॥ विवरिषते । विवरीषते । वुवूर्षते । विवरिषति । विवरीषति । वुवूर्षति ॥ तितरिषति । तितरीषति । तितीर्षति ॥ सनि ग्रहगुहोरिति निषेधे प्राप्ते पक्ष इडनेन विधीयते । तस्य वृतो वेति दीर्घः ॥ उपदेश इत्येव । चिकीर्षति ॥

## लिङ्सिचोरात्मनेपदेषु ॥४२॥

लिङ् । सिच् । इत्येतयोर्वृङ् । वृञ् । ॠदन्तेभ्यः परयोरात्मनेपदे परे वा इट् । इत्येष आगमः स्यात् ॥ लिङ् । वरिषीष्ट । वरीषीष्ट । वृषीष्ट ॥ स्तरिषीष्ट । स्तरीषीष्ट । स्तीर्षीष्ट ॥ सिच् । अवरिष्ट । अवरीष्ट । अवृत ॥ अस्तरिष्ट । अस्तरीष्ट । अस्तीर्ष्ट ॥ आत्मनेपदेषु किं । अवारिष्टां । अस्तारिष्टां ॥

## ऋतश्च संयोगादेः ॥४३॥

ऋ । इत्येतदन्तात् संयोगादेर्धातोः परयोर्लिङ्सिचोरात्मनेपदेषु वा इट् । इत्येष आगमः स्यात् ॥ ध्वृ । ध्वरिषीष्ट । ध्वृषीष्ट ॥ स्मृ । स्मरिषीष्ट । स्मृषीष्ट ॥ सिच् । अध्वरिषातां । अध्वृषातां ॥ अस्मरिषातां । अस्मृषातां ॥ ऋतः किं । प्रोषीष्ट । अप्रोष्ट ॥ संयोगादेः किं । कृषीष्ट । अकृत ॥ आत्मनेपदेषु किं । अध्वार्षीत् ॥ उपदेश इत्येव । संस्कृषीष्ट । समस्कृत । सुटो ऽसिद्धत्वाद्वा संयोगादित्वाभावः ॥

## स्वरतिसूतिसूयतिधूञूदितो वा ॥४४॥

स्वृ । षूङ् । षूङ् । धूञ् । इत्येतेभ्य ऊ । इत्येतदित्संज्ञकाच्च परस्य वलादेरार्धधातुकस्य वा इट् । इत्येष आगमः स्यात् ॥ स्वरिता । स्वर्ता ॥ षूङ् अदादिः । सविता । सोता ॥ षूङ् दिवादिः । सविता । सोता ॥ धूञ् । धविता । धोता ॥ ऊदितः । गाहू । गाहिता । गाढा । गुपू । गोपिता । गोप्ता ॥

सूतिसूयतीति विकरणनिर्देशः पू प्रेरण इत्यस्य निवृत्त्यर्थः ॥ धूञिति सानुबन्धकस्य निर्देशो धू विधूनन इत्यस्य निवृत्त्यर्थः ॥

## रधादिभ्यश्च ॥४५॥

रध । इत्येवमादिभ्यो ऽष्टभ्यो धातुभ्यः परस्य वलादेरार्धधातुकस्य वा इट् । इत्येष आगमः स्यात् ॥ रध । रधिता । रद्धा ॥ णश । नशिता । नंष्टा ॥ तृप । तर्पिता । त्रप्ता । तर्प्ता ॥ दृप । दर्पिता । द्रप्ता । दर्प्ता ॥ द्रुह । द्रोहिता । द्रोग्धा । द्रोढा ॥ मुह । मोहिता । मोग्धा । मोढा ॥ ष्णुह । स्नोहिता । स्नोग्धा । स्नोढा ॥ ष्णिह । स्नेहिता । स्नेग्धा । स्नेढा ॥ क्रादिनियमाल्लिटि परत्वाद्विकल्प इत्येके । अपरे पुनः पुरस्तात् प्रतिषेधकाण्डारम्भसामर्थ्यात् क्रादिनियमस्य बलत्वान्नित्यमिडिति । ररन्धिव । ररन्धिम ॥

## निरः कुषः ॥४६॥

निर् । इत्येवंपूर्वात् कुष । इत्येतस्माद्वलादेरार्धधातुकस्य वा इट् । इत्येष आगमः स्यात् ॥ निष्कोषिता । निष्कोष्टा । निष्कोषितुं । निष्कोष्टुं ॥ निस इति वाच्ये रान्तनिर्देशाद्रान्तमुपसर्गान्तरमस्तीति ज्ञाप्यते । तेन निलयनमित्यत्र लत्वं भवति । सान्तत्वे रुत्वस्यासिद्धत्वात् तन्न स्यात् ॥

## इण्निष्ठायां ॥४७॥

निरः कुषो निष्ठाया इट् । इत्येष आगमः स्यात् ॥ निष्कुषितः । निष्कुषितवान् ॥ इड्ग्रहणं नित्यार्थं ॥

## तीषसहलुभरुषरिषः ॥४८॥

इषु । षह । लुभ । रुष । रिष । इत्येतेभ्यः परस्य त् । इत्येतदादेरार्धधातुकस्य वा इट् । इत्येष आगमः स्यात् ॥ एषिता । एष्टा । इषु इच्छायामित्यस्यायं विकल्प इष्यते । दिवादौ क्र्यादौ च पठितस्य इष इत्येतस्य तु । एषिता ॥ सहिता । सोढा ॥ लोभिता । लोब्धा ॥ रोषिता । रोष्टा ॥ रेषिता । रेष्टा ॥ तीति किं । एषिष्यति ॥

## सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनां ॥४९॥

इव् । इत्येतदन्तेभ्यो धातुभ्यः । ऋधु । भ्रस्ज । दम्भु । श्रिञ् । स्वृ । यु । ऊर्णुञ् । भृञ् । ज्ञप । षणु । इत्येतेभ्यश्च परस्य सन्प्रत्ययस्य वा इट् ।

इत्येष आगमः स्यात् ॥ इवन्तेभ्यः । दिवु । दिदेविषति । दिद्यूषति ॥ षिवु । सिसेविषति । सिस्यूषति ॥ ऋधु । अर्दिधिषति । ईर्त्सति ॥ भ्रस्ज । बिभ्रज्जिषति । बिभर्ज्जिषति । बिभ्रक्षति । बिभक्षति ॥ दम्भु । दिदम्भिषति । धिप्सति । धीप्सति ॥ श्रिञ् । शिश्रयिषति । शिश्रीषति ॥ स्वृ । सिस्वरिषति । सुस्वूर्षति ॥ यु । यियविषति । युयूषति ॥ ऊर्णुञ् । ऊर्णुनुविषति । ऊर्णुनविषति । ऊर्णुनूषति ॥ डुभृञ् । बिभरिषति । बुभूर्षति । भौवादिकस्यात्र ग्रहणं शपा निर्देशात् ॥ ज्ञप । जिज्ञपयिषति । ज्ञीप्सति ॥ षणु । सिसनिषति । सिषासति ॥ सनः किं । देविता ॥

## क्लिशः क्त्वानिष्ठयोः ॥५०॥

क्लिश । क्लिशू । इत्येताभ्यां परेषां क्त्वा । क्त । क्तवतु । इत्येतेषां वा इट् । इत्येष आगमः स्यात् ॥ क्लिशित्वा । क्लिष्ट्वा ॥ क्लिशितः । क्लिष्टः ॥ क्लिशितवान् । क्लिष्टवान् ॥ क्लिश इत्यस्य क्त्वानिष्ठयोर्नित्यं प्राप्ते क्लिशू इत्यस्य तूदित्वात् क्त्वायां विकल्पे सिद्धे ऽपि निष्ठायां निषेधे प्राप्ते विकल्पः ॥

## पूङश्च ॥५१॥

पूङ् । इत्येतस्मात् परयोः क्त्वानिष्ठयोर्वा इट् । इत्येष आगमः स्यात् ॥ पवित्वा । पूत्वा ॥ पवितः । पूतः । पवितवान् । पूतवान् ॥ श्र्युकः कितीति निषेधे प्राप्ते विकल्पः ॥

## वसतिक्षुधोरिट् ॥५२॥

वस निवासार्थः । क्षुध । इत्येताभ्यां परयोः क्त्वानिष्ठयोरिट् । इत्येष आगमः स्यात् ॥ उषित्वा । उषितः । उषितवान् ॥ क्षुधित्वा । क्षोधित्वा । रलो व्युपधादिति वा कित्त्वं । क्षुधितः । क्षुधितवान् ॥

## अञ्चेः पूजायां ॥५३॥

अञ्चु । इत्येतस्माद्धातोः परयोः क्त्वानिष्ठयोः पूजायामर्थ इट् । इत्येष आगमः स्यात् ॥ अञ्चित्वा । अञ्चितः ॥ पूजायां किं । उदक्तमुदकं कूपात् ॥ उदितो वेति क्त्वायां विकल्पे यस्य विभाषेति निष्ठायां निषेधे प्राप्ते विधिरयं ॥

## लुभो विमोहने ॥५४॥

लुभ । इत्येतस्माद्विमोहने ऽर्थे वर्तमानात् क्त्वानिष्ठयोरिट् । इत्येष आगमः स्यात् ॥ लुभित्वा । लोभित्वा ॥ विलुभिताः केशाः ॥ विमोहनमाकुलीकरणं ॥ विमोहने किं । लुब्धः । लुब्ध्वा । लुभित्वा । लोभित्वा । रलो व्युपधादिति कित्त्वपक्षे न गुणः ॥ क्त्वायां तीषेति विकल्पे निष्ठायां यस्य विभाषेति निषेधे प्राप्ते विधिरयं ॥

## जॄव्रश्च्योः क्त्वि ॥५५॥

जॄ । ओव्रश्चू । इत्येताभ्यां परस्य क्त्वाप्रत्ययस्य इट् । इत्येष आगमः स्यात् ॥ जरित्वा । जरीत्वा ॥ व्रश्चित्वा ॥ क्त्वाग्रहणं निष्ठाननुवृत्त्यर्थं ॥ जॄधातोः श्र्युकः कितीति निषेधे व्रश्चेरूदित्त्वाद्विकल्पे प्राप्ते विधिरयं ॥

## उदितो वा ॥५६॥

उ । इत्येतदित्संज्ञकाद्धातोः परस्य क्त्वाप्रत्ययस्य वा इट् । इत्येष आगमः स्यात् ॥ शमु । शमित्वा । शान्त्वा ॥ दमु । दमित्वा । दान्त्वा ॥

## से ऽसिचि कृतचृतच्छृदतृदनृतः ॥५७॥

कृती । चृती । उछृदिर् । उतृदिर् । नृती । इत्येतेभ्यो धातुभ्यः परस्य सिभिन्नस्य स् । इत्येतदादेरार्धधातुकस्य वा इट् । इत्येष आगमः स्यात् ॥ कृती । कर्तिष्यति । कर्त्स्यति । अकर्तिष्यत् । अकर्त्स्यत् । चिकर्तिषति । चिकृत्सति ॥ चृती । चर्तिष्यति । चर्त्स्यति । अचर्तिष्यत् । अचर्त्स्यत् । चिचर्तिषति । चिचृत्सति ॥ उछृदिर् । छर्दिष्यति । छर्त्स्यति । अच्छर्दिष्यत् । अच्छर्त्स्यत् । चिच्छर्दिषति । चिच्छृत्सति ॥ उतृदिर् । तर्दिष्यति । तर्त्स्यति । अतर्दिष्यत् । अतर्त्स्यत् । तितर्दिषति । तितृत्सति ॥ नृती । नर्तिष्यति । नर्त्स्यति । अनर्तिष्यत् । अनर्त्स्यत् । निनर्तिषति । निनृत्सति ॥ से किं । कर्तिता ॥ असिचि किं । अकर्तीत् ॥

## गमेरिट् परस्मैपदेषु ॥५८॥

गम्लृ । इत्येतस्माद्धातोः परस्य स् । इत्येतदादेरार्धधातुकस्य परस्मैपदेषु इट् । इत्येष आगमः स्यात् ॥ गम्लृ । गमिष्यति । अगमिष्यत् । जिगमिषति ॥ इणिकादेशो ऽपि गृह्यते गमिः । जिगमिषति । अधिजिगमिषति ॥ गमेः किं । चेष्यति ॥ इड्ग्रहणं इङ्ङादेशस्य तु न ग्रहणमात्मनेपदित्वात् ॥

निर्यायं ॥ परस्मैपदेषु किं । संगंस्यते । अधिजिगांसते ॥ स इत्येव । गन्तास्मि ॥

## न वृद्भ्यश्चतुर्भ्यः ॥५९॥

वृतु । वृधु । शृधु । स्यन्दू । इत्येतेभ्यः परस्य स् । इत्येतदादेरार्धधातुकस्य परस्मैपदेषु । इट् । इत्येष आगमो न स्यात् ॥ वृतु । वर्त्स्यति । अवर्त्स्यत् । विवृत्सति ॥ वृधु । वर्त्स्यति । अवर्त्स्यत् । विवृत्सति ॥ शृधु । शर्त्स्यति । अशर्त्स्यत् । शिशृत्सति ॥ स्यन्दू । स्यन्त्स्यति । अस्यन्त्स्यत् । सिस्यन्त्सति ॥ चतुर्ग्रहणं स्पष्टार्थमग्रे वृत्करणात् ॥ परस्मैपदेषु किं । वर्तिष्यते । वर्तिषीष्ट । अवर्तिष्यत । विवर्तिषते ॥

## तासि च कॢपः ॥६०॥

कृपू । इत्येतस्मात् परस्य तासिप्रत्ययस्य सादेरार्धधातुकस्य च परस्मैपदेषु । इट् । इत्येष आगमो न स्यात् ॥ कल्प्तास्वः । कल्प्तास्मः । कल्प्स्यति । अकल्प्स्यत् । चिक्लृप्सति ॥ परस्मैपदेषु किं । कल्पितासे । कल्पिष्यते । कल्पिषीष्ट । अकल्पिष्यत । चिकल्पिषते ॥

## अचस्तास्वत् थल्यनिटो नित्यं ॥६१॥

तासिप्रत्यये ये नित्यानिटो धातवो ऽजन्तास्तेभ्यस्तासाविव थलि इट् । इत्येष आगमः स्यात् ॥ या । याता । ययाथ ॥ चिञ् । चेता । चिचेथ ॥ अचः किं । भेत्ता । बिभेदिथ ॥ तास्वत् किं । लूता । लुलविथ ॥ थलि किं । ययिव । ययिम ॥ नित्यं किं । तासि विभाषेटः थलि नित्यमिड्यथा स्यात् । धोता । धविता । दुधविथ ॥ तासौ सतस्थलि प्रतिषेधार्थो वृत्तिनिर्देशः । अत्तेर्घसादेशो वेञो वयिरादेशश्च तासौ न भवति । अतस्तस्य नेट्प्रतिषेधः । जघसिथ । उवयिथ ॥

## उपदेशे ऽत्वतः ॥६२॥

उपदेशे ऽकारवान् यो धातुस्तासौ नित्यानिट् ततः परस्य तासाविव थल इट् । इत्येष आगमो न स्यात् ॥ डुपचष् । पक्ता । पपक्थ ॥ यज । यष्टा । इयष्ठ ॥ उपदेशे किं । कृष । कर्ष्टा । चकर्षिथ ॥ अत्वतः किं । भेत्ता ।

त्रिभेदिव ॥ तपरकरणं किं । राञ । रराधिव ॥ तास्वदित्येव । ग्लिभृक्ष-ति । जग्रहिव ॥ नित्यानिटः किं । अञ्जू । अञ्जिता । अङ्क्ता । आनञ्जिथ ॥

## ऋतो भारद्वाजस्य ॥ ६३ ॥

ऋ । इत्येतदन्ताञ्जातोस्तासौ नित्यानिटः परस्य थल इट् । इत्येष आगमो न स्यात् । भारद्वाजाचार्यमते ॥ स्मृ । स्मर्ता । सस्मर्थ ॥ ध्वृ । ध्वर्ता । दध्वर्थ ॥ भारद्वाजमते ऽन्येषां धातूनामिट् । येजिथ । पेचिथ ॥

## बभूथाततन्थ जगृभ्म ववर्थेति निगमे ॥ ६४ ॥

बभूथ । आततन्थ । जगृभ्म । ववर्थ । इत्येतानि वेदे निपात्यन्ते ॥ भू । होता प्रयनो बभूथ । बभूविथेति लोके ॥ तनु । येनान्तरिक्षमुर्वाततन्थ । आतेनिथेति लोके ॥ ग्रह । जगृभ्मा ते दक्षिणमिन्द्रहस्तं । जगृहिमेति लोके ॥ वृञ् । ववर्थ त्वं हि ज्योतिषा । ववरिथेति लोके ॥ कृसृभृ । इत्यादिसूत्रे नैव प्रतिषेधे सिद्धे निगम एवेति नियमार्थमिदं ॥

## विभाषा सृजिदृशोः ॥ ६५ ॥

सृज । दृशिर् । इत्येताभ्यां परस्य थलो वा इट् । इत्येष आगमो न स्यात् ॥ सृज । ससष्ठ । ससर्जिथ ॥ दृशिर् । दद्रष्ठ । ददर्शिथ ॥

## इडत्त्यर्तिव्ययतीनां ॥ ६६ ॥

अद् । ऋ । व्येञ् । इत्येतेभ्यस्थलो नित्यमिट् । इत्येष आगमः स्यात् ॥ आदिथ । आरिथ । विव्ययिथ ॥ इड्ग्रहणं विस्पष्टार्थं ॥ विकल्पविधाने नित्यवत्तिग्रहणमनर्थकं स्यान्निषेधविधाने चात्तिग्रहणमितीड्ग्रहणं विनापि नित्यत्वसिद्धेः ॥

## वस्वेकाजाद्घसां ॥ ६७ ॥

कृतद्वित्वानामेकाचां धातूनां । आ । इत्येतदन्तानां । घस्लृ । इत्येतस्य च क्वसुप्रत्ययस्य इट् । इत्येष आगमः स्यात् ॥ एकाचां । आदिवान् । आशि-वान् । पेचिवान् ॥ आत् । पा । पपिवान् । ष्ठा । तस्थिवान् ॥ घस्लृ । जक्षिवान् ॥ एकाजाद्घसामेव क्वसोरिडिति नियमादन्येषां न भवति । बिभिद्वान् । चिच्छिद्वान् । बभूवान् । शिश्रिवान् । ददरिद्वान् ॥

## विभाषा गमहनविदविशां ॥ ६८ ॥

गम्लृ । हन । विद्लृ । विश । इत्येतेभ्यः क्वसोर्वा इट् । इत्येष आगमः स्यात् ॥ गम्लृ । जग्मिवान् । जगन्वान् ॥ हन । जघ्निवान् । जघन्वान् ॥ विद । विविदिवान् । विविद्वान् ॥ विश । विविशिवान् । विविश्वान् ॥ विद । तुदादिर्लाभार्थो ऽत्र गृह्यते । विशिसाहचर्यात् । ज्ञानार्थस्य तु नेड्वशीतीट्प्रतिषेधाद्विविद्वानित्येव भाव्यं ॥

## सनिंससनिवांसं ॥ ६९ ॥

सनिड्पूर्वात् षणु । इत्येतस्माल्लिटः क्वसुरादेशस्येडागम एत्वाभ्यासलोपाभावश्च वेदे निपात्यते ॥ अग्नि त्वाग्ने सनिंससनिवांसं ॥ सनिड्पूर्वादन्यत्र । सेनिवांसं । लोके ऽपि सेनिवांसं ॥

## ऋद्धनोः स्ये ॥ ७० ॥

ऋ । इत्येतदन्तेभ्यो धातुभ्यो हन । इत्येतस्माच्च परस्य स्यप्रत्ययस्य इट् । इत्येष आगमः स्यात् ॥ करिष्यति । हरिष्यति ॥ हनिष्यति ॥ तपरत्वं विस्पष्टार्थं ॥

## अञ्जेः सिचि ॥ ७१ ॥

अञ्जू । इत्येतस्मात् परस्य सिच इट् । इत्येष आगमः स्यात् ॥ आञ्जीत् । आञ्जिष्टां । आञ्जिषुः ॥ सिचि किं । अञ्जिता । अङ्क्ता ॥ ऊदित्वादिड्विकल्पः ॥

## स्तुसुधूञ्भ्यः परस्मैपदेषु ॥ ७२ ॥

ष्टुञ् । षुञ् । धूञ् । इत्येतेभ्यः परस्मैपदेषु परेषु सिच इट् । इत्येष आगमः स्यात् ॥ ष्टुञ् । अस्तावीत् ॥ षुञ् । असावीत् ॥ धूञ् । अधावीत् ॥ परस्मैपदेषु किं । अस्तोष्ट । असोष्ट । अधोष्ट । अधविष्ट ॥

## यमरमनमातां सक् च ॥ ७३ ॥

यम । रम । णम । इत्येतेषामाकारान्तानां च धातूनां सक् । इत्येष आगमः स्यात् परस्मैपदेषु । एभ्यः सिच इट् । इत्येष आगमश्च स्यात् ॥ यम । अयंसीत् । अयंसिष्टां ॥ रम । अरंसीत् । अरंसिष्टां ॥ णम । अनंसीत् । अनं-

सिष्टां ॥ आदन्तानां । या । अयासीत् । अयासिष्टां ॥ वा । अवासीत् । अवासिष्टां ॥ परस्मैपदेषु किं । अयंस्त । अरंस्त । अनंस्त ॥

## स्मिपूङ्रञ्ज्वशां सनि ॥ ७४ ॥

ष्मिङ् । पूङ् । ऋ । अञ्जू । अशू । इत्येतेभ्यः परस्य सन इट् । इत्येष आगमः स्यात् ॥ ष्मिङ् । सिस्मयिषते ॥ पूङ् । पिपविषते ॥ ऋ । अरिरिषति ॥ अञ्जू । अञ्जिजिषति ॥ अशू । अशिशिषति ॥ ङकारग्रहणं पूञो व्युदासार्थं । पुपूषति ॥

## किरश्च पञ्चभ्यः ॥ ७५ ॥

कॄ । गॄ । दृङ् । प्रच्छ । इत्येतेभ्यः परस्य सन इट् । इत्येष आगमः स्यात् ॥ कॄ । चिकरिषति ॥ गॄ । जिगरिषति ॥ दृङ् । दिदरिषते ॥ धृङ् । दिधरिषते ॥ प्रच्छ । पिप्रच्छिषति ॥ पञ्चभ्यः किं । सिसृक्षति ॥ कॄ गॄ इत्येतयोरिट् सनि वेति विकल्पो वृतो वेति दीर्घविकल्पश्च न भवति पुनरिड्विधानसामर्थ्यात् ॥

## रुदादिभ्यः सार्वधातुके ॥ ७६ ॥

रुदिर् । ञिष्वप् । श्वस । अन । जक्ष । इत्येतेभ्यः पञ्चभ्यः परस्य वलादेः सार्वधातुकस्य इट् । इत्येष आगमः स्यात् ॥ रुदिर् । रोदिति ॥ ञिष्वप् । स्वपिति ॥ श्वस । श्वसिति ॥ अन । अनिति ॥ जक्ष । जक्षिति ॥ पञ्चभ्यः किं । जागर्ति ॥ सार्वधातुके किं । स्वप्ता ॥ वलादेः किं । रुदन्ति ॥

## ईशः से ॥ ७७ ॥

ईश । इत्येतस्मात् परस्य से । इत्येतस्य सार्वधातुकस्य इट् । इत्येष आगमः स्यात् ॥ ईशिषे । ईशिष्व ॥

## ईडजनोर्ध्वे च ॥ ७८ ॥

ईड । जन । इत्येताभ्यां परस्य ध्व । इत्येतस्य से । इत्येतस्य च सार्वधातुकस्य इट् । इत्येष आगमः स्यात् ॥ ईड । ईडिध्वे । ईडिध्वं ॥ ईडिषे । ईडिष्व ॥ जनी । जनिध्वे । जनिध्वं ॥ जनिषे । जनिष्व ॥ छान्दसत्वादुपधालोपाभावः श्यनो लुक् च ॥

## लिङः सलोपो ऽनन्त्यस्य ॥७९॥

सार्वधातुकलिङो ऽनन्त्यस्य स् । इत्येतस्य लोपः स्यात् ॥ कुर्यात् । कुर्यातां । कुर्युः । कुर्वीत । कुर्वीयातां । कुर्वीरन् ॥ अनन्त्यस्य किं । कुर्युः । कुर्याः ॥ सार्वधातुके किं । क्रियास्तां । क्रियासुः । कृषीष्ट । कृषीयास्तां ॥ कः पुनरनन्त्यो लिङः सकारः । यो यासुट्सुट्सीयुटां ॥

## अतो येयः ॥८०॥

अ । इत्येतदन्तादङ्गात् परस्य सार्वधातुकावयवस्य या । इत्येतस्य इय् । इत्येष आदेशः स्यात् ॥ पचेत् । पचेतां । पचेयुः ॥ अतः किं । चिनुयात् ॥ तपरः किं । यायात् ॥ सार्वधातुके किं । चिकीर्ष्यात् ॥ येय इत्यविभक्तिको निर्देशः ॥ केचिदतो यासिय इति सूत्रं पठन्ति । तेषां मते सकारान्तः स्थानी षष्ठीसमासश्च ॥

## आतो ङितः ॥८१॥

अ । इत्येतदन्तादङ्गात् परस्य सार्वधातुकङितो ऽवयवस्य आ । इत्येतस्य इय् । इत्येष आदेशः स्यात् ॥ पचेते । पचेथे । पचेतां । पचेयां ॥ आतः किं । पचन्ति । पचन्ते ॥ ङितः किं । पचावहे ॥ अत इत्येव । मिमाते । मिमाथे ॥

## आने मुक् ॥८२॥

अ । इत्येतस्याङ्गावयवस्याने परे मुगागमः स्यात् ॥ पचमानः । यजमानः ॥ अकारमात्रभक्तो ऽयं मुगागमः ॥

## ईदासः ॥८३॥

आस । इत्येतस्माद्धातोः परस्य आन । इत्येतस्य ई । इत्येष आदेशः स्यात् ॥ आसीनः ॥

## अष्टन आ विभक्तौ ॥८४॥

अष्टन् । इत्येतस्य विभक्तौ परत आ । इत्येष आदेशः स्यात् ॥ अष्टाभिः । अष्टाभ्यः । अष्टाभ्यः । अष्टानां । अष्टासु ॥ विभक्तौ किं । अष्टत्वं ॥ वैकल्पिकमिदमात्वं । तेन पक्षे । अष्टभिः । अष्टभ्यः । इत्यादि ॥ गौणे ऽप्यात्वं । प्रियाष्टाभ्यां । प्रियाष्टाभिः ॥ मृजेर्वृद्धिरित्यतः प्राग्विभक्त्यधिकारः ॥

## रायो हलि ॥ ८५ ॥

रै । इत्येतस्य हलादौ विभक्तौ परत आ । इत्येष आदेशः स्यात् ॥ राभ्यां । राभिः ॥ हलि किं । रायौ । रायः ॥ विभक्तौ किं । रैत्वं ॥

## युष्मदस्मदोरनादेशे ॥ ८६ ॥

युष्मद् । अस्मद् । इत्येतयोरादेशवर्जिते विभक्तौ परत आ । इत्येष आदेशः स्यात् ॥ युष्माभिः । अस्माभिः । युष्मासु । अस्मासु ॥ अनादेशे किं । युष्मत् । अस्मत् ॥ यद्यपि हलीत्यनुवृत्त्यापि सिध्यति । तथाप्यनादेशग्रहणमुत्तरार्थमिहैव कृतं ॥

## द्वितीयायां च ॥ ८७ ॥

युष्मद् । अस्मद् । इत्येतयोर्द्वितीयायां च परत आ । इत्येष आदेशः स्यात् ॥ त्वां । मां । युवां । आवां । युष्मान् । अस्मान् ॥ आदेशार्थं वचनं ॥

## प्रथमायाश्च द्विवचने भाषायां ॥ ८८ ॥

युष्मद् । अस्मद् । इत्येतयोः प्रथमाद्विवचने परतो लोक आ । इत्येष आदेशः स्यात् ॥ युवां । आवां ॥ प्रथमायाः किं । युवयोः । आवयोः ॥ द्विवचने किं । त्वं । अहं ॥ भाषायां किं । युवं वस्त्राणि ॥

## यो ऽचि ॥ ८९ ॥

युष्मद् । अस्मद् । इत्येतयोरनादेशे ऽजादौ विभक्तौ परतो य् । इत्येष आदेशः स्यात् ॥ त्वया । मया । त्वयि । मयि । युवयोः । आवयोः ॥ अचि किं । युवाभ्यां । आवाभ्यां ॥ अनादेशे किं । त्वद्गच्छति । मद्गच्छति ॥

## शेषे लोपः ॥ ९० ॥

युष्मद् । अस्मद् । इत्येतयोरात्वयत्वनिमित्तेतरविभक्तौ परतो ऽन्त्यस्य लोपः स्यात् ॥ त्वं । अहं । यूयं । वयं । तुभ्यं । मह्यं । युष्मभ्यं । अस्मभ्यं । त्वत् । मत् । युष्मत् । अस्मत् । तव । मम । युष्माकं । अस्माकं ॥

## मपर्यन्तस्य ॥ ९१ ॥

अधिकारो ऽयं ॥ यदित ऊर्ध्वमनुक्रमिष्यामो मपर्यन्तस्य तद्वेदितव्यं ॥ वक्ष्यति

युवावौ द्विवचने । युवां । आवां ॥ मपर्यन्तस्य किं । साकचो मा भूत् । युवकां । आवकां ॥

## युवावौ द्विवचने ॥१२॥

युष्मद् । अस्मद् । इत्येतयोर्द्वित्ववाचिनोर्मपर्यन्तस्य स्थाने क्रमेण युव । आव । इत्येतावादेशौ भवतः ॥ युवां । आवां । युवाभ्यां । आवाभ्यां । युवयोः । आवयोः ॥

## यूयवयौ जसि ॥१३॥

युष्मद् । अस्मद् । इत्येतयोर्मपर्यन्तस्य जसि परे क्रमेण यूय । वय । इत्येतावादेशौ भवतः ॥ यूयं । वयं । परमयूयं । परमवयं । अतियूयं । अतिवयं ॥ अङ्गाधिकारस्थत्वात् तदन्तस्य चादेशौ भवतः ॥

## त्वाहौ सौ ॥१४॥

युष्मद् । अस्मद् । इत्येतयोर्मपर्यन्तस्य प्रथमैकवचने परे क्रमात् त्व । अह । इत्येतावादेशौ भवतः ॥ त्वं । अहं । परमत्वं । परमाहं । अतित्वं । अत्यहं ॥

## तुभ्यमह्यौ ङयि ॥१५॥

युष्मद् । अस्मद् । इत्येतयोर्मपर्यन्तस्य ङेविभक्तौ परतः क्रमात् तुभ्य । मह्य । इत्येतावादेशौ भवतः ॥ तुभ्यं । मह्यं । परमतुभ्यं । परममह्यं । अतितुभ्यं । अतिमह्यं ॥

## तवममौ ङसि ॥१६॥

युष्मद् । अस्मद् । इत्येतयोर्मपर्यन्तस्य षष्ठ्येकवचने परे तव । मम । इत्येतावादेशौ भवतः ॥ तव । मम । परमतव । परममम । अतितव । अतिमम ॥

## त्वमावेकवचने ॥१७॥

युष्मद् । अस्मद् । इत्येतयोरेकार्थवाचिनोर्मपर्यन्तस्य त्व । म । इत्येतावादेशौ भवतः ॥ त्वां । मां । त्वया । मया । त्वयि । मयि ॥ यत्र समासे युष्मदस्मदोरेकत्वमर्थः । समासार्थो द्वित्वं बहुत्वं वा तत्राप्ययमादेशः । त्वां मां वा-

तिक्रान्तं । अतित्वां । अतिमां । त्वां मां वातिक्रान्तौ । अतित्वां । अतिमां । त्वां मां वातिक्रान्तान् । अतित्वान् । अतिमान् ॥ सुजसङेऽस्सु परेषु त्वाहादय एव पूर्वविप्रतिषेधेन भवन्ति । त्वां मां वातिक्रान्तः । अतित्वं । अत्यहं । त्वां मां वातिक्रान्ताः । अतियूयं । अतिवयं । इत्यादि ॥

## प्रत्ययोत्तरपदयोश्च ॥९८॥

युष्मद् । अस्मद् । इत्येतयोरेकार्थवाचिनोः प्रत्यय उत्तरपदे च परे मपर्यन्तस्य त्व । म । इत्येतावादेशौ भवतः ॥ प्रत्यये । त्वदीयः । मदीयः । त्वत्तरः । मत्तरः । त्वयति । मयति ॥ उत्तरपदे । तव पुत्रः । त्वत्पुत्रः ॥ मम पुत्रः । मत्पुत्रः ॥ त्वन्नाथः । मन्नाथः ॥ एकार्थवाचिनोः किं । युवयोर्युष्माकं वायं । युष्मदीयः । अस्मदीयः । युवयोर्युष्माकं वा पुत्रः । युष्मत्पुत्रः । अस्मत्पुत्रः ॥ लुको ऽन्तरङ्गत्वात् प्रथमं त्वमादेशविधानाद्रूपे सिद्धे ऽन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधत इति ज्ञापनार्थमिदं सूत्रं । तेन गोमत्प्रिय इत्यादौ नुम् लुका बाध्यते ॥

## त्रिचतुरोः स्त्रियां तिसृचतसृ ॥९९॥

त्रि । चतुर् । इत्येतयोः स्त्रीलिङ्गयोर्विभक्तौ परतः क्रमेण तिसृ । चतसृ । इत्येतावादेशौ भवतः ॥ तिस्रस्तिष्ठन्ति । चतस्रः ॥ तिस्रः पश्य । चतस्रः ॥ तिसृभिः । चतसृभिः ॥ स्त्रियां किं । त्रयः । चत्वारः । त्रीणि । चत्वारि ॥ स्त्रियामिति त्रिचतुरोर्विशेषणं । न त्वङ्गस्य । तेनेहाप्यादेशो भवति । प्रियास्तिस्रो यस्य सः । प्रियतिसा पुमान् । प्रियचतसा । प्रियतिसौ । प्रियचतसौ । प्रियतिस्रः । प्रियचतस्रः ॥ प्रियतिसृ । प्रियचतसृ कुलं । प्रियतिसृणी । प्रियचतसृणी । प्रियतिसृणि । प्रियचतसृणि ॥ इह तु न भवति । प्रियास्त्रयः स्त्रीणि वा यस्याः सा । प्रियत्रिः । प्रियत्री । प्रियत्रयः ॥ प्रियचत्वाः । प्रियचत्वारौ । प्रियचत्वारः ॥

## अचि र ऋतः ॥१००॥

तिसृ । चतसृ । इत्येतयोरवयवस्य ऋ । इत्यस्य र । इत्येष आदेशः स्यात् । अजादौ विभक्तौ परतः ॥ तिस्रस्तिष्ठन्ति । चतस्रस्तिष्ठन्ति । तिस्रः पश्य । चतस्रः पश्य ॥ प्रियतिस्रौ । प्रियतिस्रः । प्रियचतस्रौ । प्रियचतस्रः ॥ अचि

किं । तिसृभिः । चतसृभिः ॥ अतः किं । त्रिचतुरोरेवादेशो मा विज्ञायेति ॥ पूर्वसवर्णौत्ङिसर्वनामस्थानगुणानामपवादः ॥

## जराया जरसन्यतरस्यां ॥१०१॥

जरा । इत्येतस्याजादौ विभक्तौ परतो वा जरस् । इत्येष आदेशः स्यात् ॥ जरसा । जरया । जरसे । जरायै ॥ अजादौ किं । जराभ्यां । जराभिः ॥ तदन्तस्यापि । निर्जरः । निर्जरसौ । निर्जरौ । निर्जरसः । निर्जराः ॥ अतिजरं कुलं । अतिजरसी । अतिजरे । अतिजरांसि । अतिजराणि ॥

## त्यदादीनामः ॥१०२॥

त्यद् । इत्येवमादीनां सर्वादिगणपठितानां विभक्तौ परतः । अ । इत्येषो ऽन्तादेशः स्यात् ॥ त्यद् । स्यः । त्यौ । त्ये ॥ तद् । सः । तौ । ते ॥ यद् । यः । यौ । ये ॥ एतद् । एषः । एतौ । एते ॥ इदं । अयं । इमौ । इमे ॥ अदस् । असौ । अमू । अमी ॥ द्वि । द्वौ । द्वाभ्यां । द्वयोः ॥ संज्ञोपसर्जनयोस्तु न भवति । त्यद् । त्यदौ । अतित्यद् । अतित्यदौ ॥

## किमः कः ॥१०३॥

किं । इत्येतस्य विभक्तौ परतः क । इत्येष आदेशः स्यात् ॥ कः । कौ । के ॥ साकचो ऽप्ययमादेशो भवति ॥

## कु तिहोः ॥१०४॥

किं । इत्येतस्य त् । ह् । इत्येतदादौ विभक्तौ परतः कु । इत्येष आदेशः स्यात् ॥ कुतः । कुत्र । कुह ॥ तकार हकार उच्चारणार्थः ॥

## क्वाति ॥१०५॥

किं । इत्येतस्य अत् । इत्येतस्मिन् विभक्तिसंज्ञके प्रत्यये परतः कु । इत्येष आदेशः स्यात् ॥ क्व गमिष्यसि ॥ साकचो ऽप्ययमादेशः ॥ ओर्गुणनिवृत्त्यर्थं कुरादेशो न विहितः ॥

## तदोः सः सावनन्त्ययोः ॥१०६॥

त् । द् । इत्येतयोस्त्यदादीनामवयवयोरनन्त्ययोः सुविभक्तौ परतः स् । इत्येष आदेशः स्यात् ॥ त्यद् । स्यः ॥ तद् । सः ॥ एतद् । एषः ॥ अदस् । असौ ॥ अनन्त्ययोः किं । हे स । या । सा ॥ अत्वस्यान्यत्र सावकाशत्वात् सौ परत्वात् सत्वे ह्रस्वान्तत्वाभावात् संबुद्धिलोपो ऽदन्तत्वाभावाट्टाप् च न स्यात् ॥

## अदस औ सुलोपश्च ॥१०७॥

अदस् । इत्येतस्य सुविभक्तौ परत औ । इत्येषो ऽन्तादेशः स्यात् । सु । इत्येतस्य च लोपः स्यात् ॥ असौ ॥

## इदमो मः ॥१०८॥

इदं । इत्येतस्य सौ परतो म् । इत्येषो ऽन्तादेशः स्यात् ॥ अयं । इयं । त्यदाद्यत्वबाधनार्थं मकारस्य मकारादेशविधानं ॥

## दश्च ॥१०९॥

इदं । इत्येतदवयवस्य द् । इत्येतस्य विभक्तौ परतो म् । इत्येष आदेशः स्यात् ॥ इमौ । इमे । इमं । इमौ । इमान् ॥

## यः सौ ॥११०॥

इदं । इत्येतदवयवस्य द् । इत्येतस्य सौ परतो य् । इत्येष आदेशः स्यात् ॥ इयं ॥ स्त्रियामयं यकारादेश उत्तरसूत्रे पुंसीत्युक्तेः ॥

## इदो ऽय् पुंसि ॥१११॥

इदं । इत्येतदवयवस्य इद् । इत्येतस्य पुंलिङ्गे सौ परतो ऽय् । इत्येष आदेशः स्यात् ॥ अयं पुरुषः ॥ पुंसि किं । इयं स्त्री ॥

## अनाप्यकः ॥११२॥

अककारस्येदमो ऽवयवस्य इद् । इत्येतस्य तृतीयादौ विभक्तौ परतो ऽन् । इत्येष आदेशः स्यात् ॥ अनेन । अनयोः ॥ अकः किं । इमकेन । इमकयोः ॥ तृतीयैकवचनादारभ्य सप्तमीबहुवचनपकारेणाप् प्रत्याहारः ॥

## हलि लोपः ॥११३॥

अककारस्येदमो ऽवयवस्य इद् । इत्येतस्य तृतीयादौ हलादौ विभक्तौ परतो लोपः स्यात् ॥ आभ्यां । एभिः ॥ नानर्थक इत्यलो ऽन्त्यविधिप्रतिषेधादिदो लोपः ॥

## मृजेर्वृद्धिः ॥११४॥

मृज् । इत्येतस्याङ्गस्येको वृद्धिः स्यात् ॥ मार्ष्टा । मार्ष्टुं । मार्ष्टव्यं ॥

## अचो ञ्णिति ॥११५॥

अच्प्रत्याहारान्तस्याङ्गस्य ञ् । ण् । इत्येतदित्संज्ञके प्रत्यये परे वृद्धिः स्यात् ॥ ञित् । एकस्तण्डुलनिचायः । द्वौ शूर्पनिष्पावौ ॥ कारः । हारः ॥ णित् । गौः । गावौ । गावः ॥ सखायौ । सखायः ॥ चायकः । लावकः । कारकः ॥

## अत उपधायाः ॥११६॥

अङ्गावयवस्योपधासंज्ञकस्य अ । इत्येतस्य ञिति णिति च प्रत्यये परे वृद्धिः स्यात् ॥ ञिति । पाकः । पाठः । त्यागः । यागः । रागः ॥ णिति । पाचयति । पाठयति । पाचकः । पाठकः ॥ अतः किं । भेदः । भेदकः ॥ उपधायाः किं । चकामयति ॥

## तद्धितेष्वचामादेः ॥११७॥

ञिति णिति च तद्धिते परे ऽङ्गस्याच्समुदायस्यादेरचो वृद्धिः स्यात् ॥ ञिति । यञ् । गार्ग्यः । ष्फञ् । आश्वायनः । फिञ् । तैकायनिः ॥ णिति । अण् । औपगवः ॥ आदिवृद्धिरन्त्योपधावृद्धिं बाधते ॥

## किति च ॥११८॥

क् । इत्येतदित्संज्ञके तद्धिते परे ऽङ्गस्याचामादेरचो वृद्धिः स्यात् ॥ फक् । नाडायनः ॥ ठक् । आक्षिकः ॥

॥ इति सूत्रपाठे सप्तमाध्यायस्य द्वितीयः पादः ॥

## देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् ॥ १ ॥

देविका । शिंशपा । दित्यवाट् । दीर्घसत्र । श्रेयस् । इत्येतेषामचामादेरचः स्थाने वृद्धिप्रसङ्गे । आ । इत्येष आदेशः स्यात् । ञिति णिति किति च तद्धिते परे ॥ देविकायां भवं । दाविकमुदकं । देविकाकूले भवाः । दाविककूलाः शालयः । पूर्वदेविका नाम प्राचां ग्रामस्तत्र भवः । पूर्वदाविकः । प्राचां ग्रामनगराणामित्युत्तरपदवृद्धिप्रसङ्ग आकारः ॥ शिंशपाया विकारः । शांशपश्चमसः । शिंशपास्थले भवाः । शांशपस्थलाः । पूर्वशांशपः ॥ दित्यौह इदं । दात्यौहं ॥ दीर्घसत्रे भवं । दार्घसत्रं ॥ श्रेयसि भवं । श्रायसं ॥

## केकयमित्रयुप्रलयानां यादेरियः ॥ २ ॥

केकय । मित्रयु । प्रलय । इत्येतेषां य् । इत्येतदादेरवयवस्य इय् । इत्येष आदेशः स्यात् । ञिति णिति किति च तद्धिते परे ॥ केकयस्यापत्यं । कैकेयः । जनपदलक्षणो ऽञ् ॥ मैत्रेयिकया श्लाघते । गोत्रचरणादिति वुञ् ॥ प्रलयादागतं । प्रालेयमुदकं ॥

## न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ॥ ३ ॥

य् । व् । इत्येताभ्यां पदान्ताभ्यां परस्याचामादेरचो वृद्धिर्न स्यात् । किं तु य् । व् । इत्येताभ्यां पूर्वौ क्रमात् । ऐ । औ । इत्येतावागमौ भवतः ॥ य् । व्यसने भवं । वैयसनं ॥ व्याकरणमधीते । वैयाकरणः ॥ व् । स्वश्वस्यापत्यं । सौवश्वः ॥ य्वाभ्यां किं । नार्घिः ॥ पदान्ताभ्यां किं । याटीकः । वासिष्ठः ॥

## द्वारादीनां च ॥ ४ ॥

द्वार । इत्येवमादीनां शब्दानां य्वाभ्यां परस्याचामादेरचः स्थाने वृद्धिर्न स्यात् । किं तु य् व् । इत्येताभ्यां पूर्वौ क्रमेण । ऐ । औ । इत्येतावागमौ भवतः ॥ स्वरे भवः । सौवरः ॥ व्यल्कशे भवः । वैयल्कशः ॥ द्वारे नियुक्तः । दौवारिकः ॥

## न्यग्रोधस्य च केवलस्य ॥ ५ ॥

न्यग्रोध । इत्येतस्य केवलस्य यकारात् परस्याचामादेरचः स्थाने वृद्धिर्न स्यात् ।

किं तु य् । इत्येतस्मात् पूर्व ऐ । इत्येष आगमः स्यात् ॥ न्यग्रोधस्य विकारः । नैयग्रोधः ॥ केवलस्य किं । न्यग्रोधमूले भवाः । न्याग्रोधमूलाः शालयः ॥ व्युत्पत्तिपक्षे नियमार्थमव्युत्पत्तिपक्षे विध्यर्थमिदं सूत्रं ॥

## न कर्मव्यतिहारे ॥६॥

कर्मव्यतिहारे वृद्धिनिषेध ऐजागमश्च न स्यात् ॥ व्यावक्रोशी । व्यावहासी ॥ कर्मव्यतिहारणजन्तात्स्त्रियामित्यञ् ॥

## स्वागतादीनां च ॥७॥

स्वागत । इत्येवमादीनां वृद्धिनिषेध ऐजागमश्च न स्यात् ॥ स्वागतमित्याह । स्वागतिकः ॥ स्वाध्वरिकः । स्वाङ्गिः । व्याङ्गिः । व्याडिः । व्यावहारिकः । स्वापतेयं ॥

## श्वादेरिञि ॥८॥

श्वन् । इत्येवमादेरङ्गस्य इञ्प्रत्यये परे वृद्धिप्रतिषेध ऐजागमश्च न स्यात् ॥ श्वाभस्त्रिः । श्वादंष्ट्रिः ॥ श्वन्शब्दस्य द्वारादिषु पाठादैच् प्राप्तः प्रतिषिध्यते ॥

## पदान्तस्यान्यतरस्यां ॥९॥

श्वन् । इत्येतदादेः पदं । इत्येतदन्तस्याङ्गस्य वा ऐजागमो न स्यात् ॥ श्वापदस्येदं । श्वापदं । शौवापदं ॥

## उत्तरपदस्य ॥१०॥

अधिकारोऽयं ॥ इत ऊर्ध्वं यदनुक्रमिष्याम उत्तरपदस्येत्येवं तद्वेदितव्यं ॥ वक्ष्यति । अवयवादृतोः । पूर्ववार्षिकं । अपरहैमनं ॥ यत्र पञ्चमीनिर्देशो नास्ति तदर्थमुत्तरपदाधिकारः । जे प्रोष्ठपदानां । प्रोष्ठपदासु जातः । प्रोष्ठपादो ब्राह्मणः ॥ एनस्त इत्येतस्मात् प्रागुत्तरपदाधिकारः ॥

## अवयवादृतोः ॥११॥

अवयववाचिनः परस्य ऋतुवाचिन उत्तरपदस्याचामादेरचो वृद्धिः स्यात् । ञिति णिति किति च तद्धिते परे ॥ पूर्ववार्षिकं । अपरहैमनं ॥ अवयवात् किं । पूर्वासु वर्षासु भवं । पौर्ववर्षिकं ॥

## सुसर्वार्धाज्जनपदस्य ॥ १२ ॥

सु । सर्व । अर्ध । इत्येतेभ्यः परस्य जनपदवाचिन उत्तरपदस्याचामादेरचो वृद्धिः स्यात् । ञिति णिति किति च तद्धिते परे ॥ सु । सुपाञ्चालकः ॥ सर्व । सर्वपाञ्चालकः ॥ अर्ध । अर्धपाञ्चालकः ॥

## दिशोऽमद्राणां ॥ १३ ॥

दिग्वाचिनः परस्य मद्रवर्जितस्य जनपदवाचिन उत्तरपदस्याचामादेरचो वृद्धिः स्यात् । ञिति णिति किति च तद्धिते परे ॥ पूर्वपाञ्चालकः । अपरपाञ्चालकः । दक्षिणपाञ्चालकः ॥ दिशः किं । पूर्वः पञ्चालानां । पूर्वपञ्चालः । तत्र भवः । पौर्वपञ्चालकः ॥ अमद्राणां किं । पौर्वमद्रः ॥

## प्राचां ग्रामनगराणां ॥ १४ ॥

प्राचां देशे ग्रामवाचिनामनगराणामवयवस्य दिग्वाचिनः पूर्वपदात् परस्योत्तरपदस्य । तथा नगरवाचिनां च दिग्वाचिनः परेषामचामादेरचो वृद्धिः स्यात् । ञिति णिति किति च तद्धिते परे ॥ ग्रामवाचिनां । पूर्वेषुकामशम्यां भवः । पूर्वैषुकामशमः ॥ नगराणां । पूर्वपाटलिपुत्रकः । अपरकान्यकुब्जः ॥ अत्र दिक्पूर्वपदो हि समुदायो ग्रामनामधेयं । उत्तरपदमात्रं तु नगरवाचि ॥

## संख्यायाः संवत्सरसंख्यस्य च ॥ १५ ॥

संख्यावाचिनः परस्य संवत्सर । इत्येतस्य संख्यावाचिनश्चोत्तरपदस्याचामादेरचो वृद्धिः स्यात् । ञिति णिति किति च तद्धिते परे ॥ संवत्सर । द्विसांवत्सरिकः । त्रिसांवत्सरिकः ॥ संख्या । द्विषाष्टिकः । द्विसाप्ततिकः ॥ संख्येये कालवाच्यत्र संख्याशब्दः । परिमाणान्तस्येत्येव सिद्धे संवत्सरग्रहणं परिमाणग्रहणे कालपरिमाणस्याग्रहणार्थं । तेन द्वैसमिक इत्यत्रोत्तरपदवृद्धिर्न भवति ॥

## वर्षस्याभविष्यति ॥ १६ ॥

वर्ष । इत्येतस्य संख्यावाचिनः परस्याचामादेरचो वृद्धिः स्यात् । ञिति णिति किति च तद्धिते परे । स चेत् तद्धितो भविष्यत्यर्थे न भवति ॥ द्वे वर्षे अधीष्टो भृतो भूतो वा । द्विवार्षिकः ॥ अभविष्यति किं । त्रीणि वर्षाणि भावि । त्रैवर्षिकं धान्यं ॥ अधीष्टे भृते चाभविष्यतीति न निषेधः । गम्यते हि तत्र भविष्यत्ता न तु तद्धितार्थः ॥

## परिमाणान्तस्यासंज्ञाशाणयोः ॥ १७ ॥

परिमाणान्तस्याङ्गस्य संख्यावाचिनः परस्योत्तरपदस्याचामादेरचो वृद्धिः स्यात् । ञिति णिति किति च तद्धिते परे । संज्ञाविषये शाण । इत्येतस्मिन्नुत्तरपदे च न भवति ॥ द्विकौडविकः । द्विसौवर्णिकं ॥ असंज्ञाशाणयोः किं । पाञ्चलोहितिकं । द्वैशाणं । त्रैशाणं ॥

## जे प्रोष्ठपदानां ॥ १८ ॥

जातार्थे ञिति णिति किति च तद्धिते परे प्रोष्ठपदा । इत्येतस्योत्तरपदस्याचामादेरचो वृद्धिः स्यात् ॥ प्रोष्ठपदासु जातः । प्रोष्ठपादो माणवकः । संधिवेलेत्यण् ॥ बहुवचनात् पर्यायो ऽपि गृह्यते । भद्रपादः ॥ जे किं । प्रोष्ठपदासु भवः । प्रौष्ठपदः ॥

## हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ॥ १९ ॥

हृद् । भग । सिन्धु । इत्येतदन्ते ऽङ्गे पूर्वपदस्योत्तरपदस्य चाचामादेरचो वृद्धिः स्यात् । ञिति णिति किति च तद्धिते परे ॥ हृद् । सुहृदयस्य भावः । सौहार्दं ॥ सुभग । सौभाग्यं । सौभागिनेयः । कल्याण्यादिषु पाठाड्ढक्प्रत्यय इनङादेशश्च ॥ सिन्धु । सक्तुसिन्धुषु भवः । साक्तुसैन्धवः । पानसैन्धवः । सिन्धुशब्दस्य कच्छादिपाठादण् ॥

## अनुशतिकादीनां च ॥ २० ॥

अनुशतिक । इत्येवमादीनामङ्गानां ञिति णिति किति च तद्धिते परे पूर्वोत्तरपदयोरचामादेरचो वृद्धिः स्यात् ॥ अनुशतिकस्येदं । आनुशातिकं ॥

## देवताद्वन्द्वे च ॥ २१ ॥

देवतावाचिनां द्वन्द्वे पूर्वोत्तरपदयोरचामादेरचो वृद्धिः स्यात् । ञिति णिति किति च तद्धिते परे ॥ आग्निमारुतं ॥ लोकवेदयोः प्रसिद्धसाहचर्याणां द्वन्द्व इह गृह्यते । इह तु न भवति । स्कान्दविशाखः । ब्राह्मप्राजापत्यं ॥

## नेन्द्रस्य परस्य ॥ २२ ॥

इन्द्र । इत्येतस्य परपदस्थस्य देवताद्वन्द्वे ऽचामादेर्वृद्धिर्न स्यात् ॥ सौमेन्द्रः । आग्नेन्द्रः ॥ परस्य किं । ऐन्द्राग्नः ॥

## दीर्घाच्च वरुणस्य ॥ २३ ॥

वरुण । इत्येतस्य दीर्घान्तात् पदात् परस्य देवताद्वन्द्वे वर्तमानस्य वृद्धिर्न स्यात् ॥ ऐन्द्रावरुणं । मैत्रावरुणं ॥ दीर्घात् किं । आग्निवारुणं ॥

## प्राचां नगरान्ते ॥ २४ ॥

प्राचां देशे नगर । इत्येतदन्तस्याङ्गस्य पूर्वोत्तरपदयोरचामादेरचो वृद्धिः स्यात् । ञिति णिति किति च तद्धिते परे ॥ सौह्मनागरः । पौण्ड्रनागरः ॥ प्राचां किं । मद्रनगरमुत्तरदेशे । तत्र भवः । माद्रनगरः ॥

## जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरं ॥ २५ ॥

जङ्गल । धेनु । वलज । इत्येतदन्तस्याङ्गस्य पूर्वपदस्याचामादेरचो वृद्धिः स्यात् । उत्तरपदस्य तु वा वृद्धिः स्यात् । ञिति णिति किति च तद्धिते परे ॥ कौरुजाङ्गलं । कौरुजङ्गलं ॥ वैश्वधैनवं । वैश्वधेनवं ॥ सौवर्णवा-लजं । सौवर्णवलजं ॥

## अर्धात् परिमाणस्य पूर्वस्य तु वा ॥ २६ ॥

अर्ध । इत्येतस्मात् परस्य परिमाणवाचिन उत्तरपदस्याचामादेरचो वृद्धिः स्यात् । पूर्वपदस्य तु वा वृद्धिः । ञिति णिति किति च तद्धिते परे ॥ आर्धद्रौणिकं । अर्धद्रौणिकं । आर्धकौडविकं । अर्धकौडविकं ॥ परिमाणस्य किं । आर्धक्रोशिकं ॥

## नातः परस्य ॥ २७ ॥

अर्ध । इत्येतस्मात् परस्य परिमाणावयवस्य अ । इत्येतस्य वृद्धिर्न स्यात् । पूर्वपदस्य तु वा ञिति णिति किति च तद्धिते परे ॥ आर्धप्रस्थिकः । अर्धप्रस्थिकः ॥ आर्धकंसिकः । अर्धकंसिकः ॥ अतः किं । आर्धकौडविकः ॥ तपरकरणं किं । अर्धखारीभार्यः । अत्र वृद्धिनिमित्तस्येति पुंवद्भावनिषेधो न स्यात् ॥

## प्रवाहणस्य ढे ॥ २८ ॥

प्रवाहण । इत्येतस्योत्तरपदस्याचामादेरचो वृद्धिः स्यात् । पूर्वपदस्य तु वा ढक्प्रत्यये परे ॥ प्रावाहणेयः । प्रवाहणेयः । शुभ्रादित्वाड्ढक्प्रत्ययः ॥

## तत्प्रत्ययस्य च ॥२९॥

ठक्प्रत्ययान्तस्य प्रवाहण । इत्येतस्योत्तरपदस्याचामादेरचो वृद्धिः स्यात् । पूर्वपदस्य तु वा ञिति णिति किति च तद्धिते परे ॥ प्रावाहणेयिः । प्रवाहणेयिः ॥ प्रावाहणेयकं । प्रवाहणेयकं ॥ वाह्यतद्धितनिमित्ता वृद्धिर्ठाश्रयेण विकल्पेन बाधितुं न शक्यत इति सूत्रारम्भः ॥

## नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानां ॥३०॥

शुचि । ईश्वर । क्षेत्रज्ञ । कुशल । निपुण । इत्येतेषां नञः परेषामचामादेरचो वृद्धिः स्यात् । पूर्वपदस्य तु वा ञिति णिति किति च तद्धिते परे ॥ शुचि । आशौचं । अशौचं ॥ ईश्वर । आनैश्वर्यं । अनैश्वर्यं ॥ क्षेत्रज्ञ । आक्षैत्रज्ञं । अक्षैत्रज्ञं ॥ कुशल । आकौशलं । अकौशलं ॥ निपुण । आनैपुणं । अनैपुणं ॥

## यथातथयथापुरयोः पर्यायेण ॥३१॥

यथातथ । यथापुर । इत्येतयोर्नञः परयोः पर्यायेण पूर्वोत्तरपदयोरचामादेरचो वृद्धिः स्यात् । ञिति णिति किति च तद्धिते परे ॥ आयथातथ्यं । अयाथातथ्यं ॥ आयथापुर्यं । अयाथापुर्यं ॥ अव्ययीभावसमासावेतौ । यथातथशब्दे नपुंसकाश्रयं ह्रस्वत्वं । ब्राह्मणादित्वात् ष्यञ् ॥

## हनस्तोऽचिण्णलोः ॥३२॥

हन । इत्येतस्य धातोर्ञिति णिति प्रत्यये परे त् । इत्येष आदेशः स्यात् । चिण् । णल् । इत्येतयोः परयोर्न भवति ॥ ञिति । घातः ॥ णिति । घातकः । घातं घातं । घातयति ॥ अचिण्णलोः किं । अघानि । जघान ॥

## आतो युक् चिण्कृतोः ॥३३॥

घां । इत्येतदन्तस्याङ्गस्य चिणि ञिति णिति कृति च परे युक् । इत्येष आगमः स्यात् ॥ चिणि । अदायि । अधायि ॥ ञिति कृति । दायः । धायः ॥ णिति कृति । दायकः । धायकः ॥ चिण्कृतोः किं । ददौ । दधौ ॥

## नोदात्तोपदेशस्य मान्तस्यानाचमेः ॥३४॥

उदात्तोपदेशस्य म् । इत्येतदन्तस्याङ्गस्य चिणि । ञिति णिति कृति च परे उपधाभूतस्य अ । इत्येतस्य वृद्धिर्न स्यात् । आङ्पूर्वस्य चमु । इत्येतस्य निषेधो न भवति ॥ चिणि । अशमि । अतमि । अदमि ॥ ञिति कृति । शमः । तमः । दमः ॥ णिति कृति । शमकः । तमकः । दमकः ॥ उदात्तोपदेशस्य किं । यामकः । रामकः ॥ कयमुपमः । उपरमः । अउ उयमे । यम उपरमे । इत्येतन्निर्देशात् ॥ उपदेशग्रहणं किं । वामकः । रामकः । लित्स्वरे कृते संप्रत्युदात्तत्वात् ॥ मान्तस्य किं । चारकः । पाठकः ॥ अनाचमेः किं । आचामकः ॥ चिण्कृतोरित्येव । शशाम । तताम ॥

## जनिवध्योश्च ॥ ३५ ॥

जनी । वध । इत्येतयोश्चिणि । ञिति णिति कृति च परे उपधाभूतस्य अ । इत्येतस्य वृद्धिर्न स्यात् ॥ चिणि । अजनि । अवधि ॥ ञिति कृति । प्रजनः । वधः ॥ णिति कृति । जनकः । वधकः ॥ वध इति धात्वन्तरं हनादेशस्यादन्तत्वादेव वृद्धेरभावः ॥ चिण्कृतोरित्येव । जजान गर्भं महिमानमिन्द्रं ॥

## अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ ॥ ३६ ॥

ऋ । ह्री । व्ली । रीङ् । क्नूयी । क्ष्मायी । इत्येतेषां । आ । इत्येतदन्तानां चाङ्गानां णौ परे पुक् । इत्येष आगमः स्यात् ॥ ऋ । अर्पयति ॥ ह्री । ह्रेपयति ॥ व्ली । व्लेपयति ॥ रीङ् । रेपयति ॥ क्नूयी । क्नोपयति ॥ क्ष्मायी । क्ष्मापयति ॥ आदन्तानां । दापयति । धापयति ॥ इङ् । अध्यापयति ॥ ज्ञि । ज्ञापयति ॥ क्रीङ्जीनां णावित्यात्वं ॥ ऋ गतिप्रापणयोः । ऋ गतौ । इत्येतद्द्वयमपि ग्राह्यं ॥ रीङ् गतिरेषणयोः । रीङ् श्रवणे । इत्येतद्द्वयमपि गृह्यते ॥ पुकः पूर्वान्तत्वमदीपपदित्यत्रोपधाह्रस्वार्थं ॥

## शाच्छासाह्वाव्यावेपां युक् ॥ ३७ ॥

शो । छो । षो । ह्वेञ् । व्येञ् । वेञ् । पा । इत्येतेषां णौ परे युक् । इत्येष आगमः स्यात् ॥ शो । शाययति ॥ छो । छाययति ॥ षो । साययति ॥ ह्वेञ् । ह्वाययति ॥ व्येञ् । व्याययति ॥ वेञ् । वाययति ॥ पा । पै । इत्येतदुभयं गृह्यते । अदादिः पा इत्येष तु लुग्विकरणत्वान्न गृह्यते । पाययति ॥

## वो विधूनने जुक् ॥३८॥

वा । इत्येतस्य धातोः कम्पने ऽर्थे णौ परे जुक् । इत्येष आगमः स्यात् ॥ वाजयति पक्षेण ॥ विधूनने किं । वापयति केशान् ॥ वजधातोर्वाजयतीत्यादि सिद्धे वै । इत्येतस्य पुग्मा भूदिति सूत्रं ॥

## लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने ॥३९॥

ली । ला । इत्येतयोर्धात्वोर्णौ परे स्नेहविपातने ऽर्थे क्रमेण नुक् । लुक् । इत्येतावागमौ वा भवतः ॥ ली । लीङ् । एतयोर्द्वयोर्ग्रहणं । विलीनयति घृतं । विलाययति । लीई । इतीकारप्रश्लेषादात्वपक्षे न नुक् । विलापयति घृतं ॥ ला इत्येतस्य लीयतेः कृतात्वस्य च ग्रहणं । विलालयति । विलापयति । विलाययति ॥ स्नेहविपातने किं । जतु विलाययति । जटाभिर्लापयते ॥

## भियो हेतुभये षुक् ॥४०॥

ञिभी । इत्येतस्य धातोर्णौ परे षुक् । इत्येष आगमः स्यात् । प्रयोजकाद्भय चेत् ॥ जटिलो भीषयते ॥ भीई इतीकारप्रश्लेषादात्वपक्षे न षुक् । जटिलो भापयते ॥ हेतुभये किं । कुञ्चिकयैनं भाययति । अत्र कुञ्चिकैव भयहेतुर्न तु प्रयोजकः ॥

## स्फायो वः ॥४१॥

स्फायी । इत्येतस्य धातोर्णौ परे व् । इत्येष आदेशः स्यात् ॥ स्फावयति ॥

## शदेरगतौ तः ॥४२॥

शद्लृ । इत्येतस्य धातोर्णौ परे गतिभिन्ने ऽर्थे त् । इत्येष आदेशः स्यात् ॥ शातयति पुष्पाणि ॥ अगतौ किं । गाः शादयति गोपालः । गमयतीत्यर्थः ॥

## रुहः पो ऽन्यतरस्यां ॥४३॥

रुह् । इत्येतस्य धातोर्णौ परे प् । इत्येष आदेशो वा स्यात् ॥ रोपयति व्रीहीन् । रोहयति व्रीहीन् ॥

## प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः ॥४४॥

प्रत्ययस्थात् क् । इत्येतस्मात् पूर्वस्य अ । इत्येतस्य आपि परे । इ । इत्येष आदेशः स्यात् । स आप् सुपः परो यदि न भवति ॥ सर्विका । कारिका ॥ प्रत्ययस्थात् किं । शक्नोतीति । शका ॥ स्थग्रहणं विस्पष्टार्थं । ककारमात्रस्य प्रत्ययस्याभावात् ॥ कात् किं । नन्दना ॥ पूर्वस्य किं । बहुका । परस्य मा भूत् ॥ अतः किं । नौका ॥ तपरकरणं किं । राका ॥ आपि किं । कारकः ॥ असुपः किं । बहुपरिव्राजका नगरी । बहवः परिव्राजका अस्यामिति विगृह्य सुबन्तादयं टाप् ॥

## न यासयोः ॥ ४५ ॥

यद् । तद् । इत्येतयोरवयवस्य अ । इत्येतस्य । इ । इत्येष आदेशो न स्यात् ॥ यद् । यका । यके । यकाः । यकां ॥ तद् । सका । सके । सकाः । सकां ॥

## उदीचामातः स्थाने यकपूर्वायाः ॥ ४६ ॥

आ । इत्येतस्य य् । क् । इत्येवंपूर्वकस्य स्त्रीप्रत्ययस्य स्थाने योऽकारस्तस्यापि परे । इ । इत्येष आदेशो वा स्यात् ॥ यपूर्व । इभ्यिका । इभ्यका । क्षत्रियिका । क्षत्रियका ॥ कपूर्व । चटकिका । चटकका । मूषिकिका । मूषिकका ॥ आतः किं । सांकाश्यिका ॥ स्थानेग्रहणं स्पष्टार्थं ॥ यकपूर्वायाः किं । अश्विका ॥ स्त्रीलिङ्गनिर्देश आकारस्य स्त्रीबोधकस्य परिग्रहार्थः । इह न भवति । अज्ञाता शुभंयाः । शुभंयिका ॥

## भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि ॥ ४७ ॥

भस्त्रा । एषा । अजा । ज्ञा । द्वा । स्वा । इत्येतेषां नञ्पूर्वाणां चैतेषामातः स्थानिकस्य अ । इत्येतस्य इ । इत्येष आदेशो वा स्यात् । आपि परे । स आप् सुपः परो न चेत् ॥ भस्त्राग्रहणमुपसर्जनार्थं । भस्त्रा । निर्भस्त्रिका । निर्भस्त्रका । अभस्त्रिका । अभस्त्रका ॥ एषा । एषिका । एषका । नञ्पूर्वस्य तु नायं विकल्पो ऽसुप इति निषेधात् ॥ अजा । अजिका । अजका । अनजिका । अनजका ॥ ज्ञा । ज्ञिका । ज्ञका । अज्ञिका । अज्ञका ॥ द्वा । द्विके । द्वके । नञ्पूर्वस्य तु न भवति । असुप इति निषेधात् ॥ स्वा । स्विका । स्वका । अस्विका । अस्वका ॥ आतः स्थान इति पूर्वसूत्रादत्रानुवर्तते । तच्च स्वशब्दाकारस्य विशेषणं । न तु द्व्येतच्छब्दयोरसंभवात् ।

अव्यभिचारादन्येषामपि न विशेषणं । आत्मीयवाचिन्यनुपसर्जने स्वशब्दे ऽकचा भाव्यं । अर्थान्तरे तु स्त्रीत्वमेव नास्ति । संज्ञायामुपसर्जनत्वे च कप्प्रत्ययान्तत्वादातः स्थानिकाकारसंभवादेतेनेत्वविकल्पः ॥ तदन्तस्यापि । बहुभस्त्रिका । बहुभस्त्रका ॥ नञ्पूर्वाणामपीति स्पष्टार्थं ॥

## अभाषितपुंस्काच्च ॥४८॥

अभाषितपुंस्काद्विहितस्यातः स्थाने यो ऽकारस्तस्य कात् पूर्वस्यापि परे इ । इत्येष आदेशो वा स्यात् ॥ खट्विका । खट्वका । अखट्विका । अखट्वका । परमखट्विका । परमखट्वका ॥ बहुव्रीहेर्भाषितपुंस्कत्वात् ततो विहितस्य नित्यं । अखट्विका ॥ शेषाधीकारीये कपि तु विकल्पः । अखट्वका । अखट्विका ॥

## आदाचार्याणां ॥४९॥

अभाषितपुंस्काद्विहितस्यातः स्थाने यो ऽकारस्तस्यापि परे । आ । इत्येष आदेशो वा स्यात् ॥ खट्वाका । अखट्वाका । परमखट्वाका ॥ पक्षे पूर्वसूत्रेणेत्वविकल्पः । तेन त्रैरूप्यं । खट्विका । खट्वका । इत्यादि ॥

## ठस्येकः ॥५०॥

अङ्गसंज्ञकात् परस्य ठ । इत्येतस्य प्रत्ययस्य इक । इत्येष आदेशः स्यात् ॥ ठक् । आक्षिकः ॥ ठञ् । लावणिकः ॥ ष्ठल् । आकर्षिकः ॥ ष्ठन् । पर्षिकः ॥ ञिठ । काशिका ॥ टिठन् । अर्धिकः ॥ ठच् । देविकः ॥

## इसुसुक्तान्तात् कः ॥५१॥

इस् । उस् । उक् । त् । इत्येतदन्तादङ्गात् परस्य ठ । इत्येतस्य क । इत्येष आदेशः स्यात् ॥ इस् । सर्पिष् । सार्पिष्कः ॥ उस् । धनुस् । धानुष्कः ॥ उक्प्रत्याहारान्तात् । नैषादकर्षुकः । मातृकं ॥ तान्तात् । औदश्वित्कः । शाकृत्कः । याकृत्कः ॥ इसुसौ प्रतिपदोक्तौ गृह्येते । न तु लाक्षणिकौ । तेनेह न । आशिषिकः । यौषिकः ॥

## चजोः कु घिण्यतोः ॥५२॥

च् । ज् । इत्येतयोः कवर्गादेशः स्यात् । घकारेत्संज्ञके प्रत्यये ण्यत्प्रत्यये च

परे ॥ घित् । त्यागः । रागः । भागः ॥ ण्यत् । वाक्यं । पाक्यं ॥ चजो-र्घिण्ण्यतोश्च न यथासंख्यं । तेन रक्तं रागादिति सूत्रनिर्देशात् ॥

## न्यङ्क्वादीनां च ॥ ५३ ॥

न्यङ्कु । इत्येवमादीनां सिद्धये कवर्गादेशः स्यात् ॥ न्यङ्कुः । नावञ्चेरित्यौणा-दिकसूत्रेण उप्रत्ययः ॥ मद्गुः । भृगुः ॥

## हो हन्तेर्ञ्णिन्नेषु ॥ ५४ ॥

हन् । इत्येतस्य धातोरवयवस्य ह् । इत्येतस्य ञिति णिति प्रत्यये परे नकारे च परे कवर्गादेशः स्यात् ॥ ञित् । घातः ॥ णित् । घातयति । घातकः । घातं घातं ॥ न् । घ्नन्तिः । घ्नन्तु । अघ्नन् । वृत्रघ्नः ॥ हः किं । नका-रस्य मा भूत् ॥ हन्तेः किं । प्रहारः । प्रहारकः ॥

## अभ्यासाच्च ॥ ५५ ॥

अभ्यासात् परस्य हन्तेर्हकारस्य प्रत्यये परे कवर्गादेशः स्यात् ॥ जघान । जि-घांसति । जङ्घन्यते ॥

## हेरचङि ॥ ५६ ॥

हि । इत्येतस्य स्वादिगणपठितस्य धातोरभ्यासात् परस्य ह् । इत्येतस्य कव-र्गादेशः स्यात् । न तु चङ्प्रत्यये परे ॥ प्रजिघाय । प्रजिघीषति । प्रजेघीयते ॥ अचङि किं । प्राजीहयत् ॥

## सन्लिटोर्जेः ॥ ५७ ॥

जि । इत्येतस्य धातोरभ्यासात् परस्य सन्लिटोः परयोः कवर्गादेशः स्यात् ॥ सनि । जिगीषति ॥ लिटि । जिगाय ॥ सन्लिटोः किं । जेजीयते ॥

## विभाषा चेः ॥ ५८ ॥

चिञ् । इत्येतस्य धातोरभ्यासात् परस्य सन्लिटोः परयोः कवर्गादेशो वा स्यात् ॥ सनि । चिकीषति । चिचीषति ॥ लिटि । चिकाय । चिचाय ॥ सन्लिटोः किं । चेचीयते ॥

## न क्वादेः ॥ ५९ ॥

अव्यभिचारादन्येषामपि न विशेषणं । आत्मीयवाचिन्यनुपसर्जने स्वशब्दे ऽकचा भाव्यं । अर्थान्तरे तु स्त्रीत्वमेव नास्ति । संज्ञायामुपसर्जनत्वे च कप्प्रत्ययान्तत्वादातः स्थानिकाकारसंभवादेतेनेत्वविकल्पः ॥ तदन्तस्यापि । बहुभस्त्रिका । बहुभस्त्रका ॥ नञ्पूर्वाणामपीति स्पष्टार्थं ॥

## अभाषितपुंस्काच्च ॥४८॥

अभाषितपुंस्काद्विहितस्यातः स्थाने यो ऽकारस्तस्य कात् पूर्वस्यापि परे इ । इत्येष आदेशो वा स्यात् ॥ खट्विका । खट्वका । अखट्विका । अखट्वका । परमखट्विका । परमखट्वका ॥ बहुव्रीहेर्भाषितपुंस्कत्वात् ततो विहितस्य नित्यं । अखट्विका ॥ शेषाधीकारीये कपि तु विकल्पः । अखट्वका । अखट्विका ॥

## आदाचार्याणां ॥४९॥

अभाषितपुंस्काद्विहितस्यातः स्थाने यो ऽकारस्तस्यापि परे । आ । इत्येष आदेशो वा स्यात् ॥ खट्वाका । अखट्वाका । परमखट्वाका ॥ पक्षे पूर्वसूत्रेणेत्वविकल्पः । तेन त्रैरूप्यं । खट्विका । खट्वका । इत्यादि ॥

## ठस्येकः ॥५०॥

अङ्गसंज्ञकात् परस्य ठ । इत्येतस्य प्रत्ययस्य इक । इत्येष आदेशः स्यात् ॥ ठक् । आक्षिकः ॥ ठञ् । लावणिकः ॥ ष्ठल् । आकर्षिकः ॥ ष्ठन् । पर्षिकः ॥ ञिठ । काशिका ॥ टिठन् । आर्धिकः ॥ ठच् । देविकः ॥

## इसुसुक्तान्तात् कः ॥५१॥

इस् । उस् । उक् । त् । इत्येतदन्तादङ्गात् परस्य ठ । इत्येतस्य क । इत्येष आदेशः स्यात् ॥ इस् । सर्पिस् । सार्पिष्कः ॥ उस् । धनुस् । धानुष्कः ॥ उक्प्रत्याहारान्तात् । नैषादकर्षुकः । मातृकं ॥ तान्तात् । औदश्वित्कः । शाकृत्कः । याकृत्कः ॥ इसुसौ प्रतिपदोक्तौ गृह्येते । न तु लाक्षणिकौ । तेनेह न । आशिषिकः । औषिकः ॥

## चजोः कु घिण्ण्यतोः ॥५२॥

च् । ज् । इत्येतयोः कवर्गादेशः स्यात् । घकारेत्संज्ञके प्रत्यये ण्यत्प्रत्यये च

ण्यत्प्रत्यये परे आवश्यके ऽर्थे कवर्गो न स्यात् ॥ अवश्यपाच्यं । अवश्यवाच्यं ॥ आवश्यके किं । पाक्यं । वाक्यं ॥

## यजयाचरुचप्रवचर्चश्च ॥ ६६ ॥

यज । टुयाचृ । रुच । प्रवच । ऋच । इत्येतेषां धातूनां ण्यत्प्रत्यये परे कवर्गादेशो न स्यात् ॥ यज । याज्यं ॥ टुयाचृ । याच्यं ॥ रुच । रोच्यं ॥ प्रवच । प्रवाच्यं ग्रन्थः ॥ ऋच । अर्च्यं । ऋच ऋदुपधत्वे ऽप्यस्मादेव ज्ञापकाण्ण्यत् ॥

## वचो ऽशब्दसंज्ञायां ॥ ६७ ॥

वच । इत्येतस्य धातोरशब्दसंज्ञायां ण्यत्प्रत्यये परे कवर्गादेशो न स्यात् ॥ वाच्यं ॥ अशब्दसंज्ञायां किं । वाक्यं ॥

## प्रयोज्यनियोज्यौ शक्यार्थे ॥ ६८ ॥

प्रयोज्य । नियोज्य । इत्येतौ शक्यार्थे निपात्येते ॥ युजिर् । प्रयोक्तुं शक्यः । प्रयोज्यः ॥ नियोक्तुं शक्यः । नियोज्यः ॥ ण्यत्प्रत्यये परे कवर्गाभावो निपातनात् ॥ शक्यार्थे किं । प्रयोग्यः । नियोग्यः ॥

## भोज्यं भक्ष्ये ॥ ६९ ॥

भोज्य । इत्येतद्भक्ष्ये ऽभिधेये निपात्यते ॥ भुज । भोज्य ओदनः । भोज्या यवागूः । ण्यति कुत्वाभावो निपातनात् ॥ भक्ष्ये किं । भोग्यः कम्बलः ॥

## घोर्लोपो लेटि वा ॥ ७० ॥

घुसंज्ञकानां धातूनां लेट्प्रत्यये परे वा लोपः स्यात् ॥ दधद्रत्नानि दाशुषे । सोमो ददद्गन्धर्वाय ॥ न च भवति । यदग्निरग्नये ददात् ॥

## ओतः श्यनि ॥ ७१ ॥

ओ । इत्येतदन्तस्याङ्गस्य श्यन्प्रत्यये परे लोपः स्यात् ॥ शो । श्यति ॥ छो । छ्यति ॥ दो । द्यति ॥ षो । स्यति ॥

## क्सस्याचि ॥ ७२ ॥

क्स । इत्येतस्याजादौ प्रत्यये परे लोपः स्यात् ॥ अधुक्षातां । अधुक्षाथां । अधुक्षि ॥ अचि किं । अधुक्षत् ॥ क्स इति किं । वत्साः ॥

कवर्गादेर्धातोः कवर्गादेशो न स्यात् ॥ कूज । कूजः । खर्ज । खर्जः । गर्ज । गर्जः । कूज्यं । खर्ज्यं । गर्ज्यं ॥

## अजिव्रज्योश्च ॥६०॥

अज । व्रज । इत्येतयोर्धात्वोः कवर्गादेशो न स्यात् ॥ अज । समाजः । उदाजः ॥ व्रज । परिव्राजः । पारिव्राज्यं ॥ अजेस्तु एयति न प्रयोगो वी-भावविधानात् ॥

## भुजन्युब्जौ पाण्युपतापयोः ॥६१॥

भुज । न्युब्ज । इत्येतौ क्रमात् पाण्युपतापयोरर्थयोर्निपात्येते ॥ भुज । भुज्यते ऽनेन । भुजः पाणिः । घञि कवर्गाभावो गुणाभावश्च ॥ उब्ज । उद्गज इति वा । न्युब्जन्त्यस्मिन् । न्युब्जो रोगः । घञि कवर्गाभावो ऽत्र ॥ पा-ण्युपतापयोः किं । भोगः । समुद्गः ॥

## प्रयाजानुयाजौ यज्ञाङ्गे ॥६२॥

प्रयाज । अनुयाज । इत्येतौ यज्ञाङ्गे निपात्येते ॥ यज । पञ्च प्रयाजाः । पञ्चानुयाजाः ॥ यज्ञाङ्गे किं । प्रयागः । अनुयागः ॥ प्रयाजानुयाजग्रहणं प्रदर्शनार्थं । अन्यत्राप्येतादृशे कुत्वं न भवति । तेन एकादशोपयाजाः । उपांशुयाजमन्तरा यजति । पत्नीसंयाजा भवन्ति । ऋतुयाजैश्चरन्ति । इत्यादि सिद्धं ॥

## वञ्चेर्गतौ ॥६३॥

वञ्चु । इत्येतस्य गत्यर्थस्य धातोः कवर्गादेशो न स्यात् ॥ वञ्चु । वञ्च्यं ॥ गतौ किं । वङ्क्यं काष्ठं । कुटिलमित्यर्थः ॥

## ओक उचः के ॥६४॥

उच । इत्येतस्य धातोः कप्रत्यये परे ओक । इत्येतन्निपात्यते ॥ ओकः शकुन्तः । ओको वृषः । इगुपधलक्षणः कः । उचेर्गुणः कुत्वं च । घञा सिद्धे ऽन्तोदात्तार्थं सूत्रं ॥

## ण्य आवश्यके ॥६५॥

ण्यत्प्रत्यये परे आवश्यके ऽर्थे कवर्गो न स्यात् ॥ अवश्यपाच्यं । अवश्यवाच्यं ॥ आवश्यके किं । पाक्यं । वाक्यं ॥

## यजयाचरुचप्रवचर्चश्च ॥ ६६ ॥

यज । टुयाचृ । रुच । प्रवच । ऋच । इत्येतेषां धातूनां ण्यत्प्रत्यये परे कवर्गादेशो न स्यात् ॥ यज । याज्यं ॥ टुयाचृ । याच्यं ॥ रुच । रोच्यं ॥ प्रवच । प्रवाच्यं ग्रन्थः ॥ ऋच । अर्च्यं । ऋच ऋदुपधत्वे ऽप्यस्मादेव ज्ञापकाण्ण्यत् ॥

## वचो ऽशब्दसंज्ञायां ॥ ६७ ॥

वच । इत्येतस्य धातोरशब्दसंज्ञायां ण्यत्प्रत्यये परे कवर्गादेशो न स्यात् ॥ वाच्यं ॥ अशब्दसंज्ञायां किं । वाक्यं ॥

## प्रयोज्यनियोज्यौ शक्यार्थे ॥ ६८ ॥

प्रयोज्य । नियोज्य । इत्येतौ शक्यार्थे निपात्येते ॥ युजिर् । प्रयोक्तुं शक्यः । प्रयोज्यः ॥ नियोक्तुं शक्यः । नियोज्यः ॥ ण्यत्प्रत्यये परे कवर्गाभावो निपातनात् ॥ शक्यार्थे किं । प्रयोग्यः । नियोग्यः ॥

## भोज्यं भक्ष्ये ॥ ६९ ॥

भोज्य । इत्येतद्भक्ष्ये ऽभिधेये निपात्यते ॥ भुज । भोज्य ओदनः । भोज्या यवागूः । ण्यति कुत्वाभावो निपातनात् ॥ भक्ष्ये किं । भोग्यः कम्बलः ॥

## घोर्लोपो लेटि वा ॥ ७० ॥

घुसंज्ञकानां धातूनां लेट्प्रत्यये परे वा लोपः स्यात् ॥ दधद्रत्नानि दाशुषे । सोमो ददद्गन्धर्वाय ॥ न च भवति । यदग्निरग्नये ददात् ॥

## ओतः श्यनि ॥ ७१ ॥

ओ । इत्येतदन्तस्याङ्गस्य श्यन्प्रत्यये परे लोपः स्यात् ॥ शो । श्यति ॥ छो । छ्यति ॥ दो । द्यति ॥ षो । स्यति ॥

## क्सस्याचि ॥ ७२ ॥

क्स । इत्येतस्याजादौ प्रत्यये परे लोपः स्यात् ॥ अधुक्षातां । अधुक्षाथां । अधुक्षि ॥ अचि किं । अधुक्षत् ॥ [illegible]

## लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ॥७३॥

दुह । दिह । लिह । गुहू । इत्येतेभ्यो धातुभ्यो विहितस्य क्स । इत्येतस्य दन्त्यवर्णादावात्मनेपदे परे वा लुक् स्यात् ॥ दुह । अदुग्ध । अधुक्षत । अदुग्धाः । अधुक्षथाः । अदुग्ध्वं । अधुक्षध्वं । अदुह्वहि । अधुक्षावहि ॥ दिह । अदिग्ध । अधिक्षत ॥ लिह । अलीढ । अलिक्षत ॥ गुहू । अगूढ । अघुक्षत ॥ दुहेत्यादि किं । गूहू । अघुक्षत । ऊदित्त्वादिड्भावपक्षे क्सः ॥ आत्मनेपदे किं । अधुक्षत् ॥ दन्त्ये किं । अधुक्षामहि ॥ लुग्ग्रहणमुत्तमपुरुष-द्विवचने सर्वलोपार्थं । अन्यत्रान्त्यलोपे कृते कालो गालीति लोपेनापि सि-ध्यति ॥ दन्त्योष्ठ्यो ऽपि वकारो दन्त्यग्रहणेन गृह्यते ॥

## शमामष्टानां दीर्घः श्यनि ॥७४॥

शम । इत्येवमादीनामष्टानां धातूनां श्यनि प्रत्यये परे ऽचो दीर्घः स्यात् ॥ शमु । शाम्यति ॥ तमु । ताम्यति ॥ दमु । दाम्यति ॥ श्रमु । श्राम्यति ॥ भ्रमु । भ्राम्यति ॥ क्षमू । क्षाम्यति ॥ क्लमु । क्लाम्यति ॥ मदी । माद्यति ॥ अष्टानां किं । असति ॥ श्यनि किं । भ्रमति ॥

## ष्ठिवुक्लमुचमां शिति ॥७५॥

ष्ठिवु । क्लमु । चमु । इत्येतेषां धातूनां शिति प्रत्यये परे ऽचो दीर्घः स्यात् ॥ ष्ठिवु । ष्ठीवति ॥ क्लमु । क्लामति ॥ चमु । आचामति ॥ क्लमि-ग्रहणं शबर्थं । श्यनि तु पूर्वसूत्रेणैव सिद्धं ॥

## क्रमः परस्मैपदेषु ॥७६॥

क्रमु । इत्येतस्य धातोरचः परस्मैपदे शिति परे दीर्घः स्यात् ॥ क्रामति । क्रामतः । क्रामन्ति ॥ परस्मैपदेषु किं । आक्रमते ॥

## इषुगमियमां छः ॥७७॥

## पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ॥ ७८ ॥

पा । घ्रा । ध्मा । ष्ठा । म्ना । दाण् । दृशिर् । ऋ । सृ । शद्लृ । षद्लृ । इत्येतेषां धातूनां क्रमात् पिब । जिघ्र । धम । तिष्ठ । मन । यच्छ । पश्य । ऋच्छ । धौ । शीय । सीद । इत्येते आदेशा भवन्ति शिति प्रत्यये परे ॥ पा । पिबति ॥ घ्रा । जिघ्रति ॥ ध्मा । धमति ॥ स्था । तिष्ठति ॥ म्ना । मनति ॥ दाण् । यच्छति ॥ दृशिर् । पश्यति ॥ ऋ । ऋच्छति ॥ सृ । धावति ॥ शद्लृ । शीयते ॥ षद्लृ । सीदति ॥

## ज्ञाजनोर्जा ॥ ७९ ॥

ज्ञा । जनी । इत्येतयोः शिति प्रत्यये परे जा । इत्येष आदेशः स्यात् ॥ ज्ञा । जानाति ॥ जनी दिवादिर्गृह्यते । जायते ॥

## प्वादीनां ह्रस्वः ॥ ८० ॥

पूञ् । इत्येवमादीनां क्र्यादिगणपठितानां धातूनां शिति प्रत्यये परे ऽचो ह्रस्वः स्यात् ॥ पूञ् । पुनाति ॥ लूञ् । लुनाति ॥ स्तॄञ् । स्तृणाति ॥

## मीनातेर्निगमे ॥ ८१ ॥

मीञ् । इत्येतस्य धातोः शिति प्रत्यये परे वेदे ह्रस्वः स्यात् ॥ प्रमिणन्ति ॥ निगमे किं । प्रमीणन्ति ॥

सार्वधातुकसंज्ञक आर्धधातुकसंज्ञके च प्रत्यये परे इगन्तस्याङ्गस्य गुणः स्यात् ॥ सार्वधातुके । तॄ । तरति । णीञ् । नयति । भू । भवति ॥ आर्धधातुके । डुकृञ् । कर्ता । चिञ् । चेता । ष्टुञ् । स्तोता ॥ सार्वधातुकार्धधातुकयोः किं । अग्नित्वं । अग्निकाम्यति ॥

## जाग्रोऽविचिण्णल्ङित्सु ॥८५॥

जागृ । इत्येतस्याङ्गस्य गुणः स्यात् । वि चिण् णल् ङित् । इत्येतेभ्यो ऽन्यस्मिन् वृद्धिविषये प्रतिषेधविषये च ॥ वृद्धिविषये । जागरयति । जागरकः । साधुजागरी । जागरं जागरं ॥ प्रतिषेधविषये । जागरितः । जागरितवान् ॥ अविचिण्णल्ङित्सु किं । वि । जागृविः । चिण् । अजागारि । णल् । जजागार । ङित् । जागृतः । जागृयुः ॥

## पुगन्तलघूपधस्य च ॥८६॥

पुक् । इत्येतस्मिन्नागमे परे यो ऽन्त इक् तस्य । लघ्वी योपधा तद्रूपस्य च इको गुणः स्यात् । सार्वधातुकार्धधातुकयोः परयोः ॥ पुगन्त । ऋ । अर्पयति । ह्री । ह्रेपयति । ब्ली । ब्लेपयति । रीङ् । रेपयति । क्नूयी । क्नोपयति ॥ लघूपध । भिदिर् । भेत्ता । भेदनं । छिदिर् । छेत्ता । छेदनं ॥

## नाभ्यस्तस्याचि पिति सार्वधातुके ॥८७॥

अभ्यस्तसंज्ञकस्याङ्गस्य लघूपधस्याजादौ पिति सार्वधातुके परे गुणो न स्यात् ॥ णिजिर् । नेनिजानि । अनेनिजं ॥ विपॢ । परिवेविषाणि । पर्यवेविषं ॥ अभ्यस्तस्य किं । वेदानि ॥ अचि किं । नेनेक्ति ॥ पितीत्येतदुत्तरार्थं ॥ सार्वधातुके किं । निनेज ॥ लघूपधस्येत्येव । जुहवानि । अजुहवं ॥

## भूसुवोस्तिङि ॥८८॥

भू । षूङ् । इत्येतयोः सार्वधातुके तिङि परे गुणो न स्यात् ॥ भू । अभूत् । अभूः । अभूवं ॥ षूङ् । सुवै । सुवावहै । सुवामहै ॥ षूङ् लुग्विकरणो गृह्यते । तुदादिदिवादिगणयोस्तु विकरणस्य ङित्त्वादेव गुणाभावसिद्धिः ॥ तिङि किं । भवति ॥ सार्वधातुके किं । बोभवीति ॥ यङ्लुकि नायं निषेधः । छन्दसि बोभूतु । इति निपातनेन साधितत्वात् ॥

## उतो वृद्धिर्लुकि हलि ॥ ८९ ॥

उ । इत्येतदन्तस्याङ्गस्य हल्प्रत्याहारादौ पिति सार्वधातुके परे लुकि सति वृद्धिः स्यात् ॥ यु । यौति । यौषि । यौमि ॥ नु । नौति । नौषि । नौमि ॥ ष्टुञ् । स्तौति । स्तौषि । स्तौमि ॥ उतः किं । इण् । एति । एषि । एमि ॥ लुकि किं । सुनोति ॥ हलि किं । यवानि ॥ पिति किं । युतः । नुतः ॥ नाभ्यस्तस्येत्यनुवर्तते । योयोति । नोनोति ॥

## ऊर्णोतेर्विभाषा ॥ ९० ॥

ऊर्णुञ् । इत्येतस्य धातोर्हलादौ पिति सार्वधातुके परे वृद्धिर्वा स्यात् ॥ ऊर्णौति । ऊर्णोति । ऊर्णौषि । ऊर्णोषि । ऊर्णौमि । ऊर्णोमि ॥ हलि किं । ऊर्णवानि ॥ पिति किं । ऊर्णुतः ॥

## गुणोऽपृक्ते ॥ ९१ ॥

ऊर्णुञ् । इत्येतस्यापृक्तसंज्ञके हलादौ पिति सार्वधातुके परे गुणः स्यात् ॥ और्णोत् । और्णोः ॥ ऊर्णोतेर्विभाषेति वृद्धेरयमपवादः ॥ अपृक्तग्रहणं यस्मिन् विधिरिति परिभाषाज्ञापनार्थं ॥

## तृणह इम् ॥ ९२ ॥

तृणह । इत्येतस्याङ्गस्य हलादौ पिति सार्वधातुके परे । इम् । इत्येष आगमः स्यात् ॥ तृणेढि । तृणेक्षि । तृणेह्मि । अतृणेट् ॥ हलि किं । तृणहानि ॥ पिति किं । तृण्ढः ॥ श्नम्प्रत्यये कृत इम् यथा स्यादिति सविकरणो निर्देशः ॥

## ब्रुव ईट् ॥ ९३ ॥

ब्रूञ् । इत्येतस्मात् परस्य हलादेः पितः सार्वधातुकस्य ईट् । इत्येष आगमः स्यात् ॥ ब्रवीति । ब्रवीषि । ब्रवीमि । अब्रवीत् ॥ हलि किं । ब्रवाणि ॥ पिति किं । ब्रूतः ॥

## यङो वा ॥ ९४ ॥

यङ् । इत्येतदन्तात् परस्य हलादेः पितः सार्वधातुकस्य वा ईट् । इत्येष आगमः स्यात् ॥ लप । लालपीति । वद । वावदीति । रु । रोरवीति ॥

न च भवति । वृतु । वर्वर्त्ति । वर्वर्मि ॥ यङन्तादात्मनेपदविधानात् तस्माद्धलादेः पितो ऽसंभव एवेति यङ्लुगन्तमुदाहृतं ॥

## तुरुस्तुशम्यमः सार्वधातुके ॥ ९५ ॥

तु । रु । ष्टुञ् । शम । अम । इत्येतेभ्यः परस्य हलादेः सार्वधातुकस्य वा ईट् । इत्ययम् आगमः स्यात् ॥ तु इति सौत्रो धातुः । तवीति । तौति ॥ रु । रवीति । रौति ॥ ष्टुञ् । स्तवीति । स्तौति ॥ शम्यमोश्छान्दसत्वाद्विकरणालुकि संभवः ॥ शम । शाम्यध्वं । शमिध्वं ॥ अम । अभ्यमति । अभ्यमीति ॥ पुनः सार्वधातुकग्रहणमपिदर्थं । स्तुवीत । शमीध्वं ॥

## अस्तिसिचो ऽपृक्ते ॥ ९६ ॥

अस् । इत्येतस्माद्धातोः सिच्प्रत्ययान्ताच्च परस्यापृक्तसंज्ञकस्य सार्वधातुकस्य हल ईट् । इत्ययम् आगमः स्यात् ॥ अस । आसीत् । आसीः ॥ सिच् । अकार्षीत् । असावीत् ॥ अपृक्ते किं । अस्ति । अकार्ष ॥

## बहुलं छन्दसि ॥ ९७ ॥

अस् । इत्येतस्मात् । सिच्प्रत्ययान्ताच्च परस्यापृक्तसंज्ञकस्य सार्वधातुकस्य हलो बहुलं छन्दसि ईट् । इत्ययम् आगमः स्यात् ॥ अस् । आप एवेदं सलिलं सर्वमाः । आसीदित्यस्य स्थाने आः क्रियापदं ॥ सिच् । गोभिरक्षाः । प्रत्यञ्चमत्साः । सिच ईडभावः ॥

## रुदश्च पञ्चभ्यः ॥ ९८ ॥

रुदिर् । ञिष्वप् । श्वस । अन । जक्ष । इत्येतेभ्यः पञ्चभ्यः परस्यापृक्तस्य पितः सार्वधातुकस्य हल ईट् । इत्ययम् आगमः स्यात् ॥ रुदिर् । अरोदीत् । अरोदीः ॥ ञिष्वप् । अस्वपीत् । अस्वपीः ॥ श्वस । अश्वसीत् । अश्वसीः ॥ अन । आनीत् । आनीः ॥ जक्ष । अजक्षीत् । अजक्षीः ॥ पञ्चभ्यः किं । जागृ । अजागर्त्तान् ॥ अपृक्तस्य किं । रोदिति ॥

## अड्गार्ग्यगालवयोः ॥ ९९ ॥

रुदिर । इत्येवमादिभ्यः पञ्चभ्यः परस्यापृक्तस्य पितः सार्वधातुकस्य हलो गार्ग्यगालवयोराचार्ययोर्मते अट् । इत्ययम् आगमः स्यात् ॥ अरोदत् । अरोदः ॥

अस्वपत् । अस्वपः ॥ अश्वसत् । अश्वसः ॥ प्राणात् । प्राणः ॥ अजक्षत् । अजक्षः ॥ गार्ग्यगालवग्रहणं पूजार्थं ॥

## अडः सर्वेषां ॥ १०० ॥

अट् । इत्येतस्मात् परस्यापृक्तस्य सार्वधातुकस्य सर्वेषामाचार्याणां मते । अट् । इत्येष आगमः स्यात् ॥ आदत् । आदः ॥ अपृक्तस्य किं । अत्ति । अत्सि ॥

## अतो दीर्घो यञि ॥ १०१ ॥

अ । इत्येतदन्तस्याङ्गस्य यञ्प्रत्याहारादौ सार्वधातुके परे दीर्घः स्यात् ॥ डुपचष् । पचामि । पचावः । पचामः ॥ वच । वच्यामि । वच्यावः । वच्यामः ॥ अतः किं । चिनुवः । चिनुमः ॥ यञि किं । पचतः । पचथः ॥ सार्वधातुके किं । केशवः । अङ्गना ॥

## सुपि च ॥ १०२ ॥

अ । इत्येतदन्तस्याङ्गस्य यञादौ सुपि परे दीर्घः स्यात् ॥ वृक्षाय । वृक्षाभ्यां ॥ अत इत्येव । अग्निभ्यां ॥ यञीत्येव । वृक्षस्य ॥

## बहुवचने झल्येत् ॥ १०३ ॥

अ । इत्येतदन्तस्याङ्गस्य झल्प्रत्याहारादौ बहुवचने सुपि परे । ए । इत्येष आदेशः स्यात् ॥ वृक्षेभ्यः । वृक्षेषु ॥ बहुवचने किं । वृक्षाभ्यां ॥ झलि किं । वृक्षाणां ॥ सुपि किं । पचध्वं ॥

## ओसि च ॥ १०४ ॥

अ । इत्येतदन्तस्याङ्गस्य ओस्प्रत्यये परे । ए । इत्येष आदेशः स्यात् ॥ वृक्षयोः । प्लक्षयोः ॥

## आङि चापः ॥ १०५ ॥

आबन्तस्याङ्गस्य तृतीयैकवचन ओसि च परे । ए । इत्येष आदेशः स्यात् ॥ आङि । खट्वया । बहुराजया । कारीषगन्ध्यया ॥ ओसि । खट्वयोः । बहुराजयोः । कारीषगन्ध्ययोः ॥ आप इति दीर्घान्तस्यैव ग्रहणं । तेनेह न । अतिखट्वेन ॥ आङिति तृतीयैकवचनस्य प्राचां संज्ञा ॥

## संबुद्धौ च ॥१०६॥

आबन्तस्याङ्गस्य संबुद्धिसंज्ञके प्रत्यये परे । ए । इत्ययमादेशः स्यात् ॥ हे खट्वे । हे बहुराजे । हे कारीषगन्ध्ये ॥

## अम्बार्थनद्योर्ह्रस्वः ॥१०७॥

अम्बार्थानां । नदीसंज्ञकानां चाङ्गानां संबुद्धिसंज्ञके प्रत्यये परे ह्रस्वः स्यात् ॥ अम्बार्थ । हे अम्ब । हे अक्क । हे अल्ल ॥ नदी । हे कुमारि । हे शार्ङ्गरवि । हे ब्रह्मबन्धु ॥

## ह्रस्वस्य गुणः ॥१०८॥

ह्रस्वान्तस्याङ्गस्य संबुद्धिसंज्ञके प्रत्यये परतो गुणः स्यात् ॥ अग्नि । हे अग्ने ॥ वायु । हे वायो ॥ बुद्धि । हे बुद्धे ॥ धेनु । हे धेनो ॥

## जसि च ॥१०९॥

ह्रस्वान्तस्याङ्गस्य जस्प्रत्यये परे गुणः स्यात् ॥ अग्नयः । वायवः । बुद्धयः । धेनवः ॥

## ऋतो ङिसर्वनामस्थानयोः ॥११०॥

ऋ । इत्येतदन्तस्याङ्गस्य ङिसर्वनामस्थानयोः परयोर्गुणः स्यात् ॥ ङौ । मातरि । पितरि । भ्रातरि । कर्तरि ॥ सर्वनामस्थाने । मातरः । मातरं । मातरौ ॥ एवं । पितरौ । पितरः । पितरं । पितरौ ॥ भ्रातरौ । भ्रातरः । भ्रातरं । भ्रातरौ ॥ कर्तारौ । कर्तारः । कर्तारं । कर्तारौ ॥

## घेर्ङिति ॥१११॥

घिसंज्ञकस्याङ्गस्य ङिति सुपि प्रत्यये परे गुणः स्यात् ॥ अग्नये । वायवे । अग्नेः । वायोः । अग्नेर्मुखं । वायोर्गतिः ॥ घेः किं । सख्ये । पत्ये ॥ ङिति किं । अग्निभ्यां ॥ सुपि किं । पट्वी । कुरुतः ॥

## आण्नद्याः ॥११२॥

नद्यन्तादङ्गात् परस्य ङ् । इत्येतादिसंज्ञकस्य प्रत्ययस्य आट् । इत्ययमागमः स्यात् ॥ कुमार्यै । ब्रह्मबन्ध्वै ॥ कुमार्याः । ब्रह्मबन्ध्वाः ॥

## याडापः ॥ ११३ ॥

आबन्तादङ्गादुत्तरस्य ङितः प्रत्ययस्य याट् । इत्येष आगमः स्यात् ॥ खट्वायै ।
बहुराजायै । कारीषगन्ध्यायै ॥ खट्वायाः । बहुराजायाः । कारीषगन्ध्यायाः ॥
लाक्षणिकत्वादिह तु न भवति । अतिखट्वाय ॥

## सर्वनाम्नः स्याड्ढ्रस्वश्च ॥ ११४ ॥

आबन्तात् सर्वनामसंज्ञकादङ्गात् परस्य ङितः प्रत्ययस्य स्याट् । इत्येष आगमः
स्यात् । आबन्तस्य सर्वनाम्नो ह्रस्वश्च ॥ सर्वस्यै । यस्यै । तस्यै । कस्यै ॥
सर्वस्याः । यस्याः । तस्याः । कस्याः ॥ सर्वस्याः करः । यस्याः करः ।
तस्याः करः । कस्याः करः ॥ सर्वस्यां । यस्यां । तस्यां । कस्यां ॥ आ-
बन्तात् किं । भवते ॥

## विभाषा द्वितीयातृतीयाभ्यां ॥ ११५ ॥

द्वितीया । तृतीया । इत्येताभ्यां परस्य ङितः प्रत्ययस्य स्याट् । इत्येष आगमो
वा स्यात् । द्वितीयातृतीययोश्च ह्रस्वः ॥ द्वितीयस्यै । द्वितीयायै ॥ द्विती-
यस्याः । द्वितीयायाः ॥ द्वितीयस्याः । द्वितीयायाः करः ॥ द्वितीयस्यां ।
द्वितीयायां ॥ तृतीयस्यै । तृतीयायै ॥ तृतीयस्याः । तृतीयायाः ॥ तृतीयस्याः ।
तृतीयायाः करः ॥ तृतीयस्यां । तृतीयायां ॥

## ङेराम् नद्याम्नीभ्यः ॥ ११६ ॥

नदीसंज्ञकान्तात् । आबन्तात् । नी । इत्येतस्माच्च परस्य ङि । इत्येतस्य
सप्तम्येकवचनस्य । आम् । इत्येष आदेशः स्यात् ॥ नदी । कुमार्यां । नी-
र्यां । ब्रह्मबन्ध्वां । धीबन्ध्वां ॥ आप् । खट्वायां । बहुराजायां । कारी-
षगन्ध्यायां ॥ नी । सेनान्यां । ग्रामण्यां ॥

## इदुद्भ्यां ॥ ११७ ॥

इ । उ । इत्येताभ्यां नदीसंज्ञकाभ्यां परस्य ङि । इत्येतस्य स्थाने । आम्
आदेशः स्यात् ॥ कृत्यां । धेन्वां ॥

## औत् ॥ ११८ ॥

इ । उ । इत्येताभ्यां घिनदीसंज्ञावर्जिताभ्यां परस्य ङि । इत्येतस्य । औत् । इत्येष आदेशः स्यात् ॥ सख्यौ । पत्यौ ॥

## अच्च घेः ॥११९॥

इ । उ । इत्येताभ्यां घिसंज्ञकाभ्यां परस्य ङि । इत्येतस्य । औत् । इत्येष आदेशः स्यात् । इ । उ । इत्येतयोर्घिसंज्ञकयोश्च । अत् । इत्येष आदेशः स्यात् ॥ अग्नौ । कृतौ । वायौ । धेनौ ॥ अदिति तपरकरणं स्त्रियां टापो निवृत्त्यर्थं ॥

## आङो नास्त्रियां ॥१२०॥

घिसंज्ञकात् परस्य टा । इत्येतस्य ना । इत्येष आदेशः स्यात् । न तु स्त्रियां ॥ अग्निना । वायुना ॥ अस्त्रियां किं । कृत्या । धेन्वा ॥

॥ इति सूत्रपाठे सप्तमाध्यायस्य तृतीयः पादः ॥

---

## णौ चङ्युपधाया ह्रस्वः ॥१॥

चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात् ॥ डुकृञ् । अचीकरत् । अचीकरत ॥ लूञ् । अलीलवत् । अलीलवत ॥ पठ । अपीपठत् । अपीपठत ॥ डुदाञ् । अदीदपत् ॥ णौ किं । अलीलवत् । अत्र वचनसामर्थ्यादन्तरङ्गामपि वृद्धिं बाधित्वा ह्रस्वे कृते गुणस्य वृद्ध्या बाधितत्वादप्रवृत्तेरवङ् प्रसज्येत । अदीदपदित्यत्र ह्रस्वेन पुको बाधः स्यात् । अपीपचदित्यादौ तु नैव स्यात् ॥

## नाग्लोपिशास्वृदितां ॥२॥

णावग्लोपिनामङ्गानां । शासु । इत्येतस्य । ऋदितां च चङ्परे णौ परत उपधाया ह्रस्वो न स्यात् ॥ अग्लोपिनो । मालामाख्यत् । अममालत् । मातरमाख्यत् । अममातत् । राजानमतिक्रान्तवान् । अत्यरराजत् ॥ शासु ।

अशशासत् ॥ अदितां । बाधृ । अबबाधत् । टुयाचृ । अययाचत् । ढौकृ ।
अडुढौकत् ॥

## भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्यां ॥३॥

भ्राजृ । भासृ । भाष । दीपी । जीव । मील । पीड । इत्येतेषां चङ्परे
णौ परे उपधाया ह्रस्वो वा स्यात् ॥ भ्राजृ । अबिभ्रजत् । अबभ्राजत् ॥
भासृ । अबीभसत् । अबभासत् ॥ भाष । अबीभषत् । अबभाषत् ॥ दीपी ।
अदीदिपत् । अदिदीपत् ॥ जीव । अजीजिवत् । अजिजीवत् ॥ मील ।
अमीमिलत् । अमिमीलत् ॥ पीड । अपीपिडत् । अपिपीडत् ॥

## लोपः पिबतेरीच्चाभ्यासस्य ॥४॥

पा । इत्येतस्याङ्गस्य चङ्परे णौ पर उपधाया लोपः स्यात् । अभ्यासस्य ई ।
इत्येष आदेशश्च ॥ अपीप्यत् । अपीप्यतां । अपीप्यन् ॥

## तिष्ठतेरित् ॥५॥

ष्ठा । इत्येतस्याङ्गस्योपधायाश्चङ्परे णौ परे । इ । इत्येष आदेशः स्यात् ॥
अतिष्ठिपत् । अतिष्ठिपतां । अतिष्ठिपन् ॥

## जिघ्रतेर्वा ॥६॥

घ्रा । इत्येतस्याङ्गस्योपधायाश्चङ्परे णौ परे । इ । इत्येष आदेशो वा स्यात् ॥
अजिघ्रिपत् । अजिघ्रिपतां । अजिघ्रिपन् ॥ अजिघ्रपत् । अजिघ्रपतां । अजिघ्रपन् ॥

## उर्ऋत् ॥७॥

चङ्परे णौ परे । ऋ । इत्येष आदेशो वा
ऋ । इत्येतस्य धातोरुपधाभूतस्य अचिकृतत् । अचिकीर्तत् ॥
स्यात् ॥ इररारामपवादोऽयं ॥ इर् । कृत । अनीनृतत् । अननर्-
अर् । वृतु । अवीवृतत् । अववर्तत् ॥ आर् । नृतू । अचीकृत-
र्तत् ॥ तपरकरणं दीर्घेऽपि स्थानिनि ह्रस्व एव यथा स्यात् । अचीकृत-
दिति ॥

## नित्यं छन्दसि ॥८॥

वेदे चङ्परे णौ परे । ऋ । इत्येष आदेशो
ऋ । इत्येतस्य धातोरुपधाभूतस्य अवीवृधतां । अवीवृधन् ॥
नित्यं स्यात् ॥ अवीवृधत् पुरोडाशेन ।

## दयतेर्दिगि लिटि ॥९॥

देङ् । इत्येतस्य धातोर्लिटि परे दिगि । इत्येष आदेशः स्यात् ॥ दिग्ये । दिग्याते । दिग्यिरे ॥ दय इत्येतस्य तु न ग्रहणं तस्य लिट्याम्विधानात् ॥

## ऋतश्च संयोगादेर्गुणः ॥१०॥

ऋ । इत्येतदन्तस्य संयोगादेरङ्गस्य लिटि परे गुणः स्यात् ॥ स्वृ । सस्वरतुः । सस्वरुः ॥ ध्वृ । दध्वरतुः । दध्वरुः ॥ स्मृ । सस्मरतुः । सस्मरुः ॥ ऋतः किं । क्षि । चिक्षियतुः ॥ संयोगादेः किं । कृ । चक्रतुः ॥ लिटि किं । स्मृतः ॥ क्ङिति गुणनिषेधे प्राप्ते विधिरयं ॥

## ऋच्छत्यृतां ॥११॥

ऋच्छ । ऋ । इत्येतयोः । ॠ । इत्येतदन्तानां चाङ्गानां लिटि परे गुणः स्यात् ॥ ऋच्छ । आनर्छ । आनर्छतुः । आनर्छुः ॥ ऋ । आरतुः । आरुः ॥ ॠतां । कॄ । चकरतुः । चकरुः ॥ गॄ । जगरतुः । जगरुः ॥ लघूपधत्वाभावादृच्छेरप्राप्तो गुणो विधीयते । ॠतां क्ङिति गुणनिषेधे प्राप्ते विधिः ॥

## शॄदॄप्रां ह्रस्वो वा ॥१२॥

शॄ । दॄ । पॄ । इत्येतेषामङ्गानां लिटि परे वा ह्रस्वः स्यात् ॥ शॄ । शश्रतुः । शश्रुः । शशरतुः । शशरुः ॥ दॄ । दद्रतुः । दद्रुः । ददरतुः । ददरुः ॥ पॄ । पप्रतुः । पप्रुः । पपरतुः । पपरुः ॥

## के ऽणः ॥१३॥

कप्रत्यये परे ऽणप्रत्याहारान्तर्गतवर्णस्य ह्रस्वः स्यात् ॥ अजका । कुमारिका । ब्रह्मबन्धुका ॥ अणः किं । गोका । नौका ॥ उणादयो बहुलमिति बहुलग्रहणादिह न भवति । राका । धाका ॥

## न कपि ॥१४॥

कप्प्रत्यये परे ऽणो ह्रस्वो न स्यात् ॥ बहुकुमारीकः । बहुब्रधूकः । बहुलक्ष्मीकः ॥

## आपो ऽन्यतरस्यां ॥१५॥

टाप् । डाप् । चाप् । इत्येतदन्तस्याङ्गस्य कपि परे ह्रस्वो वा स्यात् ॥ टाप् । बहुखट्वकः । बहुखट्वाकः ॥ डाप् । बहुराजकः । बहुराजाकः ॥ चाप् । बहुकारीषगन्ध्यकः । बहुकारीषगन्ध्याकः ॥

## ऋदृशोऽङि गुणः ॥१६॥

ऋ । इत्येतदन्तानां धातूनां दृशिर् । इत्येतस्य च अङ्प्रत्यये परे गुणः स्यात् ॥ ऋदन्त । सृ । असरत् ॥ ऋ । आरत् ॥ जॄष् । जरा ॥ दृशिर् । अदर्शत् । अदर्शतां । अदर्शन् ॥

## अस्यतेस्थुक् ॥१७॥

असु । इत्येतस्य धातोरङ्प्रत्यये परे थुक् । इत्येष आगमः स्यात् ॥ आस्थत् । आस्थतां । आस्थन् ॥

## श्वयतेरः ॥१८॥

टुओश्वि । इत्येतस्य धातोरङ्प्रत्यये परे । अ । इत्येष आदेशः स्यात् ॥ अश्वत् । अश्वतां । अश्वन् ॥

## पतः पुम् ॥१९॥

पतॢ । इत्येतस्य धातोरङ्प्रत्यये परे पुम् । इत्येष आगमः स्यात् ॥ अपप्तत् । अपप्तां । अपप्तन् ॥

## वच उम् ॥२०॥

वच । इत्येतस्य धातोरङ्प्रत्यये परे । उम् । इत्येष आगमः स्यात् ॥ अवोचत् । अवोचतां । अवोचन् ॥

## शीङः सार्वधातुके गुणः ॥२१॥

शीङ् । इत्येतस्य धातोः सार्वधातुके परे गुणः स्यात् ॥ शेते । शयाते । शेरते ॥ सार्वधातुके किं । शिश्ये ॥

## अयङ् यि क्ङिति ॥२२॥

शीङ् । इत्येतस्य य् । इत्येतदादौ क्ङिति च प्रत्यये परे अयङ् । इत्येष आदेशः स्यात् ॥ क्ङिति । शय्यते । प्रशय्य । उपशय्य ॥ ङिति । शाशय्यते ॥ यि किं । शिश्ये ॥ क्ङिति किं । शेयं ॥

## उपसर्गाद्ध्रस्व ऊहतेः ॥२३॥

ऊह । इत्येतस्य धातोरुपसर्गात् परस्य य् । इत्येतदादौ किति ङिति च प्रत्यये परे ह्रस्वः स्यात् ॥ समुह्यते । अभ्युह्यते । समुह्य गतः । अभ्युह्य गतः ॥ उपसर्गात् किं । ऊह्यते ॥ ऊहतेः किं । समीह्यते ॥ यि किं । समूहितं ॥ किङति किं । अभ्यूह्यं ॥ अणा इत्येव । आ ऊह्यते । ओह्यते । समोह्यते ॥

## एतेर्लिङि ॥२४॥

इण् । इत्येतस्य धातोरुपसर्गात् परस्याणो य् । इत्येतदादौ किङति लिङि परे ह्रस्वः स्यात् ॥ उदियात् । समियात् । अन्वियात् ॥ आशीर्लिङि अकृत्सार्वधातुकयोरिति दीर्घे कृते ऽनेन ह्रस्वः ॥ उपसर्गात् किं । ईयात् ॥ अणः किं । आ ईयात् । एयात् । समेयात् ॥

## अकृत्सार्वधातुकयोर्दीर्घः ॥२५॥

अजन्तस्याङ्गस्य य् । इत्येतदादौ किङति प्रत्यये परे दीर्घः स्यात् । न तु कृत्सार्वधातुकयोः ॥ किति । ईयात् । चीयात् । स्तूयात् । चीयते । स्तूयते ॥ ङिति । चेचीयते । तोष्टूयते । भृशायते । सुखायते ॥ अकृत् किं । प्रकृत्य । तुकः परत्वाद्दीर्घः स्यात् ॥ असार्वधातुके किं । चिनुयात् ॥ किङति किं । धृष्णुया ॥

## च्वौ च ॥२६॥

च्विप्रत्यये परे, ऽजन्तस्याङ्गस्य दीर्घः स्यात् ॥ शुक्लीकरोति । शुचीभवति । गुरूस्यात् ॥

## रीङृतः ॥२७॥

ऋ । इत्येतदन्तस्याङ्गस्य य् । इत्येतदादौ प्रत्यये च्विप्रत्यये च परे रीङ् । इत्ययं आदेशः स्यात् । न तु कृत्सार्वधातुकयोः ॥ य् । मात्रीयति । मात्रीयते । चेक्रीयते । पित्र्यं ॥ च्वि । मात्रीकरोति ॥ ऋत इति तपरकरणं किं । गॄ । जेगिल्यते ॥

## रिङ् शयग्लिङ्क्षु ॥२८॥

ऋ । इत्येतदन्तस्याङ्गस्य रिङ् । इत्येष आदेशः स्यात् । श । यक् । इत्येतयोः परयोर्लिङि च यकारादावसार्वधातुके परे ॥ श । आद्रियते । आध्रियते ॥ यक् । क्रियते । ह्रियते ॥ लिङ् । क्रियात् । ह्रियात् ॥ असार्वधातुके किं । बिभृयात् ॥ यकारादौ किं । कृषीष्ट ॥

## गुणोऽर्तिसंयोगाद्योः ॥२९॥

ऋ । इत्येतस्य धातोः । ऋ । इत्येतदन्तस्य च संयोगादेरङ्गस्य यक्प्रत्यये परे यकारादावसार्वधातुके लिङि च परे गुणः स्यात् ॥ यकि । ऋ । अर्यते । संयोगादि । स्मृ । स्मर्यते ॥ लिङि । अर्यात् । स्मर्यात् ॥ सुटो बहिरङ्गत्वेनासिद्धत्वात् संयोगादित्वाभावादिह न भवति । संस्क्रियात् ॥ यकारादौ किं । ध्वृ । ध्वृषीष्ट ॥ असार्वधातुके किं । इयृयात् ॥

## यङि च ॥३०॥

ऋ । इत्येतस्य धातोः । ऋ । इत्येतदन्तस्य संयोगादेरङ्गस्य च यङ्प्रत्यये परे गुणः स्यात् ॥ ऋ । अरार्यते ॥ संयोगादि । स्वृ । सास्वर्यते । स्मृ । सास्मर्यते । ध्वृ । दाध्वर्यते ॥

## ई घ्राध्मोः ॥३१॥

घ्रा । ध्मा । इत्येतयोर्यङ्प्रत्यये परे । ई । इत्येष आदेशः स्यात् ॥ घ्रा । जेघ्रीयते ॥ ध्मा । देध्मीयते ॥

## अस्य च्वौ ॥३२॥

अ । इत्येतदन्तस्याङ्गस्य च्विप्रत्यये परे । ई । इत्येष आदेशः स्यात् ॥ शुक्लीकरोति । खट्वीभवति । खट्वीस्यात् ॥

## क्यचि च ॥३३॥

अ । इत्येतदन्तस्याङ्गस्य क्यच्प्रत्यये परे । ई । इत्येष आदेशः स्यात् ॥ पुत्रीयति । मालीयति ॥ अकृत्सार्वेत्यस्यापवादोऽयं ॥ उत्तरसूत्रे ऽनुवर्त्त्यर्थं पृथग्योगकरणं ॥

## अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु ॥३४॥

अशनाय । उदन्य । धनाय । इत्येतानि क्रमात् । बुभुक्षा । पिपासा । गर्ध । इत्येतेष्वर्थेषु निपात्यन्ते ॥ अशनायति । क्यच्प्रत्यये परे आत्वं निपात्यते ॥ उदन्यति । क्यच्युदकस्य उदन्भावो निपात्यते ॥ धनायति । क्यच्यात्वं निपात्यते ॥ अभिलाषातिरेको गर्धः ॥ बुभुक्षेत्यादि किं । अशनीयति । उदकीयति । धनीयति ॥

## नच्छन्दस्यपुत्रस्य ॥३५॥

अ । इत्येतदन्तस्याङ्गस्य पुत्रवर्जितस्य क्यचि परे वेदे दीर्घत्वमीत्वं च न स्यात् ॥ मित्रयुः । देवाञ्जिगाति सुम्नयुः । क्याच्छन्दसीत्युप्रत्ययः ॥ अपुत्रस्येति किं । पुत्रीयन्तः सुदानवः ॥

## दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति ॥३६॥

दुरस्यु । द्रविणस्यु । वृषण्यति । रिषण्यति । इत्येतानि वेदे निपात्यन्ते ॥ अवियोना दुरस्युः । दुष्ट इत्येतस्य क्यचि दुरस् आदेशः । क्याच्छन्दसीत्युः । दुष्टीयतीति प्राप्ते ॥ द्रविणस्युर्विपन्यया । द्रविण इत्येतस्य द्रविणस्भावः । द्रविणीयतीति प्राप्ते ॥ वृषण्यति । वृष । इत्येतस्य वृषन्भावः । वृषीयतीति प्राप्ते ॥ रिषण्यति । रिष्ट इत्येतस्य रिषण्भावः । रिष्टीयतीति प्राप्ते ॥

## अश्वाघस्यात् ॥३७॥

अश्व । अघ । इत्येतयोः क्यचि परे वेदे । आ । इत्येष आदेशः स्यात् ॥ अश्व । अश्वायन्तो मघवन् ॥ अघ । अघायवो विदन् ॥

## देवसुम्नयोर्यजुषि काठके ॥३८॥

देव । सुम्न । इत्येतयोः क्यचि परे यजुषि कठशाखायां । आ । इत्येष आदेशः स्यात् ॥ देवायन्तो यजमानाः । सुम्नायन्तो हवामहे ॥ यजुषि किं । देवाञ्जिगाति सुम्नयुः ॥ काठके किं । सुम्नयुरिदमासीत् ॥ इह यजुःशब्दो न मन्त्रपरः । किं तु वेदोपलक्षणः । तेन अमन्त्रात्मके ऽपि मन्त्रे यजुर्वेदस्थे भवति । किं च ऋग्वेदे ऽपि भवति स चेन्मन्त्रो यजुषि कठशाखायां दृष्टः ॥

## कव्यध्वरपृतनस्यर्चि लोपः ॥३९॥

कवि । अध्वर । पृतन । इत्येतेषां क्यचि परे ऋचि विषये लोपः स्यात् ॥

कवि । कव्यन्तः सुमनसः ॥ अध्वर । अध्वर्यु वा मधुपाणिं ॥ पृतन । पृतन्यन्तस्तिष्ठन्ति ॥

## द्यतिस्यतिमास्थामि ति किति ॥४०॥

दो । षो । मा । ष्ठा । इत्येतेषां धातूनां त् । इत्येतदादौ किति प्रत्यये परे । इ । इत्येष आदेशः स्यात् ॥ दो । निर्दितः । निर्दितवान् ॥ षो । अवसितः । अवसितवान् ॥ मा । मितः । मितवान् ॥ ष्ठा । स्थितः । स्थितवान् ॥ ति किं । अवदाय ॥ किति किं । अवदाता ॥ ईत्वदत्त्वयोरपवादोऽयं ॥

## शाछोरन्यतरस्यां ॥४१॥

शो । छो । इत्येतयोर्धात्वोस्तकारादौ किति परे । इ । इत्येष आदेशो वा स्यात् ॥ शो । निशितं । निशातं । निशितवान् । निशातवान् ॥ छो । छितं । छातं । छितवान् । छातवान् ॥

## दधातेर्हिः ॥४२॥

डुधाञ् । इत्येतस्य धातोस्तकारादौ किति प्रत्यये परे हि । इत्येष आदेशः स्यात् ॥ हितः । हितवान् । हित्वा ॥

## जहातेश्च क्त्वि ॥४३॥

ओहाक् । इत्येतस्य धातोः क्त्वाप्रत्यये परे हि । इत्येष आदेशः स्यात् ॥ हित्वा गच्छति । हित्वा गतः ॥ ओहाङ् । इत्ययं तु न गृह्यते जहातेरिति निर्देशात् । हात्वा ॥

## विभाषा छन्दसि ॥४४॥

ओहाक् । इत्येतस्य क्त्वाप्रत्यये परे वेदे हि । इत्येष आदेशो वा स्यात् ॥ हित्वा शरीरं ॥ पक्षे घुमास्थेत्यादिना ईत्वं । हीत्वा ॥

## सुधित वसुधित नेमधित धिष्व धिषीय च ॥४५॥

सुधित । वसुधित । नेमधित । धिष्व । धिषीय । इत्येतानि वेदे निपात्यन्ते ॥ डुधाञ् । गर्भं माता सुधितं । सुहितमिति प्राप्ते ॥ वसुधितमग्नौ जुहोति । वसुहितमिति प्राप्ते ॥ नेमधिता बाधन्ते । नेमहिता इति प्राप्ते ॥

एधु प्रत्ययस्य इट् । आतो लोप इटि चेत्यालोपः ॥ डुधाञ् । धिष्व सोमं । धत्स्व इति प्राप्ते । लोण्मध्यमपुरुषैकवचने द्वित्वाभाव इत्वं च निपात्यते ॥ धिषीय । धासीय इति प्राप्ते । आशीर्लिङ्यात्मनेपदोत्तमैकवचनं । सीयुट इडागमो निपातनात् ॥

## दो दद्घोः ॥४६॥

दा । इत्येतस्य घुसंज्ञकस्य तकारादौ किति प्रत्यये परे दद् । इत्येष आदेशः स्यात् ॥ दा । दत्तः । दत्तवान् । दत्तिः ॥ दः किं । धा । धीतः ॥ घोः किं । दाप् । दातं बर्हिः । दैप् । अवदातं मुखं ॥

## अच उपसर्गात् तः ॥४७॥

अच्प्रत्याहारान्तर्गतवर्णान्तादुपसर्गात् परस्य घुसंज्ञकस्य दा । इत्येतस्याचः स्थाने त् । इत्ययमादेशः स्यात् । तकारादौ किति प्रत्यये परे ॥ दा । प्रत्तं । परात्तं । नीत्तं । सूत्तं ॥ खरि चेति चर्त्वं ॥ अचः किं । निर्दत्तं । दुर्दत्तं ॥ उपसर्गात् किं । दधिदत्तं । मधुदत्तं ॥ घोः किं । दैप् । अवदातं मुखं ॥

## अपो भि ॥४८॥

अप् । इत्येतस्याङ्गस्य भकारादौ प्रत्यये परे त् । इत्ययमादेशः स्यात् ॥ अद्भिः । अद्भ्यः ॥ भीति किं । अप्सु ॥

## सः स्यार्धधातुके ॥४९॥

स् । इत्येतदन्तस्याङ्गस्य स् । इत्येतदादावार्धधातुके परे त् । इत्ययमादेशः स्यात् ॥ वस । वत्स्यति । अवत्स्यत् । विवत्सति ॥ घस्लृ । जिघत्सति ॥ सस्य किं । वच । वक्ष्यति ॥ सादौ किं । घासः । वासः ॥ आर्धधातुके किं । आसे । वसे ॥

## तासस्त्योर्लोपः ॥५०॥

तासि । अस् । इत्येतयोः सकारस्य लोपः स्यात् स् । इत्येतदादौ प्रत्यये परे ॥ तासि । कृ । कर्तासि । कर्तासे ॥ अस् । त्वमसि । व्यतिसे ॥ अकारसकारयोर्लोपे से इति प्रत्ययस्य पदादित्वात् सात्पदाद्योरिति षत्वनिषेधः ॥

## रि च ॥५१॥

र् । इत्येवमादौ प्रत्यये परे तासि । अस् । इत्येतयोः सकारस्य लोपः स्यात् ॥ भू । भवितारौ । भवितारः ॥ अस्तिर्नोदाहृतः । तस्माद्रकारादेः प्रत्ययस्यासंभवात् ॥

## ह एति ॥५२॥

तासि । अस् । इत्येतयोः स् । इत्येतस्य एकारे परे ह् । इत्ययमादेशः स्यात् ॥ एध । एधिताहे ॥ अस् । व्यतिहे ॥

## यीवर्णयोर्दीधीवेव्योः ॥५३॥

दीधी । वेवी । इत्येतयोरन्त्यस्य लोपः स्यात् । य् । इ । इत्येवमादौ प्रत्यये परे ॥ यकारादौ । दीधी । आदीध्य गतः । आदीध्यते ॥ वेवी । आवेव्य गतः । आवेव्यते ॥ इवर्णादौ । आदीधिता । आदीधीत ॥ आवेविता । आवेवीत ॥ यीवर्णयोः किं । आदीध्यनं । आवेव्यनं ॥

## सनि मीमाघुरभलभशकपतपदामच इस् ॥५४॥

मी । मा । दा । धा । रभ । डुलभष् । शक । पत्लृ । पद । इत्येतेषां धातूनामच इस् । इत्ययमादेशः स्यात् स् । इत्येवमादौ सनि प्रत्यये परे ॥ मी इत्यनेन मीनाति मिनोति इति क्र्यादिस्वाद्योर्द्वयोरपि ग्रहणमिष्यते । मी । मित्सति । मित्सते ॥ मा इति गामादाग्रहणेष्वविशेषान्मामाङ्मेङां ग्रहणं । मा । मित्सति । माङ् मेङ् । मित्सते । अपमित्सते ॥ दा इति दो । दाण् । देङ् । दाञ् । इत्येतेषां ग्रहणं । दोदाणोः । दित्सति । देङ् । दित्सते । दाञ् । दित्सति । दित्सते ॥ धा इति धेट्धाञोर्ग्रहणं । धेट् । धित्सति । धाञ् । धित्सति । धित्सते ॥ रभ । रिप्सते ॥ लभ । आलिप्सते ॥ शक्लृ शक इत्युभयोर्ग्रहणं । शक्लृ । शिक्षति । शक । शिक्षति । शिक्षते ॥ पत्लृ । पित्सति ॥ पद । प्रपित्सते ॥ सनि किं । दास्यति ॥ सकारादौ किं । पिपतिषति ॥

## आप्ज्ञप्यृधामीत् ॥५५॥

आप्लृ । ज्ञप । ऋधु । इत्येतेषां धातूनामच ई । इत्ययमादेशः स्यात् स् । इत्येवमादौ सन्प्रत्यये परे ॥ आप्लृ । ईप्सति ॥ ज्ञप । ज्ञीप्सति ॥ ऋधु ।

ईर्त्सति ॥ सनि किं । प्राप्स्यति ॥ सकारादौ किं । जिज्ञपयिषति । अर्दिधिषति ॥ सनीवन्तेति ज्ञपेर्ऋधेश्चेड्विकल्पः ॥

## दम्भ इच्च ॥५६॥

दम्भु । इत्येतस्य धातोरच इ । इत्ययमादेशः स्यात् । चकारात् । ई । इत्ययमप्यादेशः सकारादौ सनि प्रत्यये परे ॥ दम्भु । धिप्सति । धीप्सति ॥ सादौ किं । दिदम्भिषति ॥

## मुचोऽकर्मकस्य गुणो वा ॥५७॥

मुचॢ । इत्येतस्य धातोरकर्मकस्य वा गुणः स्यात् स् । इत्येवमादौ सनि प्रत्यये परे ॥ मोक्षते । मुमुक्षते वा वत्सः स्वयमेव ॥ हलन्ताच्चेति प्राप्तं कित्त्वं विकल्प्यते ॥ अकर्मकस्य किं । मुमुक्षति वत्सं कृष्णः ॥ कर्मणः कर्तृत्वविवक्षायां कर्मविशेषस्याविवक्षायां वा मुचिरकर्मकः ॥

## अत्र लोपोऽभ्यासस्य ॥५८॥

सनि मीमा । इत्यारभ्य मुचोऽकर्मकस्येत्यन्तं चतुःसूत्र्या यदुक्तं तद्विषयेऽभ्यासस्य लोपः स्यात् ॥ मी । मित्सति । मित्सते ॥ मा । मित्सति । मित्सते ॥ दा । दित्सति । दित्सते ॥ धा । धित्सति । धित्सते ॥ रभ । रिप्सते ॥ लभ । लिप्सते ॥ शक । शिक्षति ॥ पतॢ । पित्सति ॥ पद । पित्सते ॥ आप् । ईप्सति ॥ ज्ञप । ज्ञीप्सति ॥ ऋधु । ईर्त्सति ॥ दम्भ । धिप्सति । धीप्सति ॥ मुचॢ । मोक्षते ॥ अभ्यासस्य । इत्येतदध्यायसमाप्तिपर्यन्तमधिकृतं ज्ञेयं । इत उत्तरं यद्वक्ष्यामोऽभ्यासस्य । इत्येवं तद्विज्ञेयं ॥ वक्ष्यति ह्रस्वः । अभ्यासस्येति । ढौकृ । डुढौकिषते । त्रौकृ । तुत्रौकिषत इति ॥ विषयावधारणायात्रग्रहणं । चतुःसूत्रीविषय एवाभ्यासलोपो नान्यत्र । तेन सन्वद्भावविषये न । मा । अमीमपत् । दा । अदीदपत् ॥

## ह्रस्वः ॥५९॥

अभ्याससंज्ञकस्य ह्रस्वो भवति ॥ भू । बभूव ॥ ढौकृ । डुढौके । डुढौकिषते । अडुढौकत ॥ त्रौकृ । तुत्रौके । तुत्रौकिषते । अतुत्रौकत ॥

## हलादिः शेषः ॥६०॥

अभ्याससंज्ञकस्यादिभूतो हल् शिष्यते । अनादेर्लोपः स्यात् ॥ ग्लै । जग्लौ ॥ म्लै । मम्लौ ॥ डुपचष् । पपाच ॥ पठ । पपाठ ॥ अट । आट । आटतुः । आटुः ॥

## शर्पूर्वाः खयः ॥ ६१ ॥

अभ्यासस्य श । ष । स । इत्येतत्पूर्वाः खय्प्रत्याहारान्तर्गतवर्णाः शिष्यन्ते । अन्ये हल्संज्ञका लुप्यन्ते ॥ श्चुतिर् । चुश्चोतिषति ॥ ष्ठा । तिष्ठासति ॥ स्पदि । पिस्पन्दिषते ॥ शर्पूर्वाः किं । पच । पपाच । पठ । पपाठ ॥ खयः किं । सस्नौ ॥

## कुहोश्चुः ॥ ६२ ॥

अभ्यासस्य क । ख । ग । घ । ङ । ह । इत्येतेषां च । छ । ज । झ । ञ । इत्येत आदेशा भवन्ति ॥ कृ । चकार ॥ खनु । चखान ॥ गम्लृ । जगाम ॥ घस्लृ । जघास ॥ ङुङ् । जुङुषते ॥ हृ । जहार । जिहीर्षति ॥ ओहाक् । जहौ ॥

## न कवतेर्यङि ॥ ६३ ॥

कुङ् । इत्येतस्य भ्वादिगणपठितस्य यो ऽभ्यासस्तस्य यङि परे चवर्गादेशो न स्यात् ॥ कुङ् । कोकूयत उष्ट्रः । कोकूयते खरः ॥ कवतेरिति भ्वादिगणनिर्देशाददादितुदादिगणपठितयोः कु । कूङ् । इत्येतयोर्व्युदासः । चोकूयते ॥ यङि किं । चुकुवे ॥

## कृषेश्छन्दसि ॥ ६४ ॥

कृष । इत्येतस्य धातोरभ्यासस्य यङि परतो वेदे चवर्गादेशो न स्यात् ॥ कृष । करीकृष्यते यज्ञकुणपः ॥ छन्दसि किं । चरीकृष्यते कृषीवलः ॥

## दाधर्ति दर्धर्ति दर्धर्षि बोभूतु तेतिक्ते ऽलर्ष्यापनीफणत् संसनिष्यदत् करिक्रत् कनिक्रदद्भरिभ्रद्दविध्वतो दविद्युतत् तरित्रतः सरीसृपतं वरीवृजन्मर्मृज्यागनीगन्तीति च ॥ ६५ ॥

दाधर्त्ति । दर्धर्त्ति । दर्धर्षि । बोभूतु । तेतिक्ते । अलर्षि । आपनीफणत् । संसनिष्यदत् । करिक्रत् । कनिक्रदत् । भरिभ्रत् । दविध्वतः । दविद्युतत् । तरित्रतः । सरीसृपतं । वरीवृजत् । मर्मृज्य । आगनीगन्ति । इत्येते ऽष्टादश वेदे निपात्यन्ते ॥ धृङ् । णयन्तो वा । तस्माल्लट् । तिप् । शपः श्लुरादेशो ऽभ्यासस्य दीर्घत्वं । परस्मैपदत्वं णयन्तपक्षे णिलोपश्च निपात्यते । दाधर्त्ति ॥ एतस्मादेव धातोर्लट् । तिप् । शपः श्लुरादेशो ऽभ्यासस्य रुगागमो णयन्तपक्षे णिलोपः परस्मैपदत्वं च निपात्यते । दर्धर्त्ति ॥ तस्मादेव धातोर्लट् । सिप् । शपः श्लुरादेशो यङ्लुकि वाभ्यासस्य रुगागमो णयन्तपक्षे णिलोपो परस्मैपदत्वं च निपात्यते । दर्धर्षि ॥ भू । इत्येतस्माद्भ्वादिगणपठिताद्धातोर्यङ्लुगन्ताल्लोटि गुणाभावो निपात्यते । बोभूतु । यदि भूसुवोस्तिङीति गुणप्रतिषेधः सिद्धस्तर्हि वेद एव यङ्लुगन्तस्य गुणनिषेधो न लोक इति ज्ञापनार्थं निपातनं । तेन लोके बोभोति । बोभवीतीति भवति ॥ तिज । इत्येतस्य यङ्लुगन्तस्यात्मनेपदं निपात्यते । तेतिक्ते । यदि यङ्लुगन्तस्य प्रत्ययलक्षणेन ङित्त्वादनुदात्तङित इत्यात्मनेपदं सिद्धं । तर्हि वेद एव यङ्लुगन्तादात्मनेपदं नान्यत्रेति ज्ञापनार्थं निपातनं । तेन बेभिदीमि । चेच्छिदीति । इत्यत्र नात्मनेपदं भवति ॥ ऋ । इत्येतस्माल्लट् । सिप् । शपः श्लावादेशे कृते हलादिः शेषापवादो रेफस्य लत्वमित्वाभावश्च निपात्यते । अलर्षि युध्मखजकृत् पुरंदर । सिपा निर्देशो न विवक्षितस्तिप्यपि दृश्यते । अलर्त्ति दक्षः ॥ फण । इत्येतस्याङुपसर्गपूर्वस्य यङ्लुगन्तस्य शतृप्रत्यये कृते ऽभ्यासस्य नीगागमो निपात्यते । आपनीफणत् ॥ स्यन्दू । इत्येतस्य संपूर्वस्य यङ्लुकि शतर्यैवाभ्यासस्य निगागमो धातुसकारस्य षत्वं च निपात्यते । संसनिष्यदत् ॥ डुकृञ् । इत्येतस्य यङ्लुगन्तस्य शतृप्रत्यये परे ऽभ्यासककारस्य चवर्गाभावो रिगागमश्च निपात्यते । करिक्रत् ॥ क्रदि । इत्येतस्य लुङि च्लेरङादेशो द्विर्वचनमभ्यासककारस्य चवर्गाभावो निगागमो ऽडागमाभावश्च निपात्यते । कनिक्रदत् । अक्रन्दीदिति लोके ॥ डुभृञ् । इत्येतस्य यङ्लुगन्तस्य शतृप्रत्यये भृञामिदिति इत्वाभावो ऽभ्यासस्य जश्त्वाभावो रिगागमश्च निपात्यते । भरिभ्रत् ॥ ध्वृ । इत्येतस्य यङ्लुगन्तस्य शतर्यभ्यासस्य विगागमो धातोरृकारलोपश्च निपात्यते । दविध्वतो रश्मयः सूर्यस्य । असन्तमेतान् ॥ द्युत । इत्येतस्य यङ्लुगन्तस्य शतर्यभ्यासस्य संप्रसारणाभावो ऽत्वं विगागमश्च निपात्यते । दविद्युतत् ॥ तॄ । इत्येतस्य शतृप्रत्ययान्तस्य शपः श्लावादेशे कृते ऽभ्यासस्य रिगागमो निपा-

त्यते । सहोर्जा तरित्रतः । पञ्चम्यन्तमेतत् ॥ सृप्लृ । इत्येतस्य शतृप्रत्ययान्तस्य शपः श्लुरादेशो ऽभ्यासस्य रीगागमो निपात्यते । सरीसृपतं । द्वितीयान्तमेतत् ॥ वृजी । इत्येतस्य शतृप्रत्यये कृते शपः श्लावादेशे ऽभ्यासस्य रीगागमो निपात्यते । वरीवृजत् ॥ मृजूष् । इत्येतस्य लिटि णल्यभ्यासस्य रुगागमो धातोश्च युगागमो निपात्यते । वृद्धेर्लघूपधगुणापवादत्वादलघूपधत्वात् साप्यत्र न भवति । मर्मृज्य ॥ गम्लृ । इत्येतस्याङ्पूर्वस्य लटि श्लावभ्यासस्य चुत्वाभावो नीगागमश्च निपात्यते । वक्ष्यन्तीवेदागनीगन्ति कर्णं ॥ अन्येषामप्येवंविधानामुपसंग्रहायेतिशब्दः ॥

## उरत् ॥ ६६ ॥

ऋ । इत्येतदन्तस्याभ्यासस्य । अ । इत्येष आदेशः स्यात् ॥ वृधु । ववृधे ॥ वृतु । ववृते ॥ नृती । ननर्त । नर्नर्ति । नरिनर्ति । नरीनर्ति ॥ इत्यादावभ्यासविकारेष्वपवादो नोत्सर्गान् विधीन् बाधत इति न्यायात्रपादुरदत्वे कृते रुगादय आगमाः क्रियन्ते ॥

## द्युतिस्वाप्योः संप्रसारणं ॥ ६७ ॥

द्युत । ञिष्वप् एयन्तः । इत्येतयोरभ्यासस्य संप्रसारणसंज्ञक आदेशः स्यात् ॥ द्युत । दिद्युते । व्यदिद्युतत् । दिद्योतिषते । देदिद्युत्यते ॥ स्वापेः । सुस्वापयिषति ॥

## व्यथो लिटि ॥ ६८ ॥

व्यथ । इत्येतस्य धातोरभ्यासस्य संप्रसारणं स्याल्लिटि परे ॥ व्यथ । विव्यथे । विव्यथाते । विव्यथिरे ॥ लिटीति किं । वाव्यथ्यते ॥ हलादिः शेषापवादो ऽयं । वकारस्य तु न संप्रसारणं न संप्रसारणे इति निषेधात् ॥

## दीर्घ इणः किति ॥ ६९ ॥

इण् । इत्येतस्य धातोर्यो ऽभ्यासस्तस्य दीर्घो भवति । किति लिटि परे ॥ इण् । ईयतुः । ईयुः ॥ इणो यणीति यणि कृते तस्य स्थानिवत्वाद्द्विर्वचनं ॥ किति किं । इयाय । इययिथ ॥

## अत आदेः ॥ ७० ॥

अभ्यासस्यादेः । अ । इत्येतस्य दीर्घः स्याल्लिटि परे ॥ अट । आट । आ-

ट्तुः । आटुः ॥ आदेरिति किं । पपाच । पपाठ ॥ अतो गुण इति पर-
रूपापवादो ऽयं ॥

## तस्मान्नुड्द्विहलः ॥७१॥

दीर्घादभ्यासस्याकारात् परस्य द्विहल्युक्तस्य धातोरकारस्य नुट् । इत्येष आगमः
स्यात् ॥ अर्द । आनर्द । आनर्दतुः । आनर्दुः ॥ अगि । आनङ्ग । आन-
ङ्गतुः । आनङ्गुः ॥ द्विहलः किं । आट । आटतुः । आटुः ॥ ऋकारैकदे-
शस्य रेफस्य हल्त्वेन ग्रहणादिहापि नुट् । ऋधु । आनृधतुः । आनृधुः ॥

## अश्नोतेश्च ॥७२॥

अशू । इत्येतस्य दीर्घीभूतादभ्यासाकारात् परस्य । अ । इत्येतस्य नुट् ।
इत्येष आगमः स्यात् ॥ व्यानशे । व्यानशाते । व्यानशिरे ॥ विकरणनिर्दे-
शात् । अश । इत्येतस्य क्र्यादिगणपठितस्य न नुट् । आश । आशतुः ।
आशुः ॥

## भवतेरः ॥७३॥

भू । इत्येतस्य धातोरभ्यासोकारस्य । अ । इत्येष आदेशः स्याल्लिटि परे ॥
भू । बभूव । बभूवतुः । बभूवुः ॥ लिटि किं । बुभूषति । बोभूयते ॥
तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः ॥

## ससूवेति निगमे ॥७४॥

ससूव । इति वेदे निपात्यते ॥ षूङ् । इत्येतस्य लिटः परस्मैपदं वुगागमो
ऽभ्यासस्य अत्वं च निपातनात् ॥ गृष्टिः ससूव स्थविरं विपश्चितां । सुषुवे ।
इति लोके ॥

## निजां त्रयाणां गुणः श्लौ ॥७५॥

णिजिर् । विजिर् । विष्लृ । इत्येतेषां त्रयाणामभ्यासस्य श्लौ परे गुणः
स्यात् ॥ णिजिर् । नेनेक्ति । नेनिक्ते । नेनेक्तु । नेनिक्तां । अनेनेक् ।
अनेनिक्त । नेनिज्यात् । नेनिजीत ॥ विजिर् । वेवेक्ति । वेविक्ते । वेवेक्तु ।
वेविक्तां । अवेवेक् । अवेविक्त । वेविज्यात् । वेविजीत ॥ विष्लृ । वेवे-
ष्टि । वेविष्टे । वेवेष्टु । वेविष्टां । अवेवेट् । अवेविष्ट । वेविष्यात् ।
वेविषीत ॥ श्लाविति किं । निनेज । विवेज । विवेष ॥

## भृञामित् ॥७६॥

भृञ् । माङ् । ओहाङ् । इत्येतेषां त्रयाणामभ्यासस्य । इ । इत्येष आदेशः स्यात् । श्लौ परे ॥ भृञ् । बिभर्ति । बिभृते ॥ माङ् । मिमीते ॥ ओ-हाङ् । जिहीते ॥ त्रयाणां किं । जहाति ॥ श्लौ किं । बभार ॥

## अर्तिपिपर्त्योश्च ॥७७॥

ऋ । पृ । इत्येतयोरभ्यासस्य । इ । इत्ययमादेशः स्यात् । श्लौ परे ॥ ऋ । इयर्ति । इयर्तु ॥ पृ । पिपर्ति । पिपर्तु ॥

## बहुलं छन्दसि ॥७८॥

अभ्यासस्य वेदे बहुलं । इ । इत्येष आदेशः स्यात् । श्लौ परे ॥ वश । पूर्णा विवष्टि ॥ वच । जनिमा विवक्ति ॥ घृ । जिघर्म्यग्निं हविषा घृतेन ॥ न च भवति । ददातीत्येवं ब्रूयात् । जजनमिन्द्रं । माता यद्वीरं दधनद्धनिष्ठा ॥

## सन्यतः ॥७९॥

सन् । इत्येतस्मिन् प्रत्यये परे । अ । इत्येतदन्तस्याभ्यासस्य । इ । इत्ययमादेशः स्यात् ॥ डुपचष् । पिपक्षति ॥ यज । यियक्षति ॥ ष्ठा । तिष्ठासति ॥ पा । पिपासति ॥ सनि किं । पपाच ॥ अतः किं । लुलूषति ॥ सनि ग्रहगुणो-रितीट्प्रतिषेधः ॥ तपरकरणं किं । पापच्यतेः । पापचिषते ॥

## ओः पुयण्ज्यपरे ॥८०॥

सन् । इत्येतस्मिन् प्रत्यये परतो यदङ्गं तदवयवस्याभ्यासस्य । उ । इत्येतस्य । इ । इत्ययमादेशः स्यात् । प । फ । ब । भ । म । य । व । र । ल । ज । इत्येतेष्ववर्णपरेषु परतः ॥ प । पूङ् । पिपविषते । पिपावयिषति । अपीपवत् ॥ भ । भू । बिभावयिषति । अबीभवत् ॥ म । मूङ् । मिमाव-यिषति । अमीमवत् ॥ य । यु । यियविषति । यियावयिषति । अयीयवत् ॥ र । रु । रिरावयिषति । अरीरवत् ॥ ल । लूञ् । लिलावयिषति । अलीलवत् ॥ ज । जु । जिजावयिषति । अजीजवत् ॥ ओः किं । पापच्यतेः अपरे किं । बुभूषति ॥ सनि । पापचिषति ॥ पुयण्जीति किं । नुनावयिषति ॥

## स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ॥८१॥

स्रु । श्रु । द्रु । प्रु । प्लुङ् । च्युङ् । इत्येतेषामभ्यासस्य । उ । इत्येतस्य । इ । इत्ययमादेशो वा-स्यात् सनि । अवर्णपरे यणि परतः ॥ स्रु । सिस्रावयिषति । सुस्रावयिषति ॥ श्रु । शिश्रावयिषति । शुश्रावयिषति ॥ द्रु । दिद्रावयिषति । दुद्रावयिषति ॥ प्रु । पिप्रावयिषति । पुप्रावयिषति ॥ प्लुङ् । पिप्लावयिषति । पुप्लावयिषति ॥ च्युङ् । चिच्यावयिषति । चुच्यावयिषति ॥ अपरे किं । सुस्रूषति । शुश्रूषति ॥ विधानसामर्थ्यादेकवर्णेन यणो व्यवधानाश्रयणं । पूर्वसूत्रेण त्वनन्तर एव यणि भवतीत्यप्राप्तविभाषेयं ॥

## गुणो यङ्लुकोः ॥ ८२ ॥

इ । उ । ऋ । लृ । इत्येतदन्तस्याभ्यासस्य गुणः स्यात् । यङि यङ्लुकि च ॥ यङि । चिञ् । चेचीयते । लूञ् । लोलूयते ॥ यङ्लुकि । हु । जोहवीति । क्रुश । चोक्रुशीति ॥

## दीर्घोऽकितः ॥ ८३ ॥

अकितोऽभ्यासस्याचो दीर्घः स्यात् । यङि यङ्लुकि च ॥ यङि । डुपचष् । पापच्यते ॥ यज । यायज्यते ॥ यङ्लुकि । पापचीति । यायजीति ॥ अकितः किं । यंयम्यते । यंयमीति । रंरम्यते । रंरमीति ॥

## नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दां ॥ ८४ ॥

वञ्चु । स्रंसु । ध्वंसु । भ्रंसु । कस । पतॢ । पद । स्कन्दिर् । इत्येतेषां धातूनामभ्यासस्य नीक् । इत्येष आगमः स्यात् । यङि परे यङ्लुकि च ॥ यङि । वञ्चु । वनीवच्यते ॥ स्रंसु । सनीस्रस्यते ॥ ध्वंसु । दनीध्वस्यते ॥ भ्रंसु । बनीभ्रस्यते ॥ कस । चनीकस्यते ॥ पतॢ । पनीपत्यते ॥ पद । पनीपद्यते ॥ स्कन्दिर् । चनीस्कद्यते ॥ यङ्लुकि । वनीवञ्चीति । सनीस्रंसीति । दनीध्वंसीति । बनीभ्रंसीति । चनीकसीति । पनीपतीति । पनीपदीति । चनीस्कन्दीति ॥

## नुगतोऽनुनासिकान्तस्य ॥ ८५ ॥

अनुनासिकान्तस्य धातोरभ्यासस्य ह्रस्वाकारान्तस्य नुक् । इत्येष आगमः स्यात् । यङि परे यङ्लुकि च ॥ यङि । तनु । तन्तन्यते ॥ गमॢ । जङ्गम्यते ॥ यम । यंयम्यते ॥ रम । रंरम्यते ॥ यङ्लुकि । तन्तनीति । जङ्गमीति ।

यंयमीति । रंरमीति ॥ अतः किं । तेतिम्यते ॥ भूतपूर्वदीर्घस्यापि निवृत्त्यर्थं तपरकरणं । वाभाम्यते ॥ अनुनासिकान्तस्य किं । पापच्यते ॥

## जपजभदहदशभञ्जपशां च ॥ ८६ ॥

जप । जभी । दह । दंश । भञ्जो । पश । इत्येतेषां धातूनामभ्यासस्य नुक् । इत्येष आगमः स्यात् । यङि परे यङ्लुकि च ॥ यङि । जप । जञ्जप्यते ॥ जभी । जञ्जभ्यते ॥ दह । दन्दह्यते ॥ दंश । दन्दश्यते ॥ भञ्जो । वम्भज्यते ॥ पश इति सौत्रो धातुः । पम्पश्यते ॥ यङ्लुकि । जञ्जपीति । जञ्जभीति । दन्दहीति । दन्दशीति । वम्भञ्जीति । पम्पशीति ॥

## चरफलोश्च ॥ ८७ ॥

चर । फल । इत्येतयोर्धात्वोरभ्यासस्य नुक् । इत्येष आगमः स्यात् । यङि परतो यङ्लुकि च ॥ यङि । चर । चञ्चूर्यते ॥ जिफला । पम्फुल्यते ॥ यङ्लुकि । चञ्चुरीति । चञ्चूर्ति ॥ पम्फुलीति । पम्फुल्लि ॥

## उत् परस्यातः ॥ ८८ ॥

चर । फल । इत्येतयोर्धात्वोरभ्यासात् परस्य ह्रस्वस्याकारस्य । उ । इत्ययमादेशः स्यात् । यङि परतो यङ्लुकि च ॥ यङि । चर । चञ्चूर्यते । जिफला । पम्फुल्यते ॥ यङ्लुकि । चञ्चुरीति । पम्फुलीति ॥ परस्य किं । अभ्यासस्य मा भूत् ॥ अतः किं । अन्तस्य मा भूत् ॥ चञ्चूर्ति । पम्फुल्लि । अत्र लघूपधगुणानिवृत्त्यर्थमुदिति तपरत्वं । दीर्घस्यासिद्धत्वादिह लघूपधत्वमस्त्येव ॥

## ति च ॥ ८९ ॥

चर । फल । इत्येतयोर्धात्वोरकारस्य । उ । इत्ययमादेशः स्यात् तू । इत्येवमादौ किति प्रत्यये परे ॥ चर । चूर्तिः ॥ जिफला । फुल्लः । प्रफुल्लिः ॥ यङ्लुकोरभ्यासस्येतीह न संबध्यते । सूत्रारम्भसामर्थ्यात् ॥

## रीगृदुपधस्य च ॥ ९० ॥

ऋकारोपधस्य धातोरभ्यासस्य रीक् । इत्येष आगमः स्यात् । यङि परतो यङ्लुकि च ॥ यङि । वृतु । वरीवृत्यते ॥ वृधु । वरीवृध्यते ॥ गृधु । गरीगृध्यते ॥ नृती । नरीनृत्यते ॥ यङ्लुकि । वरीवृतीति । वरीवृधीति । गरीगृधीति । नरीनृतीति ॥

## रुग्रिकौ च लुकि ॥ ६१ ॥

ऋकारोपधस्य धातोरभ्यासस्य रुक् । रिक् । इत्येतावागमौ स्यातां । चकाराद्रीक् । इत्येष आगमश्च स्यात् । यङ्लुकि ॥ नृती । नर्नृतीति । नरिनृतीति । नरीनृतीति । नर्नर्ति । नरिनर्ति । नरीनर्ति ॥ वृतु । वर्वृतीति । वरिवृतीति । वरीवृतीति । वर्वर्ति । वरिवर्ति । वरीवर्ति ॥ पक्षे यङो वेतीट् ॥ रुक्युच्चारणार्थ उकारः ॥

## ऋतश्च ॥ ६२ ॥

ऋ । इत्येतदन्तस्य धातोरभ्यासस्य रुक् । रिक् । रीक् । इत्येत आगमाः स्युर्यङ्लुकि ॥ डुकृञ् । चर्करीति । चरिकरीति । चरीकरीति । चर्कर्ति । चरिकर्ति । चरीकर्ति ॥ हृञ् । जर्हरीति । जरिहरीति । जरीहरीति । जर्हर्ति । जरिहर्ति । जरीहर्ति ॥ तपरकरणं किं । कॄ । चाकर्ति । तॄ । तातर्ति ॥

## सन्वल्लघुनि चङ्परेऽनग्लोपे ॥ ६३ ॥

चङ्परणिच्प्रत्यये परे यदङ्गसंज्ञं तस्य लघुपरस्याभ्यासस्य सन्प्रत्यये परत इव कार्यं स्यात् । णिच्यग्लोपेऽसति ॥ सन्यत इत्युक्तं । चङ्परे णावपि भवति । डुकृञ् । अचीकरत् ॥ डुपचष् । अपीपचत् ॥ कमु । अचीकमत ॥ लूञ् । अलीलवत् ॥ लघुनि किं । अततक्षत् । अररक्षत् ॥ चङ्परे किं । अहं पपच ॥ परग्रहणं किं । केवले चङि मा भूत् । अचक्रमत ॥ अनग्लोपे किं । अचकथत् ॥

## दीर्घो लघोः ॥ ६४ ॥

चङ्परणिच्प्रत्यये परे यदङ्गसंज्ञं तस्य लघुपरस्य लघोरभ्यासस्य दीर्घः स्यात् । चङ्परे णावग्लोपेऽसति ॥ डुकृञ् । अचीकरत् ॥ हृञ् । अजीहरत् ॥ लूञ् । अलीलवत् ॥ डुपचष् । अपीपचत् ॥ लघोः किं । अचिक्षणत् ॥ लघुनि किं । अततक्षत् ॥ अनग्लोपे किं । अचकथत् ॥

## अत् स्मृदॄत्वरप्रथम्रदस्तॄस्पशां ॥ ६५ ॥

स्मृ । दॄ । ञित्वरा । प्रथ । म्रद । स्तृञ् । स्पश । इत्येतेषां धातूनामभ्यासस्य । अत् । इत्ययमादेशः स्यात् । चङ्परे णिचि परतः ॥ स्मृ ।

असस्मरत् ॥ दॄ । अददरत् ॥ ञित्वरा । अतत्वरत् ॥ प्रथ । अपप्रथत् ॥ म्रद । अमम्रदत् ॥ स्तॄञ् । अतस्तरत् ॥ स्पश । अपस्पशत् ॥ इत्वस्यापवादोऽयं ॥ तपरकरणाद्दीर्घत्वमपि न भवति । अददरत् ॥

## विभाषा वेष्टिचेष्ट्योः ॥ ९६ ॥

वेष्ट । चेष्ट । इत्येतयोर्धात्वोरभ्यासस्य । अत् । इत्ययमादेशो वा स्यात् । चङ्परे णौ परतः ॥ वेष्ट । अववेष्टत् । अविवेष्टत् ॥ चेष्ट । अचचेष्टत् । अचिचेष्टत् ॥

## ई च गणः ॥ ९७ ॥

गण । इत्येतस्य धातोरभ्यासस्य । ई । इत्ययमादेशः स्यात् । अत् । इत्ययमादेशश्च भवति । चङ्परे णिचि परतः ॥ गण । अजीगणत् । अजगणत् ॥

॥ इति सूत्रपाठे सप्तमाध्यायस्य चतुर्थः पादोऽध्यायश्च समाप्तः ॥

॥ अथाष्टमो ऽध्यायः ॥

## सर्वस्य द्वे ॥ १ ॥

इत उत्तरं यद्वक्ष्यामः पदस्येति सूत्रात् प्राक् । तत्र सर्वस्य द्वे इत्युपतिष्ठते ॥ वक्ष्यति नित्यवीप्सयोरिति । तत्र सर्वस्य पदस्य स्थाने शब्दतो ऽर्थतश्चान्तरतमे द्वे शब्दस्वरूपे भवतः । पचति पचति ॥ अवयवकार्त्स्न्यवृत्तिः सर्वशब्दो ऽत्र गृह्यते ॥

## तस्य परमाम्रेडितं ॥ २ ॥

द्विरुच्चारितस्य यद्द्वितीयं शब्दस्वरूपं तदाम्रेडितसंज्ञं स्यात् ॥ चौर चौर३ घातयिष्यामि त्वां । वृषल वृषला३ मारयिष्यामि त्वां । दस्यो दस्यो३ बन्धयिष्यामि त्वां ॥ अत्राम्रेडितं भर्त्सन इति द्वितीयस्य प्लुतः ॥

## अनुदात्तं च ॥ ३ ॥

द्विरुच्चारितस्य यद्द्वितीयं शब्दस्वरूपं तदनुदात्तं स्यात् ॥ भुङ्क्ते भुङ्क्ते । पशून् पशून् । द्वितीयो ऽत्रानुदात्तः ॥

## नित्यवीप्सयोः ॥ ४ ॥

आभीक्ष्ण्ये ऽर्थे वीप्सायां च यद्वर्तते तस्य पदस्य द्विर्वचनं स्यात् ॥ आभीक्ष्ण्यं तिङन्तेष्वव्ययसंज्ञककृदन्तेषु च ॥ आभीक्ष्ण्ये । तिङ् । पचति पचति ।

लुनीहि लुनीहीत्येवायं लुनाति । कृत् । भुक्त्वा भुक्त्वा व्रजति । भोजं भोजं व्रजति ॥ नानार्थकशब्दाधिकरणानां क्रियागुणाभ्यां प्रयोक्तुर्युगपद्व्याप्तुमिच्छा वीप्सा ॥ वीप्सायां । ग्रामो ग्रामो रमणीयः । पुरुषः पुरुषो निधनमुपैति ॥

## परेर्वर्जने ॥५॥

परि । इत्येतस्य वर्जने ऽर्थे विद्यमानस्य द्वित्वं स्यात् ॥ परि परि वङ्गेभ्यो वृष्टो देवः ॥ वर्जनं परिहारः ॥ वर्जने किं । ओदनं परिषिञ्चति । सर्वतोभावे ऽत्र परिः ॥

## प्रसमुपोदः पादपूरणे ॥६॥

प्र । सं । उप । उद् । इत्येतेषां पादपूरणे वर्तमानानां द्वित्वं स्यात् ॥ प्र प्रायमग्निः । सं समिद्युवसे । उपोप मे परामृश । किं नोदुदु हर्षसे ॥ पादपूरणे किं । प्रदेवं देव्या धिया ॥ लोक एवंविधप्रयोगाभावात् सामर्थ्याच्छन्दस्येवैतद्विधानं ॥

## उपर्यध्यधसः सामीप्ये ॥७॥

उपरि । अधि । अधस् । इत्येतेषां सामीप्ये द्योत्ये द्वित्वं स्यात् ॥ उपरि । उपर्युपरि दुःखं । दुःखस्योपरिष्टात् समीपकाले दुःखमित्यर्थः । उपर्युपरि ग्रामं । ग्रामस्योपरिष्टात् समीपदेश इत्यर्थः ॥ अधि । अध्यधि ग्रामं ॥ अधस् । अधो ऽधो लोकं ॥ सामीप्ये किं । उपरि चन्द्रमाः ॥ देशकालाभ्यां कृता प्रत्यासत्तिः सामीप्यं ॥

## वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु ॥८॥

असूया । संमति । कोप । कुत्सन । भर्त्सन । इत्येतेषु यद्वाक्यं तदादेः संबोधनप्रथमान्तस्य द्वित्वं स्यात् ॥ परगुणानामसहनमसूया । पूजनं संमतिः । क्रोधः कोपः । निन्दनं कुत्सनं । अपकारशब्दैर्भयोत्पादनं भर्त्सनं । एते च प्रयोक्तृधर्माः ॥ असूयायां । अभिरूपका३ अभिरूपक रिक्तं त आभिरूप्यं ॥ संमतौ । अभिरूपका३ अभिरूपक शोभनः खल्वसि ॥ कोपे । अविनीतका३ अविनीतक इदानीं ज्ञास्यसि जाल्म ॥ कुत्सने । धानुष्का३ धानुष्क वृथा ते धनुः ॥ भर्त्सने । चौर चौरा३ घातयिष्यामि त्वां ॥ असूयादिषु स्वरितमाम्रेडिते ऽसूयेति पूर्वप-

दस्य प्लुतः । भर्त्सने आम्रेडितं भर्त्सने इत्याम्रेडितस्यैव प्लुतः ॥ वाक्यादेः किं ।
मध्यान्त्ययोर्मा भूत् । शोभनः खल्वसि माणवक ॥ आमन्त्रितस्य किं । उदारो
देवदत्तः ॥ अनृत्यादि किं । देवदत्त गामभ्याज शुक्लां ॥

## एकं बहुव्रीहिवत् ॥ ९ ॥

एक । इत्येष शब्दो द्विरुक्तो बहुव्रीहिवत् स्यात् । तेन सुलोपपुंवद्भावौ ॥
एकैकमक्षरं । एकैकयाहुत्या ॥

## आबाधे च ॥ १० ॥

आबाधः पीडा । तस्यां द्योत्यायां द्वित्वं स्यात् । बहुव्रीहिवद्भावश्च भवति ॥
गतगतः । पतितपतितः ॥ बहुव्रीहिवद्भावात् सुपो लुक् । गतगता । नष्ट-
नष्टा । सुलोपपुंवद्भावान्तोदात्तत्वानि ॥ विरहात् पीड्यमानस्येदं वचनं ॥

## कर्मधारयवदुत्तरेषु ॥ ११ ॥

एतस्मात् सूत्रादुत्तरेषु द्विर्वचनेषु कर्मधारयवत् कार्यं ज्ञेयं ॥ कर्मधारयवत्त्वे
प्रयोजनं सुलोपपुंवद्भावान्तोदात्तत्वानि ॥ सुलोपः । पटुपटुः ॥ पुंवद्भावः ।
मृदुमृद्वी ॥ अन्तोदात्तत्वं । पटुपटुः ॥ परत्वादाम्रेडितानुदात्तमनेन बाध्यते ॥
अधिकारात् सिद्ध उत्तरेष्विति स्पष्टार्थं ॥

## प्रकारे गुणवचनस्य ॥ १२ ॥

सादृश्ये वर्तमानस्य गुणवाचकस्य शब्दस्य द्वित्वं स्यात् । तच्च कर्मधारयवत् ।
तेन सुलोपपुंवद्भावान्तोदात्तत्वानि ॥ पटुपटुः । पटुपट्वी । पण्डितपण्डितः ॥ न्यू-
नगुणस्य पूर्णगुणेनोपमाने सत्येवं प्रयोगः । सादृश्यवाच्यत्र प्रकारशब्दः ।
केवलगुणवाचिनां गुणोपसर्जनद्रव्यवाचिनां चात्र ग्रहणं ॥ शुक्लशुक्लं रूपं ।
शुक्लशुक्लः पटः ॥ प्रकारे किं । पटुर्देवदत्तः ॥ गुणवचनस्य किं । अग्निर्मा-
णवकः । गौर्वाहीकः ॥

## अकृच्छ्रे प्रियसुखयोरन्यतरस्यां ॥ १३ ॥

प्रिय । सुख । इत्येतयोरकृच्छ्रत्वे द्योत्ये द्वित्वं वा स्यात् ॥ कृच्छ्रं दुःखं तद-
भावो ऽकृच्छ्रं ॥ प्रियप्रियेण ददाति । प्रियेण ददाति ॥ सुखसुखेन ददाति ।
सुखेन ददाति ॥ अतिप्रियमपि वस्त्वनायासेन ददातीत्यर्थः ॥ अकृच्छ्रे किं ।
प्रियः पुत्रः । सुखो रथः ॥

## यथास्वे यथायथं ॥१४॥

यथास्वे ऽर्थे यथाशब्दस्य द्वित्वं नपुंसकत्वं च निपात्यते ॥ यो ऽयमात्मा यच्चात्मीयं तद्यथास्वं ॥ आत्मनि । ज्ञाताः सर्वे पदार्था यथायथं । यथास्वभावमित्यर्थः ॥ आत्मीये । सर्वेषां तु यथायथं । यथदात्मीयमित्यर्थः ॥

## द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ॥१५॥

रहस्य । मर्यादावचन । व्युत्क्रमण । यज्ञपात्रप्रयोग । अभिव्यक्ति । इत्येतेष्वर्थेषु द्वन्द्वमिति निपात्यते ॥ द्विशब्दस्य द्विर्वचनं पूर्वपदस्याम्भावो ऽत्वं चोत्तरपदस्य नपुंसकत्वं च निपातनात् । तत्र रहस्यं द्वन्द्वशब्दवाच्यं । इतरे विषयभूताः ॥ रहस्ये । द्वन्द्वं मन्त्रयते । रहस्यमित्यर्थः ॥ मर्यादावचने । आचतुरं हीमे पशवो द्वन्द्वं मिथुनायन्ते । माता पुत्रेण मिथुनं गच्छति । पौत्रेण प्रपौत्रेण तत्पुत्रेणापीति मर्यादार्थः । स्थित्यनतिक्रमो मर्यादा ॥ व्युत्क्रमणे । द्वन्द्वं व्युत्क्रान्ताः । द्विवर्गसंबन्धेन पृथगवस्थिता इत्यर्थः । पृथगवस्थानं व्युत्क्रमणं ॥ यज्ञपात्रप्रयोगे । द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति ॥ अभिव्यक्तौ । द्वन्द्वं संकर्षणवासुदेवौ । साहचर्येण द्वावप्यभिव्यक्तावित्यर्थः ॥ द्वन्द्वं युद्धं । द्वन्द्वानि सहते धीरः । चार्थे द्वन्द्व इत्यादियोगविभागात् सिध्यति ॥

## पदस्य ॥१६॥

यदेतस्मादूर्ध्वमनुक्रमिष्यामस्तत् पदस्य ज्ञेयं । वक्ष्यति संयोगान्तस्य लोपः । पचन् । यजन् ॥ पदस्य किं । पचन्तौ । यजन्तौ ॥ पदस्येति क्वचिदवयवषष्ठी क्वचित् स्थानषष्ठी ज्ञेया ॥

## पदात् ॥१७॥

अयमप्यधिकारः ॥ यदित ऊर्ध्वमनुक्रमिष्यामः पदात् तदेदितव्यं । वक्ष्यति आमन्त्रितस्य च । पचसि देवदत्त ॥ पदात् किं । देवदत्त पचसि ॥ कुत्सने च सुप्यगोत्रादावित्यतः प्राक् पदादित्यधिकारः ॥

## अनुदात्तं सर्वमपादादौ ॥१८॥

पदत्रयाधिकारो ऽयमा पादपरिसमाप्तेः ॥ यदित ऊर्ध्वं वक्ष्यामस्तत्रानुदात्तं

सर्वमपादादावित्येवं ज्ञेयं । वक्ष्यति आमन्त्रितस्य च । पचसि देवदत्त ॥ अपादादौ किं । यत् ते नियतं दृजसं मृत्यो अनवधृष्यं ॥ पादशब्देनात्र ऋक्पादः श्लोकपादश्च गृह्यते ॥

## आमन्त्रितस्य च ॥ १९ ॥

आमन्त्रितसंज्ञकस्य पदस्य पदादुत्तरस्यापादादौ वर्तमानस्य सर्वस्यानुदात्तः स्यात् ॥ गच्छसि यज्ञदत्त । इमं मे गङ्गे यमुने सरस्वति ॥ अपादादौ किं । प्रातुद्भि स्तोमं ॥ पाद्यमन्त्रितानुदात्तत्वापवादो ऽयं ॥

## युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ ॥ २० ॥

युष्मद् । अस्मद् । इत्येतयोः पदात् परयोरपादादौ स्थितयोः षष्ठीचतुर्थीद्विती-
यास्थयोर्यथासंख्यं वां । नौ । इत्येतावादेशौ स्तस्तौ चानुदात्तौ ॥ षष्ठी ।
ग्रामो वां स्वं । युवयोरित्यर्थः । जनपदो नौ स्वं । आवयोरित्यर्थः ॥ चतु-
र्थी । ग्रामो वां दीयते । युवाभ्यामित्यर्थः । जनपदो नौ दीयते । आवा-
भ्यामित्यर्थः ॥ द्वितीया । ग्रामो वां पश्यति । युवामित्यर्थः । जनपदो नौ
पश्यति । आवामित्यर्थः ॥ एकवचनबहुवचनान्तयोरादेशान्तरविधानात् पारि-
शेष्या द्विवचनान्तयोरेवैतावादेशौ भवतः ॥ पदात् परयोः किं । वाक्यादौ
मा भूत् । युवां पातु । आवां पातु ॥ पादादिस्थितयोर्निवृत्तये ऽपादादावि-
ति ॥ षष्ठ्यादि किं । ग्रामे युवाभ्यां कृतं । आवाभ्यां कृतं ॥ स्थग्रहणा-
च्छ्रूयमाणविभक्तिकयोरेवैतावादेशौ भवतः । नेह । इति युष्मत्पुत्रो ब्रवीति ॥

## बहुवचनस्य वस्नसौ ॥ २१ ॥

युष्मद् । अस्मद् । इत्येतयोः पदात् परयोरपादादौ स्थितयोः षष्ठीचतुर्थीद्विती-
याबहुवचनान्तयोर्यथासंख्यं वस् । नस् । इत्येतावादेशौ स्तस्तौ चानुदात्तौ ॥
षष्ठी । ग्रामो वः स्वं । युष्माकमित्यर्थः । जनपदो नः स्वं । अस्माकमित्यर्थः ॥
चतुर्थी । ग्रामो वो दीयते । युष्मभ्यमित्यर्थः । जनपदो नो दीयते । अस्म-
भ्यमित्यर्थः ॥ द्वितीया । ग्रामो वः पश्यति । युष्मानित्यर्थः । जनपदो नः
पश्यति । अस्मानित्यर्थः ॥ वांनावोरपवादो ऽयं ॥

## तेमयावेकवचनस्य ॥ २२ ॥

युष्मद् । अस्मद् । इत्येतयोः पदात् परयोरपादादौ स्थितयोः षष्ठीचतुर्थ्येकव-

चनान्तयोर्यथासंख्यं ते । मे । इत्येतावादेशौ स्तस्तौ चानुदात्तौ ॥ षष्ठी । ग्रामस्ते स्वं । तवेत्यर्थः । ग्रामो मे स्वं । ममेत्यर्थः ॥ चतुर्थी । ग्रामस्ते दीयते । तुभ्यमित्यर्थः । ग्रामो मे दीयते । मह्यमित्यर्थः ॥ द्वितीयैकवचनान्तस्यादेशान्तरविधानसामर्थ्यात् षष्ठीचतुर्थ्येकवचनान्तयोरेवैतावादेशौ भवतः ॥

## त्वामौ द्वितीयायाः ॥२३॥

युष्मद् । अस्मद् । इत्येतयोः पदात् परयोरपादादौ स्थितयोर्द्वितीयैकवचनान्तयोर्यथासंख्यं त्वा । मा । इत्येतावादेशौ भवतस्तौ चानुदात्तौ ॥ ग्रामस्त्वा पश्यति । त्वामित्यर्थः । ग्रामो मा पश्यति । मामित्यर्थः ॥

## न चवाहाहैवयुक्ते ॥२४॥

च । वा । ह । अह । एव । इत्येतैः पञ्चभिर्योगे युष्मद् । अस्मद् । इत्येतयोः षष्ठीचतुर्थीद्वितीयान्तयोः । वां । नौ । इत्यादय आदेशा न स्युः ॥ च । ग्रामस्तव च स्वं । मम च स्वं । ग्रामस्तुभ्यं च दीयते । मह्यं च दीयते । ग्रामस्त्वां च पश्यति । मां च पश्यति ॥ वा । ग्रामो युवयोर्वा स्वं । आवयोर्वा स्वं । ग्रामो युवाभ्यां वा दीयते । आवाभ्यां वा दीयते । ग्रामो युवां वा पश्यति । आवां वा पश्यति ॥ ह । ग्रामो युष्माकं ह स्वं । अस्माकं ह स्वं । ग्रामो युष्मभ्यं ह दीयते । अस्मभ्यं ह दीयते । ग्रामो युष्मान् ह पश्यति । अस्मान् ह पश्यति ॥ अह । ग्रामो युवयोरह स्वं । आवयोरह स्वं । ग्रामो युवाभ्यामह दीयते । आवाभ्यामह दीयते । ग्रामो युवामह पश्यति । आवामह पश्यति ॥ एव । ग्रामस्तवैव स्वं । ममैव स्वं । ग्रामस्तुभ्यमेव दीयते । मह्यमेव दीयते । ग्रामस्त्वामेव पश्यति । मामेव पश्यति । इत्यादयो ज्ञेयाः ॥ साक्षाद्योगप्रतिपत्त्यर्थं युक्तग्रहणं । परंपरासंबन्धे त्वादेशा भवन्त्येव । हरो हरिश्च मे स्वामी ॥

## पश्यार्थैश्चानालोचने ॥२५॥

दर्शनार्थैरनालोचने वर्तमानैर्धातुभिर्योगे युष्मद् । अस्मद् । इत्येतयोः । वां । नौ । इत्यादय आदेशा न भवन्ति ॥ ग्रामस्त्वां समीक्ष्यागतः । ग्रामो मां समीक्ष्यागतः । चेतसा त्वां समीक्षते ॥ अनालोचने किं । भक्तस्त्वा पश्यति चक्षुषा ॥

## सपूर्वायाः प्रथमाया विभाषा ॥ २६ ॥

विद्यमानपूर्वात् प्रथमान्तात् पदादुत्तरयोर्युष्मदस्मदोः । वां । नौ । इत्याद्य आदेशा वा न भवन्ति ॥ भक्तस्त्वमप्यहं तेन हरिस्त्वां त्रायते स मां । त्वा । मा । इति वा ॥ सपूर्वायाः किं । कम्बलस्ते स्वं । कम्बलो मे स्वं ॥ प्रथमायाः किं । कम्बलो ग्रामे ते स्वं । कम्बलो ग्रामे मे स्वं ॥

## तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ॥ २७ ॥

तिङन्तात् पदात् पराणि गोत्रादीनि कुत्सन आभीक्ष्ण्ये चार्थे वर्तमानान्यनुदात्तानि स्युः ॥ कुत्सने । पचति गोत्रं । जल्पति गोत्रं ॥ आभीक्ष्ण्ये । पचति पचति गोत्रं ॥ तिङः किं । कुत्सितं गोत्रं ॥ गोत्रादीनि किं । पचति पापं ॥ कुत्सनाभीक्ष्ण्ययोः किं । खनति गोत्रं समेत्य कूपं ॥

## तिङ्ङतिङः ॥ २८ ॥

तिङन्तं पदमतिङन्तात् पदात् परमनुदात्तं स्यात् ॥ देवदत्तः पचति । अग्निमीडे ॥ तिङ् किं । नीलमुत्पलं ॥ अतिङः किं । भवति पचति ॥

## न लुट् ॥ २९ ॥

लुडन्तं तिङन्तमतिङन्तात् पदात् परं नानुदात्तं स्यात् ॥ श्वः कर्ता । मासेन कर्तारः ॥ पूर्वसूत्रापवादोऽयं ॥

## निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तं ॥ ३० ॥

एतैर्निपातैर्युक्तं तिङन्तं नानुदात्तं स्यात् ॥ यद् । यत् करोति ॥ यदि । यदि भविष्यति ॥ हन्त । हन्त पचिष्यति ॥ कुवित् । कुवित् पचति ॥ नेत् । नज्जिह्मायन्तो नरकं पताम ॥ चेत् । स चेदधीते ॥ चण् चेदर्थे णिच्च शब्दः । अयं च मरिष्यति । अयं चेन्मरिष्यतीत्यर्थः ॥ कच्चित् । कच्चिदधीते ॥ यत्र । पुत्रासो यत्र पितरो भवन्ति ॥ निपातैः किं । यन् कूजति शकटं । इणः शतृप्रत्यये रूपमेतत् ॥ युक्तं किं । यत्र क्व च ते मनो गच्छन्नित्यर्थः । दक्षं दधस उत्तरं ॥

## नह प्रत्यारम्भे ॥ ३१ ॥

नह । इत्यनेन युक्तं तिङन्तं नानुदात्तं स्यात् प्रत्यारम्भे ॥ प्रतिषेधयुक्त आरम्भः प्रत्यारम्भः ॥ नहेति निपातसमुदायः प्रतिषेधार्थः ॥ नह भोक्ष्यसे । नहाध्येष्यसे ॥ प्रत्यारम्भे किं । नह वै तस्मिंश्च लोके दक्षिणामिच्छन्ति ॥

## सत्यं प्रश्ने ॥३२॥

सत्यं । इत्यनेन युक्तं तिङन्तं प्रश्ने नानुदात्तं स्यात् ॥ सत्यं भोक्ष्यसे । सत्यमध्येष्यसे ॥ प्रश्ने किं । सत्यं वक्ष्यामि नानृतं ॥

## अङ्गाप्रातिलोम्ये ॥३३॥

अङ्ग । इत्यनेन युक्तं तिङन्तमानुकूल्ये गम्यमाने नानुदात्तं स्यात् ॥ अङ्ग कुरु । अङ्ग पच ॥ अप्रातिलोम्ये किं । अङ्ग कूज वृषल । इदानीं ज्ञास्यसि जाल्म । कूजनमनभिप्रेतं कुर्वन्नसौ प्रतिलोमः ॥

## हि च ॥३४॥

हि । इत्यनेन युक्तं तिङन्तमानुकूल्ये गम्यमाने नानुदात्तं स्यात् ॥ स हि कुरु । स हि पठ ॥ अप्रातिलोम्ये किं । स हि कूज वृषल । इदानीं ज्ञास्यसि जाल्म ॥

## छन्दस्यनेकमपि साकाङ्क्षं ॥३५॥

हि । इत्यनेन युक्तं साकाङ्क्षमनेकमेकमपि तिङन्तं वेदे नानुदात्तं स्यात् ॥ अनेकं । अनृतं हि मत्तो वदति । पाप्मानं चैनं पुनाति ॥ तिङन्तद्वयमपि न निहन्यते ॥ एकं । अग्निर्हि पूर्वमुदजयत् तमिन्द्रो ऽनूदजयत् । एकमानुदात्तं ॥

## यावद्यथाभ्यां ॥३६॥

यावत् । यथा । इत्येताभ्यां युक्तं तिङन्तं नानुदात्तं स्यात् ॥ यावत् । यावद्भुङ्क्ते ॥ यथा । यथा भुङ्क्ते ॥

## पूजायां नानन्तरं ॥३७॥

यावत् । यथा । इत्येताभ्यां युक्तमनन्तरं तिङन्तं पूजायां गम्यमानायां नानुदात्तं न स्यात् । किं त्वनुदात्तमेव ॥ यावत् । यावत् पचति शोभनं ॥ यथा ।

यथा पचति शोभनं ॥ पूर्वसूत्रेण प्राप्तो निघातप्रतिषेधः प्रतिषिध्यते ॥ पूजायां किं । यावद्भुङ्क्ते । यथा भुङ्क्ते ॥ अनन्तरं किं । यावद्देवदत्तः पचति शोभनं । यथा देवदत्तः करोति चारु ॥ पूर्वेणात्र निघातप्रतिषेधः ॥

## उपसर्गव्यवेतं च ॥ ३८ ॥

यावत् । यथा । इत्येताभ्यां युक्तमुपसर्गव्यवहितं च तिङन्तं पूजायां विषये नानुदात्तं न स्यात् । किं त्वनुदात्तमेव ॥ यावत् । यावत् प्रपचति शोभनं ॥ यथा । यथा प्रपचति शोभनं ॥ पूर्वमनन्तरमित्युक्तं । उपसर्गव्यवधानार्थो ऽयमारम्भः ॥ अनन्तरमित्येव । नेह । यावद्देवदत्तः प्रपचति शोभनं । यथा विष्णुमित्रः प्रकरोति चारु ॥

## तुपश्यपश्यताहैः पूजायां ॥ ३९ ॥

तु । पश्य । पश्यत । अह । इत्येतैर्युक्तं तिङन्तं पूजायां विषये नानुदात्तं स्यात् ॥ तु । माणवकस्तु भुङ्क्ते शोभनं ॥ पश्य । पश्य माणवको भुङ्क्ते शोभनं ॥ पश्यत । पश्यत माणवको भुङ्क्ते शोभनं ॥ अह । अह माणवको भुङ्क्ते शोभनं ॥ पूजायां किं । पश्य मृगो धावति ॥

## अहो च ॥ ४० ॥

अहो । इत्यनेन युक्तं तिङन्तं पूजायां विषये नानुदात्तं स्यात् ॥ अहो देवदत्तः पचति शोभनं । अहो विष्णुमित्रः करोति चारु ॥ उत्तरार्थं पृथग्योगकरणं ॥

## शेषे विभाषा ॥ ४१ ॥

अहो । इत्यनेन युक्तं तिङन्तमपूजायां वा नानुदात्तं स्यात् ॥ कटमहो करि-ष्यसि । कटमहो करिष्यसि ॥ असूयावचनमेतत् ॥ पूजातिरिक्तं शेषः ॥ पूर्वसूत्रे पूजायामित्यस्य चानुकृष्टत्वादत्राननुवृत्तेः शेषग्रहणं स्पष्टार्थं ॥

## पुरा च परीप्सायां ॥ ४२ ॥

पुरा । इत्यनेन युक्तं तिङन्तं त्वरायामर्थे वा नानुदात्तं स्यात् ॥ अधीष्व माणवक पुरा विद्योतते विद्युत् । अधीष्व माणवक पुरा विद्योतते विद्युत् ॥ पक्षे तिङ्ङतिङ इति निघातः ॥ निकटागामिन्यत्र पुराशब्दः ॥ परीप्सा त्वरा ॥ परीप्सायां किं । न ते स्म पुराधीयते । चिरातीतेऽत्र पुराशब्दः ॥

## नन्वित्यनुज्ञैषणायां ॥ ४३ ॥

ननु । इत्यनेन युक्तं तिङन्तमनुज्ञाप्रार्थनाविषये नानुदात्तं स्यात् ॥ ननु गच्छामि भोः । अनुजानीहि मां गमनं प्रतीत्यर्थः ॥ अनुज्ञाप्रार्थनानुज्ञैषणा ॥ अनुज्ञैषणायां किं । अकार्षीः कटं देवदत्त । ननु करोमि भोः । पृष्टप्रतिवचनमेतत् ॥

## किं क्रियाप्रश्ने ऽनुपसर्गमप्रतिषिद्धं ॥ ४४ ॥

किं । इत्यनेन क्रियाप्रश्ने वर्तमानेन युक्तमुपसर्गरहितमप्रतिषिद्धार्थं तिङन्तं नानुदात्तं स्यात् ॥ किं देवदत्तः पचति । आहोस्विद्भुङ्क्ते ॥ क्रियेति किं । साधनप्रश्ने मा भूत् । किं देवदत्त ओदनं पचति । आहोस्विच्छाकमिति ॥ प्रश्ने किं । किमधीते । क्षेपे ऽयं किंशब्दः ॥ अनुपसर्गं किं । किं देवदत्तः प्रपचति । उत प्रकरोति ॥ अप्रतिषिद्धं किं । किं किं द्विजो न पचति । उत न करोति ॥

## लोपे विभाषा ॥ ४५ ॥

किं । इत्येतस्य गम्यमानार्थत्वादप्रयोगे क्रियाप्रश्ने गम्यमाने ऽनुपसर्गमप्रतिषिद्धं तिङन्तं वा नानुदात्तं स्यात् ॥ देवदत्तः पचति । आहोस्वित् पठति ॥ किंशब्देन विनैव प्रश्नो ऽत्र गम्यते ॥ किमर्थेन योगात् पूर्वेण प्राप्ते विभाषेयं ॥ प्रत्युदाहरणानि पूर्ववत् ॥

## एहिमन्ये प्रहासे लृट् ॥ ४६ ॥

एहि मन्ये । इत्यनेन युक्तं लृडन्तं प्रहासे गम्यमाने नानुदात्तं स्यात् ॥ एहि मन्य ओदनं भोक्ष्यसे । न हि भोक्ष्यसे । भुक्तः सो ऽतिथिभिः ॥ प्रहासे किं । एहि मन्यस ओदनं भोक्ष्य इति । सुष्ठु च मन्यसे ॥ प्रहासः क्रीडा ॥

## जात्वपूर्वं ॥ ४७ ॥

जातु । इत्यनेनाविद्यमानपूर्वेण युक्तं तिङन्तं नानुदात्तं स्यात् ॥ जातु भोक्ष्यसे । जातु करिष्यसि ॥ अपूर्वं किं । कटं जातु करिष्यसि ॥

## किंवृत्तं च चिदुत्तरं ॥ ४८ ॥

किंवृत्त । इत्यनेन चिच्छब्दोत्तरेणाविद्यमानपूर्वेण युक्तं तिङन्तं नानुदात्तं

स्यात् ॥ कश्चिद्भुङ्क्ते । केनचित् करोति । कतरश्चित् पचति । कतमश्चित्
पठति ॥ विभक्त्यन्तं उतरउतमान्तं च किमो रूपं किंवृत्तशब्देनोच्यते ॥
चिदुत्तरं किं । को भुङ्क्ते ॥ अपूर्वमित्येव । देवदत्तः किंचित् पठति ॥

## आहो उताहो चानन्तरं ॥४९॥

आहो । उताहो । इत्येताभ्यामपूर्वाभ्यां युक्तमनन्तरं तिङन्तं नानुदात्तं स्यात् ॥
आहो । आहो भुङ्क्ते ॥ उताहो । उताहो पठति ॥ अनन्तरं किं । शेषे
विभाषां वक्ष्यति ॥ अपूर्वमिति किं । देवदत्त आहो भुङ्क्ते ॥

## शेषे विभाषा ॥५०॥

आहो । उताहो । इत्येताभ्यामपूर्वाभ्यां युक्तं व्यवहितं तिङन्तं वा नानुदात्तं
स्यात् ॥ आहो । आहो देवदत्तः पचति ॥ उताहो । उताहो देवदत्तः पच-
ति ॥ पक्षे ऽनुदात्तत्वं ॥ अनन्तरादन्यः सान्तरः शेषः ॥

## गत्यर्थलोटा लृण्न चेत् कारकं सर्वान्यत् ॥५१॥

गत्यर्थकधातुविहितलोड्लकारादेशतिङन्तेन युक्तं लृड्लकारादेशतिङन्तं नानु-
दात्तं स्यात् । यत्रैव कर्तरि कर्मणि वा कारके लोड्विहितस्तत्रैव लृडपि यदि
भवेत् ॥ आगच्छ देव ग्रामं द्रक्ष्यस्येनं । उह्यन्तां देवदत्तेन शालयो रामेण
भोक्ष्यन्ते ॥ कारकग्रहणेनात्र तिङन्तवाच्ये कर्तृकर्मणी एव गृह्येते ॥ गत्य-
र्थग्रहणं किं । पच देवदत्तौदनं भोक्ष्यसे ऽन्नं ॥ लोटा किं । आगच्छेर्देवदत्त
ग्रामं द्रक्ष्यस्येनं ॥ लृट् किं । आगच्छ देव ग्रामं पश्यस्येनं ॥ न चेदित्यादि
किं । आगच्छ देव ग्रामं पित्रा त ओदनं भोक्ष्यते ॥ सर्वग्रहणं किं । आ-
गच्छ देव ग्रामं त्वं चाहं च द्रक्ष्याव एनमित्यत्रापि निघातप्रतिषेधो यथा
स्यात् ॥ लोडन्तस्य यत् कारकं तच्चान्यच्च लृडन्तेनोच्यते ॥

## लोट् च ॥५२॥

लोडादेशतिङन्तं गत्यर्थधातुविहितलोडादेशतिङन्तयुक्तं नानुदात्तं स्यात् । यदि
द्वयोर्लोडन्तयोरेकं कारकं भवति ॥ आगच्छ देव ग्रामं पश्य ॥ गत्यर्थेति
किं । पच देवदत्तौदनं भुङ्क्ष्वैनं ॥ लोट् किं । आगच्छ देवदत्त ग्रामं पश्य-
स्येनं ॥ न चेदित्यादि किं । आगच्छ देवदत्त ग्रामं पश्यत्वेनं यज्ञदत्तः ॥
सर्वग्रहणात् त्विह स्यादेव । आगच्छ देवदत्त ग्रामं त्वं चाहं च पश्याव ॥
योगविभाग उत्तरार्थः ॥

## विभाषितं सोपसर्गमनुत्तमं ॥५३॥

लोडादेशतिङन्तमुपसर्गसहितमुत्तमपुरुषवर्जितं गत्यर्थधातुविहितलोडादेशतिङन्तयुतं वा नानुदात्तं स्यात् । यदि द्वयोर्लोडन्तयोरेकं कारकं भवति ॥ आगच्छ देव ग्रामं प्रविश । आगच्छ देव ग्रामं प्रविश ॥ सोपसर्गं किं । आगच्छ देव ग्रामं पश्य ॥ अनुत्तमं किं । आगच्छानि देव ग्रामं प्रविशानि ॥ प्राप्तविभाषेयं ॥

## हन्त च ॥५४॥

हन्त । इत्यनेन युक्तं लोडादेशतिङन्तं सोपसर्गमुत्तमपुरुषवर्जितं वा नानुदात्तं स्यात् ॥ हन्त प्रविश । हन्त प्रविश ॥ सोपसर्गं किं । हन्त कुरु । निपातैर्यद्यदीति निघातनिषेधः ॥ अनुत्तमं किं । हन्त प्रभुनजावहै ॥

## आम एकान्तरमामन्त्रितमनन्तिके ॥५५॥

आं । इत्येतस्मात् परमेकपदान्तरितं संबोधनप्रथमाविभक्त्यन्तं दूरे वर्तमानं नानुदात्तं स्यात् ॥ आं पचसि देवदत्ता३ । आमन्त्रितस्य चेत्याद्युदात्तत्वं । दूराद्धूते चेति प्लुतः ॥ आमः किं । शाकं पचसि देवदत्त ॥ एकान्तरं किं । आमोदनं प्रपचसि देवदत्ता३ ॥ आमन्त्रितं किं । आं पचति देवदत्तः ॥ अनन्तिके किं । आं पचसि देवदत्त ॥

## यद्धितुपरं छन्दसि ॥५६॥

यद् । हि । तु । इत्येतेभ्यः परं तिङन्तं वेदे नानुदात्तं स्यात् ॥ यत्परं । उदसृजो यदङ्गिरः ॥ हिपरं । इदं वामुशन्ति हि ॥ तुपरं । आख्यास्यामि तु ते ॥ निपातैर्यदिति हि चेति तुपश्येति च सिद्धे नियमार्थमिदं । एतैरेव परभूतैर्योगे निषेधो नान्यैरिति । तेन जाये स्वा रोहावेहि । अत्र एहीति गत्यर्थलोटा युक्तस्य रोहावेत्यस्य निघातो भवति ॥

## चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः ॥५७॥

चन । चित् । इव । गोत्रादि । तद्धित । आम्रेडित । इत्येतेषु परतो गतिसंज्ञकभिन्नात् परं तिङन्तं नानुदात्तं स्यात् ॥ चन । देवदत्तः पचति चन ॥ चित् । देवः पचति चित् ॥ इव । देवः पचतीव ॥ गोत्रादि । देवः पचति गोत्रं । देवः पचति ब्रुवं ॥ तद्धित । देवः पचतिकल्पं । देवः

पचति रूपं ॥ आम्रेडित । देवः पचति पचति ॥ अगतेः किं । देवः प्रपचति
चन ॥ तिङो गोत्रादीनीति सूत्रोक्ता गोत्रादयः कुत्सनाभीक्ष्ण्ययोर्वर्तमाना एवेह
गृह्यन्ते ॥

## चादिषु च ॥५८॥

चादिषु परतो गतिसंज्ञकभिन्नात् परं तिङन्तं नानुदात्तं स्यात् ॥ च । देवः
पचति च । खादति च ॥ वा । देवः पचति वा । खादति वा ॥ ह ।
देवः पचति ह । खादति ह ॥ अह । देवः पचत्यह । खादत्यह ॥ एव ।
देवः पचत्येव । खादत्येव ॥ अगतेः किं । देवः प्रपचति च । प्रखादति
च ॥ प्रथमस्य चवायोग इति निषेधः । द्वितीयस्य निघातः ॥ न चवाहाहैवेति
सूत्रोक्ताः पञ्च चादयो ऽत्र ग्राह्याः ॥

## चवायोगे प्रथमा ॥५९॥

च । वा । इत्येताभ्यां योगे प्रथमा तिङ्विभक्तिर्नानुदात्ता स्यात् ॥ च । गर्द-
भांश्च कालयति । वीणां च वादयति ॥ वा । गर्दभान् वा कालयति ।
वीणां वा वादयति ॥ पूर्वभूतयोरपि पाठे निघातप्रतिषेधार्थं योगग्रहणं ॥
प्रथमाग्रहणाद्द्वितीयादेस्तिङन्तस्य निघातो भवत्येव ॥

## हेति क्षियायां ॥६०॥

ह । इत्यनेन युक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता स्यात् । आचारभेदे गम्यमाने ॥
स्वयं ह रथेन याति३ । उपाध्यायं पदातिं गमयति ॥ स्वयं ह ओदनं भुङ्क्ते३ ।
उपाध्यायं सक्तून् पाययति ॥ प्रथमस्य तिङन्तस्य निघातप्रतिषेधः ॥ क्षियाशी-
रिति प्लुतः ॥ क्षियाचारभेदः । धर्मव्यतिक्रम इत्यर्थः ॥

## अहेति विनियोगे च ॥६१॥

अह । इत्यनेन युक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता स्यात् । नानाप्रयोजने नि-
योगे गम्यमाने । क्षियायां च गम्यमानायां ॥ विनियोगे । त्वमह ग्रामं
गच्छ३ । त्वमहारण्यं गच्छ३ ॥ क्षियायां । स्वयमह रथेन याति३ ।
उपाध्यायं पदातिं गमयति ॥ अत्र द्वितीयतिङन्तस्य निघातः । उभयत्र क्षि-
याशीरिति प्लुतः ॥ नानाप्रयोजनको नियोगः प्रेषणं विनियोगः ॥

## चाहलोप एवेत्यवधारणं ॥६२॥

च । अह । इत्येतयोर्लोपे प्रथमा तिभक्तिर्नानुदात्ता स्यात् । एव । इत्येतच्चेदवधारणार्थं प्रयुज्यते ॥ यत्रार्थो गम्यते न च प्रयोगस्तत्रानयोर्लोपः ॥ समुच्चये चशब्दः । केवलार्थो ऽहशब्दः । समानकर्तृके चलोपः । नानाकर्तृके ऽहलोपः ॥ चलोपे । देवदत्त एव ग्रामं गच्छतु । देवदत्त एवारण्यं गच्छतु । ग्रामं चारण्यं च गच्छत्वित्यर्थः ॥ अहलोपे । देवदत्त एव ग्रामं गच्छतु । यज्ञदत्त एवारण्यं गच्छतु । ग्रामं केवलमरण्यं केवलमित्यर्थः ॥ अवधारणं किं । देवः क्वेव भोक्ष्यते । न क्वचिदित्यर्थः । अनवक्लृप्तावयमेवशब्दः । एवे चानियोग इति पररूपं ॥

## चादिलोपे विभाषा ॥ ६३ ॥

चादीनां गम्यमानार्थत्वादप्रयोगे प्रथमा तिङ्विभक्तिर्वा नानुदात्ता भवति ॥ चलोपे । शुक्ला व्रीहयो भवन्ति । श्वेतागा आज्या यदुहन्ति ॥ शुक्ला व्रीहयो भवन्ति । श्वेतागा आज्या यदुहन्ति ॥ वालोपे । व्रीहिभिर्यजेत । यवैर्यजेत ॥ व्रीहिभिर्यजेत । यवैर्यजेत ॥ पक्षे तिङन्तद्वयस्य निघातः ॥ न चवाहेति सूत्रोक्ताः पञ्च चादयो ऽत्र ग्राह्याः ॥

## वैवावेति चच्छन्दसि ॥ ६४ ॥

वै । वाव । इत्येताभ्यां युक्ता प्रथमा तिङ्विभक्तिर्वेदे वा नानुदात्ता स्यात् ॥ वै । अहर्वै देवानामासीत् । रात्रिरसुराणामासीत् ॥ अहर्वै देवानामासीत् । रात्रिरसुराणामासीत् ॥ वाव । अयं वाव हस्त आसीत् । नेतर आसीत् ॥ अयं वाव हस्त आसीत् । नेतर आसीत् ॥ पक्ष उभयोर्निघातः ॥

## एकान्याभ्यां समर्थाभ्यां ॥ ६५ ॥

एक । अन्य । इत्येताभ्यां तुल्यार्थाभ्यां युक्ता प्रथमा तिङ्विभक्तिर्वेदे वा नानुदात्ता स्यात् ॥ एक । प्रजामेका जिन्वति । प्रजामेका रक्षति ॥ प्रजामेका जिन्वति । प्रजामेका रक्षति ॥ अन्य । तयोरन्यः पिप्पलं स्वाद्वत्ति । अनश्नन्नन्यो अभिचाकशीति ॥ तयोरन्यः पिप्पलं स्वाद्वत्ति । अनश्नन्नन्यो ऽभिचाकशीति ॥ पक्षे द्वयोर्निघातः ॥ समर्थाभ्यां किं । एको देवानुपातिष्ठत् । एक इति संख्यापरं नान्यार्थं । एकशब्दस्य व्यवस्थार्थं सामर्थ्यग्रहणं । तस्य व्यभिचारित्वात् ॥

## यद्वृत्तान्नित्यं ॥ ६६ ॥

यद् । इत्येतद्यत्र पदे विद्यते तस्मात् परं तिङन्तं नित्यं नानुदात्तं स्यात् ॥
यो भुङ्क्ते । यत्रं ददाति । यद्वत्कृ वायुर्वाति ॥

## पूजनात् पूजितमनुदात्तं काष्ठादिभ्यः ॥ ६७ ॥

पूजनार्थकेभ्यः काष्ठादिभ्यः परं पूजितवाचकं पदमनुदात्तं स्यात् ॥ काष्ठाध्या-
पकः । दारुणाध्यापकः ॥ समासे चैतदनुदात्तत्वं ॥ अनुदात्तमित्यनुवृत्तावपि
पुनरनुदात्तग्रहणं निषेधनिवृत्त्यर्थं ॥

## सगतिरपि तिङ् ॥ ६८ ॥

पूजनवाचिभ्यः काष्ठादिभ्यः परमनुदात्तं
गतिसंज्ञकयुतमपि पूजितवाचकं तिङन्तं पूजनवाचिभ्यः काष्ठादिभ्यः परमनुदात्तं
स्यात् ॥ यत् काष्ठं पचति । यत् काष्ठं प्रपचति ॥ तिङ्ङतिङ इति निघातस्य
निपातैर्यद्यदीति निषेधे प्राप्ते पुनर्विधिः ॥ सगतिग्रहणाच्च गतिरपि निहन्यते ॥

## कुत्सने च सुप्यगोत्रादौ ॥ ६९ ॥

कुत्सार्थके च सुबन्ते गोत्रादिशब्दवर्जिते परतः सगतिकमगतिकमपि तिङ-
न्तमनुदात्तं स्यात् ॥ पचति पूति । प्रपचति पूति । पचति मिथ्या ॥ कुत्सने
किं । पचति शोभनं ॥ सुपि किं । पचति क्लिश्नाति ॥ अगोत्रादाविति
किं । पचति गोत्रं । पचति ब्रुवं ॥

## गतिर्गतौ ॥ ७० ॥

गतिसंज्ञकं गतिसंज्ञके परे ऽनुदात्तं स्यात् ॥ अभ्युद्धरति । समुदानयति ॥
गतिः किं । देवदत्तः प्रपचति ॥ गतौ किं । आ मन्द्रैरिन्द्र हरिभिर्याहि ।
याहीति क्रियायोगादाङो गतिसंज्ञा ॥

## तिङि चोदात्तवति ॥ ७१ ॥

तिङन्त उदात्तवति परे गतिसंज्ञकमनुदात्तं स्यात् ॥ यत् प्रपचति ॥ उदात्त-
वति किं । प्रकरोति ॥

## आमन्त्रितं पूर्वमविद्यमानवत् ॥ ७२ ॥

संबोधनप्रथमाविभक्त्यन्तं पूर्वपदमविद्यमानवत् स्यात् ॥ अग्ने तव । देवास्मान्
पाहि । अग्ने इन्द्र वरुण । अग्ने नय ॥ अत्रामन्त्रितस्याविद्यमानत्वाद्युष्मद-

स्मदोरादेश आमन्त्रितनिघातस्तिङ्‌निघातश्च न भवति ॥ आमन्त्रितं किं । देवदत्तः पचति ॥ पूर्वं किं । देवदत्त । अत्रामन्त्रिताद्युदात्तत्वे कर्तव्ये विद्यमानत्वमेव यथा स्यात् ॥

## नामन्त्रिते समानाधिकरणे सामान्यवचनं ॥७३॥

आमन्त्रितसंज्ञके समानाधिकरणे विशेषणे परे पूर्वमामन्त्रितसंज्ञकं सामान्यवचनं नाविद्यमानवत् स्यात् । किं तु विद्यमानवदेव भवति ॥ अग्ने गृहपते । अग्ने तेजस्विन् । हरे दयालो नः पाहि । अत्र पूर्वस्य विद्यमानत्वात् ततः परस्यानुदात्तता ॥ आमन्त्रिते किं । देवदत्त पचसि ॥ समानाधिकरणे किं । देवदत्त पण्डित यज्ञदत्त । अत्र यज्ञदत्तविशेषणं पण्डितशब्दो न पूर्वेण समानाधिकरणः ॥ सामान्यवचनं किं । अघ्न्ये देवि सरस्वति इडे काव्ये विहव्ये । एतेषु पर्यायशब्देषु मा भूत् ॥ उत्तरसूत्रस्थं सामान्यवचनपदं भाष्यकृद्भिरत्र योजितं । पर्यायशब्देष्वप्रवृत्तये ॥

## विभाषितं विशेषवचने बहुवचनं ॥७४॥

विशेषवचने समानाधिकरणे आमन्त्रितसंज्ञके परे पूर्वं बहुवचनान्तं विशेष्यमामन्त्रिसंज्ञकमविद्यमानवद्वा स्यात् ॥ देवाः शरण्याः । देवा शरण्याः । ब्राह्मणा वैयाकरणाः । ब्राह्मणा वैयाकरणाः ॥ बहुवचनं किं । माणवक जटिल ॥ अत्र नित्यं विद्यमानवत्ता ॥

॥ इति सूत्रपाठे ऽष्टमाध्यायस्य प्रथमः पादः ॥

---

## पूर्वत्रासिद्धं ॥१॥

अधिकारो ऽयमाध्यायपरिसमाप्तेः ॥ यदित ऊर्ध्वमनुक्रमिष्यामः पूर्वत्रासिद्धमित्येवं तद्वेदितव्यं ॥ तत्र चैवं सपादसप्ताध्यायुक्ता । तस्यां पादोनो ऽयमध्यायो ऽसिद्धः । इत उत्तरत्र चोत्तरो योगः पूर्वस्मिन् कर्तव्ये ऽसिद्धो वेदितव्यः ॥ हर एहि । विष्ण एहि । अत्र यकारवकारयोर्लोपस्यासिद्धत्वान्न वृद्धि ॥ अमुष्मै । अमुष्मात् । अमुष्मिन् । अदसो ऽसेरिति मुत्वस्यासिद्धत्वात् स्मैस्मात्स्मिनो भवन्ति ॥

## नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ॥ २ ॥

सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपो ऽसिद्धः स्यात् ॥ सुपः स्थाने विधिः सुपि परे च विधिः सुब्विधिः ॥ सुपः विधौ । राजभिः । तक्षभिः । नलोपस्यासिद्धत्वादैस् न भवति ॥ सुपि विधौ । राजभ्यां । राजसु । नलोपस्यासिद्धत्वाद्दीर्घत्वमेत्वं च न भवति ॥ स्वरविधौ । पञ्चार्मं । दशार्मं । नलोपस्यासिद्धत्वादर्मे चावर्णमित्यकारान्तस्य पूर्वपदस्य विधीयमानमाद्युदात्तत्वं न भवति ॥ संज्ञाविधौ । पञ्च ब्राह्मण्यः । दश ब्राह्मण्यः । नलोपस्यासिद्ध-त्वात् ष्णान्ता षडिति षट्संज्ञायां न षट्स्वस्रेति प्रतिषेधान्न टाप् ॥ कृति तुग्विधौ । वृत्रहभ्यां । वृत्रहभिः । नलोपस्यासिद्धत्वाद्ध्रस्वस्य पिति कृतीति तुङ् भवति ॥ कृति किं । वृत्रहच्छत्रं । वृत्रहच्छाया । अत्र नलोपस्यासिद्धत्वाभा-वाच्छे चेति तुग्भवति ॥ पूर्वसूत्रेणैवासिद्धत्वे सिद्धे नियमार्थो ऽयमारम्भः । एतेष्वेव नलोपस्यासिद्धत्वं नान्यत्र । तेन राजीयति । राजायते । राजाश्व इत्यादौ नलोपस्य सिद्धत्वादीत्वं दीर्घत्वमेकादेशश्च भवति ॥

## न मु ने ॥ ३ ॥

ना । इत्येतस्मिन् परे यत् प्राप्नोति तस्मिन् कर्तव्ये मुभावो नासिद्धः स्यात् ॥ अमुना ॥ मुभावस्य सिद्धत्वान्नाभावो भवति दीर्घश्च न भवति ॥

## उदात्तस्वरितयोर्यणः स्वरितो ऽनुदात्तस्य ॥ ४ ॥

उदात्तस्य स्वरितस्य च स्थाने यो यण् ततः परस्यानुदात्तस्य स्वरित आदेशः स्यात् ॥ उदात्तयणः । कुमार्यै । कुमार्याः । ईकारस्योदात्तस्य यणि कृते ऽनेन विभक्तेः स्वरितत्वं ॥ स्वरितयणः । सकृल्ल्व्याशा । खलप्व्याशा । सकृ-ल्लूः खलपूः कृत्स्वरेणान्तोदात्तौ । ऊकारस्य यणुदात्तः । ततः परस्य सप्तम्येकवचनस्यानुदात्तस्य स्वरितत्वं । तस्य यण् सो ऽपि स्वरितः । ततः परस्याशाशब्दाकारस्यानुदात्तस्य स्वरितत्वं ॥ उदात्तस्वरितयोः किं । वैदी आशा । वैद्याशा । शार्ङ्गरव्याशा । अनुदात्तस्थानिको ऽयं यणादेशः ॥ अनुदात्तस्य किं । कुमार्यत्र । किशोर्यत्र । लित्स्वरेणाद्युदात्तो ऽत्रशब्दः ॥

## एकादेश उदात्तेनोदात्तः ॥ ५ ॥

उदात्तेन सहानुदात्तस्य य एकादेशः स उदात्तः स्यात् ॥ अग्नी । वायू ॥

वृक्षैः । प्लक्षैः ॥ उदात्तेनेति किं । यजन्ति । पचन्ति । लसार्वधातुकानुदात्तत्वे कृते द्वयोरनुदात्तयोरयमेकादेशः । पररूपे कर्तव्ये स्वरितस्यासिद्धत्वात् ॥

## स्वरितो वानुदात्ते पदादौ ॥६॥

अनुदात्ते पदादौ परत उदात्तेन सहैकादेशः स्वरितो वा स्यात् ॥ सु उत्थितः । सूत्थितः । सुः कर्मप्रवचनीयः । अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तः । शिष्टमनुदात्तं । ततो ऽनेनैकादेशस्य पक्षे स्वरितत्वं ॥ वि ईक्षते । वीक्षते । विराद्युदात्तः । ततः परस्य तिङ्ङतिङ इति निघातः । तत एकादेशस्यानेन पक्षे स्वरितत्वं ॥ अनुदात्ते किं । देवदत्तो ऽत्र ॥ पदादौ किं । वृक्षौ । वृक्षाः ॥ स्वरितग्रहणं स्पष्टार्थं । उदात्ते हि विकल्पिते तदभाव आन्तर्यतः स्वरितत्वसिद्धेः ॥

## नलोपः प्रातिपदिकान्तस्य ॥७॥

प्रातिपदिकसंज्ञकस्य पदस्यान्तावयवस्य न् । इत्येतस्य लोपः स्यात् ॥ राजा । राजभ्यां । राजभिः । राजता । राजतरः । राजतमः ॥ प्रातिपदिकं किं । अहन्नहिं । हन्तेर्लङ् । तिप् । हल्ङ्यादिलोपः । अदादित्वाच्छपो लुक् ॥ अन्तस्य किं । राजानौ । राजानः ॥ नेति प्रातिपदिकेति लुप्तषष्ठीके पदे ॥

## न ङिसंबुद्ध्योः ॥८॥

न् । इत्येतस्य प्रातिपदिकसंज्ञकपदान्तावयवस्य ङि । इत्येतस्मिन् सप्तम्येकवचने संबुद्धिसंज्ञके च परतो लोपो न स्यात् ॥ ङौ । आर्द्रे चर्मन् । लोहिते चर्मन् । सुपां सुलुगिति ङेर्लुक् ॥ संबुद्धौ । हे राजन् । हे तक्षन् ॥

## मादुपधायाश्च मतोर्वो ऽयवादिभ्यः ॥९॥

म् । इत्येतदन्तात् । अ । इत्येतदन्तात् । मकारोपधात् । अकारोपधाच्च प्रातिपदिकात् परस्य मतुप्प्रत्ययस्यस्य म् । इत्येतस्य व् । इत्येष आदेशः स्यात् । यव इत्यादिशब्देभ्यः परस्य न भवति ॥ मान्तात् । किंवान् । शंवान् ॥ अकारान्तात् । ज्ञानवान् । विद्यावान् ॥ मकारोपधात् । शमीवान् । दाडिमीवान् ॥ अकारोपधात् । पयस्वान् । यशस्वान् । भास्वान् ॥ तसौ मत्वर्थ इति भत्वाज्जुत्वाभावः ॥ मादुपधायाश्चेति किं । अग्निमान् । वायुमान् ॥ अयवादिभ्यः किं । यवमान् । दल्मिमान् ॥

## झयः ॥१०॥

यप्रत्याहारान्तात् प्रातिपदिकात् परस्य मतुपो ऽवयवस्य म् । इत्येतस्य व् । इत्ययमादेशः स्यात् ॥ अग्निचित्वान् ग्रामः । उदश्वित्वान् घोषः । विद्युत्वान् बलाहकः । मरुत्वान् ॥ तसौ मत्वर्थ इति भत्वादपदान्तत्वान्न जश्त्वं । दृषद्वान् ॥

## संज्ञायां ॥ ११ ॥

संज्ञायां विषये मतुप्प्रत्ययावयवस्य म् । इत्येतस्य व् । इत्ययमादेशः स्यात् ॥ अहीवती । कपीवती । ऋषीवती । मुनीवती ॥

## आसन्दीवदष्ठीवच्चक्रीवत् कक्षीवद्रुमण्वच्चर्मण्वती ॥ १२ ॥

आसन्दीवत् । अष्ठीवत् । चक्रीवत् । कक्षीवत् । रुमण्वत् । चर्मण्वती । इत्येतानि संज्ञायां विषये निपात्यन्ते ॥ आसन्दीवान् ग्रामः । आसनशब्दस्यासन्दीभावः । आसनवानन्यत्र ॥ अष्ठीवान् । अस्थिशब्दस्याष्ठीभावः । जानूर्वोः संधिसंज्ञेयं । अस्थिमानन्यत्र ॥ चक्रीवान् नाम राजा । चक्रशब्दस्य चक्रीभावः । चक्रवानन्यत्र ॥ कक्षीवान् नाम ऋषिः । कक्ष्यायाः संप्रसारणं । कक्ष्यावानन्यत्र ॥ रुमण्वान् नाम पर्वतः । लवणशब्दस्य रुमण्भावः । लवणवानन्यत्र ॥ लवणाकरवाचकरुमन्शब्दस्यैतन्निपातनं नलोपाभावार्थं णत्वार्थं चेत्यपरमतं ॥ चर्मण्वती नाम नदी । चर्मणो नलोपाभावो णत्वं च । चर्मवत्यन्यत्र ॥

## उदन्वानुदधौ च ॥ १३ ॥

उदन्वत् । इत्येतन्निपात्यते । उदधावर्थे संज्ञायां च विषये ॥ उदधौ । उदन्वान् समुद्रः ॥ संज्ञायां । उदन्वान् नाम ऋषिः ॥ उदकशब्दस्य मतुप्प्रत्यये परत उदन्भावः । उदकवानन्यत्र ॥

## राजन्वान् सौराज्ये ॥ १४ ॥

राजन्वत् । इत्येतन्निपात्यते सौराज्ये गम्यमाने ॥ राजन्वान् देशः । शोभनराजयुक्त इत्यर्थः । राजन्वती पृथिवी । निपातनान्नलोपाभावः । राजवानन्यत्र ॥

## छन्दसीरः ॥ १५ ॥

इ । इत्येतदन्तात् । र् । इत्येतदन्ताच्च परस्य मतुप्प्रत्ययावयवस्य म् । इत्ये-

तस्य वेदे व् । इत्येष आदेशः स्यात् ॥ इवर्णान्तात् । त्रिवती• । हरिवो मे दिनं त्वा । भारतीवान् । सरस्वतीवान् ॥ रकारान्तात् । गीर्वान् । धूर्वान् । आशीर्वान् ॥

## अनो नुट् ॥१६॥

अन् । इत्येतदन्तात् परस्य मतुप्प्रत्ययस्य वेदे नुट् । इत्येष आगमः स्यात् ॥ अक्षण्वन्तः । अस्थन्वन्तं । अक्षण्वता लाङ्गलेन ॥ छन्दस्यपि दृश्यत इत्यनङादेशः ॥ नुटो ऽसिद्धत्वात् पूर्वं नलोपे भूतपूर्वगत्यानन्तात्वान्नुट् । णत्वं । नुटो नकारस्य न वत्वं तस्यासिद्धत्वात् तस्मात् परस्य मकारस्य तु भवति ॥

## नाद्घस्य ॥१७॥

न् । इत्येतदन्तात् परयोः घसंज्ञकयोस्तरप् । तमप् । इत्येतयोर्वेदे नुट् । इत्येष आगमः स्यात् ॥ तरप् । सुपथिन्तरः ॥ तमप् । दस्युहन्तमः ॥

## कृपो रो लः ॥१८॥

कृप् । इत्येतस्य धातोरवयवस्य र् । इत्येतस्य ल् । इत्ययमादेशः स्यात् ॥ रशब्देन केवलरकारस्य ऋकारावयवरकारस्य चेत्युभयोर्ग्रहणं । लशब्देनापि केवललकारस्य ऌकारावयवलकारस्य च ग्रहणं । तेन केवलरेफस्य स्थाने लकारादेशः । ऋकारस्याप्येकदेशविकारद्वारेण ऌकार आदेशः । आन्तरतम्यात् ॥ कल्पते । चक्ळृपे । क्ळृप्तः । क्ळृप्तवान् ॥

## उपसर्गस्यायतौ ॥१९॥

अय । इत्येतस्मिन् धातौ परत उपसर्गस्थस्य र् । इत्येतस्य ल् । इत्येष आदेशः स्यात् ॥ प्लायते । पलायते ॥

## ग्रो यङि ॥२०॥

गृ । इत्येतस्य धातोरवयवस्य र् । इत्येतस्य यङि प्रत्यये परे ल् । इत्येष आदेशः स्यात् ॥ गर्हितं गिलति । जेगिल्यते । जेगिल्येते । जेगिल्यन्ते ॥ यङि किं । निगीर्यते ॥

## अचि विभाषा ॥२१॥

अजादौ प्रत्यये परतो गृ । इत्येतस्य धातोरवयवस्य र् । इत्येतस्य वा ल् ।

इत्येष आदेशः स्यात् ॥ निगिरति । निगिलति । निगरणं । निगलनं । निगारकः । निगालकः ॥

## परेश्च घाङ्कयोः ॥ २२ ॥

परि । इत्येतस्यावयवस्य र् । इत्येतस्य घशब्दे ऽङ्कशब्दे च परतो ल् । इत्ययमादेशो वा स्यात् ॥ पलिघः । परिघः ॥ पल्यङ्कः । पर्यङ्कः ॥

## संयोगान्तस्य लोपः ॥ २३ ॥

संयोगसंज्ञकान्तस्य पदस्य लोपः स्यात् ॥ गोमान् । यवमान् ॥ पदस्येति किं । गोमन्तौ । गोमन्तः ॥

## रात् सस्य ॥ २४ ॥

संयोगान्तपदावयवरेफात् परस्यान्त्यस्य स् । इत्येतस्य लोपः स्यात् ॥ क्रोष्टुः । पितुः । मातुः । ऋत उदित्युत्वे रपरत्वे च सलोपः ॥ नियमार्थमिदं । रकारात् परस्य सस्यैव लोपो नान्यस्येति । तेन ऊर्क् । अमार्ट् । इत्यत्र न संयोगान्तलोपः ॥

## धि च ॥ २५ ॥

ध् । इत्येवमादौ प्रत्यये परे स् । इत्येतस्य लोपः स्यात् ॥ अलविध्वं । अलविढ्वं ॥

## झलो झलि ॥ २६ ॥

झलः परस्य स् । इत्येतस्य झलि परतो लोपः स्यात् ॥ भिदिर् । अभित्त । अभित्थाः ॥ छिदिर् । अच्छित्त । अच्छित्थाः ॥ झलः किं । अमंस्त । अमंस्थाः ॥ झलि किं । अभित्सातां । अभित्सत ॥ अनेनापि सिच एव लोपस्तेन सोमसुत् स्तोता । दृषत् स्थानमित्यत्र न लोपः ॥

## ह्रस्वादङ्गात् ॥ २७ ॥

ह्रस्वान्तादङ्गात् परस्य स् । इत्येतस्य झलि परतो लोपः स्यात् ॥ डुकृञ् । अकृत । अकृथाः ॥ हृञ् । अहृत । अहृथाः ॥ ह्रस्वात् किं । अच्योष्ट । अप्लोष्ट ॥ अङ्गात् किं । अलाविष्ट । अलाविष्ठाः ॥ झलि किं । अकृषातां । अकृषत ॥ अत्रापि सिच एव लोपस्तेन द्विष्टरां । द्विष्टमामित्यत्र च भवति । द्विशब्दात् सुजन्तात् तरप्तमपौ । ततो ऽद्रव्यप्रकर्ष आम्प्रत्ययः ॥

## इट ईटि ॥२८॥

इटः परस्य सकारस्य । ईटि परे । लोपः स्यात् ॥ षिवु । असेवीत् ॥ कुष । अकोषीत् ॥ मुष । अमोषीत् ॥ इटः किं । अकार्षीत् ॥ ईटि किं । अलाविष्टं । अलाविष्ट ॥

## स्कोः संयोगाद्योरन्ते च ॥२९॥

पदस्यान्ते यः संयोगो झलि च परतो यः संयोगस्तदाद्योः स् । क् । इत्येतयोर्लोपः स्यात् ॥ पदान्ते । स् । भ्रस्ज । भृट् । भृड् ॥ क् । काष्ठतट् । काष्ठतड् ॥ झलि । स् । ओलस्जी । लग्नः । लग्नवान् ॥ क् । तक्ष् । तष्टः । तष्टवान् ॥ स्कोः किं । नर्नर्त्ति ॥ संयोगाद्योः किं । पक् । शक् ॥ अन्ते चेति किं । तक्षिता । तक्षकः ॥

## चोः कुः ॥३०॥

चवर्गस्य झलि परे पदान्ते च कवर्गादेशः स्यात् ॥ झलि । पच । पक्ता । पक्तुं । पक्तव्यं ॥ पदान्ते । वाक् । सुयुक् ॥

## हो ढः ॥३१॥

ह् । इत्येतस्य झलि परे पदान्ते च ढ् । इत्ययमादेशः स्यात् ॥ झलि । सोढा । सोढुं । सोढव्यं ॥ पदान्ते । प्रष्ठवाट् । दित्यवाट् ॥

## दादेर्धातोर्घः ॥३२॥

द् । इत्येतदादेर्धातोरवयवस्य हकारस्य झलि परे पदान्ते च घ् । इत्येष आदेशः स्यात् ॥ झलि । दह । दग्धा । दग्धुं । दग्धव्यं ॥ दुह । दोग्धा । दोग्धुं । दोग्धव्यं ॥ पदान्ते । काष्ठधक् । गोधुक् ॥ दादेः किं । लेढा । गुडलिट् ॥ धातोरित्येषावयवषष्ठी । धातोरवयवो यो दादिः शब्दस्तदवयवस्य हकारस्येति । तेनाधोगित्यत्रापि घकारः सिद्धः । अथवा धातूपदेशे यो दकारादिरित्यर्थः । तेन दामलिट् । इत्यत्र घत्वं न भवति ॥

## वा द्रुहमुहष्णुहष्णिहां ॥३३॥

द्रुह । मुह । ष्णुह । ष्णिह । इत्येतेषां धातूनामवयवस्य ह् । इत्येतस्य झलि परतः पदान्ते च घ् । इत्ययमादेशो वा स्यात् ॥ झलि । द्रुह् ।

द्रोग्धा । द्रोढा ॥ मुह । मोग्धा । मोढा ॥ ष्णुह । स्नोग्धा । स्नोढा ॥ ष्णिह । स्नेग्धा । स्नेढा ॥ पदान्ते । मित्रध्रुक् । मित्रध्रुट् ॥ उन्मुक् । उन्मुट् ॥ स्नुक् । स्नुट् ॥ स्निक् । स्निट् ॥ द्रुहेर्दादित्वान्नित्यं प्राप्ते । इतरेषामप्राप्ते विभाषा ॥

## नहो धः ॥ ३४ ॥

णह । इत्येतस्य धातोरवयवस्य ह् । इत्येतस्य झलि परे पदान्ते च ध् । इत्येष आदेशः स्यात् ॥ झलि । णह । नद्धा । नद्धुं । नद्धव्यं ॥ पदान्ते । उपानत् । परीणत् ॥

## आहस्थः ॥ ३५ ॥

ब्रूञ् । इत्येतस्य धातोरादेशस्य । आह । इत्येतस्यावयवस्य ह् । इत्येतस्य झलि परे थ् । इत्ययमादेशः स्यात् ॥ इदमात्थ । किमात्थ ॥ झलि किं । आह । आहतुः । आहुः ॥ पूर्वसूत्राढकारानुवृत्त्या सिद्धे कथस्तयोर्धोऽध इत्यस्याप्राप्तय आदेशान्तरविधानं ॥

## व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ॥ ३६ ॥

ओव्रश्चू । भ्रस्ज । सृज । मृजू । यज । राजृ । टुभ्राजृ । इत्येतेषां धातूनां छ् । इत्येतदन्तानां श् । इत्येतदन्तानां च झलि परतः पदान्ते च ष् । इत्येष आदेशः स्यात् ॥ झलि । ओव्रश्चू । व्रष्टा । व्रष्टुं । व्रष्टव्यं ॥ भ्रस्ज । भ्रष्टा । भ्रष्टुं । भ्रष्टव्यं ॥ सृज । स्रष्टा । स्रष्टुं । स्रष्टव्यं ॥ मृजू । मार्ष्टा । मार्ष्टुं । मार्ष्टव्यं ॥ यज । यष्टा । यष्टुं । यष्टव्यं ॥ छकारान्तानां । प्रच्छ । प्रष्टा । प्रष्टुं । प्रष्टव्यं ॥ शकारान्तानां । लिश । लेष्टा । लेष्टुं । लेष्टव्यं ॥ विश । वेष्टा । वेष्टुं । वेष्टव्यं ॥ पदान्ते । मूलवृट् । धानाभृट् । रज्जुसृट् । कंसपरिमृट् । उपयट् । सम्राट् । विभ्राट् । शब्दप्राट् । लिट् । विट् ॥ पदान्तार्थं राजभ्राजोर्ग्रहणं । इटा व्यवधानाज्झल्परत्वासंभवात् ॥

## एकाचो बशो भष् झषन्तस्य स्ध्वोः ॥ ३७ ॥

धातोरवयवो य एकाज्झषन्तस्तदवयवस्य बश् । इत्येतस्य स्थाने भष् । इत्येष आदेशः स्यात् । सकारे ध्वशब्दे च परे । पदान्ते च ॥ सकारे । बुध । भोत्स्यते ॥ दुह । धोक्ष्यति ॥ ध्वशब्दे । अभुद्ध्वं । अधुग्ध्वं ॥ पदान्ते ।

अर्धभुत् । गोधुक् ॥ झलीति निवृत्तं । स्ध्वोर्ग्रहणसामर्थ्यात् । तेनेह न । दुग्धं । दोग्धा ॥ एकाचः किं । दामलिहमिच्छति दामलिह्यति । ततः क्विप् । दामलिट् ॥ एकाज्ग्रहणाभावे धातोरिति बशो विशेषणं स्यात् । ततश्च बशो झषन्तत्वस्यासंभवाज्झषन्तस्येत्यनेनापि धातुरेव विशिष्येत । ततोऽयमर्थः स्यात् । झषन्तस्य धातोरवयवस्य बशो भषिति । ततश्च दामलिडित्यत्रातिप्रसङ्गः ॥ बशः किं । क्रोत्स्यति ॥ झषन्तस्य किं । दास्यति ॥ स्ध्वोः किं । बोढा । बोढुं ॥ चकारयुतग्रहणं किं । दादद्धि । दध इत्येतस्य यङ्लुकि लोटि धिभावे चैतद्रूपं ॥

## दधस्तथोश्च ॥३८॥

डुधाञ् । इत्येतस्य कृतद्विर्वचनस्य झषन्तस्य धातोरवयवस्य बश् । इत्येतस्य स्थाने भष् । इत्येष आदेशः स्यात् त थ । इत्येतयोः स् ध्व । इत्येतयोश्च परतः ॥ त । धत्तः ॥ थ । धत्थः ॥ स् । धत्से । धत्स्व ॥ ध्व । धद्ध्वं ॥ आकारलोपस्य न स्थानिवत्त्वं । वचनसामर्थ्यादिति काशिका ॥ तयोः किं । आनन्तर्यात् स्ध्वोरेव विज्ञायेत ॥ झषन्तस्य किं । दधाति ॥ स्ध्वोरनुवृत्त्यर्थं चकारः ॥

## झलां जशोऽन्ते ॥३९॥

पदस्यान्ते वर्तमानानां झलां स्थाने जश आदेशाः स्युः ॥ वागीशः । चिद्रूपं । षड्लिडत्र । अग्निचिदत्र । त्रिष्टुबत्र ॥ झलीत्यस्य निवृत्त्यर्थमन्तग्रहणं । वस्ता । वस्तुं ॥

## झषस्तथोर्धोऽधः ॥४०॥

झष्प्रत्याहारान्तर्गतवर्णात् परयोस्त् । थ् । इत्येतयोः स्थाने ध् । इत्ययमादेशः स्यात् । डुधाञ्धातोर्झषः परयोर्न भवति ॥ त । डुलभष् । लब्धा । अलब्ध ॥ दुह । दोग्धा । अदुग्ध ॥ लिह । लीढा । अलीढ ॥ थ । अलब्धाः । अदुग्धाः । अलीढाः ॥ अधः किं । धत्तः । धत्थः ॥

## षढोः कः सि ॥४१॥

ष । ढ । इत्येतयोः स् । इत्येतस्मिन् परतः क् । इत्ययमादेशः स्यात् ॥ पिष । पिष्लृ । पेक्ष्यति । अपेक्ष्यत् ॥ लिह । लेक्ष्यति । अलेक्ष्यत् ॥ सीति किं । पिनष्टि । लेढि ॥

## रदाभ्यां निष्ठातो नः पूर्वस्य च दः ॥ ४२ ॥

र् । द् । इत्येताभ्यां परस्य निष्ठासंज्ञकावयवस्य त् । इत्येतस्य न् । इत्यय आदेशः स्यात् । निष्ठापेक्षया पूर्वस्य धातोर्दकारस्य च नकारादेशः ॥ रकारात् । स्तृञ् । आस्तीर्णा । शॄ । विशीर्णा । गॄ । निगीर्णा ॥ दकारात् । भिदिर् । भिन्नः । भिन्नवान् । छिदिर् । छिन्नः । छिन्नवान् ॥ रदाभ्यां किं । कृतः । कृतवान् ॥ निष्ठेति किं । कर्त्ता । हर्त्ता ॥ तः किं । चरितं । उदितं ॥ पूर्वस्य किं । परस्य मा भूत् । भिन्नवद्भ्यां । भिन्नवद्भिः ॥

## संयोगादेरातो धातोर्यण्वतः ॥ ४३ ॥

संयोगसंज्ञकादेर्धातोराकारान्ताद्यण्वतश्च परस्य निष्ठासंज्ञकप्रत्ययावयवस्य त् । इत्येतस्य न् । इत्ययमादेशः स्यात् ॥ द्रा । प्रद्राणः । प्रद्राणवान् ॥ ग्लै । ग्लानः । ग्लानवान् ॥ संयोगादेः किं । यातः । यातवान् ॥ आतः किं । च्युतः । प्लुतः ॥ धातोः किं । निर्यातः । निर्वातः ॥ यण्वतः किं । स्नातः । स्नातवान् ॥

## ल्वादिभ्यः ॥ ४४ ॥

लूञ् । इत्येवमादिभ्य एकविंशतिभ्यो धातुभ्यः परस्य निष्ठासंज्ञकप्रत्ययावयवस्य त् । इत्येतस्य न् । इत्ययमादेशः स्यात् ॥ लूञ् । लूनः । लूनवान् ॥ धूञ् । धूनः । धूनवान् ॥ ज्या । जीनः । जीनवान् ॥ वृत्करणान्ता ल्वादयो धातुपाठे ज्ञेयाः ॥

## ओदितश्च ॥ ४५ ॥

ओ । इत्येतदित्संज्ञकाद्धातोः परस्य निष्ठासंज्ञकप्रत्ययावयवस्य त् । इत्येतस्य न् । इत्ययमादेशः स्यात् ॥ ओलजी । लग्नः । लग्नवान् ॥ भुजो । भुग्नः । भुग्नवान् ॥ स्वादय ओदितः । षूङ् । सूनः ॥ दूङ् । दूनः ॥ डीङ् । उड्डीनः ॥ ओदिन्मध्ये पाठसामर्थ्यान्नेट् ॥

## क्षियो दीर्घात् ॥ ४६ ॥

क्षि । इत्येतस्माद्दीर्घान्ताद्धातोः परस्य निष्ठासंज्ञकप्रत्ययावयवस्य त् । इत्येतस्य न् । इत्ययमादेशः स्यात् ॥ क्षि । क्षीणः । क्षीणवान् । क्षीणो जाल्मः । क्षीण-

मैं । इत्येतस्माद्धातोः परस्य निष्ठासंज्ञकप्रत्ययावयवस्य त् । इत्येतस्य म् । इत्येष आदेशः स्यात् ॥ क्षामः । क्षामवान् ॥

## प्रस्त्यो ऽन्यतरस्यां ॥ ५४ ॥

प्रपूर्वात् स्त्यै । इत्येतस्मात् परस्य निष्ठासंज्ञकप्रत्ययावयवस्य त् । इत्येतस्य म् । इत्येष आदेशो वा स्यात् ॥ प्रस्तीमः । प्रस्तीमवान् ॥ प्रस्तीतः । प्रस्तीतवान् ॥

## अनुपसर्गात् फुल्लक्षीवकृशोल्लाघाः ॥ ५५ ॥

फुल्ल । क्षीव । कृश । उल्लाघ । इत्येते निपात्यन्ते । उपसर्गात् परा न चेद्भवन्ति ॥ ञिफला । फुल्लः । निष्ठातकारस्य लकारः ॥ क्तवत्वन्तस्याप्येतल्लत्वमिष्यते । इति काशिका । फुल्लवान् ॥ क्षीवृ । क्षीवः । निष्ठातकारलोपः । इडभावश्च निपातनात् ॥ कृश । कृशः । तलोपः । इडभावः ॥ लाघृ उत्पूर्वः । उल्लाघः । निष्ठातकारलोपः । इडभावश्च निपातनात् ॥ अनुपसर्गात् किं । प्रफुल्ताः सुमनसः । प्रक्षीवितः । प्रकृशितः । प्रोल्लाघितः ॥ लाघेरुङ्गिन्न उपसर्गः प्रतिषिध्यते । प्रफुल्लमिति रूपं तु फुल्ल विकसन इत्यस्य पचाद्यचि बोध्यं ॥

## नुदविदोन्दत्राघ्राह्रीभ्यो ऽन्यतरस्यां ॥ ५६ ॥

णुद् । विद् । उन्दी । त्रैङ् । घ्रा । ह्री । इत्येतेभ्यो धातुभ्यः परस्य निष्ठासंज्ञकप्रत्ययावयवस्य त् । इत्येतस्य न् । इत्येष आदेशो वा स्यात् ॥ णुद् । नुन्नः । नुत्तः ॥ विद् रौधादिकः । विन्नः । वित्तः ॥ त्रैङ् । त्राणः । त्रातः ॥ घ्रा । घ्राणः । घ्रातः ॥ ह्री । ह्रीणः । ह्रीतः ॥ ह्री इत्येतस्याप्राप्ते । इतरेषां प्राप्ते विभाषा ॥

## न ध्याख्यापॄमूर्छिमदां ॥ ५७ ॥

ध्यै । ख्या । पॄ । मुर्छा । मदी । इत्येतेभ्यो धातुभ्यः परस्य निष्ठासंज्ञकप्रत्ययावयवस्य त् । इत्येतस्य न् । इत्ययमादेशो न स्यात् ॥ ध्यै । ध्यातः । ध्यातवान् ॥ ख्या । ख्यातः । ख्यातवान् ॥ पॄ । पूर्तः । पूर्तवान् ॥ मुर्छा । मूर्तः । मूर्तवान् ॥ मदी । मत्तः । मत्तवान् ॥

## वित्तो भोगप्रत्यययोः ॥ ५८ ॥

विद्लृ । इत्येतस्माल्लाभार्थात् परस्य निष्ठासंज्ञकप्रत्ययावयवस्य त् । इत्येतस्य

भोगे प्रतीते चाभिधेये न् । इत्येतस्यादेशस्याभावो निपात्यते ॥ भोगे । वित्तं धनं । बहु वित्तमस्य । धनं हि भुज्यत इति भोगशब्देनाभिधीयते ॥ प्रतीते । वित्तो ऽयं मनुष्यः । प्रतीत इत्यर्थः ॥ भोगप्रत्यययोः किं । विन्नः ॥

## भित्तं शकलं ॥५९॥

भित्तमिति शकले ऽभिधेये निपात्यते ॥ भिदिर् । भित्तं तिष्ठति । खण्डमित्यर्थः । निष्ठातकारस्य नत्वाभावः ॥ शकलं किं । भिन्नं ॥

## ऋणमाधमर्ण्ये ॥६०॥

ऋ । इत्येतस्माद्धातोः परस्य निष्ठासंज्ञकप्रत्ययावयवस्य त् । इत्येतस्याधमर्ण्यव्यवहारे गम्ये न् । इत्ययमादेशो निपात्यते ॥ ऋणं ददाति । ऋणं धारयति ॥ अधम ऋणे ऽधमर्णः । एतस्मादेव निपातनात् सप्तम्यन्तेनोत्तरपदेन समासः ॥

## नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानिच्छन्दसि ॥६१॥

नसत्त । निषत्त । अनुत्त । प्रतूर्त । सूर्त । गूर्त । इत्येतानि वेदे निपात्यन्ते ॥ षद्लृ नञ्पूर्वः । नसत्तमञ्जसा । निपातनान्नत्वाभावः । असन्नमिति लोके ॥ षद्लृ निपूर्वः । निषत्तमस्य चरतः । नत्वाभावः । निषण्णमिति लोके ॥ उन्दी नञ्पूर्वः । अनुत्तमा ते मघवन् । निपातनान्नत्वाभावः । अनुन्नमिति लोके ॥ ञित्वरा तुर्वी वा प्रपूर्वः । प्रतूर्तं वाजिन् । नत्वाभावः । प्रतूर्णमिति लोके ॥ गॄ । गूर्ता गावः । उत्वं निपातनात् । गीर्णा इति लोके ॥ गुरी । गूर्ता अमृतस्य । नत्वाभावो निपातनात् । गूर्णमिति लोके ॥

## क्विन्प्रत्ययस्य कुः ॥६२॥

क्विन्प्रत्ययो यस्माद्धातोर्विहितस्तस्य कवर्गो ऽन्तादेशः स्यात् पदान्ते ॥ घृतस्पृक् । मन्त्रस्पृक् ॥ बहुव्रीहिविज्ञानाय प्रत्ययग्रहणं । क्विन्प्रत्ययो येभ्यो विधीयते तेषा-मन्यप्रत्ययान्तानामपि कुत्वं यथा स्यात् । मा नो अस्राक् । मा नो अद्राक् । सृजिदृशिभ्यां लुङ् । तिप् । सिच् । छान्दसत्वादडभावो ऽडागमश्च । सृजि-दृशोर्झल्यमकितीत्यमागमः । वदव्रजेति वृद्धिः । हल्ङ्याब्भ्यादिलोपे कृते संयोगान्तलोपे कुत्वं ऽपवादात् ॥

## नशेर्वा ॥६३॥

णश् । इत्येतस्य पदान्ते वर्गान्तस्य कवर्गो ऽन्तादेशो वा स्यात् ॥ नक् ।

नग् । नट् । नड् ॥ सा वै जीवनगाहुतिः । जीवस्य नाशो जीवनक् । पाशेः संपदादित्वाद्भावे क्विप् । षत्वे प्राप्ते कुत्वविकल्पः । पक्षे जीवनट् ॥

## मो नो धातोः ॥ ६४ ॥

म् । इत्येतदन्तस्य धातोः पदान्ते न् । इत्येष आदेशः स्यात् ॥ प्रशाम्यतीति प्रशान् । प्रताम्यतीति प्रतान् । प्रदाम्यतीति प्रदान् । शमितमिदमिभ्यः क्विप् । अनुनासिकस्य क्वीति दीर्घत्वं । नत्वस्यासिद्धत्वान्नलोपाभावः ॥ मः किं । भित् । छित् ॥ धातोः किं । किं । इदं ॥ पदस्य किं । प्रतामौ । प्रतामः ॥

## म्वोश्च ॥ ६५ ॥

म् । व् । इत्येतयोः परतो म् । इत्येतदन्तस्य धातोर्न् । इत्ययमादेशः स्यात् ॥ न् । जगन्प् । जगन्मह । अगन्म ॥ व । जगन्वह । अगन्व । गमेर्लङि बहुलं छन्दसीति शपो लुक् ॥ अपदान्तार्थ आरम्भः ॥

## ससजुषो रुः ॥ ६६ ॥

स् । इत्येतदन्तस्य सजुष् । इत्येतस्य च रुः स्यात् ॥ सान्तस्य । अग्निरत्र । वायुरत्र ॥ सजुषः । सजूर्देवेभिः । जुषो इत्येतस्य सपूर्वस्य क्विबन्तस्यैतद्रूपं ॥

## अवयाः श्वेतवाः पुरोडाश्च ॥ ६७ ॥

अवयाः । श्वेतवाः । पुरोडाः । इत्येते संबुद्धौ निपात्यन्ते ॥ हे अवयाः । यज अवपूर्वः ॥ हे श्वेतवाः । वह श्वेतपूर्वः ॥ हे पुरोडाः । दाशृ पुरःपूर्वः ॥ अवे यज इति । मन्त्रे श्वेतवहेति च सूत्राभ्यां. णिवनि प्राप्ते श्वेतवाहादीनां डस् पदस्येति डस्प्रत्यये कृते निपातनाद्दीर्घत्वं ॥ अत्वसन्तस्येति सूत्रे ऽसंबुद्धावित्युक्तेः संबुद्धौ दीर्घसिद्ध्यर्थं निपातनमिदं ॥ चकारो ऽनुक्तसमुच्चयार्थः । तेन हे उक्थशाः । शंस उक्थपूर्वः । अस्यापि दीर्घत्वं ॥

## अहन् ॥ ६८ ॥

अहन् । इत्येतस्य पदान्ते वर्तमानस्य रु । इत्येष आदेशः स्यात् ॥ अहोभ्यां । अहोभिः ॥

## रो ऽसुपि ॥ ६९ ॥

अहन् । इत्येतस्य र् । इत्येष आदेशः स्यात् । सुपि परतस्तु न भवति ॥

अहर्ददाति । अहर्भुङ्क्ते । अहरहः । अहर्गणः ॥ असुपि किं । अहोभ्यां । अहोभिः ॥

## अम्नरूधरवरित्युभयथा छन्दसि ॥७०॥

अम्नस् । ऊधस् । अवस् । इत्येतेषां वेदे रु । इत्ययमादेशो रकारादेशश्चे-त्युभयथा स्यात् ॥ अम्नस् । अम्न एव । अम्नरेव ॥ ऊधस् । ऊध एव । ऊधरेव ॥ अवस् । अव एव । अवरेव ॥ रुत्वपक्षे भोभगो इति यत्वे कृते लोपः शाकल्यस्येति यलोपः ॥

## भुवश्च महाव्याहृतेः ॥७१॥

भुवस् । इत्येतस्य महाव्याहृतिवाचकस्य वेदे रु । इत्ययमादेशो रकारादेश-श्चेत्युभयथा स्यात् ॥ भुव इति । भुवरिति ॥ अन्तरिक्षवाचि भुवरित्येतदव्ययं महाव्याहृतिः ॥ महाव्याहृतेः किं । भुवो विश्वेषु भुवनेषु । भवतेश्छन्दसि लुङ्लङ्लिट इति वर्तमाने लङ् । सिप् । शपि गुणाभावश्छान्दसः । बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः ॥

## वसुस्रंसुध्वंस्वनडुहां दः ॥७२॥

स् । इत्येतदन्तस्य वसुप्रत्ययान्तस्य पदस्य स्रंसु । ध्वंसु । अनडुह् । इत्येतेषां च पदान्ते विद्यमानानां द् । इत्ययमादेशः स्यात् ॥ वसु । विद्वद्भ्यां । विद्वद्भिः ॥ स्रंसु । उखास्रद्भ्यां । उखास्रद्भिः ॥ ध्वंसु । पर्णध्वद्भ्यां । पर्णध्वद्भिः ॥ अनडुह् । अनडुद्भ्यां । अनडुद्भिः ॥ सान्तस्य किं । विद्वान् ॥ पदस्य किं । विद्वांसौ । विद्वांसः ॥ रुत्वापवादो ऽयं । अनडुच्छब्देन तु ढत्वमनेन बाध्यते ॥

## तिप्यनस्तेः ॥७३॥

तिप्प्रत्यये परे स् । इत्येतदन्तस्य पदस्य द् । इत्ययमादेशः स्यात् । अस् । इत्येतस्य तु न भवति ॥ चकास् । अचकात् । अचकाद् ॥ शास् । अन्वशात् । अन्वशाद् ॥ तिपि किं । चकाः । चकास्तीः क्विपि रूपमेतत् ॥ अनस्तेः किं । आप एवेदं सर्वमाः । आसीदिति तिपि छान्दसत्वादीडभावः ॥

## सिपि धातो रुर्वा ॥७४॥

सिप्प्रत्यये परे धातोः सकारान्तस्य पदान्तस्य स् । इत्येतस्य रु । इत्ययमादेशो

द् । इत्ययमादेशश्च वा स्यात् ॥ चकास् । अचकाः । अचकात् । अचकाद् ॥ शासु । अन्वशाः । अन्वशात् । अन्वशाद् ॥

## दश्च ॥ ७५ ॥

द् । इत्येतस्य धातोरवयवस्य पदान्तस्य सिप्प्रत्यये परे रु । इत्ययमादेशो द् । इत्ययमादेशश्च वा स्यात् ॥ विद् । अवेः । अवेत् । अवेद् ॥ भिदिर् । अभिनः । अभिनत् । अभिनद् ॥ छिदिर् । अच्छिनः । अच्छिनत् । अच्छिनद् ॥

## र्वोरुपधाया दीर्घ इकः ॥ ७६ ॥

र् । व् । इत्येतदन्तस्य धातोरुपधाया इको दीर्घः स्यात् पदान्ते ॥ रान्तस्य । गीः । पूः । आशीः ॥ उत्तरसूत्रे ऽनुवृत्त्यर्थं वग्रहणं ॥ उपधायाः किं । अबिभर्भवान् । अभ्यासेकारस्य मा भूत् ॥ इकः किं । अबिभरित्यत्रैव भकारा-कारस्य मा भूत् ॥ धातोः किं । अग्निः । वायुः ॥ पदान्ते किं । गिरौ । गिरः ॥

## हलि च ॥ ७७ ॥

र् । व् । इत्येतदन्तस्य धातोरुपधाया इको हलि च परे दीर्घः स्यात् ॥ रान्तस्य । आस्तीर्णं । विशीर्णं । अवगूर्णं ॥ वान्तस्य । दीव्यति । सीव्यति । प्रतिदीव्नः ॥ धातोः किं । चतुर इच्छति । चतुर्यति । दिवमिच्छति । दिव्यति ॥ इकः किं । स्मर्यते । भव्यं ॥ अपदान्तार्थो ऽयमारम्भः ॥

## उपधायां च ॥ ७८ ॥

र् । व् । इत्येतयोर्धातोरुपधाभूतयोः हल्परयोः परतो र् । व् । इत्येतयो-रुपधाया इको दीर्घः स्यात् ॥ र् । हुर्छा । हूर्छिता ॥ मुर्छा । मूर्छिता ॥ व् । तुर्वी । तूर्विता ॥ धुर्वी । धूर्विता ॥ हलि किं । चिरि । चिरि-णोति । जिरि । जिरिणोति ॥

## न भकुर्छुरां ॥ ७९ ॥

र् । व् । इत्येतदन्तस्य भसंज्ञकस्य कुर् । छुर् । इत्येतयोश्च धात्वोरुपधाया इको दीर्घो न स्यात् ॥ र् । धुरं वहति । धुर्यः ॥ व् । दिव्यं ॥ कुर् । कुर्यात् ॥ छुर् । छुर्यात् ॥ रेफवकाराभ्यां भविशेषणं किं । प्रतिदीव्ना । प्रतिदीव्ने ॥

## अदसो ऽसेर्दादु दो मः ॥ ८० ॥

अदस् । इत्येतस्य सकारान्तभिन्नस्य द् । इत्येतस्मात् परस्य वर्णस्य । उ । इत्ययमादेशः स्यात् । द् । इत्येतस्य म् । इत्येष आदेशश्च स्यात् ॥ अमुं । अमू । अमून् । अमुना । अमूभ्यां । इत्यादि ॥ असेः किं । अदस्यति ॥ दात् किं । अन्त्यस्य मा भूत् । अमुया । अमुयोः ॥

## एत ईद्बहुवचने ॥ ८१ ॥

अदस् । इत्येतस्य द् । इत्येतस्मात् परस्य । ए । इत्येतस्य बहुत्वरूपार्थज्ञो । ई । इत्येष आदेशः स्यात् । द् । इत्येतस्य म् । इत्येष आदेशश्च स्यात् ॥ अमी । अमीभिः । अमीभ्यः । अमीभ्यः । अमीषां । अमीषु ॥

## वाक्यस्य टेः प्लुत उदात्तः ॥ ८२ ॥

अधिकारो ऽयं ॥ यदित ऊर्ध्वमनुक्रमिष्यामो वाक्यस्य टेः प्लुत उदात्त इत्येवं तद्वेदितव्यं ॥ वक्ष्यति प्रत्यभिवादे ऽशूद्रे । अभिवादये देवदत्तो ऽहं भोः । आयुष्मानेधि देवदत्ता३ ॥ आ पादपरिसमाप्तेर्वाक्यस्य टेः । प्लुतः । उदात्तः । इत्येतत् त्रयमधिकृतं ज्ञेयं ॥

## प्रत्यभिवादे ऽशूद्रे ॥ ८३ ॥

प्रत्यभिवादे यद्वाक्यं तस्य टेः प्लुतः स्यात् । स चोदात्तो भवति । शूद्रविषयके प्रत्यभिवादवाक्ये तु न भवति ॥ आशिषं वाचयमानो गुरुराशिषं प्रयुङ्क्ते इति यत् स प्रत्यभिवादः ॥ अभिवादये देवदत्तो ऽहं भोः । आयुष्मानेधि देवदत्ता३ ॥ अशूद्रे किं । अभिवादये तुषजको ऽहं भोः । आयुष्मानेधि तुषजक ॥

## दूराद्धूते च ॥ ८४ ॥

दूरात् संबोधने यद्वाक्यं तस्य टेः प्लुतः स्यात् । स चोदात्तो भवति ॥ आगच्छ भो माणवक देवदत्ता३ । आगच्छ भो माणवक यज्ञदत्ता३ ॥ दूरात् किं । आगच्छ माणवक देवदत्त ॥ [illegible] । [illegible] प्लुतिर्भवति । [illegible] देवदत्ता३ । [illegible] देवदत्ता३ ॥

## हैहेप्रयोगे हैहयोः ॥ ८५ ॥

हे । ऐ । इत्येतयोः प्रयोगे दूरात् संबोधने यद्वाक्यं तत्र हे । है । इत्येतयोरेव प्लुतः स्यात् ॥ ऐ । ऐ३ देवदत्त । देवदत्त हे३ ॥ हे । हे३ देवदत्त । देवदत्त ऐ३ ॥

## गुरोरनृतो ऽनन्त्यस्याप्येकैकस्य प्राचां ॥ ८६ ॥

दूरात् संबोधने यद्वाक्यं तदवयवस्य ऋकारवर्जितस्य गुरोरनन्त्यस्य तथान्त्यस्यापि टेरेकैकस्य प्लुतः स्यात् । प्राचामाचार्याणां मतेन ॥ दे३वदत्त । देवदा३त्त । देवदत्ता३ ॥ या३ज्ञदत्त । यज्ञदा३त्त । यज्ञदत्ता३ ॥ गुरोः किं । वकारात् परस्याकारस्य मा भूत् ॥ अनृतः किं । कृष्णा३ ॥ एकैकग्रहणं पर्यायार्थं ॥

## ओमभ्यादाने ॥ ८७ ॥

अभ्यादाने य ओंशब्दस्तस्य प्लुतः स्यात् । ओ३मग्निमीले पुरोहितं ॥ अभ्यादाने किं । ओमित्येकाक्षरं ॥ अभ्यादानमारम्भः ॥

## ये यज्ञकर्मणि ॥ ८८ ॥

ये । इत्येतस्य यज्ञकर्मणि प्लुतः स्यात् ॥ ये३ यजामहे ॥ यज्ञकर्मणि किं । ये यजामह इति पञ्चाक्षरं ॥

## प्रणवष्टेः ॥ ८९ ॥

यज्ञकर्मणि टेः प्रणव आदेशः स्यात् ॥ अपां रेतांसि जिन्वतों३ । देवाञ्जिगाति सुम्नयों३ ॥ यज्ञकर्मणि किं । अपां रेतांसि जिन्वति ॥

## याज्यान्तः ॥ ९० ॥

याज्याकाण्डे पठ्यमानानां मन्त्राणामन्त्यस्य टेर्यज्ञकर्मणि प्लुतः स्यात् ॥ स्तोमैर्विधेमाग्नया३इ । जिह्वामग्ने चकृषे हव्यवाहों३ ॥ अन्तः किं । वाक्यसमुदायरूपाणां याज्यानामृचां यावन्ति वाक्यानि तेषां सर्वेषां टेः प्लुतप्राप्तौ सर्वान्त्यस्य वाक्यस्य प्लुतार्थमन्तग्रहणं ॥

## ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः ॥ ९१ ॥

ब्रूहि । प्रेष्य । श्रौषट् । वौषट् । आवह । इत्येतेषां शब्दानामादेर्यज्ञकर्मणि प्लुतः स्यात् ॥ ब्रूहि । अग्नये ऽनुब्रू३हि ॥ प्रेष्य । अग्नये गोमयानि प्रे३-

ष्य ॥ औषट् । अस्तु श्रौ३षट् ॥ वौषट् । सोमस्याग्ने वीही३ वौ३षट् ॥ आवह । अग्निमा३वह ॥ आवह देवान् यजमानायेत्यादावयं प्लुतो न भवति । सर्वविधीनां छन्दसि विकल्पितत्वात् ॥

## अग्नीत्प्रेषणे परस्य च ॥९२॥

अग्नीत्कर्मके ऽध्वर्युकर्तृके प्रेषणे यज्ञकर्मण्याद्येः प्लुतः स्यात् । ततः परस्य द्वितीयस्याचश्च प्लुतो भवति ॥ ओ३ श्रा३वय ॥ यज्ञकर्मणि किं । ओ श्रावय ॥

## विभाषा पृष्टप्रतिवचने हेः ॥९३॥

पृष्टस्य प्रतिवचने यद्वाक्यं तत्र हेर्वा प्लुतः स्यात् ॥ अकार्षीः कटं देवदत्त । अकार्षं ही३ । अकार्षं हि ॥ अलावीः केदारं देवदत्त । अलाविषं ही३ । अलाविषं हि ॥ पृष्टप्रतिवचने किं । कटं करिष्यति हि ॥ हेः किं । करोमि ननु ॥

## निगृह्यानुयोगे च ॥९४॥

निगृह्यानुयोगे यद्वाक्यं तस्य टेर्वा प्लुतः स्यात् ॥ स्वमतात् प्रच्यावनमपनयो निग्रहः । तस्यैव प्रच्यावितस्य स्वमतस्याविष्करणं शब्देन प्रकाशनमनुयोगः ॥ अद्यामावास्येत्यात्था३ । अद्यामावास्येत्यात्थ ॥ अद्यामावास्या । इत्येवंवादी युक्त्या स्वमतात् प्रच्याव्य साभ्यसूयमनुयोगेनानुयुज्यते ॥

## आम्रेडितं भर्त्सने ॥९५॥

वाक्यादेरामन्त्रितस्य यद् द्वित्वं तत्राम्रेडितान्तस्य प्लुतः स्यात् ॥ भर्त्सने तर्जने ॥ चौर चौर३ घातयिष्यामि त्वां । दस्यो दस्यो३ बन्धयिष्यामि त्वां ॥

## अङ्गयुक्तं तिङाकाङ्क्षं ॥९६॥

अङ्ग । इत्यनेन युक्तं तिङन्तमाकाङ्क्षं भर्त्सने तर्जने प्लुतः स्यात् ॥ अङ्ग कूज३ । अङ्ग व्याहर३ । इदानीं ज्ञास्यसि जाल्म ॥ तिङन्तं किं । अङ्ग देवदत्त मिथ्या वदसि ॥ आकाङ्क्षं किं । अङ्ग पच । नैतदपरमाकाङ्क्षति ॥ भर्त्सने किं । अङ्गाधीष्व भक्तं ते दास्यामि ॥

## विचार्यमाणानां ॥९७॥

विचारस्य विषये विचार्यमाणवस्तुप्रतिपादकवाक्यानां टेः प्लुतः स्यात् ॥ होतव्यं दीक्षितस्य गृहा३इ । न होतव्या३मिति । होतव्यं न होतव्यमिति विचार्यते ॥ प्रमाणैर्वस्तुतत्त्वपरीक्षणं विचारः ॥

## पूर्वं तु भाषायां ॥ ९८ ॥

विचारस्य विषये विचार्यमाणानां वाक्यानां पूर्वस्यैव प्लुतः स्यात् । भाषायां ॥ अहिर्नू३ रज्जुर्नु । लोष्टो नू३ कपोतो नु ॥ पूर्वत्वं चेह प्रयोगापेक्षमेव ग्राह्यं ॥

## प्रतिश्रवणे च ॥ ९९ ॥

प्रतिश्रवणे यद्वाक्यं तस्य टेः प्लुतः स्यात् ॥ प्रतिश्रवणमङ्गीकारः । प्रतिज्ञानं । श्रवणाभिमुख्यं च ॥ अङ्गीकारे । गां मे देहि भोः । हन्त ते ददामी३ ॥ प्रतिज्ञाने । नित्यः शब्दो भवितुमर्हती३ ॥ श्रवणाभिमुख्ये । देवदत्त भोः किमात्था३ ॥

## अनुदात्तं प्रश्नान्ताभिपूजितयोः ॥ १०० ॥

वाक्यस्य टेरनुदात्तः प्लुतः स्यात् । प्रश्नान्ते । अभिपूजिते च ॥ प्रश्नान्ते । अगमा३ः पूर्वा३न् ग्रामा३नग्निभूता३इ । अगमा३ः पूर्वा३न् ग्रामा३न् पटा३उ ॥ अग्निभूते । पटो । एतयोः प्रश्नान्तवर्तित्वादनेनानुदात्तः प्लुतः । अगम इत्यादीनां त्वनन्त्यस्यापि प्रश्नाख्यानयोरिति स्वरितः प्लुतः ॥ अभिपूजिते । शोभनः खल्वसि माणवका३ ॥

## चिदिति चोपमार्थे प्रयुज्यमाने ॥ १०१ ॥

चित् । इत्येतस्मिन् निपात उपमार्थे प्रयुज्यमाने वाक्यस्य टेरनुदात्तः प्लुतः स्यात् ॥ अग्निचिद्भाया३त् । राजचिद्भाया३त् । अग्निरिव राजेव भायादित्यर्थः ॥ उपमार्थे किं । कथंचिदाहुः ॥ प्रयुज्यमाने किं । अग्निर्माणवको भायात् ॥

## उपरि स्विदासीदिति च ॥ १०२ ॥

उपरि स्विदासीत् । इत्येतस्य टेरनुदात्तः प्लुतः स्यात् ॥ अधः स्विदासी३त् । उपरि स्विदासी३त् ॥ अधः स्विदासीदित्यत्र तु विचार्यमाणानामित्युदात्तः प्लुतः ॥

## स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु ॥ १०३ ॥

वाक्यादेरामन्त्रितसंज्ञकस्याम्रेडितसंज्ञके परतोऽसूयायां । संमतौ । कोपे । कुत्सने च गम्यमाने स्वरितः प्लुतः स्यात् ॥ असूयायां । अभिरूपका३ अभिरूपक रिक्तं त आभिरूप्यं ॥ संमतौ । माणवका३ माणवक । अभिरूपका३ अभिरूपक शोभनः खल्वसि ॥ कोपे । माणवका३ माणवक । अविनीतका३ अविनीतक इदानीं ज्ञास्यसि जाल्म ॥ कुत्सने । शाक्तीका३ शाक्तीक रिक्ता ते शक्तिः ॥ एषु वाक्यादेरामन्त्रितस्येति द्वित्वं ॥

## क्षियाशीःप्रैषेषु तिङाकाङ्क्षं ॥१०४॥

क्षिया । आशीस् । प्रैष । इत्येतेषु गम्यमानेषु साकाङ्क्षस्य तिङन्तस्य टेः स्वरितः प्लुतः स्यात् ॥ क्षियाचारभेदः ॥ क्षियायां । स्वयं ह रथेन याती३ । उपाध्यायं पदातिं गमयति । स्वयं ह्योदनं भुङ्क्ते३ । उपाध्यायं सक्तून् पाययति ॥ पूर्वमत्र तिङन्तमुत्तरमाकाङ्क्षति ॥ इष्टाशंसनमाशीः ॥ आशिषि । सुतांश्च लप्सीष्ठा३ धनं च तात ॥ शब्देन व्यापारणं प्रैषः ॥ प्रैषे । कटं कुरु३ ग्रामं च गच्छ । यवाँल्लुनीहि३ सक्तूँश्च पिब ॥ आकाङ्क्षं किं । आशिषि । दीर्घं त आयुरस्तु । प्रैषे । अग्नीदग्नीन् विहर । नित्यसाकाङ्क्षत्वात् क्षियायां न प्रत्युदाहृतं ॥

## अनन्त्यस्यापि प्रश्नाख्यानयोः ॥१०५॥

अनन्त्यस्यान्त्यस्यापि पदस्य टेः स्वरितः प्लुतः स्यात् । प्रश्ने । आख्याने च गम्यमाने ॥ प्रश्ने । अगमा३ः पूर्वा३न् .ग्रामा३नग्निभूता३इ । अनन्त्यस्यानुदात्तं प्रश्नान्ताभिपूजितयोरिति पक्षे ऽनुदात्तो ऽपि प्लुतो भवति ॥ आख्याने । अगमं३ पूर्वा३न् ग्रामा३न् भो३ः । सर्वेषामेव पदानामेव स्वरितः प्लुतः ॥

## प्लुताविच इदुतौ ॥१०६॥

दूराद्धूते चेत्यादिसूत्रैर्यः प्लुतो विहितस्तत्रैचः प्लुतप्रसङ्गे तदवयवयोरिकारोकारयोः प्लुतः स्यात् ॥ ऐ३तिकायन । औ३पगव ॥ गुरोरनृत इति प्लुतः ॥ चतुर्मात्रावेतौ संपन्नौ ॥

## एचो ऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ ॥१०७॥

एचो ऽप्रगृह्यसंज्ञकस्य दूरात् संबोधनभिन्ने प्लुतविषये पूर्वस्यार्धस्याकारादेशः स च प्लुतः स्यात् । उत्तरस्यार्धस्य यथाक्रममिकारोकारावादेशौ भवतः ॥ आयुष्मानेधि अग्निभूता३इ । पटा३उ ॥ अप्रगृह्यस्येति किं । शोभने खलु स्थो माले३ ॥

## तयोर्य्वावचि संहितायां ॥ १०८ ॥

इ । उ । इत्येतयोरचि परतः संहितायां विषये य् । व् । इत्येतावादेशौ भवतः ॥ इ । अग्ना३याशा । अग्ना३यिन्द्रं ॥ उ । पटा३वाशा । पटा३वुदकं ॥ अचि किं । अग्ना३इ । पटा३उ ॥ संहितायां किं । अग्ना३इ इन्द्र । पटा३उ उदकं ॥ इदुतोरसिद्धत्वाद्यणो ऽप्राप्तावयमारम्भः ॥ पूर्वसूत्रोक्तयोरिदुतोः परामर्शार्थं तयोरिति पदं ॥ संहितायामिति । आध्यायपरिसमाप्तेरधिकारः । इतः प्रभृति यद्वक्ष्यामः । संहितायामित्येव तद्वेदितव्यं ॥

॥ इति सूत्रपाठे ऽष्टमाध्यायस्य द्वितीयः पादः ॥

---

## मतुवसो रु संबुद्धौ छन्दसि ॥ १ ॥

मतुप्प्रत्ययान्तस्य वसुप्रत्ययान्तस्य च पदस्य संबुद्धौ परे वेदे रुरित्ययमादेशः स्यात् ॥ मत्वन्तस्य । इन्द्र मरुत्व इह पाहि सोमं । यय इति वत्वं ॥ हरिवो मे दिनं त्वां । छन्दसीर इति वत्वं । उगिदचामिति नुम् । सोर्हल्ङ्यादिलोपे संयोगान्तस्येति तलोपे नुमो नकारस्य रुत्वं ॥ वस्वन्तस्य । मिह । मीढ्व स्तोकाय तनयाय ॥ सह । इन्द्र साढ्वः ॥ लिटः क्वसौ दाश्वान् साह्वान् मीढ्वांश्चेति निपातनाद्दीर्घत्वं द्वित्वाभावो ढत्वं च ॥ मतुवसोः किं । ब्रह्मन् स्तोष्यामः ॥ संबुद्धाविति किं । य एवं विद्वानग्निमाधत्ते ॥ छन्दसि किं । हे गोमन् । हे विद्वन् ॥ रु इत्यविभक्तिको निर्देशः ॥

## अत्रानुनासिकः पूर्वस्य तु वा ॥ २ ॥

अधिकारो ऽयं ॥ इत उत्तरं यस्य स्थाने रुत्वं विधीयते । तस्मात् पूर्वस्य वर्णस्य

वानुनासिको भवतीत्येतदधिकृतं वेदितव्यं ॥ वक्ष्यति समः सुटि । सँस्कर्ता । संस्कर्ता ॥ रुणा सह संनियोगप्रतिपत्त्यर्थमत्रग्रहणं । अन्यथा ढो ढे लोप इत्यत्रापि पूर्वस्यानुनासिकत्वमाशङ्क्येत ॥

## आतो ऽटि नित्यं ॥३॥

आ । इत्येतस्य रोः पूर्वस्य स्थाने ऽट्प्रत्याहारान्तर्गतवर्णेषु परतो नित्यमनुनासिक आदेशः स्यात् ॥ महाँ असि । महाँ इन्द्रो य ओजसा ॥ दीर्घादटीति रुत्वे कृते ततः पूर्वस्यानुनासिकविकल्पे प्राप्ते नित्यार्थं वचनं ॥ तैत्तिरीयास्त्वनुस्वारमधीयते । तत्रच्छान्दसत्वाद्व्यत्ययो ज्ञेयः ॥ आतः किं । ये वा वनस्पतीँरनु । ये वा वनस्पतींरनु ॥ अटि किं । भवाँश्चरति । भवांश्चरति ॥ नित्यग्रहणं विस्पष्टार्थमारम्भसामर्थ्यादेव नित्यत्वसिद्धेः ॥

## अनुनासिकात् परो ऽनुस्वारः ॥४॥

अनुनासिकाद्भिन्नो यो वर्णो रोः पूर्वो यस्यानुनासिको न विहितस्ततः परो ऽनुस्वार आगमः स्यात् ॥ भवांश्चरति । भवाँश्चरति ॥ अनुनासिकाभावपक्षे ऽनुस्वारः ॥

## समः सुटि ॥५॥

सं । इत्येतस्य सुटि परे संहितायां विषये रुरित्ययमादेशः स्यात् ॥ सँस्कर्ता । संस्कर्ता ॥ संपर्युपेभ्य इति सुट् । सानो मस्य रुत्वं । रोर्विसर्जनीये कृते वा शरीत्यस्य व्यवस्थितविभाषात्वादप्रवृत्तौ नित्यमेव सकारः ॥ समः किं । उपस्कृतिः ॥ सुटि किं । संकृतिः ॥

## पुमः खय्यम्परे ॥६॥

पुम् । इत्येतस्य । अम्प्रत्याहारान्तर्गतवर्णपरके खय्प्रत्याहारान्तर्गते वर्णे परे रु । इत्ययमादेशः स्यात् ॥ पुँस्कामा । पुंस्कामा । पुँस्कोकिलः । पुंस्कोकिलः । पुँस्पुत्रः । पुंस्पुत्रः । पुँश्चली । पुंश्चली ॥ व्युत्पत्तिपक्षाश्रयणे ऽप्रत्ययस्येति षत्वपर्युदासात् कुप्वोरिति जिह्वामूलीयोपध्मानीययोः प्राप्तिः । अव्युत्पत्तिपक्षे षत्वप्राप्तौ । संपुंकानामिति सकारः ॥ समः सुटीति सिंहावलोकननिर्देशपक्षे तु पूर्वसूत्रात् स इत्यनुवर्तते । रु । इत्येतस्य नात्राभिसंबन्धः ॥ खयि किं । पुंदासः । पुंगवः ॥ अम्परे किं । पुंक्षीरं । पुंक्षुरः ॥ पदग्रहणं किं । पुमान्तः । पुमासारः ॥

## नश्छव्यप्रशान् ॥ ७ ॥

न् । इत्येतदन्तस्य पदस्य । अम्प्रत्याहारान्तर्गतवर्णपरके छवूप्रत्याहारान्तःस्थे वर्णे परे रु । इत्येष आदेशः स्यात् । प्रशान्शब्दस्य तु न भवति ॥ भवांश्छादयति । भवाञ्छादयति । चक्रिँस्त्रायस्व । चक्रिंस्त्रायस्व ॥ पदस्य किं । हन्ति ॥ छवि किं । भवान् करोति ॥ अम्परे किं । सन् त्सरुः । खड्गमुष्टिः ॥ अप्रशान् किं । प्रशाञ्चिनोति ॥

## उभयथर्क्षु ॥ ८ ॥

न् । इत्येतदन्तस्य पदस्य । अम्प्रत्याहारान्तर्गतवर्णपरके छवूप्रत्याहारान्तःस्थे वर्णे परे वेदे रुर्वा नकारो वा । इत्युभयथा स्यात् ॥ तस्मिँस्त्वा दधाति । तस्मिन् त्वा दधाति ॥ पशूँस्ताँश्चक्रे । पशून् तान् चक्रे ॥ ताँस्त्वं खादस्व खादितान् । तान् त्वं खादस्व खादितान् ॥ अनुनासिकाभावपक्षे ऽनुस्वारागमः ॥

## दीर्घादटि समानपादे ॥ ९ ॥

दीर्घात् परस्य पदान्तस्य न् । इत्येतस्य रु । इत्येष आदेशो वा स्यादटि परे । तौ चेन्निमित्तनिमित्तिनौ समानपादस्थौ भवतः ॥ परिधीँरति । देवाँ अच्छा सुमती । महाँ इन्द्रो य ओजसा ॥ ऋक्पाद एवेह गृह्यते ॥ दीर्घात् किं । अहन्नहिं ॥ अटि किं । इम्यान् क्षत्रियान् ॥ समानपादे किं । या तु धानानुपस्पृशः ॥ उभयथेत्यनुवृत्तेरिह न । आदित्यान् याचिषामहे ॥

## नॄन् पे ॥ १० ॥

नॄन् । इत्येतस्य पदस्यावयवस्य न् । इत्येतस्य प् । इत्येतदादौ शब्दे परतो रु । इत्येष आदेशो वा स्यात् ॥ नॄँᳲ पाहि । नॄंᳲ पाहि । नॄँः पाहि । नॄंः पाहि ॥ कुप्वोरित्युपध्मानीयविसर्गौ ॥ उभयथेत्यनुवृत्तेर्नेह । नॄन् पाहि ॥ पे किं । नॄन् भोजयति ॥ पकारे ऽकार उच्चारणार्थः ॥

## स्वतवान् पायौ ॥ ११ ॥

स्वतवान् । इत्येतस्य पदस्यावयवस्य न् । इत्येतस्य पायुशब्दे परे रु । इत्येष आदेशो वा स्यात् ॥ स्वतवाँᳲ पायुरग्ने । स्वतवाँः पायुरग्ने । स्वतवान् पायुरग्ने ॥

## कानाम्रेडिते ॥१२॥

कान् । इत्येतस्य पदस्यावयवस्य न् । इत्येतस्याम्रेडितसंज्ञके परे रु । इत्येष आदेशः स्यात् ॥ काँस्कान् । कांस्कान् ॥ अस्य कस्कादिगणे पाठात् कुप्वोः ✕क✕पौ चेति प्राप्तं जिह्वामूलीयं विसर्जनीयं च बाधित्वा सत्वं । संपुंकानामिति वा । समः सुटीति द्विसकारकनिर्देशपक्षे त्वत्रापि सकार एवानुवर्त्य विधेयः । पूर्वत्र संबन्धानुवृत्त्यागतस्य रोरत्र नाभिसंबन्धः ॥ आम्रेडिते किं । कान् कान् पश्यसि । एको ऽत्र कुत्सायां ॥

## ढो ढे लोपः ॥१३॥

ढ् । इत्येतस्य ढ् । इत्येतस्मिन् परे लोपः स्यात् ॥ गाढ् । गाढा । अगाढ ॥ गुहू । उपगूढं ॥ लिह् । लीढं ॥ ष्टुत्वस्याश्रयात् सिद्धत्वं द्रष्टव्यं ॥ पदस्येतीह न संबध्यते । पदान्तस्य ढस्यासंभवात् ॥

## रो रि ॥१४॥

र् । इत्येतस्य पदान्तस्य र् । इत्येतस्मिन् परतो लोपः स्यात् ॥ नीरक्तं । दूरक्तं । पुना रमते । हरी रम्यः ॥ अजर्घाः । अपास्पाः । गृधु । स्पर्ध । यङ्लुकि । लङ् । सिप् । हल्ङ्यादिलोपः । जश्त्वं । दश्चेति रुत्वं । अनेन रकारलोपे ढ्रलोप इति दीर्घः ॥

## खरवसानयोर्विसर्जनीयः ॥१५॥

र् । इत्येतस्य पदान्ते वर्तमानस्य खर्प्रत्याहारान्तर्गतवर्णे परतो ऽवसाने च विसर्जनीयादेशः स्यात् ॥ खरि । वृक्षस्तरति । प्लक्षस्तरति ॥ अवसाने । वृक्षः । प्लक्षः ॥ खरवसानयोः किं । अग्निर्नयति । वायुर्नयति ॥

## रोः सुपि ॥१६॥

रु । इत्येतस्यावयवस्य र् । इत्येतस्य सप्तमीबहुवचने सुपि परे विसर्जनीय आदेशः स्यात् ॥ पयःसु । सर्पिःषु । यशःसु ॥

## भोभगोअघोअपूर्वस्य यो ऽशि ॥१७॥

भो । भगो । अघो । इत्येतच्छब्दपूर्वस्य । अ । इत्येतत्पूर्वस्य च रोरवयवस्य र् । इत्येतस्य अश्प्रत्याहारान्तर्गतवर्णे परतो य् । इत्येष आदेशः स्यात् ॥

भो । भो अत्र । भो ददाति ॥ भगो । भगो अत्र । भगो ददाति ॥ अघो । अघो अत्र । अघो देवाः ॥ ओतो गार्ग्यस्य हलि सर्वेषामिति यलोपः ॥ अपूर्वस्य । क आस्ते । कयास्ते । देवा इह । देवायिह ॥ लोपः शाकल्यस्येति पक्षे यलोपः ॥ भो इत्यादि किं । अग्निरत्र । वायुरत्र ॥ अशि किं । देवाः सन्ति । वृक्षाः । प्लक्षः ॥ रोः किं । प्रातरत्र । पुनरत्र ॥

## व्योर्लघुप्रयत्नतरः शाकटायनस्य ॥ १८ ॥

व् । य् । इत्येतयोर्भो भगो अघो अ । इत्येतत्पूर्वयोः पदान्तयोरशि परे लघुप्रयत्नतरौ व् । य् । इत्येतावादेशौ स्तः । शाकटायनस्याचार्यस्य मतेन ॥ भो । भोयत्र । भो अत्र ॥ भगो । भगोयत्र । भगो अत्र ॥ अघो । अघोयत्र । अघो अत्र ॥ अपूर्व । कयास्ते । क आस्ते ॥ अस्मायुद्धर । अस्मा उद्धर ॥ द्वावानय । द्वा आनय ॥ यस्य वर्णस्योच्चारणे जिह्वाग्रोपाग्रमध्यमूलानां शैथिल्यं भवति स लघूच्चारणः ॥

## लोपः शाकल्यस्य ॥ १९ ॥

व् । य् । इत्येतयोः पदान्ते वर्तमानयोरवर्णपूर्वयोरशि परे लोपः स्यात् । शाकल्यस्याचार्यस्य मतेन ॥ व् । विष्णा इह । विष्णाविह ॥ असा आदित्यः । असावादित्यः ॥ य् । हर एहि । हरयेहि ॥ श्रिया उद्यतः । श्रियायुद्यतः ॥ शाकल्यग्रहणं विकल्पार्थं । तेन लघुप्रयत्नतरादेशाभावपक्षे ऽपि व्योः पक्षे श्रवणं भवति ॥ भो इत्यादि नानुवर्तते । ओकारात् परस्योत्तरसूत्रेण नित्यलोपविधानात् ॥

## ओतो गार्ग्यस्य ॥ २० ॥

ओ । इत्येतस्मात् परस्य पदान्तस्यालघुप्रयत्नस्य य् । इत्येतस्याशि परे नित्यं लोपः स्यात् ॥ भो अत्र । भगो अत्र । अघो अत्र ॥ पदान्तस्य किं । तोयं ॥ गार्ग्यग्रहणं पूजार्थं ॥ लोपः शाकल्यस्येति विकल्पस्यापवादो ऽयं । लघुप्रयत्नतरस्तु पक्षे भवत्येव यकारः । भोयत्र । भो अत्र । भगोयत्र । भगो अत्र । अघोयत्र । अघो अत्र ॥

## उञि च पदे ॥ २१ ॥

व् । य् । इत्येतयोरवर्णपूर्वयोः पदान्ते वर्तमानयोर्लोपः स्यात् । उञि पदे परे ॥

स उ एकाग्निः ॥ पदे किं । तन्नयुतं ॥ वेञः संप्रसारणे कृते भूतपूर्वेण जकारेण उञयं । यदि तु प्रतिपदोक्तस्य निपातसंज्ञकस्य उञ इह ग्रहणं तदो-त्तरार्थं पदग्रहणं ॥

# हलि सर्वेषां ॥२२॥

भो । भगो । अघो । अ । इत्येतत्पूर्वस्य पदान्ते वर्तमानस्य य् । इत्येतस्य हलि परे लोपः स्यात् । सर्वेषामाचार्याणां मतेन ॥ भो । भो हसति । भो याति ॥ भगो । भगो हसति । भगो याति ॥ अघो । अघो हसति । अघो याति ॥ अपूर्व । वृक्षा हसन्ति । वृक्षा यान्ति ॥ सर्वेषां ग्रहणं शाकटायन-स्यापि लोपो यथा स्यात् । लघुप्रयत्नतरो मा भूत् ॥

# मो ऽनुस्वारः ॥२३॥

म् । इत्येतस्य पदान्ते विद्यमानस्य हलि परतो ऽनुस्वार आदेशः स्यात् ॥ कुण्डं हसति । वनं हसति । हरिं वन्दे ॥ हलि किं । त्वमत्र । किमत्र ॥ पदान्तस्य किं । गम्यते । रम्यते ॥

# नश्चापदान्तस्य झलि ॥२४॥

न् । म् । इत्येतयोरपदान्तस्थयोर्झलि परतो ऽनुस्वार आदेशः स्यात् ॥ न् । यशांसि । सर्पींषि । धनूंषि ॥ म् । आक्रंस्यते । अधिजिगांसते ॥ अपदान्तस्य किं । राजन् भुङ्क्ष्व ॥ झलि किं । रम्यते । गम्यते ॥

# मो राजि समः क्वौ ॥२५॥

सं । इत्येतस्यावयवस्य म् । इत्येतस्य क्विप्प्रत्ययान्ते राज् । इत्येतस्मिन् धातौ परे म् । इत्येवादेशः स्यात् ॥ सम्राट् ॥ राजीति किं । संयत् ॥ समः किं । किंराट् ॥ क्वौ किं । सराजिता । सराजितुं ॥ अनुस्वारनिवृत्त्यर्थं मकारस्य मकारविधानं ॥

# हे मपरे वा ॥२६॥

ह् । इत्येतस्मिन् म् । इत्येतत्परके परतो म् । इत्येतस्य म् । इत्येव आदेशो वा स्यात् ॥ ह्मल । किम्ह्मलयति । किं ह्मलयति । कथम्ह्मलयति । कथं ह्मलयति ॥

## नपरे नः ॥ २७ ॥

न् । इत्येतत्परके ह् । इत्येतस्मिन् परतो न् । इत्येतस्य न् । इत्येष आदेशो वा स्यात् ॥ किन्ह्नुते । किं ह्नुते ॥ कयन्ह्नुते । कयं ह्नुते ॥

## ङ्णोः कुक्टुक् शरि ॥ २८ ॥

ङ् । ण् । इत्येतयोः पदान्तयोः शरि परे क्रमेण कुक् । टुक् । इत्येतावागमौ वा भवतः ॥ ङ् । प्राङ्ख्छेते । प्राङ्क्शेते । प्राङ्क्छेते । प्राङ्ख्शेते । प्राङ् शेते ॥ प्राङ्क्षष्ठः । प्राङ्ख्षष्ठः । प्राङ् षष्ठः ॥ प्राङ्क्साये । प्राङ्ख्साये । प्राङ् साये ॥ ण् । वण्ट्छेते । वण्ट्शेते । वण्ठ्छेते । वण्ठ्शेते । वण् शेते ॥ वण्ट्षण्डे । वण्ठ्षण्डे । वण् षण्डे ॥ वण्ट्साये । वण्ठ्साये । वण् साये ॥ सर्वत्र चयो द्वितीया इति पक्षे द्वित्वं ॥

## डः सि धुट् ॥ २९ ॥

ड् । इत्येतदन्तात् पदात् परस्य स् । इत्येतदादेः पदस्य धुट् । इत्येष आगमो वा स्यात् ॥ श्वलिट्त्साये । श्वलिट् साये । मधुलिट्त्साये । मधुलिट् साये ॥ धुटः परादित्वं न पदान्तादिति ष्टुत्वप्रतिषेधार्थं ॥

## नश्च ॥ ३० ॥

न् । इत्येतदन्तात् पदात् परस्य स् । इत्येतस्य धुट् । इत्येष आगमो वा स्यात् ॥ भवान्त्साये । भवान् साये ॥ महान्त्साये । महान् साये ॥ सन्त्सः । सन् सः ॥

## शि तुक् ॥ ३१ ॥

न् । इत्येतस्य पदान्तस्य श् । इत्येतस्मिन् परे तुक् । इत्येष आगमो वा स्यात् ॥ सञ्छम्भुः । सञ्च्छम्भुः । सञ्च्शम्भुः । सञ्शम्भुः ॥ श्चुत्वं । शश्छो ऽटीति पक्षे छत्वं । झरो झरि सवर्णे इति पक्षे चकारस्य लोपः ॥ तुकः पूर्वान्तत्वं छत्वार्थं ॥

## ङमो ह्रस्वादचि ङमुण्नित्यं ॥ ३२ ॥

ह्रस्वात् परो यो ङम् । तदन्तात् पदात् परस्याचो नित्यं ङमुट् । इत्येष आगमः स्यात् ॥ ङमो ङमुडित्युभयत्र प्रत्याहारग्रहणं । संज्ञायां कृतं टित्त्वं संज्ञिनां भवति ।

तेन ङणनेभ्यः परस्याचो यथासंख्येन ङुट् । णुट् । नुट् । इत्येत आगमा भवन्ति ॥ ङान्तात् । प्रत्यङ्ङास्ते । उदङ्ङास्ते ॥ णान्तात् । सुगण्णास्ते । सुगण्णीशः ॥ नान्तात् । कुर्वन्नास्ते । सन्नच्युतः ॥ ङमः किं । त्वमास्से ॥ ह्रस्वात् किं । प्राङास्ते । भवानास्ते ॥ अचि किं । प्रत्यङ् करोति ॥

## मय उञो वो वा ॥३३॥

मय्प्रत्याहारान्तर्गतवर्णात् परस्य उञो निपातसंज्ञकस्याचि परे व् । इत्येष आदेशो वा स्यात् ॥ शम्वस्तु वेदिः । शमु अस्तु वेदिः ॥ तद्वस्य परेतः । तदु अस्य परेतः ॥ किम्वावपनं । किमु आवपनं ॥ उञः प्रगृह्यत्वात् प्रकृतिभावे प्राप्ते पक्षे वत्वार्थमिदं । वस्यासिद्धत्वान्नानुस्वारः ॥

## विसर्जनीयस्य सः ॥३४॥

विसर्जनीयस्य खर्प्रत्याहारान्तर्गतवर्णेषु परतः स् । इत्येष आदेशः स्यात् ॥ वृक्षश्छादयति । वृक्षष्टकारः । वृक्षस्थकारः । वृक्षश्चिनोति । वृक्षष्टीकते । वृक्षस्तरति ॥

## शर्परे विसर्जनीयः ॥३५॥

शर्प्रत्याहारान्तर्गतवर्णपरके खर्प्रत्याहारस्थे वर्णे परे विसर्जनीयस्य विसर्जनीय आदेशः स्यात् ॥ रामः कशास्यति । घनाघनः क्षोभणः । कः त्सरुः ॥

## वा शरि ॥३६॥

शर्प्रत्याहारान्तर्गतवर्णेषु परतो विसर्जनीयस्य विसर्जनीयादेशो वा स्यात् ॥ वृक्षः शेते । वृक्षश्शेते ॥ वृक्षः षण्डे । वृक्षष्षण्डे ॥ वृक्षः साये । वृक्षस्साये ॥

## कुप्वोः ≍क≍पौ च ॥३७॥

कवर्गे पवर्गे च परतो विसर्जनीयस्य क्रमात् ≍क । ≍प । इत्येतौ जिह्वामूलीयोपध्मानीयसंज्ञकावादेशौ भवतः । चकाराद्विसर्जनीयश्च भवति ॥ कवर्गे । क≍ करोति । कः करोति । क≍ खनति । कः खनति ॥ पवर्गे । क≍ पठति । कः पठति । क≍ फलति । कः फलति ॥ कपावुच्चारणार्थौ ॥

## सोऽपदादौ ॥३८॥

विसर्जनीयस्य स् । इत्येष आदेशः स्यात् । अपदाद्योः कवर्गपवर्गयोः परतः ॥ पयस्काम्यति । यशस्काम्यति ॥ अपदादौ किं । पयः कामयते । पयः पिबति ॥

## इणः षः ॥३९॥

इण्प्रत्याहारान्तर्गतवर्णात् परस्य विसर्जनीयस्य ष् । इत्येष आदेशः स्यात् । अपदाद्योः कवर्गपवर्गयोः परतः ॥ पाशकल्पककाम्येषु ॥ पाश । सर्पिष्पाशं । यजुष्पाशं ॥ कल्प । सर्पिष्कल्पं । यजुष्कल्पं ॥ क । सर्पिष्कं । यजुष्कं ॥ काम्य । सर्पिष्काम्यति । यजुष्काम्यति ॥ अपदाद्योः किं । वायुः करोति । अग्निः पचति ॥ कुप्वोः किं । सर्पिस्ते । यजुस्ते ॥

## नमस्पुरसोर्गत्योः ॥४०॥

नमस् । पुरस् । इत्येतयोर्गतिसंज्ञकयोर्विसर्जनीयस्य स् । इत्येष आदेशः स्यात् । कवर्गे पवर्गे च परतः ॥ नमस् । नमस्कर्ता । नमस्कर्तुं । नमस्कर्तव्यं ॥ पुरस् । पुरस्करोति । पुरस्कर्ता ॥ पुरोऽव्ययमिति नित्यं गतिसंज्ञा ॥ गत्योः किं । साक्षात्प्रभृतीनि चेति सूत्रेण कृञो योगे विकल्पेन गतिसंज्ञा । तस्या अभावे । नमः कर्ता । नमः कर्तुं । नमः कर्तव्यं ॥ पुरः प्रष्टव्याः । ज्ञसन्तमेतत् ॥

## इदुदुपधस्य चाप्रत्ययस्य ॥४१॥

इकारोपधस्य । उकारोपधस्य च प्रत्ययभिन्नस्य विसर्जनीयस्य ष् । इत्येष आदेशः स्यात् । कवर्गे पवर्गे च परतः ॥ निर्दुर्बहिराविश्चतुर्प्रादुःषु ॥ निर् । निष्कृतं । निष्पीतं ॥ दुर् । दुष्कृतं । दुष्पीतं ॥ बहिस् । बहिष्कृतं । बहिष्पीतं ॥ आविस् । आविष्कृतं । आविष्पीतं ॥ चतुर् । चतुष्कृतं । चतुष्फलं ॥ प्रादुस् । प्रादुष्कृतं । प्रादुष्पीतं ॥ अप्रत्ययस्य किं । अग्निः करोति । वायुः करोति ॥

## तिरसोऽन्यतरस्यां ॥४२॥

तिरस् । इत्येतस्य गतिसंज्ञकस्य विसर्जनीयस्य स् । इत्येष आदेशः स्यात् । कवर्गे पवर्गे च परतः ॥ तिरस्कर्ता । तिरस्कर्तुं । तिरस्कर्तव्यं ॥ तिरःकर्ता । तिरःकर्तुं । तिरःकर्तव्यं ॥ अत्र तिरोऽन्तर्धाविति गतिसंज्ञा ॥ गतेः किं । तिरः कृत्वा काण्डं गतः । अत्रान्तर्धेरविवक्षितत्वान्न गतिसंज्ञा ॥

## द्विस्त्रिश्चतुरिति कृत्वोर्थे ॥४३॥

द्विस् । त्रिस् । चतुर् । इत्येतेषां कृत्वसुजर्थे वर्तमानानां विसर्जनीयस्य ष् ।

इत्येष आदेशो वा स्यात् । कवर्गे पवर्गे च परतः ॥ कवर्गे । द्विस् । द्विष्करोति । द्विः करोति ॥ त्रिस् । त्रिष्करोति । त्रिः करोति ॥ चतुर् । चतुष्करोति । चतुः करोति ॥ पवर्गे । द्विस् । द्विष्पचति । द्विः पचति ॥ त्रिस् । त्रिष्पचति । त्रिः पचति ॥ चतुर् । चतुष्पचति । चतुः पचति ॥ कृत्वोर्थे किं । चतुष्कपालः । चतुष्कपटकः । अत्रेदुदुपधस्येत्यनेन नित्यं षत्वं ॥

## इसुसोः सामर्थ्ये ॥४४॥

इस् । उस् । इत्येतयोर्विसर्जनीयस्य सामर्थ्ये गम्यमाने ष् । इत्येष आदेशो वा स्यात् । कवर्गे पवर्गे च परे ॥ कवर्गे । इस् । सर्पिष्करोति । सर्पिः करोति ॥ उस् । धनुष्करोति । धनुः करोति ॥ पवर्गे । इस् । सर्पिष्पतति । सर्पिः पतति ॥ उस् । धनुष्पतति । धनुः पतति ॥ इह सामर्थ्यं व्यपेक्षालक्षणं गृह्यते ॥ सामर्थ्ये किं । तिष्ठतु सर्पिः पिब त्वमुदकं । अत्र सर्पिःशब्दस्य स्थितिक्रियायामन्वयः । पिबेत्यस्य तूदकेनेति परस्परमुभयोरसंबन्धादसामर्थ्यं ॥

## नित्यं समासे ऽनुत्तरपदस्थस्य ॥४५॥

इस् । उस् । इत्येतयोरनुत्तरपदस्थयोर्विसर्जनीयस्य समासे नित्यं ष् । इत्येष आदेशः स्यात् । कवर्गे पवर्गे च परतः ॥ इस् । सर्पिष्कुण्डिका । सर्पिष्पानं ॥ उस् । धनुष्कर्ता । धनुष्पाता ॥ अनुत्तरपदस्थयोः किं । परमसर्पिःकुण्डिका । परमधनुःकपालं ॥ पूर्वसूत्रेणाप्यत्र न विकल्पः । समासे व्यपेक्षालक्षणसामर्थ्याभावात् ॥

## अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ॥४६॥

अ । इत्येतस्मादुत्तरस्याव्ययभिन्नपदावयवस्य विसर्जनीयस्य समासे नित्यं स् । इत्येष आदेशः स्यात् । कृ । कमि । कंस । कुम्भ । पात्र । कुशा । कर्णी । इत्येतेषूत्तरपदेषु परतः । उत्तरपदस्थस्य तु विसर्जनीयस्य न भवति ॥ कृ । अयस्कारः । पयस्कारः ॥ कमि । अयस्कामः । पयस्कामः ॥ कंस । अयस्कंसः । पयस्कंसः ॥ कुम्भ । अयस्कुम्भः । पयस्कुम्भः ॥ पात्र । अयस्पात्रं । पयस्पात्रं ॥ कुशा । अयःशलिता कुशा अयस्कुशा । पयस्कुशा ॥ कर्णी । अयस्कर्णी । पयस्कर्णी ॥ लिङ्गविशिष्टपरिभाषया । अयस्कुम्भी । अयस्पात्रीत्यादावपि भवति ॥ अतः किं । गीःकारः । धूःकारः ॥ तपरः किं । भाः-

करणं ॥ अनव्ययस्य किं । प्रातःकारः । पुनःकारः ॥ समासे किं । यशः करोति । पयः करोति ॥ अनुत्तरपदस्थस्य किं । परमयशःकारः । परमपयःकामः ॥

## अधःशिरसी पदे ॥४७॥

अधस् । शिरस् । इत्येतयोर्विसर्जनीयस्य समासे नित्यं स् । इत्येष आदेशः स्यात् । पदशब्द उत्तरपदे परे । उत्तरपदस्थयोस्तु न भवति ॥ अधस् । अधस्पदं ॥ शिरस् । शिरस्पदं ॥ समासे किं । अधः पदं । शिरः पदं ॥ अनुत्तरपदस्थयोः किं । परमशिरःपदं ॥

## कस्कादिषु च ॥४८॥

कस्क । इत्येवमादिषु शब्देष्विणप्रत्याहारान्तर्गतवर्णादुत्तरस्य विसर्जनीयस्य ष् । इत्येष आदेशः स्यात् । अ । इत्येतस्मादुत्तरस्य तु स् । इत्येष आदेशो भवति । कवर्गे पवर्गे च परतः ॥ इणः । सर्पिष्कुण्डिका । धनुष्कपालं । भ्रातुष्पुत्रः ॥ अकारात् । कस्कः । कौतस्कुतः । कांस्कान् ॥

## छन्दसि वाप्राम्रेडितयोः ॥४९॥

विसर्जनीयस्य वेदे स् । इत्ययमादेशो वा स्यात् । कवर्गे पवर्गे च परे । प्रशब्द आम्रेडिते च परतस्तु न भवति ॥ कवर्गे । उरुणस्कारः । उरुणः कारः ॥ पवर्गे । पयस्पात्रं । पयःपात्रं । विश्वतस्पात्रं । विश्वतः पात्रं ॥ अप्राम्रेडितयोः किं । अग्निः प्रविद्वान् । पुरुषः पुरुषः ॥

## कःकरत्करतिकृधिकृतेष्वनदितेः ॥५०॥

कः । करत् । करति । कृधि । कृत । इत्येतेषु परतो विसर्जनीयस्य वेदे स् । इत्येष आदेशः स्यात् । अदितिशब्दात् परस्य विसर्जनीयस्य न भवति ॥ कः । विश्वतस्कः । प्रदिवो अयस्कः ॥ करत् । विश्वतस्करत् । यथो नो वस्यसस्करत् ॥ करति । पयस्करति । सुपप्रोसस्करति ॥ कृधि । उरुणस्कृधि ॥ कृत । सदस्कृतं । सोमं न चारुं मघवत्सुनस्कृतं ॥ अनदितेः किं । यथा नो अदितिः करत् ॥

## पञ्चम्याः परावध्यर्थे ॥५१॥

पञ्चम्या विभक्तेर्विसर्जनीयस्य वेदे स् । इत्येष आदेशः स्यात् । उपरिभावार्थे

परिशब्दे परे ॥ दिवस्परि प्रथमं जज्ञे । अग्निर्हिमवतस्परि ॥ उपरिभावार्थो ऽधिशब्दः ॥ पञ्चम्याः किं । अहिरिव भोगैः पर्येति ॥ परौ किं । एतेभ्यो वा एतल्लोकेभ्यः प्रजापतिः समैरयत् ॥ अध्यर्थे किं । दिवः पृथिव्याः पर्योज उद्भृतं । सर्वतोभावे ऽत्र परिशब्दः ॥

## पातौ च बहुलं ॥५२॥

पातु । इत्येतस्मिन् लोडन्ते पाधातौ परे पञ्चम्या विभक्तेर्विसर्जनीयस्य वेदे बहुलं स् । इत्येष आदेशः स्यात् ॥ सूर्यो नो दिवस्पातु । राजस्पातु ॥ बहुलग्रहणात् क्वचिन्न । परिषदः पान्तु ॥

## षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु ॥५३॥

षष्ठ्या विभक्तेर्विसर्जनीयस्य वेदे स् । इत्येष आदेशः स्यात् । पति । पुत्र । पृष्ठ । पार । पद । पयस् । पोष । इत्येतेषूत्तरपदेषु परतः ॥ वाचस्पतिं विश्वकर्माणं ॥ पुत्र । दिवस्पुत्राय सूर्याय ॥ पृष्ठ । दिवस्पृष्ठे धावमानं सुपर्णं ॥ पार । अगन्म तमसस्पारं ॥ पद । इडस्पदे समिध्यसे ॥ पयस् । सूर्यं चक्षुर्दिवस्पयः ॥ पोष । रायस्पोषं यजमानेषु धत्तं ॥ षष्ठ्याः किं । मनुः पुत्रेभ्यो दायं व्यभजत ॥

## इडाया वा ॥५४॥

इडाशब्दाद्विहितायाः षष्ठ्या विसर्जनीयस्य वेदे स् । इत्येष आदेशो वा स्यात् । पति । पुत्र । पृष्ठ । पार । पद । पयस् । पोष । इत्येतेषूत्तरपदेषु परतः ॥ पति । इडायास्पतिः । इडायाः पतिः ॥ पुत्र । इडायास्पुत्रः । इडायाः पुत्रः ॥ पृष्ठ । इडायास्पृष्ठः । इडायाः पृष्ठः ॥ पार । इडायास्पारः । इडायाः पारः ॥ पद । इडायास्पदं । इडायाः पदं ॥ पयस् । इडायास्पयः । इडायाः पयः ॥ पोष । इडायास्पोषं । इडायाः पोषं ॥

## अपदान्तस्य मूर्धन्यः ॥५५॥

अधिकारो ऽयमा पादपरिसमाप्तेः ॥ इत उत्तरं यद्वक्ष्यामो ऽपदान्तस्य मूर्धन्य इत्येवं तद्वेदितव्यं ॥ वक्ष्यति । आदेशप्रत्यययोः । सिषेव । सुष्वाप । अग्निषु । वायुषु ॥ अपदान्तस्य किं । अग्निस्तत्र । वायुस्तत्र ॥ ष इत्येव सिद्धे मूर्धन्यग्रहणं ढकारार्थं । इति काशिका । अवृढ्वं । चकृढ्वे ॥

# सहेः साडः सः ॥ ५६ ॥

षह । इत्येतस्य धातोः साड्रूपस्यावयवस्य स् । इत्येतस्य स्थाने मूर्धन्य आदेशः स्यात् ॥ जलाषाट् । तुराषाट् । पृतनाषाट् ॥ षह इत्येतस्माण्ण्यन्तात् क्विप् । अन्येषामपि दृश्यत इति पूर्वपदस्य दीर्घत्वं ॥ सहेः किं । सह डेन वर्तते सडः । तस्यापत्यं साडिः ॥ साडः किं । यत्र साड्रूपता तत्र यथा स्यात् । इह मा भूत् । जलासाहं । तुरासाहं ॥ सः किं । आकारस्य मा भूत् ॥

# इण्कोः ॥ ५७ ॥

अधिकारो ऽयं ॥ इत उत्तरं यदनुक्रमिष्यामः । इण्प्रत्याहारात् कवर्गाच्च परस्य भवतीत्येवं तद्विज्ञेयं ॥ वक्ष्यति । आदेशप्रत्यययोः । सिषेव । सुष्वाप । अग्निषु । वायुषु ॥ इण्कोः किं । दास्यत्यसौ ॥

# नुम्विसर्जनीयशर्व्यवाये ऽपि ॥ ५८ ॥

नुमागमेन व्यवधाने विसर्जनीयेन व्यवधाने शर्प्रत्याहारान्तर्गतवर्णेन व्यवधाने ऽपि इण्प्रत्याहारान्तर्गतवर्णात् कवर्गाच्च परस्य स् । इत्येतस्य मूर्धन्य आदेशः स्यात् ॥ व्यवायशब्दस्य प्रत्येकमभिसंबन्धः । द्वन्द्वान्ते श्रूयमाणत्वात् ॥ नुम्व्यवधाने । सर्पींषि । यजूंषि । हवींषि ॥ विसर्जनीयव्यवधाने । सर्पिःषु । यजुःषु । बर्हिःषु ॥ शर्व्यवधाने । सर्पिष्षु । यजुष्षु । बर्हिष्षु ॥ नुम्ग्रहणं नुम्स्थानिकानुस्वारोपलक्षणं । अपदान्ते ऽनुस्वारविधानान्नुमा व्यवधानासंभवात् । तेनेह न । सुहिन्सु । पुंसु ॥

# आदेशप्रत्यययोः ॥ ५९ ॥

आदेशस्य प्रत्ययावयवस्य स् । इत्येतस्य इण्प्रत्याहारान्तर्गतवर्णात् कवर्गाच्च परस्यापदान्तस्य मूर्धन्यसंज्ञक आदेशः स्यात् ॥ आदेशस्य । षिवु । सिषेव । जिष्वप् । सुष्वाप ॥ प्रत्ययावयवस्य । अग्निषु । वायुषु । रामेषु । पक्ष्यति ॥ इण्कोः किं । रामस्य ॥ अपदान्तस्य किं । हरिस्तत्र ॥ आदेशप्रत्यययोः किं । सुपीः । सुपिसौ ॥

# शासिवसिघसीनां च ॥ ६० ॥

शासु । वस । घस्लृ । इत्येतेषां धातूनामवयवस्य स् । इत्येतस्य इण्कवर्गाभ्यां परस्यापदान्तस्य मूर्धन्य आदेशः स्यात् ॥ शासु । अन्वशिषत् । अन्वशिषतां ।

अन्वशिषन् । शिष्टः । शिष्टवान् ॥ वस । ऊषतुः । ऊषुः । उषितः । उषितवान् ॥ घस्लृ । जक्षतुः । जक्षुः । अक्षन्नमीमदन्त ॥ इण्कोः किं । शास्ति । वसति । जघास ॥ आदेशप्रत्ययाभावात् पूर्वसूत्रेणाप्राप्तौ वचनं ॥

## स्तौतिण्योरेव षण्यभ्यासात् ॥६१॥

ष्टुञ् । इत्येतस्य धातोर्णिच्प्रत्ययान्तानां च धातूनामादेशसकारस्याभ्याससंबन्धिन इण्प्रत्याहारान्तर्गतवर्णात् परस्य मूर्धन्यसंज्ञक आदेशः स्यात् । षभूते सन्प्रत्यये परे ॥ ष्टुञ् । तुष्टूषति ॥ णिजन्तानां । षिधू । सिषेधयिषति ॥ ञिष्वप् । सुष्वापयिषति ॥ पूर्वसूत्रेण सिद्धे नियमार्थमिदं । अभ्यासेणः परयोः स्तौति-ण्यन्तयोरेव षणि यथा स्यादन्यस्य मा भूत् । षिच । सिसिक्षति । षू । सुसूषति ॥ इष्टावधारणायैवकारः । स्तौतिण्योः षण्येवेति नियमे तु तुष्टा-वेत्यत्र न स्यात् । इह च स्यादेव । सिसिक्षति ॥ षणि किं । अन्यत्र नियमो मा भूत् । सिषेव । सेषिध्यते ॥ को विनते ऽनुरोधः । अविनते नियमो मा भूत् । तिष्ठासति । सुषुप्सति । षत्वणत्वयोर्विनत इति संज्ञा प्रातिशाख्यकृतां ॥ नकारानुबन्धग्रहणं किं । षकारमात्रे नियमो मा भूत् । सुषुपिष इन्द्रं । स्वपेर्लिट् । छान्दसत्वाद्व्यत्ययेन थास् । थासः से । लिटः कित्वात् संप्रसारणे द्वित्वे क्रादिनियमादिटि षत्व इन्द्रशब्दे परतो ऽयादेशे यलोपे चैतद्रूपं । अत्र नियमाभावादभ्यासात् परस्य षत्वं भवत्येव ॥ अभ्यासात् किं । अभ्यासाद्या प्राप्तिस्तस्या नियमो यथा स्यात् । धातोर्या प्राप्तिस्तस्या नियमो मा भूत् ॥ अधीषिषति । प्रतीषिषति । इणो बोधनार्थत्वादस्यादेशाभावः । अजादेर्द्वितीयस्येति सशब्दस्य द्वित्वं । सन्यत इतीत्वं । अभ्यासाश्रये प्रत्ययस्य षत्वे कृते ऽस्य नियमस्याभावाद्धात्वाश्रयं षत्वमभ्यासस्य प्रवर्तते ॥

## सः स्विदिस्वदिसहीनां च ॥६२॥

ञिष्विदा । ष्वद । षह । इत्येतेषां धातूनां णिच्प्रत्ययान्तानामादेशस्य स् । इत्येतस्याभ्यासेणः परस्य स् । इत्येष आदेशः स्यात् । षभूते सन्प्रत्यये परे ॥ ञिष्विदा । सिस्वेदयिषति ॥ ष्वद । सिस्वादयिषति ॥ षह । सिसाहयिषति ॥ षत्वनिवृत्त्यर्थं सकारस्य सकारवचनं ॥

## प्राक् सितादड्व्यवाये ऽपि ॥६३॥

परिनिविभ्यः सेवसितेति सूत्रे सितशब्देनोक्तात् षिञ् । इत्येतस्माद्धातोः प्रागु-

पसर्गात् सुनोतीत्यादिसूत्रपट्ठितोपृक्ता ये धातवस्तेषामादेशस्य स् । इत्येतस्योपसर्गस्थेणः परस्याडागमेन व्यवधाने ऽपि मूर्धन्य आदेशः स्यात् ॥ अपिशब्दादड्व्यवायाभावे ऽपि भवति ॥ षुञ् । अभ्यषुणोत् ॥ षू । पर्यषुवत् ॥ षो । अभ्यष्यत् ॥ ष्टुञ् । पर्यष्टौत् ॥ ष्टुभ । अभ्यष्टोभत ॥ ष्ठा । अभ्यष्ठात् ॥ सेनयेति णयन्तः । अभ्यषेणयत् ॥ षिधु । पर्यषेधत् ॥ षिच । अभ्यषिञ्चत् । अभ्यषिञ्चत ॥ षञ्ज । पर्यषजत् ॥ ष्वञ्ज । अभ्यष्वजत ॥ षद्लृ । अभ्यषीदत् ॥ स्तम्भु । अभ्यष्टभ्नात् । अवाष्टभ्नोत् ॥ स्वन । व्यष्वणत् । अवाष्वणत् ॥ षेवृ । पर्यषेवत् । न्यषेवत् । व्यषेवत् ॥ अभिषुणोति । अभिषुवति । इत्यादि ॥ अट्शब्देनात्राडागम एव गृह्यते । न प्रत्याहारो व्याख्यानात् ॥ इणकोरिति पञ्चमीनिर्देशादड्व्यवाये ऽप्राप्तौ वचनं ॥

## स्थादिष्वभ्यासेन चाभ्यासस्य ॥ ६४ ॥

उपसर्गात् सुनोतीति सूत्रोक्तात् ष्ठा । इत्येतस्माद्धातोरारभ्य परिनिविभ्य इति सूत्रे सितशब्देनोक्तात् षिञ् । इत्येतस्माद्धातोः प्राग्ये धातवस्तेषु विद्यमानस्य स् । इत्येतस्यादेशस्योपसर्गस्थेणः परस्याभ्यासेन व्यवधाने ऽपि मूर्धन्य आदेशः स्यात् । स्थादीनामभ्याससकारस्य च मूर्धन्यः स्यात् ॥ ष्ठा । अभितष्ठौ । परितष्ठौ ॥ सेनय । अभिषिषेणयिषति । परिषिषेणयिषति ॥ षिधू । अभिषिषेधयिषति । परिषिषेधयिषति ॥ षिच । अभिषिषिक्षति । परिषिषिक्षति ॥ षञ्ज । अभिषिषङ्क्षति । परिषिषङ्क्षति ॥ ष्वञ्ज । अभिषिष्वङ्क्षते । परिषिष्वङ्क्षते ॥ षद्लृ । निषषाद । विषषाद ॥ स्तम्भु । अभितष्टम्भ । अवतष्टम्भ ॥ स्वन । विषष्वाण । अवषष्वाण ॥ षेवृ । परिषिषेव । निषिषेव । विषिषेव ॥

## उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जां ॥ ६५ ॥

षुञ् । षू । षो । ष्टुञ् । ष्टुभ । ष्ठा । सेनय णिजन्तः सेनाशब्दः । षिधु । षिच । षञ्ज । ष्वञ्ज । इत्येतेषां धातूनामवयवस्य स् । इत्येतस्यादेशस्योपसर्गसंज्ञकस्यादिणप्रत्याहारान्तर्गतवर्णात् परस्य मूर्धन्यसंज्ञक आदेशः स्यात् ॥ षुञ् । अभिषुणोति । परिषुणोति ॥ षू । अभिषुवति । परिषुवति ॥ षो । अभिष्यति । परिष्यति ॥ ष्टुञ् । अभिष्टौति । परिष्टौति ॥ ष्टुभ । अभिष्टो-

भते । परिष्टोभते ॥ ष्ठा । अभिष्ठास्यति । परिष्ठास्यति ॥ सेनय । अभिषेणयति । परिषेणयति ॥ षिधु । अभिषेधति । परिषेधति ॥ षिच । अभिषिञ्चति । परिषिञ्चति ॥ षञ्ज । अभिषजति । परिषजति ॥ ष्वञ्ज । अभिष्वजते । परिष्वजते ॥ सेध इति शपा निर्देशो यङ्लुङ्निवृत्त्यर्थो दैवादिकनिवृत्त्यर्थश्च ॥ उपसर्गात् किं । दधि सिञ्चति ॥ यद्यपीणकोरित्यनुवर्तते । तथाप्युपसर्गेषु कवर्गस्यासंभवादिण् । इत्येव संबध्यते ॥

## सदिरप्रतेः ॥६६॥

षद्लृ । इत्येतस्य धातोरवयवस्यादेशस्य स् । इत्येतस्योपसर्गसंज्ञकस्यादिण्प्रत्याहारान्तर्गतवर्णात् परस्य मूर्धन्यसंज्ञक आदेशः स्यात् । प्रति । इत्येतस्मादुपसर्गात् परस्य तु न भवति ॥ निषीदति । विषीदति ॥ अप्रतेः किं । प्रतिसीदति ॥

## स्तम्भेः ॥६७॥

स्तम्भु । इत्येतस्य धातोरवयवस्य स् । इत्येतस्योपसर्गस्यादिण उत्तरस्य मूर्धन्य आदेशः स्यात् ॥ अभिष्टभ्नोति । अभिष्टभ्नाति । परिष्टभ्नोति । परिष्टभ्नाति ॥ उत्तरार्थो योगविभागः ॥

## अवाच्चालम्बनाविदूर्ययोः ॥६८॥

स्तम्भु । इत्येतस्य धातोरवयवस्य स् । इत्येतस्य । अव । इत्येतस्मादुपसर्गात् परस्य मूर्धन्य आदेशः स्यात् । आलम्बन आविदूर्ये चार्थे गम्यमाने ॥ आलम्बनमाश्रयणं ॥ आलम्बने । यष्टिमवष्टभ्यास्ते । तामाश्रित्य तिष्ठतीत्यर्थः ॥ आविदूर्यं सामीप्यं । अविदूरशब्दात् स्वार्थे ष्यञ् । तत्र प्रयोगोपाधिः ॥ आविदूर्ये । अवष्टब्धा गौः । निकटा समीप आस्त इत्यर्थः ॥ आलम्बनाविदूर्ययोः किं । अवस्तब्धो वृषलः शीतेन ॥ उपसर्गेणः परत्वाभावात् पूर्वेणाप्राप्तौ वचनं ॥

## वेश्च स्वनो भोजने ॥६९॥

वि । अव । इत्येताभ्यामुपसर्गसंज्ञकाभ्यां परस्य स्वन । इत्येतस्य धातोरवयवस्य स् । इत्येतस्य मूर्धन्य आदेशः स्यात् । भोजने ऽर्थे गम्यमाने ॥ विष्वणति । अवष्वणति । सशब्दं भुङ्क्त इत्यर्थः ॥ भोजने किं । विस्वनति मृदङ्गः ॥

## परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जां ॥ ७० ॥

षेवृ । षिञ् ग्रान्तः । षिञ् अच्प्रत्ययान्तः । षिवु । षह । सुडागम । ष्टुञ् । ष्वञ्ज । इत्येतेषामवयवस्य स् । इत्येतस्यादेशस्य परि । नि । वि । इत्येतेभ्य उपसर्गसंज्ञकेभ्यः परस्य मूर्धन्य आदेशः स्यात् ॥ षेवृ । परिषेवते । निषेवते । विषेवते ॥ सित । परिषितः । निषितः । विषितः ॥ सय । परिषयः । निषयः । विषयः ॥ षिवु । परिषीव्यति । निषीव्यति । विषीव्यति ॥ षह । परिषहते । निषहते । विषहते ॥ सुट् । परिष्करोति । संपर्युपेभ्य इति सुट् ॥ ष्टुञ् । परिष्टौति । निष्टौति । विष्टौति ॥ ष्वञ्ज । परिष्वजते । निष्वजते । विष्वजते । दंशसञ्जस्वञ्जामिति नलोपः ॥ स्तुस्वञ्ज्योरुपसर्गात् सुनोतीत्यनेनैव सिद्धे षत्व उत्तरत्रानुवृत्त्यर्थमत्र ग्रहणं ॥ सेव इत्यकार उच्चारणार्थः ॥

## सिवादीनां वाड्व्यवाये ऽपि ॥ ७१ ॥

षिवु । षह । सुट् । ष्टुञ् । ष्वञ्ज । इत्येतेषां पूर्वसूत्रोपात्तानां धातूनामवयवस्य स् । इत्येतस्यादेशस्य परि । नि । वि । इत्येतेभ्य उपसर्गसंज्ञकेभ्यः परस्याडागमेन व्यवधाने ऽपि वा मूर्धन्य आदेशः स्यात् ॥ षिवु । पर्यषीव्यत् । न्यषीव्यत् । व्यषीव्यत् । पर्यसीव्यत् । न्यसीव्यत् । व्यसीव्यत् ॥ षह । पर्यषहत । न्यषहत । व्यषहत । पर्यसहत । न्यसहत । व्यसहत ॥ सुट् । पर्यष्करोत् । पर्यस्करोत् ॥ ष्टुञ् । पर्यष्टौत् । न्यष्टौत् । व्यष्टौत् । पर्यस्तौत् । न्यस्तौत् । व्यस्तौत् ॥ ष्वञ्ज । पर्यष्वजत । न्यष्वजत । व्यष्वजत । पर्यस्वजत । न्यस्वजत । व्यस्वजत ॥ स्तुस्वञ्ज्योः प्राक् सितादिति प्राप्ते इतरेषामप्राप्ते उभयत्र विभाषेयं ॥

## अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु ॥ ७२ ॥

अनु । वि । परि । अभि । नि । इत्येतेभ्य उपसर्गेभ्यः परस्य स्यन्दू । इत्येतस्य धातोरवयवस्य स् । इत्येतस्य मूर्धन्य आदेशो वा स्यात् प्राणवान् यदि कर्ता न भवति ॥ अनु । अनुष्यन्दते । अनुस्यन्दते वा जलं ॥ वि । विष्यन्दते । विस्यन्दते वा तैलं ॥ परि । परिष्यन्दते । परिस्यन्दते वा घृतं ॥ अभि । अभिष्यन्दते । अभिस्यन्दते वा दुग्धं ॥ नि । निष्यन्दते । निस्यन्दते वा मधु ॥ अप्राणिषु किं । अनुस्यन्दते मत्स्यः ॥

## वेः स्कन्देरनिष्ठायां ॥७३॥

वि । इत्येतस्मादुपसर्गात् परस्य स्कन्दिर् । इत्येतस्य धातोरवयवस्य स् । इत्येतस्य मूर्धन्य आदेशो वा स्यात् । निष्ठासंज्ञकाद्भिन्ने प्रत्यये परे ॥ स्कन्दिर् । विष्कन्ता । विष्कन्तुं । विस्कन्ता । विस्कन्तुं ॥ अनिष्ठायां किं । विस्कन्नः ॥ कृदन्तप्रत्ययेष्वेवेदं प्रवर्तते । अनिष्ठायामिति पर्युदासात् ॥

## परेश्च ॥७४॥

परि । इत्येतस्मादुपसर्गात् परस्य स्कन्दिर् । इत्येतस्य धातोरवयवस्य स् । इत्येतस्य मूर्धन्य आदेशो वा स्यात् ॥ परिष्कन्दति । परिस्कन्दति । परिष्कन्ता । परिस्कन्ता । परिष्कन्तुं । परिस्कन्तुं । परिष्कन्नः । परिस्कन्नः । परिष्कन्तव्यं । परिस्कन्तव्यं ॥

## परिस्कन्दः प्राच्यभरतेषु ॥७५॥

परिस्कन्द । इति निपात्यते । प्राग्देशवासिषु भरतेषु वाच्येषु ॥ परिस्कन्दः । पचाद्यचि षत्वाभावो निपातनात् ॥ प्राच्यभरतेष्विति किं । परिष्कन्दः । परिस्कन्दः । परेश्चेति षत्वविकल्पः ॥ भरतग्रहणं प्राच्यविशेषणं ॥

## स्फुरतिस्फुलत्योर्निर्निविभ्यः ॥७६॥

स्फुर् । स्फुल । इत्येतयोर्धात्वोरवयवस्य स् । इत्येतस्य निर् । नि । वि । इत्येतेभ्य उपसर्गसंज्ञकेभ्यः परस्य मूर्धन्य आदेशो वा स्यात् ॥ स्फुर् । निर् । निःष्फुरति । निःस्फुरति । निष्फुरति । निस्फुरति । पक्षे शर्परे शरीति विसर्गलोपः ॥ नि । निष्फुरति । निस्फुरति ॥ वि । विष्फुरति । विस्फुरति ॥ स्फुल । निर् । निःष्फुलति । निःस्फुलति । निष्फुलति । निस्फुलति ॥ नि । निष्फुलति । निस्फुलति ॥ वि । विष्फुलति । विस्फुलति ॥

## वेः स्कभ्नातेर्नित्यं ॥७७॥

वि । इत्येतस्मादुपसर्गसंज्ञकात् परस्य स्कम्भु । इत्येतस्य धातोरवयवस्य स् । इत्येतस्य मूर्धन्य आदेशो नित्यं स्यात् ॥ स्कम्भु सौत्रः । विष्कभ्नोति । विष्कभ्नाति । विष्कम्भिता । विष्कम्भितुं । विष्कम्भितव्यं ॥

## इणः षीध्वंलुङ्लिटां धोऽङ्गात् ॥ ७८ ॥

इणप्रत्याहारान्तर्गतवर्णान्तादङ्गात् परेषां षीध्वं । लुङ् । लिट् । इत्येतेषामवयवस्य ध् । इत्येतस्य मूर्धन्य आदेशः स्यात् ॥ षीध्वं । च्युङ् । च्योषीढ्वं । प्लुङ् । प्लोषीढ्वं ॥ लुङ् । अच्योढ्वं । अप्लोढ्वं ॥ लिट् । डुकृञ् । चकृढ्वे ॥ कवर्गानुवृत्तिर्मा भूदिति पुनरिणग्रहणं कृतं । पच । पक्षीध्वं । यज । यक्षीध्वं ॥ षीध्वंलुङ्लिटां किं । ष्टुञ् । स्तुध्वं । अस्तुध्वं ॥ अङ्गात् किं । परिवेविषीध्वं ॥

## विभाषेटः ॥ ७९ ॥

इणप्रत्याहारान्तर्गतवर्णात् परो य इडागमस्तस्मात् परेषां षीध्वं । लुङ् । लिट् । इत्येतेषामवयवस्य ध् । इत्येतस्य मूर्धन्य आदेशो वा स्यात् ॥ षीध्वं । लविषीढ्वं । लविषीध्वं ॥ लुङ् । अलविढ्वं । अलविध्वं ॥ लिट् । लुलुविढ्वे । लुलुविध्वे ॥ इणः किं । आसिषीध्वं ॥

## समासेऽङ्गुलेः सङ्गः ॥ ८० ॥

सङ्ग । इत्येतस्यावयवस्य स् । इत्येतस्याङ्गुलिशब्दात् परस्य समासे मूर्धन्यादेशः स्यात् ॥ अङ्गुलेः सङ्गः । अङ्गुलिषङ्गः । अङ्गुलिषङ्गा यवागूः । अङ्गुलिषङ्गा गाः सादयति ॥ समासे किं । अङ्गुलेः सङ्गं पश्य ॥

## भीरोः स्थानं ॥ ८१ ॥

भीरुशब्दात् परस्य स्थान । इत्येतस्यावयवस्य स् । इत्येतस्य समासे मूर्धन्य आदेशः स्यात् ॥ भीरुष्ठानं ॥ समासे किं । भीरोः स्थानं पश्य ॥

## अग्नेः स्तुत्स्तोमसोमाः ॥ ८२ ॥

अग्नि । इत्येतस्मात् परस्य स्तुत् । स्तोम । सोम । इत्येतेषामवयवस्य स् । इत्येतस्य समासे मूर्धन्य आदेशः स्यात् ॥ स्तुत् । अग्निष्टुत् ॥ स्तोम । अग्निष्टोमः ॥ सोम । अग्नीषोमौ ॥ ईदग्नेरित्यनेनेकारः ॥ समासे किं । अग्नेः स्तुत् । अग्नेः स्तोमः । अग्नेः सोमः ॥

## ज्योतिरायुषः स्तोमः ॥ ८३ ॥

ज्योतिस् । आयुस् । इत्येताभ्यां परस्य स्तोम । इत्येतस्यावयवस्य स् । इत्ये-

तस्य समासे मूर्धन्य आदेशः स्यात् ॥ ज्योतिष्टोमः । आयुष्टोमः । स्कोरिति सलोपः ॥ समासे किं । ज्योतिषः स्तोमं दर्शयति । आयुषः स्तोमं ॥

## मातृपितृभ्यां स्वसा ॥८४॥

मातृ । पितृ । इत्येताभ्यां परस्य स्वसृ । इत्येतस्यावयवस्य स् । इत्येतस्य समासे मूर्धन्य आदेशः स्यात् ॥ मातृष्वसा । पितृष्वसा ॥ समासे किं । मातुः स्वसा । पितुः स्वसा ॥

## मातुःपितुर्भ्यामन्यतरस्यां ॥८५॥

मातुर् । पितुर् । इत्येताभ्यां परस्य स्वसृ । इत्येतस्यावयवस्य स् । इत्येतस्य समासे मूर्धन्य आदेशो वा स्यात् ॥ मातुर् । मातुःष्वसा । मातुष्ष्वसा । मातुःस्वसा । मातुस्स्वसा ॥ पितुर् । पितुःष्वसा । पितुष्ष्वसा । पितुःस्वसा । पितुस्स्वसा ॥ विभाषा स्वसृपत्योरिति सूत्रेण अलुक् । वा शरीति पक्षे विसर्जनीयः । तदभावे सत्वं ॥ समासे किं । वाक्ये मा भूत् । मातुः स्वसा । पितुः स्वसा ॥

## अभिनिसः स्तनः शब्दसंज्ञायां ॥८६॥

अभिनिस् । इत्येतस्मादुपसर्गसमुदायात् परस्य स्तन । इत्येतस्य धातोरवयवस्य स् । इत्येतस्य मूर्धन्य आदेशो वा स्यात् । शब्दस्य संज्ञायां गम्यमानायां ॥ अभिनिष्टानो वर्णः । अभिनिष्टानो विसर्जनीयः । अभिनिस्तानो वर्णः । अभिनिस्तानो विसर्जनीयः ॥ स्कोः संयोगाद्योरिति सलोपः ॥ शब्दसंज्ञायां किं । अभिनिस्तनति मृदङ्गः ॥ इतः प्रभृति समास इत्येतन्नानुवर्तते ॥

## उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ॥८७॥

उपसर्गसंज्ञकस्थादिणः प्रादुस् । इत्येतस्मादव्ययाच्च परस्य । अस् । इत्येतस्य धातोरवयवस्य स् । इत्येतस्य मूर्धन्य आदेशः स्यात् । य् । इत्येतस्मिन् परतो ऽनुप्रयोगादन्यत्राचि च परे ॥ उपसर्गेभ्यः । यथा । अभिष्यात् । निष्यात् । विष्यात् ॥ अचि । अभिषन्ति । निषन्ति । विषन्ति ॥ प्रादुषः । यथा । प्रादुःष्यात् ॥ अचि । प्रादुःषन्ति ॥ उपसर्गात् किं । दधि स्यात् । मधु स्यात् ॥ यचिः किं । अनुस्तं । विस्तं ॥ यच्परः किं । अभिस्तः । निस्तः । विस्तः । प्रादुःस्तः ॥

## सुविनिर्दुर्भ्यः सुपिसूतिसमाः ॥ ८८ ॥

सु । वि । निर् । दुर् । इत्येतेभ्य उपसर्गेभ्यः परस्य ञिष्वप् । षूङ् । षम । इत्येतेषां धातूनामवयवस्य स् । इत्येतस्य मूर्धन्य आदेशः स्यात् ॥ ञिष्वप् । सुषुप्तः । विषुप्तः । निःषुप्तः । दुःषुप्तः । सुषुपतुः । सुषुपुः ॥ पूर्वं धातुरुपसर्गेण युज्यत इति दर्शने किति लिटि परत्वात् संप्रसारणे षत्वे च कृते द्वित्वं । द्वित्वे कर्तव्ये षत्वस्यासिद्धत्वं न भवति । पूर्वत्रासिद्धीयमद्विर्वचन इत्युक्तेः ॥ षूङ् क्तिन्नन्तः । सुषूतिः । निःषूतिः । दुःषूतिः ॥ षम । सुषमं । विषमं । निःषमं । दुःषमं ॥

## निनदीभ्यां स्नातेः कौशले ॥ ८९ ॥

नि । इत्येतस्मादुपसर्गसंज्ञकात् । नदी । इत्येतस्माच्छब्दाच्च परस्य ष्णा । इत्येतस्य धातोरवयवस्य स् । इत्येतस्य मूर्धन्य आदेशः स्यात् । कौशले गम्यमाने ॥ नि । निष्णातः शास्त्रेषु । निष्णातो रज्जुवर्तने ॥ नदी । नद्यां स्नातीति नदीष्णः ॥ सुपि स्थ इत्यत्र सुपीति योगविभागात् कप्रत्ययः ॥ कौशले किं । निस्नातः । नद्यां स्नातो नदीस्नातः ॥

## सूत्रं प्रतिष्णातं ॥ ९० ॥

प्रतिष्णातमिति निपात्यते सूत्रमभिधेयं चेद्भवति ॥ प्रतिष्णातं सूत्रं । शुद्धमित्यर्थः ॥ प्रतिपूर्वस्य ष्णा । इत्येतस्य क्तप्रत्ययान्तस्य षत्वं निपातनात् ॥ सूत्रं किं । प्रतिस्नातमन्यत्र ॥

## कपिष्ठलो गोत्रे ॥ ९१ ॥

कपिष्ठल । इत्यत्र षत्वं निपात्यते । गोत्रविषये ॥ कपिष्ठलो नामर्षिः । यस्य कापिष्ठलिः पुत्रः ॥ गोत्रे किं । कपीनां स्थलं कपिस्थलं ॥

## प्रष्ठोऽग्रगामिनि ॥ ९२ ॥

प्रष्ठ । इति निपात्यते ऽग्रगामिन्यभिधेये ॥ प्रतिष्ठत इति प्रष्ठो गौः । प्रष्ठो ऽश्वः । अग्रतो गच्छतीत्यर्थः ॥ सुपि स्थ इति कप्रत्ययान्तस्य षत्वं निपातनात् । [illegible] स्थ इत्यस्मिन्पदे ॥ अग्रगामिनि किं । प्रस्थो हिमवतः पुत्रः । प्रस्थो व्रीहीणां ॥

## वृक्षासनयोर्विष्टरः ॥१३॥

विष्टर । इति निपात्यते । वृक्ष आसने चाभिधेये ॥ वृक्षे । विष्टरो वृक्षः ॥ आसने । विष्टरमासनं ॥ विपूर्वात् स्तृञ् । इत्येतस्माद् दोरवित्यप्रत्यये षत्वं निपातनात् ॥ वृक्षासनयोः किं । वाक्यस्य विस्तरः ॥

## छन्दोनाम्नि च ॥१४॥

विष्टार । इति निपात्यते । छन्दोनाम्न्यभिधेये ॥ विष्टारपङ्क्तिश्छन्दः । विष्टारबृहती छन्दः ॥ विपूर्वस्य स्तृञ् । इत्येतस्य घञन्तस्य षत्वं निपातनात् ॥ छन्दोनाम्नि किं । पटस्य विस्तारः ॥

## गवियुधिभ्यां स्थिरः ॥१५॥

गवि । युधि । इत्येताभ्यां परस्य स्थिर । इत्येतस्यावयवस्य स् । इत्येतस्य मूर्धन्य आदेशः स्यात् ॥ गविष्ठिरः । सूत्रे गवीति निर्देशादेव सप्तम्या अलुक् ॥ युधिष्ठिरः ॥

## विकुशमिपरिभ्यः स्थलं ॥१६॥

वि । कु । शमि । परि । इत्येतेभ्यः परस्य स्थलशब्दावयवस्य स् । इत्येतस्य मूर्धन्यादेशः स्यात् ॥ वि । विष्ठलं ॥ कु । कुष्ठलं ॥ शमि । शमिष्ठलं । षष्ठीसमासः । ङ्यापोः संज्ञाछन्दसोरिति ह्रस्वत्वं ॥ परि । परिष्ठलं ॥

## अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः ॥१७॥

अम्ब । आम्ब । गो । भूमि । सव्य । अप । द्वि । त्रि । कु । शेकु । शङ्कु । अङ्गु । मञ्जि । पुञ्जि । परमे । बर्हिस् । दिवि । अग्नि । इत्येतेभ्यः परस्य स्थशब्दावयवस्य स् । इत्येतस्य मूर्धन्य आदेशः स्यात् ॥ अम्ब । अम्बष्ठः ॥ आम्ब । आम्बष्ठः ॥ गो । गोष्ठः ॥ भूमि । भूमिष्ठः ॥ सव्य । सव्यष्ठः ॥ अप । अपष्ठः ॥ द्वि । द्विष्ठः ॥ त्रि । त्रिष्ठः ॥ कु । कुष्ठः ॥ शेकु । शेकुष्ठः ॥ शङ्कु । शङ्कुष्ठः ॥ अङ्गु । अङ्गुष्ठः ॥ मञ्जि । मञ्जिष्ठः ॥ पुञ्जि ।

पुंस्विष्ठः ॥ परमे । परमेष्ठः ॥ बर्हिन् । बर्हिष्ठः ॥ दिवि । दिविष्ठः ॥ अग्नि । अग्निष्ठः ॥ सूत्रे स्थ इति कप्रत्ययान्तानुकरणं । षष्ठ्यर्थे प्रथमा ॥

## सुषामादिषु च ॥ ९८ ॥

सुषाम । इत्यादीनां शब्दानामवयवस्य स् । इत्येतस्येणः परस्य मूर्धन्य आदेशः स्यात् ॥ शोभनं साम यस्यासौ सुषामा ब्राह्मणः । निःषामा । दुःषामा । सुषेधः ॥ सुशब्दस्य कर्मप्रवचनीयत्वान्निर्दुर् । इत्येतयोस्तु क्रियान्तरविषयत्वादनुपसर्गत्वात् षत्वाप्राप्तौ विधिरयं ॥

## एति संज्ञायामगात् ॥ ९९ ॥

इण्कुभ्यां परस्य स् । इत्येतस्य । एकारे परे । मूर्धन्य आदेशः स्यात् संज्ञायां गम्यमानायां । ग । इत्येतस्मात् परस्य तु न भवति ॥ हरिषेणः । वारिषेणः ॥ एति किं । हरिसक्थं ॥ संज्ञायां किं । पृथ्वी सेना यस्य पृथुसेनो राजा ॥ अगात् किं । विष्वक्सेनः ॥ इण्कुभ्यां किं । सर्वसेनः ॥

## नक्षत्राद्वा ॥ १०० ॥

नक्षत्रवाचकाच्छब्दात् परस्य स् । इत्येतस्यैकारे परतो मूर्धन्य आदेशो वा स्यात् संज्ञायां गम्यमानायां । गकारात् परस्य तु न भवति ॥ रोहिणिषेणः । रोहिणिसेनः । भरणिषेणः । भरणिसेनः ॥ अगात् किं । शतभिषक्सेनः ॥

## ह्रस्वात् तादौ तद्धिते ॥ १०१ ॥

ह्रस्वसंज्ञकादिण्प्रत्याहारान्तर्गतवर्णात् परस्य स् । इत्येतस्य त् । इत्येवमादौ तद्धिते परे मूर्धन्य आदेशः स्यात् ॥ सर्पिष्टरं । यजुष्टरं । निर्गतो वर्णाश्रमेभ्यो निष्ट्यश्चाण्डालादिः ॥ ह्रस्वात् किं । गीस्तरा । धूस्तरा ॥ तादौ किं । सर्पिस्साद्भवति । सात्पदाद्योरिति सातः सस्य निषेधात् सर्पिषः सस्य षत्वं स्यात् ॥ तद्धिते किं । सर्पिस्तरति ॥

## निसस्तपतावनासेवने ॥ १०२ ॥

निस् । इत्येतस्यावयवस्य स् । इत्येतस्येणः परस्य मूर्धन्य आदेशः स्यात् त् । इत्येवमादौ तप । इत्येतस्मिन् धातौ परे । आसेवनभिन्नेऽर्थे गम्यमाने ॥ निष्टपति सुवर्णं । सकृदग्निं स्पर्शयतीत्यर्थः ॥ अनासेवने किं । निस्तपति सुव-

र्णां सुवर्णाकारः । पुनः पुनरग्निं स्पर्शयतीत्यर्थः ॥ तादौ किं । निरतपत् ॥ आसेवनं पौनःपुन्यं ॥ -

## युष्मत्तत्ततक्षुःष्वन्तःपादं ॥१०३॥

युष्मद् । तद् । ततक्षुस् । इत्येतेषु तकारादिषु परतः स् । इत्येतस्येणः परस्य मूर्धन्य आदेशः स्यात् । स चेत् सकारः पादमध्यस्थो भवति ॥ युष्मच्छब्देन युष्मद आदेशास्त्वां । त्वा । ते । तव । इत्येते गृह्यन्ते ॥ त्वं । अग्निष्ट्वं नामासीत् । त्रिभिष्ट्वं देव सवितः ॥ त्वा । अग्निष्ट्वा वर्धयामसि । तेभिष्ट्वा ॥ ते । अग्निष्टे विश्वमानय ॥ तव । अप्स्वग्ने सधिष्टव ॥ तत् । अग्निष्टद्विश्वमापृणाति ॥ ततक्षुस् । द्यावापृथिवी निष्टतक्षुः ॥ अन्तःपादं किं । यन्म आत्मनो निन्दाभूदग्निस्तत् पुनराह जातवेदो विचर्षणिः । अत्राग्निरिति पूर्वपदस्यान्तो न तु मध्यः ॥

## यजुष्येकेषां ॥१०४॥

यजुर्वेदे युष्मद् । तद् । ततक्षुस् । इत्येतेषु तकारादिषु परतः स् । इत्येतस्येणः परस्य मूर्धन्य आदेशः स्यात् । एकेषामाचार्याणां मतेन ॥ त्वं । अर्चिभिष्ट्वं । अर्चिभिस्त्वं ॥ त्वा । अग्निष्ट्वा । अग्निस्त्वा ॥ ते । अग्निष्टे ऽग्रं । अग्निस्ते ऽग्रं ॥ तव । अप्स्वग्ने सधिष्टव । अप्स्वग्ने सधिस्तव ॥ तत् । अग्निष्टत् । अग्निस्तत् ॥ ततक्षुस् । अर्चिभिष्टतक्षुः । अर्चिभिस्ततक्षुः ॥

## स्तुतस्तोमयोश्छन्दसि ॥१०५॥

स्तुत । स्तोम । इत्येतयोरवयवस्य स् । इत्येतस्येणः परस्य वेदे मूर्धन्य आदेशः स्यात् । एकेषामाचार्याणां मतेन ॥ स्तुत । त्रिभिष्टुतस्य । त्रिभिः स्तुतस्य ॥ स्तोम । गोष्टोमं षोडशिनं । गोस्तोमं षोडशिनं ॥

## पूर्वपदात् ॥१०६॥

पूर्वपदस्यादिणः परस्य स् । इत्येतस्य वेदे मूर्धन्य आदेशः स्यात् । एकेषामाचार्याणां मतेन ॥ द्विषंधिः । द्विसंधिः ॥ त्रिषंधिः । त्रिसंधिः ॥ मधुष्ठानं । मधुस्थानं ॥ द्विषाहस्रं । द्विसाहस्रं ॥

## सुञः ॥१०७॥

पूर्वपदस्यादिणः परस्य सुञ् । इत्येतस्य निपातसंज्ञकस्यावयवस्य स् । इत्येतस्य वेदे मूर्धन्य आदेशः स्यात् ॥ ऊर्ध्व ऊ षु णः । अभी षु णः सखीनां । इकः सुञीति दीर्घः । नश्च धातुस्थोरुषुभ्य इति णत्वं ॥

## सनोतेरनः ॥ १०८ ॥

षणु । इत्येतस्य धातोरवयवस्य स् । इत्येतस्य पूर्वपदस्यादिणः परस्य वेदे मूर्धन्य आदेशः स्यात् । नकारान्तस्य तु न भवति ॥ गोषाः । नृषाः ॥ अनः किं । गोसनिं वाचमुदीरयत् ॥

## सहेः पृतनर्ताभ्यां च ॥ १०९ ॥

षह । इत्येतस्य धातोरवयवस्य स् । इत्येतस्य पृतना । ऋत । इत्येताभ्यां परस्य वेदे मूर्धन्य आदेशः स्यात् ॥ पृतना । पृतनाषाहं ॥ ऋत । ऋताषाहं ॥ नहिवृतीति सूत्रेण पूर्वपदस्य दीर्घत्वं ॥ चकारोऽनुक्तसमुच्चयार्थः । तेन ऋतीषहमिति सिद्धं ॥

## न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनां ॥ ११० ॥

रकारपरस्य सकारस्य । सृप्लृ । सृज । स्पृश । स्पृह । इत्येतेषां धातूनामवयवस्य च स् । इत्येतस्य तथा सवनादीनां शब्दानामवयवस्य स् । इत्येतस्य पूर्वपदस्यादिणः परस्य मूर्धन्य आदेशः स्यात् ॥ रपरस्य । स्रंसु । विस्रंसिकायाः कर्णाभ्यां जुहोति ॥ स्रम्भु । विस्रब्धः कथयति ॥ सृप्लृ । पुरा क्रूरस्य विसृपः ॥ सृज । वाचो विसर्जनात् ॥ स्पृश । दिविस्पृशं ॥ स्पृह । निस्पृहं कथयति ॥ सवनादीनां । सवने सवने । सूते सूते । सोमे सोमे । वीप्सायां द्विर्वचनं ॥ पूर्वपदादिति षत्वे प्राप्ते प्रतिषेधः ॥

पुरस्तादपवादन्यायेन वोपसर्गात् सुनोतीति षत्वं पदादिलक्षणमेव प्रतिषेधं बाधते । न सिचो यङीत्येतमपि ॥ यङि किं । अभिषिषिक्षति ॥

## सेधतेर्गतौ ॥ ११३ ॥

षिधु । इत्येतस्य धातोर्गत्यर्थस्यावयवस्य स् । इत्येतस्य मूर्धन्य आदेशो न स्यात् ॥ गङ्गां विसेधति । अभिसेधति गाः । परिसेधति गाः ॥ गतौ किं । शिष्यमकार्यात् प्रतिषेधति ॥

## प्रतिस्तब्धनिस्तब्धौ च ॥ ११४ ॥

प्रतिस्तब्ध । निस्तब्ध । इत्येतौ निपात्येते ॥ स्तम्भु । प्रतिस्तब्धः । निस्तब्धः ॥ स्तम्भेरिति षत्वे प्राप्ते निपातनात् षत्वाभावः ॥

## सोढः ॥ ११५ ॥

षह । इत्येतस्य धातोः सोढरूपस्यावयवस्य स् । इत्येतस्य मूर्धन्य आदेशो न स्यात् ॥ परिसोढा । परिसोढुं । परिसोढव्यं ॥ परिनिविभ्य इति प्राप्तं षत्वं प्रतिषिध्यते ॥ सोढः किं । परिषहते ॥

## स्तम्भुसिवुसहां चङि ॥ ११६ ॥

स्तम्भु । षिवु । षह । इत्येतेषां धातूनामवयवस्य स् । इत्येतस्य चङि परतो मूर्धन्य आदेशो न स्यात् ॥ स्तम्भु । अवातस्तम्भत् । पर्यतस्तम्भत् ॥ षिवु । पर्यसीषिवत् । न्यसीषिवत् ॥ षह । पर्यसीषहत् । न्यसीषहत् ॥ स्तम्भेः परिनिविभ्य इत्येताभ्यां प्राप्तं षत्वं प्रतिषिध्यते ॥

## सुनोतेः स्यसनोः ॥ ११७ ॥

षुञ् । इत्येतस्य धातोरवयवस्य स् । इत्येतस्य मूर्धन्य आदेशो न स्यात् स्य । सन् । इत्येतयोः प्रत्यययोः परतः ॥ स्ये । अभिसोष्यति । परिसोष्यति । अभ्यसोष्यत् । पर्यसोष्यत् ॥ सनि । अभिसुसूषतेरप्रत्ययः । अभिसुसूः । निसुसूः ॥ स्यसनोः किं । सुषाव ॥

## सदेः परस्य लिटि ॥ ११८ ॥

षद्लृ । इत्येतस्य धातोरवयवस्य परभूतस्य स् । इत्येतस्य लिटि परतो मूर्धन्य आदेशो न स्यात् ॥ अभिषसाद । परिषसाद । निषसाद । विषसाद ॥

## निव्यभिभ्यो ऽड्व्यवाये वा छन्दसि ॥ ११९ ॥

नि । वि । अभि । इत्येतेभ्य उपसर्गेभ्यः परस्य स् । इत्येतस्याडागमेन व्यवधाने वेदे मूर्धन्य आदेशो वा स्यात् ॥ नि । न्यषीदत् । न्यसीदत् ॥ वि । व्यषीदत् । व्यसीदत् ॥ अभि । अभ्यषीदत् । अभ्यसीदत् ॥ सामान्येन प्रकरणप्राप्तस्य षत्वस्य विकल्पविधायकमेतद्वचनं । तेनाभ्यष्टौत् । अभ्यस्तौत् । इत्याद्यपि सिद्धं । इति काशिका ॥

॥ इति सूत्रपाठे ऽष्टमाध्यायस्य तृतीयः पादः ॥

---

## रषाभ्यां णो नः समानपदे ॥ १ ॥

र् । ष् । इत्येताभ्यां परस्य न् । इत्येतस्य ण् । इत्येव आदेशः स्यात् । निमित्तनिमित्तिनौ चेदेकपदस्थौ भवतः ॥ निमित्तं रषौ । निमित्ती नकारः ॥ रकारात् । आस्तीर्णं । विस्तीर्णं ॥ षकारात् । वृष्णः । वृष्णा । कुष्णाति । पुष्णाति । मुष्णाति ॥ समानपदे किं । अग्निर्नयति । वायुर्नयति ॥ पदग्रहणानुत्तरार्थं । अत्र दुत्वेनैव रूपसिद्धिः ॥

## पूर्वपदात् संज्ञायामगः ॥३॥

पूर्वपदस्थाद्रकारात् परस्य न् । इत्येतस्योत्तरपदस्थस्य संज्ञायां विषये ण् । इत्येष आदेशः स्यात् । गकारेण व्यवधाने तु न भवति ॥ प्रणसः । वार्ध्रीणसः । खरणसः । द्रुणसः । शूर्पणखा ॥ संज्ञायां किं । चर्मनासिकः ॥ अगः किं । ऋचामयनमृगयनं ॥

## वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः ॥४॥

पुरगा । मिश्रका । सिध्रका । सारिका । कोटरा । अग्रे । इत्येतेभ्यः पूर्वपदेभ्यः परस्य वनशब्दावयवस्य न् । इत्येतस्य ण् । इत्येष आदेशः स्यात् ॥ पुरगा । पुरगावणं ॥ मिश्रका । मिश्रकावणं ॥ सिध्रका । सिध्रकावणं ॥ सारिका । सारिकावणं ॥ कोटरा । कोटरावणं ॥ अग्रे । अग्रेवणं । षष्ठीसमासे राजदन्तादित्वाद्वनशब्दस्य परनिपातः सप्तम्या अलुक् च ॥ पूर्वेण णत्वे सिद्धे नियमार्थमिदं । एभ्य एव परस्य वननकारस्य णत्वं नान्येभ्य इति । तेनेह न । कुबेरवनं । शतधारवनं । असिपत्रवनं । अग्रेशब्दस्य तु विध्यर्थं । असंज्ञात्वात् पूर्वेणाप्राप्तेः ॥

## प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्यो ऽसंज्ञायामपि ॥५॥

प्र । निर् । अन्तर् । शर । इक्षु । प्लक्ष । आम्र । कार्ष्य । खदिर । पीयूक्षा । इत्येतेभ्यः परस्य वन । इत्येतस्यावयवस्य न् । इत्येतस्य ण् । इत्येष आदेशः स्यात् । असंज्ञायामपि ॥ प्र । प्रवणे यष्टव्यं ॥ निर् । निर्वणे प्रणिधीयते ॥ अन्तर् । अन्तर्वणं ॥ शर । शरवणं ॥ इक्षु । इक्षुवणं ॥ प्लक्ष । प्लक्षवणं ॥ आम्र । आम्रवणं ॥ कार्ष्य । कार्ष्यवणं । इह यकारात् परत्वादणत्वं ॥ खदिर । खदिरवणं ॥ पीयूक्षा । पीयूक्षावणं ॥ अत्र प्रादिभ्यस्त्रिभ्यः परस्य वननकारस्य वनं पुरगेति नियमादप्राप्तं णत्वं विधीयते । शरादिभ्यः परस्य विभाषौषधीति विकल्पे प्राप्ते नित्यार्थं वचनं ॥

## विभाषौषधिवनस्पतिभ्यः ॥६॥

यदोषधिवाचकं वनस्पतिवाचकं च यत् पूर्वपदं तस्मिन् स्थिताभ्यां रेफषकाराभ्यां परस्य वनशब्दावयवस्य न् । इत्येतस्य ण् । इत्येष आदेशो वा स्यात् ॥

ओषधिभ्यः । दूर्वावणं । दूर्वावनं ॥ मूर्वावणं । मूर्वावनं ॥ वनस्पतिभ्यः । शिरीषवणं । शिरीषवनं ॥ बदरीवणं । बदरीवनं ॥

## अह्नोऽदन्तात् ॥ ७ ॥

अ । इत्येतदन्तं यत् पूर्वपदं तत्स्थात् । र् । इत्येतस्मात् परस्याह्नशब्दावयवस्य न् । इत्येतस्य ण् । इत्येष आदेशः स्यात् ॥ सर्वाह्णः । पूर्वाह्णः ॥ अदन्तात् किं । निरह्नः । दुरह्नः ॥ टचि कृते ऽह्नादेशः ॥ अदन्तादिति तपरकरणं किं । परागतमहः पराह्नः ॥ अह्न इत्यकारान्तग्रहणं किं । दीर्घाह्नी शरत् । बहुव्रीहिसमासो ऽयं तेन टजत्र न भवति ॥

## वाहनमाहितात् ॥ ८ ॥

आहितवाचकं यत् पूर्वपदं तत्रस्थाभ्यां रेफषकाराभ्यां परस्य वाहनशब्दावयवस्य न् । इत्येतस्य ण् । इत्येष आदेशः स्यात् ॥ रेफात् । शरवाहणं । दर्भवाहणं ॥ षकारात् । इक्षुवाहणं ॥ वाहन आरोप्य यदुह्यते तदाहितशब्देनोच्यते ॥ आहितात् किं । दाक्षिवाहनं । इन्द्रवाहनं । तत् तत्स्वामिकं वाहनमित्यर्थः ॥

## पानं देशे ॥ ९ ॥

पानशब्दावयवस्य न् । इत्येतस्य पूर्वपदस्थाभ्यां रेफषकाराभ्यां परस्य ण् । इत्येष आदेशः स्याद्देशाभिधाने गम्यमाने ॥ र् । क्षीरपाणा उशीनराः । सुरापाणाः प्राच्याः । सौवीरपाणा वाह्लीकाः ॥ ष् । कषायपाणा गान्धाराः ॥ पीयत इति पानं । कृत्यल्युटो बहुलमिति कर्मणि ल्युट् ॥ उशीनरादयः शब्दा देशद्वारेण पुरुषेषु वर्तन्त इति भवति देशाभिधानं ॥ देशे किं । दाक्षीणां पानं दाक्षिपानं ॥

## वा भावकरणयोः ॥ १० ॥

भावकरणयोर्विहितल्युट्प्रत्ययान्तस्य पानशब्दस्यावयवस्य न् । इत्येतस्य पूर्वपदस्थाभ्यां रेफषकाराभ्यां परस्य ण् । इत्येष आदेशो वा स्यात् ॥ भावे । रेफात् । क्षीरपाणं वर्तते । क्षीरपानं । सुरापाणं । सुरापानं ॥ षकारात् । कषायपाणं । कषायपानं ॥ करणे । रेफात् । क्षीरपाणः कंसः । क्षीरपानः ॥ षकारात् । कषायपाणः । कषायपानः ॥

## प्रातिपदिकान्तनुम्विभक्तिषु च ॥ ११ ॥

प्रातिपदिकस्यान्तावयवस्य नुमागमस्य विभक्त्यवयवस्य च न् । इत्येतस्य पूर्वपदस्थाभ्यां र् । ष् । इत्येताभ्यां परस्य ण् । इत्येष आदेशो वा स्यात् ॥ प्रातिपदिकान्तस्य । व्रीहिवापिणौ । व्रीहिवापिनौ । माषवापिणौ । माषवापिनौ ॥ नुमः । व्रीहिवापाणि । व्रीहिवापानि । माषवापाणि । माषवापानि ॥ विभक्तेः । व्रीहिवापेण । व्रीहिवापेन । माषवापेण । माषवापेन ॥

## एकाजुत्तरपदे णः ॥ १२ ॥

एकाजुत्तरपदं यस्य तस्मिन् समासे प्रातिपदिकस्यान्तावयवस्य नुमागमस्य विभक्तिस्थस्य च न् । इत्येतस्य पूर्वपदस्थाभ्यां रेफषकाराभ्यां परस्य नित्यं ण् । इत्येष आदेशः स्यात् ॥ प्रातिपदिकान्तस्य । वृत्रहणौ । वृत्रहणः । हरिमाणी ॥ नुमः । क्षीरपाणि । सुरापाणि । कषायपाणि ॥ विभक्तेः । क्षीरपेण । रम्यविणा । कषायपेण ॥ आरम्भसामर्थ्यान्नित्यत्वसिद्धेः पुनर्णग्रहणं स्पष्टार्थं ॥

## कुमति च ॥ १३ ॥

कवर्गवति चोत्तरपदे प्रातिपदिकस्यान्तावयवस्य नुमागमस्य विभक्तिस्थस्य च न् । इत्येतस्य पूर्वपदस्थाभ्यां रेफषकाराभ्यां परस्य ण् । इत्येष आदेशः स्यात् ॥ प्रातिपदिकान्तस्य । वस्त्रयुगिणौ । स्वर्गकामिणौ । वृषगामिणौ ॥ नुमः । वस्त्रयुगाणि । हरिकामाणि ॥ विभक्तेः । वस्त्रयुगेण । हरिकामेण ॥

## उपसर्गादसमासे ऽपि णोपदेशस्य ॥ १४ ॥

उपसर्गसंज्ञकस्थान्नकारात् परस्य उपदेशावस्थायां णकारवतो धातोरवयवस्य न् । इत्येतस्य ण् । इत्येष आदेशः स्यात् । असमासे ऽपिशब्दात् समासे ऽपि ॥ असमासे । णम् । प्रणमति । परिणमति ॥ णद् । प्रणदति । परिणदति ॥ समासे । प्रणायकः । परिणायकः ॥ प्रणादकः । परिणादकः ॥ उपसर्गात् किं । प्रगता नायका अस्माद्देशात् प्रनायको देशः ॥ पूर्वपदाधिकारनिवृत्तिद्योतनार्थमसमासे ऽपीति ॥ णोपदेशस्य किं । प्रनर्दति । प्रनर्दकः ॥

## हिनु- मीना ॥ १५ ॥

हि । मीञ् । इत्येतयोर्धात्वोः क्रमेण श्नुश्नाप्रत्ययान्तयोरवयवस्य न् । इत्ये-

तस्योपसर्गस्याद्भकारात् परस्य णः । इत्येष आदेशः स्यात् ॥ हि । प्रहिणोति । प्रहिणुतः । प्रहिण्वन्ति ॥ मीञ् । प्रमीणाति । प्रमीणीतः । प्रमीणन्ति ॥

## आनि लोट् ॥ १६ ॥

आनि । इत्येतस्य लोडादेशस्यावयवस्य न् । इत्येतस्योपसर्गस्याद्भकारात् परस्य ण् । इत्येष आदेशः स्यात् ॥ प्रभवाणि । प्रवपाणि । परिवपाणि । प्रयाणि । परियाणि ॥ लोट् किं । प्रवपानि मांसानि । प्रहिमानि कुलानि ॥

## नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ॥ १७ ॥

नि । इत्येतस्योपसर्गस्यावयवस्य न् । इत्येतस्योपसर्गस्याद्भकारात् परस्य ण् । इत्येष आदेशः स्यात् । गद । णद । पत्लृ । पद । घुसंज्ञकाः । मा । षो । हन । या । वा । द्रा । प्सा । डुवप् । वह । शम एयन्तः । चिञ् । दिह । इत्येतेषु धातुषु परतः ॥ गद । प्रणिगदति । परिणिगदति ॥ णद । प्रणिनदति । परिणिनदति ॥ पत्लृ । प्रणिपतति । परिणिपतति ॥ पद । प्रणिपद्यते । परिणिपद्यते ॥ घुशब्देन घुसंज्ञकाः षड्धातवो ऽत्र गृह्यन्ते । डुदाञ् । प्रणिददाति । परिणिददाति । दाण् । प्रणियच्छति । परिणियच्छति । दो । प्रणिद्यति । परिणिद्यति । देङ् । प्रणिदयते । परिणिदयते । धेट् । प्रणिधयति । परिणिधयति । डुधाञ् । प्रणिदधाति । परिणिदधाति ॥ माशब्देन माङ्मेङोर्ग्रहणं । माङ् । प्रणिमिमीते । परिणिमिमीते । मेङ् । प्रणिमयते । परिणिमयते ॥ षो । प्रणिष्यति । परिणिष्यति ॥ हन । प्रणिहन्ति । परिणिहन्ति ॥ या । प्रणियाति । परिणियाति ॥ वा । प्रणिवाति । परिणिवाति ॥ द्रा । प्रणिद्राति । परिणिद्राति ॥ प्सा । प्रणिप्साति । परिणिप्साति ॥ डुवप् । प्रणिवपति । परिणिवपति ॥ वह । प्रणिवहति । परिणिवहति ॥ शम । प्रणिशाम्यति । परिणिशाम्यति ॥ चिञ् । प्रणिचिनोति । परिणिचिनोति ॥ दिह । प्रणिदेग्धि । परिणिदेग्धि ॥

## शेषे विभाषाकखादावषान्त उपदेशे ॥ १८ ॥

उपदेशे ककारादिः खकारादिः षकारान्तश्चेति गद नद इत्यादिरन्योऽयम् धातौ परे

उपसर्गस्याद्रकारात् परस्य नि । इत्येतस्यावयवस्य न् । इत्येतस्य ण् । इत्येष आदेशो वा स्यात् ॥ डुपचष् । प्रणिपचति । प्रनिपचति ॥ भिदिर् । प्रणिभिनत्ति । प्रनिभिनत्ति ॥ अकखादौ किं । प्रनिकरोति । प्रनिखादति ॥ अषान्तः किं । प्रनिपिनष्टि ॥ उपदेशग्रहणं किं । इह च प्रतिषेधो यथा स्यात् । प्रनिचकार । प्रनिचखाद । प्रनिपेक्ष्यति । इह च मा भूत् । विश । प्रणिवेष्टा । प्रणिवेक्ष्यति ॥

## अनितेः ॥१९॥

अन् । इत्येतस्य धातोरवयवस्य न् । इत्येतस्योपसर्गस्याद्रकारात् परस्य ण् । इत्येष आदेशः स्यात् ॥ प्राणिति । पराणिति ॥ भाष्यकृता तु सूत्रद्वयमेकीकृत्य पठितमनितेरन्त इति ॥

## अन्तः ॥२०॥

अन् । इत्येतस्य धातोरवयवस्य न् । इत्येतस्योपसर्गस्याद्रकारात् परस्य पदान्ते वर्तमानस्य ण् । इत्येष आदेशः स्यात् ॥ हे प्राण् । हे पराण् ॥ पदान्तस्येत्यस्यापवादोऽयं । पदापेक्षश्चान्तोऽत्र गृह्यते ॥

## उभौ साभ्यासस्य ॥२१॥

अभ्याससहितस्य । अन । इत्येतस्य धातोरुपसर्गस्याद्रकारात् परयोर्द्वयोर्नकारयोर्ण् । इत्येष आदेशः स्यात् ॥ प्राणिणत् । प्राणिणिषति । पराणिणत् । पराणिणिषति ॥

## हन्तेरत्पूर्वस्य ॥२२॥

हन । इत्येतस्य धातोरवयवस्य न् । इत्येतस्यात्पूर्वस्योपसर्गस्याद्रकारात् परस्य ण् । इत्येष आदेशः स्यात् ॥ प्रहण्यते । परिहण्यते । प्रहण्यात् । परिहण्यात् । प्रहणनं । परिहणनं ॥ अत्पूर्वस्य किं । प्रघ्नन्ति । परिघ्नन्ति ॥ तपरकरणं किं । प्राघानि । पर्यघानि । निपातनमेतत् ॥ केचित्तु हन्तेः । अत्पूर्वस्य । इति योगविभागं कृत्वा । तत्रानन्तर्यादनन्तरस्य त्रिमित्तेति व्याख्याय । तेन वृत्रघ्नः सुघ्न इत्यादावप्यणत्वमिति प्राहुः तावन्मपि निवर्तते ॥

## वमोर्वा ॥२३॥

हन । इत्येतस्य धातोरवयवस्य न् । इत्येतस्योपसर्गस्थान्निमित्तात् परस्य ण् । इत्येष आदेशो वा स्यात् । व् । म् । इत्येतयोः परतः ॥ व् । प्रहण्वः । प्रहन्वः । परिहण्वः । परिहन्वः ॥ म् । प्रहण्मि । प्रहन्मि । परिहण्मि । परिहन्मि । प्रहण्मः । प्रहन्मः । परिहण्मः । परिहन्मः ॥ पूर्वसूत्रेण नित्यं प्राप्ते विकल्पार्थमिदं ॥

## अन्तरदेशे ॥ २४ ॥

अन्तर् । इत्येतस्मात् परस्य हन । इत्येतस्य धातोरवयवस्य न् । इत्येतस्याकारपूर्वस्य ण् । इत्येष आदेशः स्यात् । देशाभिधानं चेन्न भवति ॥ अन्तर्हण्यते । अन्तर्हणनं वर्तते ॥ अदेशे किं । अन्तर्हननो देशः ॥ अत्पूर्वस्येत्येव । अन्तर्घ्नन्ति ॥ तपरः किं । अन्तरघानि ॥ अन्तःशब्दस्याङ्किविधिणत्वेष्वित्युपसर्गसंज्ञकत्वात् पूर्वेण सिद्धे देशप्रतिषेधार्थं वचनं ॥

## अयनं च ॥ २५ ॥

अन्तर् । इत्येतस्मात् परस्यायनशब्दावयवस्य न् । इत्येतस्य ण् । इत्येष आदेशः स्यात् । देशाभिधानं चेन्न भवति ॥ अन्तरयणं वर्तते । अन्तरयणं शोभनं ॥ अदेशे किं । अन्तरयनो देशः ॥ कृत्यच इति सिद्धे देशप्रतिषेधार्थं वचनं ॥

## छन्दस्यृदवग्रहात् ॥ २६ ॥

अवग्रहभूतो य ऋकारस्तदन्तात् पूर्वपदात् परस्योत्तरपदावयवस्य न् । इत्येतस्य वेदे ण् । इत्येष आदेशः स्यात् ॥ नृमणाः । पितृयाणं । अत्र हि नृ । मणाः । पितृ । याणमित्यृकारो ऽवगृह्यते ॥ विषयोपलक्षणार्थावग्रहग्रहणं । पदान्ते ह्यवग्रहः क्रियते । तत्र यथा स्यादपदान्ते मा भूत् ॥

## नश्च धातुस्थोरुषुभ्यः ॥ २७ ॥

नस् । इत्येतस्यावयवस्य न् । इत्येतस्य धातुस्थाभ्यां रेफषकाराभ्यां परस्य तथा उरुशब्दात् षुशब्दाच्च परस्य वेदे ण् । इत्येष आदेशः स्यात् ॥ धातुस्थात् । अग्ने रक्षा णः । शिक्षा णो अस्मिन् । लोटो मध्यमपुरुषैकवचन एते । द्व्यचोऽतस्तिङ इति दीर्घः ॥ उरु । उरु णस्कृधि । ऊर्ध्वो ऊतये [illegible] ॥ [illegible] । सुञः पूर्वस्य [illegible] षः । [illegible] ॥

षु । अभी षु णः । मो षु णः । ऊर्ध्व ऊ षु ण ऊतये । इकः सुञीति दीर्घः ॥ अस्मदादेशस्य नसशब्दस्यात्र ग्रहणं ॥ षु । इति कृतषत्वस्य सुञो ग्रहणं न सप्तमीबहुवचनस्य । तेन गृहेषु न इत्यत्र णत्वं न भवति ॥

## उपसर्गाद्नोत्परः ॥२८॥

उपसर्गस्थान्निमित्तात् परस्य नसशब्दस्यावयवस्य न् । इत्येतस्य ण् । इत्येष आदेशः स्यात् । ओकारात् परस्य । ओकारे वा परतो न भवति ॥ प्र णः । अस्मदो नसादेशः ॥ प्रणसः । प्रणसं मुखं । नासिकाया नसादेशो ऽच्प्रत्ययः ॥ अनोत्परः किं । प्र उ नः प्रो नः । प्र नो मुञ्चतं ॥ अत्र नसित्यस्मदादेशस्य नासिकादेशस्य च सामान्येन ग्रहणं ॥ प्रादुपलक्षणमुपसर्गग्रहणं नस प्रति क्रियायोगाभावात् ॥

## कृत्यचः ॥२९॥

कृत्प्रत्ययावयवस्य न । इत्येतस्याच उत्तरस्योपसर्गस्थान्निमित्तात् परस्य ण् । इत्येष आदेशः स्यात् ॥ प्रयाणीयं ॥ अचः किं । प्रभुग्नः । प्रमग्नः । ओदितश्चेति निष्ठातस्य नः । स्कोरिति सलोपः । चोः कुरिति कुत्वं ॥

इजादेर्नुमा सहिताज्झलन्ताद्धातोर्विहितस्य कृत्प्रत्ययस्यावयवस्य न् । इत्येतस्योपसर्गस्थाद्रकारात् परस्य ण् । इत्येष आदेशः स्यात् ॥ इखि । प्रेङ्खणं । परेङ्खणं ॥ इगि । प्रेङ्गणं । परेङ्गणं ॥ इजादेः किं । प्रमङ्गनीयं ॥ कृत्यच इत्येव सिद्धे नियमार्थमिदं । इजादेरेव सनुमो नान्यस्मात् । तेनेह न । प्रकम्पनं । प्रमङ्गनं ॥

## वा निंसनिक्षनिन्दां ॥ ३३ ॥

णिसि । णिक्ष । टुनदि । इत्येतेषां धातूनामवयवस्य न् । इत्येतस्योपसर्गस्थाद्रकारात् परस्य ण् । इत्येष आदेशो वा स्यात् ॥ णिसि । प्रणिंसितव्यं । प्रनिंसितव्यं ॥ णिक्ष । प्रणिक्षणं । प्रनिक्षणं ॥ टुनदि । प्रणिन्दनं । प्रनिन्दनं ॥ णोपदेशत्वादुपसर्गादसमासेऽपीति नित्ये प्राप्ते विकल्पः ॥

## न भाभूपूकमिगमिप्यायीवेपां ॥ ३४ ॥

भा । भू । पू । कमु । गम्लृ । ओप्यायी । टुवेपृ । इत्येतेभ्यो धातुभ्यः परस्य कृत्प्रत्ययावयवस्य न् । इत्येतस्य ण् । इत्येष आदेशो न स्यात् ॥ भा । प्रभानीयं । प्रभानं ॥ भू । प्रभवनीयं । प्रभवनं ॥ पू । प्रपवनीयं । प्रपवनं ॥ कमु । प्रकमनीयं । प्रकमनं ॥ गम्लृ । प्रगमनीयं । प्रगमनं ॥ ओप्यायी । प्रप्यायनीयं । प्रप्यायनं ॥ टुवेपृ । प्रवेपनीयं । प्रवेपनं ॥

## षात् पदान्तात् ॥ ३५ ॥

षू । इत्येतस्मात् पदान्तात् परस्य कृत्प्रत्ययस्यावयवस्य न् । इत्येतस्य ण् । इत्येष आदेशो न स्यात् ॥ निष्पानं । दुष्पानं । सर्पिष्पानं । यजुष्पावनं ॥ षात् किं । निर्णयः ॥ पदान्तात् किं । कुष्णाति । पुष्णाति ॥

## नशेः षान्तस्य ॥ ३६ ॥

णश । इत्येतस्य षू । इत्येतदन्तस्यावयवस्य न् । इत्येतस्योपसर्गस्थाद्रकारात् परस्य ण् । इत्येष आदेशो न स्यात् ॥ प्रनंष्टा । प्रनष्टः । परिनष्टः । मस्जिनशोरिति नुम् । अनिदितामिति नलोपः ॥ षान्तस्य किं । प्रणश्यति । परिणश्यति ॥ भूतपूर्वषान्तप्रतिपत्त्यर्थमन्तग्रहणं । प्रनङ्क्ष्यति । परिनङ्क्ष्यति ॥

## पदान्तस्य ॥ ३७ ॥

पदान्ते वर्तमानस्य न् । इत्येतस्य र । षू । इत्येताभ्यां परस्य ण् । इत्येष

आदेशो न स्यात् ॥ र् । रामान् । अरीन् । गिरीन् । हरीन् ॥ ष् । वृक्षान् । प्लक्षान् ॥

## पदव्यवाये ऽपि ॥३८॥

पदेन व्यवधाने ऽपि र् । ष् । इत्येताभ्यां परस्य न् । इत्येतस्य ण् । इत्येष आदेशो न स्यात् ॥ र् । चतुरङ्गयोगेन । प्रावनद्धं । पर्यवनद्धं । प्रगानुयामः । परिगानुयामः ॥ ष् । माषकुम्भवापेन । विषकुम्भवाहनं ॥

## क्षुभ्नादिषु च ॥३९॥

क्षुभ्ना । इत्येवमादिषु शब्देषु र् । ष् । इत्येताभ्यां परस्य न् । इत्येतस्य ण् । इत्येष आदेशो न स्यात् ॥ र् । हरिनन्दी । गिरिनगरं ॥ ष् । क्षुभ्नाति । क्षुभ्नीतः । क्षुभ्नन्ति ॥

## स्तोः श्चुना श्चुः ॥४०॥

सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गावादेशौ भवतः ॥ सकारस्य शकारचवर्गाभ्यां योगे शकारः । एवं तवर्गस्य शकारचवर्गाभ्यां योगे चवर्ग आदेशो भवति ॥ सस्य शकारयोगे । वृक्षश्शेते । प्लक्षश्शेते ॥ सस्य चवर्गयोगे । वृक्षश्चिनोति । वृक्षश्छादयति ॥ तवर्गस्य शकारयोगे । अग्निचिच्छेते । सोमसुच्छेते ॥ तवर्गस्य चवर्गयोगे । अग्निचिच्चिनोति । अग्निचिच्छिनत्ति । अग्निचिज्जयति । अग्निचिज्झकारः । अग्निचिञ्ञकारः ॥ श्चुनेति तृतीयानिर्देशः पूर्वेण च योगे श्चुत्वं यथा स्यात् । यज्ञः । याच्ञा । आचिति सप्तमीनिर्देशे हि तस्मिन्निति निर्दिष्टे इति परभूतेनैव योगे स्यात् ॥

## ष्टुना ष्टुः ॥४१॥

सकारतवर्गयोः षकारटवर्गाभ्यां योगे षकारटवर्गावादेशौ स्तः ॥ सस्य षकारयोगे । रामष्षष्ठः । वृक्षष्षण्डे ॥ सस्य टवर्गयोगे । रामष्टीकते । वृक्षष्टीकते ॥ तवर्गस्य षकारयोगे । कृषीट । कृषीढाः ॥ तवर्गस्य टवर्गयोगे । अग्निचिट्टीकते । अग्निचिड्डकारः । अग्निचिड्डीनः । अग्निचिड्ढौकते । अग्निचिण्णकारः ॥ ष्टुनेति तृतीयानिर्देशः पूर्वेणापि योगे ष्टुत्वं यथा स्यात् । पेष्टा । ईट्टे ॥

## न पदान्ताट्टोरनाम् ॥४२॥

पदान्ताट्टवर्गात् परयोः सकारतवर्गयोः षकारटवर्गावादेशौ न स्यातां । पदान्ताट्टवर्गात् परस्य नाम् । इत्येतस्य तु ष्टुत्वं भवति ॥ टवर्गात् सस्य । श्वलिट् साये । षट् सन्तः ॥ टवर्गात् तवर्गस्य । मधुलिट् तरति । षट् ते ॥ पदान्तात् किं । ईट्टे ॥ टोः किं । सर्पिष्टमं । अत्र ह्रस्वात् तादाविति षत्वं । ष्टुत्वे कर्तव्ये षत्वस्यासिद्धत्वान्न ष्टुत्वं ॥ अनामिति किं । षण्णां ॥ अनामिति षष्ठीबहुवचनस्य सनुट्कस्य ग्रहणं ॥

## तोः षि ॥४३॥

तवर्गस्य षकारे परतष्टवर्ग आदेशो न स्यात् ॥ अग्निचित् षण्डे । भवान् षण्डे । महान् षण्डे । सन् षष्ठः ॥

## शात् ॥४४॥

श् । इत्येतस्मात् परस्य तवर्गस्य चवर्ग आदेशो न स्यात् ॥ प्रश्नः । विश्नः ॥

## यरो ऽनुनासिके ऽनुनासिको वा ॥४५॥

यर्प्रत्याहारान्तर्गतवर्णस्य पदान्ते वर्तमानस्यानुनासिकसंज्ञके वर्णे परे ऽनुनासिक आदेशो वा स्यात् ॥ वाङ्मयति । वाग्नयति ॥ श्वलिण्नयति । श्वलिड्नयति ॥ अग्निचिन्नयति । अग्निचिद्नयति ॥ एतन्मुरारिः । एतद्मुरारिः ॥ पदान्तस्येति किं । वेत्मि । क्षुभ्नाति ॥

## अचो रहाभ्यां द्वे ॥४६॥

अच्प्रत्याहारान्तर्गतवर्णात् पराभ्यां रेफहकाराभ्यां परस्य यर्प्रत्याहारान्तर्गतवर्णस्य द्वित्वं वा स्यात् ॥ रपरस्य यरः । अर्क्कः । अर्कः । अर्च्चा । अर्चा । हर्य्यनुभवः । हर्यनुभवः ॥ हपरस्य यरः । ब्रह्म्मा । ब्रह्मा । अपह्नुते । अपह्नुते । न ह्य्यस्ति । न ह्यस्ति ॥ अचः किं । ह्नुते । ह्मलयति ॥

## अनचि च ॥४७॥

अच्प्रत्याहारान्तर्गतवर्णात् परस्य यर्प्रत्याहारान्तर्गतवर्णस्य द्वित्वं वा स्यात् । अचि परतस्तु न भवति ॥ दद्ध्यत्र । दध्यत्र ॥ मद्ध्वत्र । मध्वत्र ॥ अचः किं । स्मितं । स्फोतं ॥ अनचि किं । वायुः । वागन्ति ॥

## नादिन्याक्रोशे पुत्रस्य ॥४८॥

अदिनि शब्दे परत आक्रोशे गम्यमाने पुत्रशब्दावयवस्य यर् अचः परस्य द्वित्वं न स्यात् ॥ पुत्रादिनी त्वमसि पापे ॥ आक्रोशे किं । तत्वकथने द्विर्वचनं भवत्येव । पुत्त्रादिनी व्याघ्री ॥ आक्रोशो निन्दा ॥

## शरोऽचि ॥४९॥

शर्प्रत्याहारान्तर्गतवर्णस्याचि परे द्वित्वं न स्यात् ॥ आदर्शः । आकर्षः । कर्षति । वर्षति । चतुर्षु ॥ अचो रहाभ्यामिति प्राप्तस्य द्वित्वस्य प्रतिषेधः ॥ अचि किं । दर्श्र्यते ॥

## त्रिप्रभृतिषु शाकटायनस्य ॥५०॥

त्रिप्रभृतिषु वर्णेषु संयुक्तेषु द्वित्वं न स्यात् । शाकटायनस्याचार्यस्य मतेन ॥ इन्द्रः । इन्न्द्रः ॥ चन्द्रः । चन्न्द्रः ॥ उष्ट्रः । उष्ष्ट्रः ॥ राष्ट्रं । राष्ष्ट्रं ॥ भ्राष्ट्रं । भ्राष्ष्ट्रं ॥

## सर्वत्र शाकल्यस्य ॥५१॥

सर्वत्र द्वित्वं न स्यात् शाकल्यस्याचार्यस्य मतेन ॥ अर्कः । मर्कः । ब्रह्मा । अपह्नुते ॥ अत्रिप्रभृत्यर्थमिदं सूत्रं ॥

## दीर्घादाचार्याणां ॥५२॥

दीर्घात् परस्य द्वित्वं न स्यात् । आचार्याणां मतेन ॥ दात्रं । पात्रं । मूत्रं । सूत्रं ॥

## झलां जश् झशि ॥५३॥

झल्प्रत्याहारान्तर्गतवर्णानां स्थाने झश्प्रत्याहारान्तर्गतवर्णेषु परतो जश्प्रत्याहारान्तर्गता वर्णा आदेशाः स्युः ॥ डुलभष् । लब्धा । लब्धुं । लब्धव्यं ॥ दुह । दोग्धा । दोग्धुं । दोग्धव्यं ॥ बुध । बोद्धा । बोद्धुं । बोद्धव्यं ॥ झशि किं । दध्यः । दध्मः ॥

## अभ्यासे चर्च ॥५४॥

अभ्यासे वर्तमानानां झल्प्रत्याहारान्तर्गतवर्णानां स्थाने चर्प्रत्याहारान्तर्गतवर्णा आदेशाः स्युः । चकाराज्जश्प्रत्याहारान्तर्गतवर्णाश्चादेशा भवन्ति ॥ झशां स्थाने जश आदेशाः । खयां स्थाने चर आदेशा भवन्ति । झशां खयां चान्तर्गतानां प्रकृतिजशां प्रकृतिजशः । प्रकृतिचरां प्रकृतिचर आदेशा भवन्ति । आन्त-

रतम्यात् ॥ कशां । कट । चकाट । भू । बभूव । घट्ट । जघट्ट । ढौकृ । डुढौके । ध्राघृ । दध्राघे ॥ खयां । खनु । चखान । फक्क । पफक्क । छिदिर् । चिच्छेद । टिठकारयिषति । ष्ठा । तिष्ठासति ॥ प्रकृतिजशां । जल । जजाल । ओव्रश्चू । वव्रश्च । गम्लृ । जगाम । डीङ् । डिड्ये । दंश । ददंश ॥ प्रकृतिचरां । चमु । चचाम । टल । टटाल । तकि । ततङ्क । कस । चकास । पल । पपाल । शल । शशाल । पद्लृ । ससाद । स्मृ । सस्मार ॥ प्रकृतिजशां प्रकृतिचरां च जश्त्वचर्त्वविधानं क्रमेण चर्त्वजश्त्वबाधनार्थं । इति पदमञ्जर्यां ॥

## खरि च ॥ ५५ ॥

खर्प्रत्याहारान्तर्गतवर्णेषु परतो झल्प्रत्याहारान्तर्गतवर्णानां स्थाने चर्प्रत्याहारान्तर्गतवर्णा आदेशाः स्युः ॥ भिदिर् । भेत्ता । भेत्तुं ॥ युध । युयुत्सते ॥ रभ । आरिप्सते ॥ डुलभष् । आलिप्सते ॥ झग्रहणस्यात्र नाभिसंबन्धः । पूर्वत्र चानुकृष्टत्वात् ॥

## वावसाने ॥ ५६ ॥

अवसाने वर्तमानानां झलां स्थाने चर्संज्ञका आदेशा वा स्युः ॥ वाक् । वाग् । त्वक् । त्वग् । श्वलिट् । श्वलिड् । त्रिष्टुप् । त्रिष्टुब् । रामात् । रामाद् ॥

## अणो ऽप्रगृह्यस्यानुनासिकः ॥ ५७ ॥

अणप्रत्याहारान्तर्गतवर्णस्याप्रगृह्यसंज्ञकस्यावसाने वर्तमानस्यानुनासिक आदेशो वा स्यात् ॥ दधिँ । दधि ॥ मधुँ । मधु ॥ कुमारीँ । कुमारी ॥ अणः किं । कर्तृ । हर्तृ ॥ पूर्वेण णकारेणात्राण् गृह्यते ॥ अप्रगृह्यस्य किं । अग्नी । वायू ॥

## अनुस्वारस्य ययि परसवर्णः ॥ ५८ ॥

अनुस्वारस्य यय्प्रत्याहारान्तर्गतवर्णेषु परतः परसवर्ण आदेशः स्यात् ॥ अङ्किता । अञ्चिता । उञ्छिता । कुण्टिता । कुण्डिता । नन्दिता । शान्ता । कम्पिता । गुम्फिता ॥ एषु नश्चापदान्तस्येत्यनुस्वारे कृते तस्य ककारादिषु परतः क्रमेण ङकारादयः ॥ ययि किं । आक्रंस्यते ॥

## वा पदान्तस्य ॥ ५९ ॥

पदान्ते वर्तमानस्यानुस्वारस्य यय्प्रत्याहारान्तर्गतवर्णेषु परतः परसवर्ण आदेशो

वा स्यात् ॥ तङ्कथञ्चित्पक्षपउयमानन्नभस्यम्पुरुषो ऽब्रवीत् । तं कथंचित्पक्षं उयमानं नभस्यं पुरुषो ऽब्रवीत् । अत्र ककारादिषु परतो ऽनुस्वारस्य पक्षे क्रमेण ङकाराद्य आदेशाः ॥ सँय्यन्ता । संयंता । सँव्वत्सरः । संवत्सरः । यँल्लोकं । यं लोकं । अत्रानुस्वारस्य पक्षे क्रमेणानुनासिका यवलाः ॥

## तोर्लि ॥६०॥

तवर्गस्य ल् । इत्येतस्मिन् परे परसवर्ण आदेशः स्यात् ॥ तल्लयः । अग्निचिल्लुनाति । सोमसुल्लुनाति । भवाँल्लुनाति । महाँल्लुनाति । विद्वाँल्लिखति ॥ नस्यानुनासिको लकारः ॥

## उदः स्थास्तम्भोः पूर्वस्य ॥६१॥

उद् । इत्येतस्मात् परयोः ष्ठा । स्तम्भु । इत्येतयोर्धात्वोरवयवस्य स् । इत्येतस्य पूर्वसवर्ण आदेशः स्यात् ॥ ष्ठा । उत्थानं । उत्थाता । उत्थातुं । उत्थातव्यं ॥ स्तम्भु । उत्तम्भिता । उत्तम्भितुं । उत्तम्भितव्यं ॥ अत्र घोषमहाप्राणप्रयत्नवतः सकारस्य तादृश एव थकार आदेशः । तस्य झरो झरीति पक्षे लोपः । लोपाभावपक्षे तु थकारद्वयस्य श्रवणं भवति । न तु खरि चेति चर्त्वं । चर्त्वे कर्तव्ये थकारस्यासिद्धत्वात् । उत्थानं । उत्थ्मानं ॥ स्थास्तम्भोः किं । उत्स्नातः ॥

## झयो होऽन्यतरस्यां ॥६२॥

झय्प्रत्याहारान्तर्गतवर्णात् परस्य ह् । इत्येतस्य पूर्वसवर्ण आदेशो वा स्यात् ॥ वाग्घसति । वाग्हसति ॥ श्वलिड्ढसति । श्वलिड्हसति ॥ अग्निचिद्धसति । अग्निचिद्हसति ॥ त्रिष्टुब्भसति । त्रिष्टुब्हसति ॥ अत्र घोषवतो नादवतो महाप्राणस्य हस्य तादृशा एव वर्गचतुर्था घढधभा आदेशा भवन्ति ॥ झयः किं । प्राङ् हसति । भवान् हसति ॥

## शश्छोऽटि ॥६३॥

झय्प्रत्याहारान्तर्गतवर्णात् परस्य श् । इत्येतस्य छ् । इत्येष आदेशो वा स्यात् । अट्प्रत्याहारान्तर्गतेषु वर्णेषु परतः ॥ वाक्छेते । वाक् शेते ॥ अग्निचिच्छेते । अग्निचित् शेते ॥ श्वलिट्छेते । श्वलिट् शेते ॥ त्रिष्टुप्छेते । त्रिष्टुप् शेते ॥

## हलो यमां यमि लोपः ॥ ६४ ॥

हल्प्रत्याहारान्तर्गतवर्णात् परेषां यम्प्रत्याहारान्तर्गतवर्णानां क्रमेण यम्प्रत्याहारान्तर्गतेषु वर्णेषु परतो लोपो वा स्यात् ॥ शय्या । शय्य्या । शीङ्धातोः संज्ञायां समजनिषदेति सूत्रेण क्यप्प्रत्यये धातोरयङ् यि क्ङितीत्ययङादेशे कृते ऽनचि चेति यकारस्य द्वित्वे ऽनेन पक्षे यलोपः । स्त्रीत्वं लोकात् ॥ आदित्यः । आदित्य्यः । अदितेरपत्यमित्यर्थे दित्यदित्येति सूत्रेण ण्यप्रत्यये यस्येति चेतीकारलोपे यणो मय इत्यस्य पञ्चम्यन्तत्वस्वीकारे मयः परस्य यकारस्य द्वित्वे पक्षे यलोपः ॥ आदित्यं हविः । आदित्यः स्थालीपाकः । आदित्यशब्दाण्ण्यप्रत्यये यस्येति चेत्यकारलोपे यणो मय इति यकारस्य द्वित्वे ऽनेन एकस्य द्वयोर्वा यकारयोः पक्षे लोपः ॥ हलः किं । अन्नं ॥ यमां किं । अर्घ्यं ॥ यमि किं । शार्ङ्गं ॥

## झरो झरि सवर्णे ॥ ६५ ॥

हल्प्रत्याहारान्तर्गतवर्णात् परस्य झर्प्रत्याहारस्थवर्णस्य लोपो वा स्यात् सवर्णे झर्प्रत्याहारस्थे वर्णे परे ॥ प्रत्तं । प्रत्त्तं ॥ अवत्तं । अवत्त्तं ॥ नीत्तं । नीत्त्तं ॥ सूत्तं । सूत्त्तं ॥ दाधातोः क्तप्रत्यये ऽच उपसर्गादित्याकारस्य तकारः । चर्त्वेन दस्य तः । अनचि चेति तकारस्य द्वित्वे चत्वारस्तकाराः । तत्रानेनैकस्य द्वयोर्वा पक्षे लोपे त्रिद्विचतुस्तकारकं रूपत्रयं भवति ॥ झरः किं । शार्ङ्गं ॥ झरि किं । प्रियपञ्च्ज्ञः ॥ सवर्णे किं । तर्प्ता । तर्प्तुं ॥

## उदात्तादनुदात्तस्य स्वरितः ॥ ६६ ॥

उदात्तात् परस्यानुदात्तस्य स्वरित आदेशः स्यात् ॥ गार्ग्यः । वात्स्यः । ञित्वादाद्यन्तस्याद्युदात्तत्वं । शेषनिघातेन यकाराकारो ऽनुदात्तः । तस्यानेन स्वरितत्वं ॥ पचति । पठति । शप्तिपावनुदात्तौ । धात्वकार उदात्तः । ततः परस्य शवकारस्य स्वरितत्वं ॥

## नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानां ॥ ६७ ॥

उदात्तोदयस्य स्वरितोदयस्य चानुदात्तस्य स्वरित आदेशो न स्यात् । गार्ग्यकाश्यपगालवभिन्नानामाचार्याणां मतेन ॥ उदयशब्दः परशब्दसमानार्थः प्रातिशाख्येषु प्रसिद्धः । न चोदात्तानन्तरमस्य [illegible] ॥ उदात्तोदयस्य । गार्ग्यस्तत्र ।

वात्स्यस्तत्र । तत्रशब्दो लित्स्वरेणाद्युदात्तः । तस्मिन् परतो गार्ग्यवात्स्ययोरकारस्यानुदात्तस्य न स्वरितं ॥ स्वरितोदयस्य । गार्ग्यः क्व । वात्स्यः क्व । क्वशब्दो किमो ऽद्वित्यत्प्रत्ययान्तस्तित्वात् स्वरितः । तस्मिन् परे ऽनुदात्तस्याकारस्य न स्वरितं ॥ पूर्वेण प्राप्तस्य स्वरितस्यायं प्रतिषेधः ॥ अगार्ग्यकाश्यपगालवानां किं । गार्ग्यस्तत्र । गार्ग्यः क्व । तेषां मतेन भवत्येव स्वरितः ॥ अनेकाचार्यसंकीर्तनं पूजार्थं ॥ उदात्तस्वरितपरस्येति वक्तव्ये उदयग्रहणं मङ्गलार्थं ॥ मङ्गलादीनि हि शास्त्राणि प्रथन्ते । मङ्गलमध्यानि । मङ्गलान्तानि च । वीरपुरुषकाणि भवन्त्यायुष्मत्पुरुषाणि चेति वृद्धिसूत्रे भाष्योक्तेः ॥ इह आदौ वृद्धिरादैजिति वृद्धिशब्दः प्रयुक्तः । मध्ये शिवशमरिष्टस्य करे इति शिवशब्दः । अन्ते चायमुदयशब्दः ॥

## अ अ ॥६८॥

अ । इत्येतस्य । अ । इत्येष आदेशः स्यात् ॥ विवृतप्रयत्नकस्याकारस्य स्थाने संवृतप्रयत्नको ऽकारो ऽनेन क्रियते ॥ वृक्षः । प्लक्षः ॥ इह शास्त्रे कार्यार्थमकारो विवृतः प्रतिज्ञातस्तस्य तथाभूतस्यैव प्रयोगो मा भूदिति प्रत्यापत्तिः क्रियते ॥

॥ इति सूत्रपाठे ऽष्टमाध्यायस्य चतुर्थः पादो ऽध्यायश्च समाप्तः ॥

॥ इत्यष्टकं पाणिनीयं संपूर्णं ॥